बौद्धभारतीग्रन्थमाला–१

Baudha Bharati Series-1

# तत्त्वसङ्ग्रहः

सम्पादकः

स्वामी द्वारिकादासशास्त्री

*Bauddha Bharati Series—1*

# TATTVASANGRAHA

OF

**ĀCĀRYA SHĀNTARAKṢITA**

**WITH THE COMMENTARY 'PAÑJIKĀ'**

OF

**SHRI KAMALSHĪLA**

*Critically Edited By*

SWAMI DWARIKADAS SHASTRI



in two volumes

**Vol. 1**

**BAUDDHA BHARATI**
**P. B. 49, VARANASI-1 (INDIA)**
**1981**

आचार्यश्रीशान्तरक्षितविरचितः

# तत्त्वसङ्ग्रहः

श्रीकमलशीलकृतपञ्जिकोपेतः

[ प्रमाणान्तरभावपरीक्षापर्यन्तम् ]

प्रथमो भागः

सम्पादकः

स्वामी द्वारिकादासशास्त्री
व्याकरणपालि-साहित्यबौद्धदर्शनाचार्यः




१९८१ खिष्टाब्दः ] वाराणसी [ २५२४ बुद्धाब्दः

प्रकाशकः
मन्त्री
© बौद्धभारती
पो० बा० ४९,
वाराणसी-१ (भारत)

*Published by*
The Secretary
© Baudda Bharati
P. Box 49,
VARANASI-1 (India)



द्वितीयं संस्करणम्
मूल्यम् ७५.००
(पञ्चसप्ततिरूप्यकाणि)

Second Edition
Price 75.00
(Rupees Seventy Five)

( 150.00 Complete Set )



मुद्रक,
डिलक्स आफसेट प्रिंटर्स,
दिल्ली-११००३५

*Printed at :*
The Delux offset Printers
Delhi—110035

# द्वितीयं संस्करणम्

मान्या विद्वांसः !

आचार्यशान्तरक्षितविरचितस्य श्रीकमलशीलपञ्जिकासनाथस्य चास्य महतस्तत्त्वसंग्रहग्रन्थरत्नस्य पूर्वसंस्करणं विद्वल्ललामायमानैरनेकशास्त्रनिष्णातैः बौद्धभारतीग्रन्थमालाप्रधानसम्पादकैर्मान्यैः स्वामिश्रीद्वारिकादासशास्त्रिभिरसाधारणायासपूर्वकमनेकेषां विदुषां सहयोगेन नानाविधमातृका-व्याख्या-पुस्तकसंयोजनेन चेतरविद्वत्पुनःसंस्करणनिरपेक्षं संशोधितमिति निर्विचिकित्सं पूर्वावृत्तिमुद्रितपुस्तकादवगम्यत एव। तच्च संस्करणं बौद्धभारतीस्थापनावर्षे (१९६८तमे ख्रिष्टाब्दे) जातं बहुहायनेभ्य आपणे निःशेषतां गतम्।

अतो यद्यपि प्रतिमुद्रणावृत्ति पूर्वशेषदोषापाकरणकं संस्करणमावश्यकम्, तथापि प्रधानसम्पादकानामन्यसुदुर्लभग्रन्थसम्पादनादिकर्मसु व्यापृतत्वात्, ग्राहकाणां त्वरया च, अस्य ग्रन्थस्येदं द्वितीयं संस्करणं विवशैरस्माभिः प्रथमसंस्करणस्यैव चित्रप्रतिकृतिमुद्रया कारितम्।

अभ्यर्थ्यते नामंनाममत्र क्वचित् किञ्चित् स्खलितं करुणावरुणालयैर्भवद्भिः क्षन्तव्यमिति।

१-७-८१
वाराणसी

मन्त्री
बौद्धभारतीपरिषदः

# प्रकाशकीयम्

१९५८तमे ख्रिष्टाब्दे कालक्रमेणाहं नालन्दापालित्रिपिटकप्रकाशन-प्रतिष्ठानस्य वाराणसीशिविरे नियुक्तस्तत्रत्याधिकारिभिः। यद्यपि तत्र संस्कृत-भाषायाः साहाय्येन पालिभाषायाः शब्दानां वाक्यानां चावबोधे नातिकाठिन्यं मयानुभूतम्, तथापि सौगतदर्शनं प्रति तु बाल एवाहमासम्। अथ यथा यथाहं तस्मिन् कर्मणि व्यापृतस्तथा तथा तज्ज्ञानं प्रति ममौत्कण्ठ्यम्प्रवर्धमानमेवाभूत्, अतो मया पालिसाहित्ये आचार्यपरीक्षामुत्तरीतुं मनीषा कृता। परन्तु तदा तत्परीक्षायां निर्धारितानि प्रायः सर्वाणि पुस्तकान्यनुपलब्धान्यासन्। यथाकथमपि कल्याणमित्त्राणां साहाय्येन सा परीक्षोत्तीर्णा। ततो हीनयानसिद्धान्तानां कथ-ञ्चित् परिचये जाते महायानसाहित्याध्ययनार्थं मया प्रयतितम्। तदर्थं च वाराणसेयसंस्कृतविश्वविद्यालयस्य बौद्धदर्शनाचार्यपरीक्षोत्तीर्णा। तस्यां परीक्षायां निर्धारितानि ग्रन्थानि त्वद्यत्वेऽप्यनुपलब्धान्येव, का कथा तस्य कालस्य! अतोऽध्ययनकाल एव मया दृढं निरणायि यत् सत्यवकाशे बौद्धसाहित्यस्य सौलभ्यार्थं कोऽपि प्रयत्नः करणीयः।

वर्षद्वयात् पूर्वमहं केनापि कार्यविशेषेण नालन्दां गतवान्। तत्रत्य-पुस्तकालये मया तत्त्वसंग्रहस्य कस्याश्चित् पुराणमातृकाया एका चित्रप्रति-कृतिर्दृष्टा। तां दृष्ट्वा हृष्टमानसेन मया तत्रत्याधिकारिणः प्रार्थितास्तस्या उपयोगार्थम्। तैर्निर्दिष्टोऽहं तत्रैवोषित्वा तां प्रतिकृतिमक्षरशो मासमधीतवान्। परं तत्र केषाञ्चित् पत्त्राणां प्रतिकृतिः स्पष्टा नासीदिति 'कुत इयं प्रतिकृतिरागता' इत्येतद्विषये तत्रत्याधिकारिणोऽपि न किञ्चित् प्रामाणिकमवाबोधयन्। अतोऽहं-स्ततोऽनुमानबलाश्रयेणैव राजस्थाने जैसलमेरं प्रति प्रतस्थे। मम सौभाग्येन तत्रत्यजिनभद्रसूरीश्वरज्ञानभाण्डागारे एका मातृकोपलब्धा, या वस्तुतो नालन्दा-स्थचित्रप्रतिकृतेरुपजीव्यभूता अस्तीति तद्भाण्डागारस्थाधिकारिभिः सेतिहासं ज्ञापितम्। अस्तु। तत्रोषित्वा मया पुनः सा मातृका अक्षरशः पठिता। एवं तत्त्वसंग्रहस्य तन्मातृकाधारेण प्रायः शुद्धः पाठो निर्धारितोऽभूत्।

तदनन्तरमस्य ग्रन्थस्य पुनः प्रकाशनाय पुनः पुनः सम्बोध्यमानोऽपि न कश्चन प्रकाशकोऽस्मिन् कर्मणि व्यापृतोऽभूत् । अन्ते मयैवैतत्साहसमाचरितम्, निरणायि च यद् बौद्धसाहित्यस्य दुर्लभग्रन्थानां पुनर्मुद्रणार्थमेकं प्रतिष्ठानं स्थापनीयम्, यत्रेमे तत्त्वसंग्रहसदृशाः सर्वेऽपि दुर्लभा बौद्धग्रन्था प्रकाशमाप्नुयुः । इत्येषा बौद्धभारतीपरिषदः स्थापना-भूमिः ।

एवमितो बौद्धभारतीपरिषदो वयं सर्वाङ्गसौष्ठवसम्पन्नं कमलशीलपञ्जिकासनाथं तत्त्वसंग्रहाख्यमिमं प्रथमं दुर्लभं बौद्धग्रन्थं प्रकाश्य विदुषां समक्षं समुपस्थापयामः । अग्रेऽपि अन्यान् सुदुर्लभान् ग्रन्थान् प्रकाशयिष्याम इत्याशासाना वयं बौद्धदर्शने कृतभूरिपरिश्रमाणाम्, अनुरागमावहताञ्च विदुषामस्मिन् शुभे कर्मणि सर्वविधं साहाय्यं प्रार्थयामहे ।

अन्ते चास्या बौद्धभारतीपरिषदः स्थापने, तत्त्वसंग्रहसम्पादनकर्मणि च येषां विदुषां योगः प्राप्तस्ते कृतज्ञानामस्माकं सर्वथा प्रणम्याः—इति विज्ञापयति ।

रक्षाबन्धनम्, २०२५ वै०
वाराणसी

प्रकाशकः

## FOREWORD

Swami Dwarika Das Shastri is now editing the *Tattvasaṅgraha* of Śāntarakṣita with kamalaśīla's *Pañjikā*. It was first edited and published in the Gaekwāra Oriental series. It created a stir in the academic world. Dharmakīrtti's Pramāṇavārttika was then inaccessible. The Tattvasaṅgraha throws literally a flood of light on Buddhist metaphysics of the Sautrāntika Yogācāra school and logic and epistemology. The most remarkable feature of this work is its reproduction of the views of scholars who otherwise would have remained in perfect oblivion. Kamalaśīla gives the names of the authors and quotes from them. It shows the philosophical activities and speculations of nearly three centuries from time of Dharmakīrtti down to Uddyotakara. It was a period of brisk speculation and hard thinking. Diṅganāga and Dharmakīrtti's works gave a good jolt and shock to orthodox schools of philosophy. They were faced with the risk of loss of prestige and even existence. The philosophical complacency was made impossible.

From the study of this work along with Uddyotakara's *Nyāyavārttika* and Kumārila's works one can easily gather the cultural movements of centuries. The ruthless attack on the realism sponsored by the Nyāya school and particularly the reputation of the Soul theories, backed by powerful logic created a veritable peril. The criticism of the infallibility of the Vedas provoked spirited counter-attacks from the Mīmānsā school of which Kumārila was the most powerful exponent, and acted as the defender of the faith. The counter-criticisms of these orthodox stalwarts succeeded in undermining the prestige of the Buddhist church. But the Buddhist were not supine and reacted with vigour and verve. The *Tattvasaṅgraha* pre-eminently represents this phase of Buddhist reaction. This rivalry and intellectual combats served a very salutary purpose. It brought into

being intellectual stalwarts on both sides. These giants were to be admired not only for their thoughts but also for their language. Such a command of Sanskṛt and its felicity of expression and masterful diction will remain an object of admiration for all time to come.

The Gāekwāra publication was long out of print, and a fresh edition was the crying need. Swami Dwarika Das Shastri has made his mark as a keepable editor of Sanskṛt classics. He deserves the thanks of the Sanskrit academies and scholors interested in Indian thought for rescuing the invaluable treasures of India from oblivion.

As for the *Tattvasaṅgraha* and the *Pañjikā*, the old edition was based upon imperfect manuscripts. We have got in the Nalanda library photostat copies of a manuscript which supplies all the lacune. I request my learned friend Swami Dwarika Das Shastri to utilise this source. It is a matter of congratulation that Sanskrit has not lost its favour even in the present secular India, which is suffering from a thousand and one maladies. India's regeneration will come through Sanskṛt. It is the immortal language of India. Though perhaps 99% of old Sanskṛt classics have met with death, the surviving classics are sufficient to make us alive to the heights and depths of Indian thought when India was not enslaved by foreigners.

I consider it my duty to bring to a focus the academic activities of Sanskrit scholars in the present-day, and I can point to Swami Dwarika Das Shastri as one of them. I am proud of his achievements and it is my confidence that I am voicing the general belief.

Ratma,
Dakshingram P. O.
Dist Birbhum,
West Bengal.

SATKARI MOOKERJEE
11. 7. 68

श्रीनवनालन्दामहाविहारस्याध्यक्षचरणां

डा० सातकारिमुकर्जीमहाभागानां

# प्रास्ताविकम्

स्वामी द्वारिकादासशास्त्री कमलशील-पञ्जिकासनाथस्य श्रीशान्तरक्षित-विरचितस्य तत्त्वसंग्रहस्य सम्पादनकर्मण्यद्यत्वे प्रवृत्तोऽस्ति। पूर्वमयं ग्रन्थो बटोदरस्थगायकवाड्ग्रन्थमालायामपि सम्पादितः प्रकाशितश्चाभूत्। तदैतद्ग्रन्थे प्रकाशमायाते, विद्वज्जनमनांसि कुतुकाक्रान्तानि मोदमानानि चाभूवन्। आचार्यधर्मकीर्त्तेः प्रमाणवार्त्तिकं तदात्वेऽनुपलम्भान्निभृतमिवासीत्, अतस्तदानीं केवलं तत्त्वसंग्रहेणैव सौगतवादाः प्रामाणिकत्वेन ज्ञातुं पार्यन्ते स्म। तत्त्व-संग्रहतः सौगतेषु सौत्रान्तिक-योगाचारनिकाययोस्तत्त्वशास्त्रस्य, तर्कशास्त्रस्य, ज्ञानमीमांसायाश्चानेके प्रश्ना याथातथ्येन दार्शनिकैरवबोद्धुं शक्यन्ते।

ग्रन्थस्यास्य स्वकीयं वैशिष्ट्यमिदमेव यदत्र ग्रन्थकारोऽन्येषां दार्शनिकानां मतान्यपि निर्दिशति। कमलशीलश्च नामग्राहं तद्वचनान्युदाहरति। ग्रन्थकारो-ऽयं तदानीन्तनशतकत्रये जातां धर्मकीर्त्तिं उद्द्योतकरपर्यन्तां दर्शनपरिचर्चा-मुल्लिखति। अस्मिन् काले ( ग्रन्थकर्तुः समये ) दार्शनिकाः प्रश्नाः सूक्ष्मेक्षि-कया विवेच्यमाना आसन्। आचार्यदिङ्नाग-धर्मकीर्त्तिप्रबन्धैरास्तिकदर्शनानां सर्वमान्याः सिद्धान्ता न केवलं भृशं कम्पिताः, अपि तु तेषामस्तित्वमपि सौगत-प्रबन्धानां पुरतः सन्दिग्धमिव जातम्। 'अहमेव तत्त्वदर्शी' इति दार्शनिकाना-मात्मतोषस्तदात्वेऽसम्भव एवाभूत्।

ग्रन्थेनानेन सहोद्द्योतकरीयन्यायवार्त्तिकस्य, कौमारिलप्रबन्धानां श्लोक-वार्त्तिकादीनाञ्चाध्ययनेन पाठकैरनायासेनैव तेषु शतकेषु जाता सांस्कृतिकप्रगतिः, दार्शनिकानां तत्त्वगवेषणा वा अधिगन्तुं शक्यते। तदा नैयायिकानां वस्तुवाद आत्मवादश्च बौद्धानां तर्ककुलिशप्रहारैः निःसत्त्वाविव जातौ। बौद्धानां च वेदप्रा-माण्यवादखण्डनं मीमांसाशास्त्रनिष्णातेन कुमारिलविदुषा महताऽऽटोपेन निरस्तम्, मीमांसासम्प्रदायश्च रक्षितः। एवमास्तिकदार्शनिकानां युक्तिजालेन बौद्धानां सम्मानं दार्शनिकजगति धूलिसादिव जातम्। परं बौद्धा अपि न तूष्णीमासुः, तैरप्यास्तिकदार्शनिकाः भृशमप्रत्याख्येयाभिर्वाचोयुक्तिभिः प्रतिप्रहृताः। सोऽयं

तत्त्वसंग्रहोऽस्यामेवाहमहमिकायां समयपरम्परायां निबद्धः। एवमस्या दर्शन-प्रतिद्वन्द्विताया: बौद्धिकसंग्रामस्य वा सुखद एव परिणामः समभूत्। उभयत्रापि, बौद्धेषु आस्तिकेषु च, उद्भटा विद्वांस आचार्यास्तत्त्वमीमांसकाः प्रादुरभूवन्। इमे दर्शनकेशरिणो न केवलं तत्त्वमीमांसायामेव प्रशस्याः, अपि तु एषां भाषासौष्ठवमपि तथैव प्रशस्ततमम्। इत्थमेषां दर्शने, भाषायाम्, छन्दोरचनासु च यावान् गरिष्ठोऽधिकारः, सोऽस्माकं वराकाणां कृते सततमनुकरणीय एव।

तत्त्वसंग्रहस्य गायकवाड़ग्रन्थमालासंस्करणं बहुहायनेभ्यः पूर्वमेव समाप्तमभूत्। अतोऽस्य ग्रन्थस्य नवं सर्वाङ्गसौष्ठवसम्पन्नं संस्करणं नितरामावश्यकमासीत्। स्वामिना द्वारिकादासशास्त्रिणा, प्राचीनसंस्कृतग्रन्थानां विश्वसनीयेन सम्पादकेन, इमं ग्रन्थं साधु सम्पाद्य वस्तुतो लुप्ता भारतीसम्पद् पुनरुज्जीविता। अतोऽयं मनीषी प्राच्यविद्याप्रतिष्ठानानाम्, दर्शनेषु सञ्जातरुचीनां विदुषां चातीव धन्यवादार्हः।

गायकवाड़ग्रन्थमालासंस्करणमेकां त्रुटितामत एवापूर्णां मातृकामुपजीव्य सम्पन्नमासीत्। नवनालन्दामहाविहारस्य पुस्तकालयेऽस्माभिरेका पुराणमातृकायाश्चित्रप्रतिकृतिरुपलब्धा, यत्र सर्वास्त्रुटयः सम्पूरिता इव दृश्यन्ते। अहमस्मन्मित्राणि स्वामिद्वारिकादासमहोदयाननुरुणध्मि यत्ते इमां मातृकामप्यवश्यमेव परिशीलयेयुः। इदं सन्तोषावहमेव यदद्यत्वेऽप्यस्मिन्नधुनातने धर्मनिरपेक्षे संस्काराच्च्युते च भारते संस्कृताध्ययनाध्यापनं मनीषिभ्यो रोचत एव। भारतस्य पुनरुत्थानं संस्कृतभाषयैव भविष्यतीति मे बलिष्ठो विश्वासः। यद्यप्यधुना संस्कृतस्य शतान्नवनवतिर्ग्रन्था अस्मद्दौर्भाग्येण लुप्ता एव, तथापि ये ऽवशिष्टास्तेऽप्यस्मान् प्राचीनभारतस्य दार्शनिकतत्त्वज्ञानं प्रति सततं जागरूकान् विदधति।

इदञ्च मदीयं कर्तव्यं यद्यूनां संस्कृतविदुषां लेखनकार्याणि विद्वज्जनपर्षदि समुपस्थापयेयम्। एषु युवसु विद्वत्स्वेकः स्वामी द्वारिकादासशास्त्री, गर्वितोऽहमस्योपलब्धौ—इति कथयन्नहं न केवलं ममैव, अपि तु विद्वज्जनपर्षदोऽपि हार्दं प्रकटयामीति मे दृढीयान् विश्वासः।

रतमा
पो० आ० दक्षिणग्रामः
वीरभूममण्डलम्
वङ्गप्रदेशः

सातकारी मुकर्जी
११. ७. ६८

# प्रास्ताविकं किञ्चित्

अथायं प्रस्तूयतेऽस्मन्मित्रेण स्वामिना श्रीद्वारिकादासशास्त्रिणा समुपलब्धमातृकाभिर्यथाविधि संस्क्रियमाण आचार्यश्रीशान्तरक्षित-कृतस्तत्त्वसंग्रहः तत्पुत्रेण शिष्येण वा आचार्यकमलशीलेन कृतेन तद्व्याख्याग्रन्थेन सह विपुलकायः।

ग्रन्थोऽयं यद्यपि बौद्धानाम्, तत्रापि माध्यमिकप्रस्थानविशेष-स्यैव; तथाप्ययं ख्रिष्टीयाष्टमीं नवमीं च शताब्दीं यावदुपबृंहितानां वैदिकावैदिकभारतीयदर्शनानाम्, स्वस्वशाखास्वप्यनतिपरिचिता-नाम्, अपरिचितानां वा विशिष्टवादानां तदाचार्यग्रन्थानां परीक्षा-मिषेणात्र पूर्वपक्षेषु यथातथसमुद्धरणेन तदवधिकभारतीयदर्शना-नाम् आकरग्रन्थमाहात्म्यं लभते। स्वस्वप्रमाणप्रमेयविद्याबृंहण-व्यग्राभ्यां बौद्धतदितराचार्यपरम्पराभ्यां परस्परं क्षेपप्रतिक्षेपविधया दर्शनशास्त्राणां विविधप्रस्थानेषु यत् समुद्भावनम्, विकासो व समजनि, तस्येतिवृत्तमेवाद्यापि विश्वेऽस्मिन् भारतीयदर्शनानां माहात्म्योत्कर्षं ख्यापयति। तस्या वादप्रतिवादपरम्परायाः प्रायो विसर्जनकाले गुरुशिष्याभ्यां प्रणीतोऽयं सन्याख्यो ग्रन्थस्तां सकलामपि सहस्रवत्सरावधिजातां पारस्परिकीं विद्याकथिकतां स्मारयति, यथासम्भवं चानुभावयति। तत्तद्विद्यासम्प्रदायेषु कदाचिदतीव विख्यातानाम्, अनन्तरं नामशेषं गतानाम् अविद्ध-कर्ण–शङ्करस्वामि–भाविविक्त – योगसेन – लक्षणकार–सुमति–पात्रस्वामि – पुरन्दरप्रभृतिविदुषां नामग्राहम्, अनामग्राहं वा प्रामाणिको वाद-परिचयोऽस्मिन् ग्रन्थे लभ्यते। जगन्मिथ्यात्ववाद-शब्दब्रह्मवाद-ईश्वरसधर्मतावाद – नित्यज्ञानविवर्त्तवाद–वात्सीपुत्रीयात्मवाद — निराकार-साकारज्ञानवादप्रभृतयोऽनेके वादाः स्वस्वप्रस्थानेषु सुप्रसिद्धा अप्यत्रापूर्वोपपत्त्यादिभिरभिनवत्वं भजन्ते। चार्वाक-साङ्ख्य-मीमांसादिप्रसिद्धप्रस्थानानां ग्रन्थेष्वप्यपरिचिताः केचिद् वादा अत्र सुविवृता दरीदृश्यन्ते। प्रशस्तमतिभाष्य-न्यायवार्त्तिक-श्लोकवार्त्तिक-वाक्यपदीय-साङ्ख्यकारिकादिमूलग्रन्थांशान् उपजीव्य तत्रत्यवादा पुङ्खानुपुङ्खरूपेण यथा अत्र परीक्षिताः, तथान्यत्रार्वा-चीनदर्शनग्रन्थेष्वपि नोपलभ्यन्ते। वस्तुतोऽस्य ग्रन्थराजस्य

महिम्ना प्राचीनभारतीयदर्शनानाम्, तत्रापि विशेषतो बौद्धदर्शनानां प्रज्ञासाम्राज्यं सम्प्रकाशं भवति।

पञ्जिकासहितोऽयं तत्त्वसंग्रहाख्यो ग्रन्थोऽस्ति बौद्धेषु माध्यमिकानाम्, तत्रापि च योगाचारव्यवहारसम्मतस्य निकायविशेषस्य। विदितचरमेव प्रासङ्गिक-स्वातन्त्रिकाभ्यां माध्यमिकानां भेदः। तत्र स्वातन्त्रिकविधया पुद्गलधर्मयोर्निःस्वभावत्वख्यापनादस्य परमार्थतः शून्यवादित्वस्थितिः। व्यवहारनयेऽस्य योगाचार-विज्ञप्तिमात्रवादित्वेन बाह्यार्थनिषेधो निःस्वभावता च पर्यवस्यति, न तु विज्ञप्तितत्त्वविनिश्चितिः। एतैः सांवृतस्वतन्त्रोपपत्तिभिः प्रतिबिम्बवदात्मद्वयमङ्गीकृत्य व्याप्तिविनिश्चयद्वारा पुद्गलधर्मात्मनोः स्कन्धेभ्य एकत्वानेकत्वनिषेधेन निःस्वभावता प्रकटीक्रियते। शान्तरक्षितकमलशीलसम्मतोऽयं व्यावहारिको विज्ञानवाद आचार्यवसुबन्धु-दिङ्नाग-धर्मकीर्त्यभिमतात् पारमार्थिकविज्ञानवादाद् बहुधा भिन्नः, आर्यमैत्रेय-असङ्गसम्मताच्च अनेकधा समानः प्रतीयते। अत एव विज्ञप्तितत्त्वस्य नित्यत्वानित्यत्व—एकत्वानेकत्वविषये वसुबन्ध्वादिभ्यः पृथग्वादोऽत्र समुपलभ्यते। समासत इदमेवाचार्यशान्तरक्षितस्य दर्शनहृदयम्। इदञ्च न तत्त्वसंग्रहे पञ्जिकायां वा विस्तरशो विविक्तं दृश्यते। अयं हि ग्रन्थः परपक्षपरीक्षया बौद्धतदितरयोरनभिमतसिद्धान्तानां निराकरणप्रधानः। स्वाभिमतो योगाचारसहः स्वातन्त्रिकमाध्यमिकवादस्तु आचार्यैः शान्तरक्षितैः स्वकृतमध्यमकालङ्कारे विवृतः।

अयञ्च ग्रथनप्रकारो मध्यमकमतप्रवर्त्तकानाम् आचार्यनागार्जुनपादानां शासनानुकारमेव भजते। यथा तैः माध्यमिककारिकासु स्वसिद्धान्तमन्तर्भाव्य तदविरोधेन तत्र परपक्षः परीक्ष्यते, अन्यत्र च स्वरत्नावल्यादिग्रन्थेषु प्राधान्येन स्वमतं स्फुटीक्रियते, तथैव शान्तरक्षितेनाप्ययं क्रमोऽङ्गीकृतः।

तत्त्वसंग्रहस्य विषयविन्यासविधौ आचार्यनागार्जुनकृताया माध्यमिककारिकायाः, धर्मकीर्त्तिकृतस्य प्रमाणवार्त्तिकस्य च भूयान् रचना-प्रभाव आलक्ष्यते। यद्यपि शान्तरक्षितेन तत्त्वसंग्रहे त एव कतिपये प्रमेयाः परीक्षितुमुपस्थापिताः, ये तदानीं बौद्धतदितरयोर्भृशं विमता आसन्। प्रमाणचर्चाऽपि तेन बहुशो न कृता, यथा प्रमाणवार्त्तिके विस्तरेणोपलभ्यते; तथापि समानानां विवेच्य-

विषयाणां परीक्षाप्रसङ्गे स एव क्रमो गृहीतो यो हि प्रमाणवार्त्तिककारेण स्वीकृतः। अस्ति द्वयोरप्यालयविज्ञानानङ्गीकारः समानः, तथापि विज्ञप्तितत्त्वाङ्गीकारानङ्गीकाराभ्यां परतन्त्रसत्ताविषये प्रवर्तमानं महदन्तरं सत्यपि द्वयोर्विज्ञानवादित्वे प्रस्थानभेदं विदधाति। इमं प्रस्थानभेदमवज्ञायैव द्वयोः रचनाप्रकार-विषयविन्यासादिसाम्यमाकलयितुं युक्तम्। एवमेव यथा नागार्जुनपादैः प्रतीत्यसमुत्पादः मध्यमप्रतिपद्रूपोऽष्टविधविशेषणयुतः सकलमध्यमककारिकाभिः परपक्षनिरसनेन प्रकटीकृतः, तथैव शान्तरक्षितेनापि तादृश्येव शून्यतागर्भा मध्यमा प्रतिपद् विज्ञानवादसम्मतोपपत्त्यादिभिः परपक्षपरीक्षया चाङ्गीकृता।

इत्थं पूर्वोक्तसांख्य-न्याय-वैशेषिक-मीमांसा-भामह-भर्तृहरिप्रभृतीनां प्रस्थानानां प्रास्थानिकानां च तैर्थिकानां विशिष्टग्रन्थान् प्रत्याख्येयतया, माध्यमिक-धर्मकीर्त्त्यादीनां स्वयूथ्यानां विशिष्टग्रन्थान् समर्थनीयतया आश्रित्य तत्त्वसंग्रहप्रबन्धोऽनुसरणीयतां भजते।

आचार्यशान्तरक्षितस्याशीत्यधिकवत्सरावधिबृंहितं जीवनमाहात्म्यं न तावत् केवलमभिमतयोगाचार-स्वातन्त्रिकमाध्यमिकप्रस्थानविशेषस्य प्रवर्तकत्वेन, तत्त्वसंग्रह-मध्यमकालङ्कारादिविशिष्टग्रन्थानां निर्मातृत्वेनैव वा सम्यग् आकलयितुं शक्यते; यावद् भारतदेशाद् बहिर्भोटदेशे गतानां तेषां तत्र तत्र उपदिशतां नानाविधग्रन्थानुवादकौशल-नानासम्प्रदायप्रवर्त्तनादि वृत्तम्, अथ च तच्छिष्याणाम् आचार्यकमलशीलपादानां स्वाचार्यप्रवर्त्तितविद्यासम्प्रदायादिविस्तरणकृत्यं सम्यग् अधिगतं न भवेत्। इत्थं सशिष्यस्य शान्तरक्षितस्य ग्रन्थानामनुशीलनम्, तेषां भारतभोटदेशयोर्विहितानां विविधानुष्ठानानां चाकलनम्, ख्रिष्टीयाष्टमनवमशताब्द्योः प्रवर्तमानदार्शनिकविचाराणां सामाजिकत्वेन धार्मिकत्वेन च प्रसारकर्म तदानीम्प्रवर्धमानभारतीयसंस्कृतेरितिवृत्तं पुरस्करोति।

एवंविधग्रन्थानामनुपलब्धिः स्वाध्यायतत्पराणां विदुषां खेदाय भवति। पुस्तकालयेष्वप्यनेकवर्षेभ्यो विरलप्राप्तस्यास्य तत्त्वसंग्रहग्रन्थस्य पुनः प्रकाशोऽवश्यं मोदाय भवेत्। शास्त्रिणा श्रीद्वारिकादासस्वामिना तत्तत्पुस्तकभाण्डागारेषु पुरातनाद्यतनप्राप्तमातृकाधारेण परिष्कृत्य, प्रसङ्गबोधकानि नवशीर्षकाणि यथायथं

समारोप्य, यत्र तत्र त्रुटितांशांश्च भोटभाषयानूदिततत्त्वसंग्रहपञ्जिकासाहाय्येन देववाण्यां पुनः संस्कृत्य योऽयं सव्याख्यस्तत्त्वसंग्रहः पूर्वमुद्रितसंस्करणापेक्षया शोभनतरः प्रकाशितः, तेन नूनमिमेऽभिनन्दनीयतां गच्छन्ति। यदा तैर्बौद्धशास्त्रमस्मिन् विश्वविद्यालयेऽधिगतम्, तदानीं तत्त्वसंग्रहमनवाप्य स्वयं यत् कष्टमनुभूतम्, परेषां च यद् दृष्टम्, तत्फलेनैवानुपलब्धविशिष्टबौद्धग्रन्थानामुपलब्धये 'बौद्धभारती'-प्रतिष्ठानमाध्यमेन तेषामयं प्रकाशनसङ्कल्पः। तत्रायं सागरायमाणः सव्याख्यस्तत्त्वसंग्रहग्रन्थः प्रथम-पुष्पत्वेन प्रकाशितः।

वस्तुत एते स्वामिनः स्वामिन एव, न चाविरक्ता धनवन्तः स्वामिनः। अत एव तत्प्रकाशनव्यवस्थया नैते धनपतित्वं न वा क्वचिदाधिपत्यं कामयन्ते। तेषामयं प्रयासः बौद्धसिद्धान्तानां पुनः प्रचाराय प्रसाराय च। एतेनैव कारणेनैतद्वेगविवशैरेतैर्मासद्वयाभ्यन्तरेऽस्य प्रथमः खण्डः प्राकाश्यं नीतः, मन्ये चेतत्खण्डस्य विद्वद्भिर्यावदानुपूर्वीवाचनं क्रियेत तावदेव द्वितीयः खण्डः प्रकाशितो भवेत्। कार्ये विलम्बमसहमानैरेवैतैरभिमतोऽपि क्वचित् क्वचित् स्थलादिसंकेतो न कृतः। आशासे ग्रन्थावसाने स्वामिभिरेतादृशमभिमतमपि सम्यक् पूरयितव्यं स्यात्

एतद्ग्रन्थप्रकाशनपुण्यपुञ्जानुभावेन शान्तिद्वारिकादासस्वामिनां सङ्कल्पः सफलो भवेदिति कामयते—

३. २. '६८
वा० सं० विश्वविद्यालयः
वाराणसी

जगन्नाथ उपाध्यायः
( बौद्धदर्शनविभागाध्यक्षः )

# आमुखम्

रत्नत्रयं नमस्कृत्य मैत्रेयादीन् मुनींस्तथा ।
बौद्धदर्शनमालम्ब्य वक्ष्ये किञ्चिद् यथामति ॥

बुद्धावतारकालतः पूर्वमस्मिन्नार्यावर्त्तेऽनेके वादाः प्रसृता आसन् । तैश्चोद्वेल्लितमासीद् विचारजगत् । तदा 'अस्ति परो लोकः', 'नास्ति परो लोकः'; 'प्रेत्यभावादनन्तरं जीवस्यास्तित्वमस्ति', 'प्रेत्यभावादनन्तरं जीवस्यास्तित्वं नास्ति'; 'अस्ति कर्म, अस्ति कर्मणां फलम्, अस्ति च कर्मफलविपाकः', 'नास्ति कर्म, नास्ति कर्मणां फलम्, नास्ति च कर्मफलविपाकः'—इत्येवमादिभिर्बहुभिर्विचारजातैः कुतुकाक्रान्तानि जिज्ञासाभरितानि चासन् लोकानां मनांसि । ब्राह्मणेषु श्रमणेषु चोभयेष्वपि एतादृशी दर्शनचर्चा काले काले विचारगोष्ठीषु शास्त्रार्थपरिषत्सु राजसभासु च प्रावर्तत । तत्र श्रमणास्तावदवैदिका आसन्, ये वेदप्रामाण्यं कथमपि न स्वीचक्रुः । यज्ञयागादयस्तेषां नये क्षुद्रफला निष्फला वा, प्रत्युत हिंसाजनकत्वादनुपादेया एवासन् । एते श्रमणा आस्तिका नास्तिकाश्चोभयविधा अप्यासन्, परं त्रिपिटके तु नास्तिका एव उल्लिखिताः । सर्वेऽपीमे श्रमणाः प्रायस्तपःप्रधानाः, जगतो विरज्यन्तः, ब्रह्मचर्यं पालयन्तोऽहिंसामाचरन्तः, तत्त्वमन्वेषयन्तः कस्याप्याचार्यस्य गणे सङ्घे वा दीक्षिता भूत्वा संन्यस्तेन जीवनं यापयन्ति स्म । ब्राह्मणाश्च गार्हस्थ्यमनुप्रविष्टाः श्रुतिसम्मतां विविधयज्ञदानादिक्रियामनुतिष्ठन्तो वैदिकीं हिंसां हिंसां न स्वीचक्रुः । अत एव तदानीन्तनविचारजगति इमे श्रमणा ब्राह्मणाश्च काकोलूकमिवासन् । संक्षेपतो ब्राह्मणाः कर्मकाण्डप्रधानाः, आस्तिकाः, 'सुकृतदुष्कृतकर्मणां फलं फलविपाकश्चास्ति' इति मन्यमानाः, सरलाः, निःस्पृहाः, विद्याव्यसनिनश्चासन् । अत एव ते लोके प्रथितयशस्का बभूवुः ।

परं शनैश्शनैस्तात्कालिको लोकः श्रमणानामुपदेशेन, स्वयं च गम्भीरचिन्तनेन कर्मकाण्डविरोधी, अथ च पशुवधादुद्विग्न इवाभूत् । प्रायस्तदा

**उपनिषद्वादः**

यज्ञादिक्रियाकलापो हीनतां प्राप्तः। गृहे गृहे च तत्त्वविद्याचर्चा प्रावर्तत। 'तत्त्वज्ञानं सर्वातिशायि' इति तात्कालिकं लोकहृदयमभूत्। एतत्कालिकाः स्वात्मारामा मुनयोऽरण्ये आश्रमेषु तत्त्वचिन्तनरता न्यवसन्। गृहस्था जिज्ञासवोऽपि तत्रैवारण्ये तेषां सकाशात्तत्त्वविद्याधिगमाय गच्छन्ति स्म।

एषु श्रमणेषु ब्राह्मणेषु तापसवृत्तयोऽपि तत्त्वचिन्तका अभूवन्, ये शरीरक्लेशमपि तत्त्वाधिगमोपायं मन्यन्ते स्म। इमे तावद् वृक्षमूलनिकेतनाः, अरण्यवासाः, श्मशानवासाः, पांसुकूलधारिणो वा भूत्वा स्वस्वमार्गेऽभिरता आसन्।

**भगवान् बुद्धः**

अस्मिन्नेव काले—यदा हीयं दार्शनिकी चिन्ता आर्यावर्तस्य गृहे गृहे प्राचुर्येण प्रावर्तत यद् गृहस्था अपि आगारं त्यक्त्वा अनागारिका भूत्वा भिक्षुवृत्तिं स्वीकृत्य समुत्सुकास्तत्त्वज्ञानाय प्रयतन्ते स्म; भगवान् बुद्धः शाक्यवंशे क्षत्रियकुले गौतमगोत्रे नाम्ना सिद्धार्थः कपिलवस्तुनगरे महाराजशुद्धोदनस्य गृहेऽवातरत्। अयं मध्यमे वयस्येव श्रद्धया वीर्येण स्मृत्या समाधिना प्रज्ञोद्रेकेण च सम्यक्सम्बोधिमापत्, चित्तनिर्वाणमध्यगमत्, तृष्णाक्षयं चाकार्षीत्। सम्यक्सम्बुद्धेन च तेन बहुजनहिताय बहुजनसुखाय मध्यममार्गावलम्बिनी 'दुःखम्, दुःखसमुदयः, दुःखनिरोधः, दुःखनिरोधगामिनी च प्रतिपदा'—इत्येवं चतुरार्यसत्यरूपा तत्त्वाधिगमोपायस्य चतुःसूत्री उपदिष्टा। तल्लब्धये चार्याष्टाङ्गिको मार्ग उपदिष्टः।

**भिक्षुसङ्घः**

भगवन्तो बुद्धास्तदानीन्तनब्राह्मणा इव ईश्वरसत्तां वेदप्रामाण्यं वा न स्वीचक्रुः, नापि श्रमणा इव नास्तिकवादं प्रख्यापयामासुः; अपि तु इमावुभावपि मार्गौ विहाय मध्यममार्गमुपदिदिशुः। ईश्वरसत्तामस्वीकृत्यापि ते पुनर्जन्मपरलोकादिविषये प्रतिपन्नाः कर्म कर्मफलसम्बन्धं च स्वीचक्रुः। इयमेव बुद्धोपदेशानामुपलभा यत्तदानीन्तने आर्यावर्ते नास्तिकवादोऽस्तमितः, आर्यसंस्काराश्च पुनः प्रतिष्ठामापुः। एवं बौद्धसिद्धान्तानां चतुरस्रगत्या पराक्रमेण ते पूर्वोक्ता नास्तिका-

तापसाश्च लोके प्रभावहीना निःश्रीकाश्चाभूवन्, बुद्धपथपरिव्राजां भिक्षूणां सङ्घश्च सर्वत्र गृहस्थानां नागरिकाणाम्, राज्ञाम्, सम्राजां च प्रश्रयमुपलभ्य सर्वतो भावेनोन्नतिशिखरमारूढः। सम्राजि अशोके तु महीं शासति भिक्षुसङ्घोऽयमार्यावर्त्ते प्रहररविवद् देदीप्यमान आसीत्।

भगवतो बुद्धस्य महापरिनिर्वाणानन्तरमयं भिक्षुसङ्घो गच्छता कालेन—महासाङ्घिकनिकायः, स्थविरनिकायश्चेति निकायद्वये विभक्तोऽभूत्। तत्र स्थविरनिकायो विनयानुरोधी महासाङ्घिकनिकायस्योदारचिन्तकस्य प्रतिद्वन्द्वी। इमौ द्वावपि निकायावग्रे—१. आर्यमहासाङ्घिकनिकायः, २. आर्यस्थविरनिकायः, ३. आर्यमूलसर्वास्तिवादनिकायः, ४. आर्यमहासम्मितीयनिकायश्चेति चतुर्धा विभक्तः। वहुतिथे च काले गते चतुर्णामेषामप्यष्टादश भेदा जाताः। तथा हि—आर्यमहासाङ्घिकनिकायस्य सप्त, आर्यस्थविरनिकायस्य त्रयः, आर्यमूलसर्वास्तिवादनिकायस्य चत्वारः, आर्यमहासम्मितीयनिकायस्य च चत्वार इति। एवमयं भिक्षुसङ्घो महापरिनिर्वाणानन्तरं त्रिशतवर्षेष्वेव विचारभेदेनाष्टादशधा विभक्तोऽभूत्। तत्रार्यमूलसर्वास्तिवादस्यापीमे चत्वारो भेदा जाताः—१. मूलसर्वास्तिवादनिकायः, २. धर्मगुप्तनिकायः, ३. महीशासकनिकायः, ४. काश्यपीयनिकायश्च।

**संघे निकायभेदः**

एषु स्थविरनिकायो दक्षिणापथे ( सिंहलद्वीपादिषु ), महासाङ्घिकनिकायो मगधे, पूर्वेषु जनपदेषु च, मूलसर्वास्तिवाद उत्तरस्मिन् भारते ( कश्मीरादिषु ), महासम्मितीयनिकायश्च लाटप्रदेशे सिन्धुप्रदेशे च प्राधान्येन प्रसृतोऽभूत्।

आर्यावर्त्ते एष्वष्टादशसु निकायेषु कदाचित् मूलसर्वास्तिवादस्य सर्वतोऽधिकतमः प्रचारः प्रभावश्चासीत्। 'सर्वं बाह्यमाध्यात्मिकं च वस्तुजातमस्ति' इति मन्यन्ते स्म सर्वास्तिवादिनः। सोऽयं निकायः विचारवैमत्येन स्थविरनिकायतो बहोः कालात् पूर्वमेव पार्थक्यमभजत्। प्रसिद्धचीनयात्रिण इत्सिङ्गमहोदयस्य यात्राविवरणेनेदं स्पष्टं प्रतीयते यत्तस्य यात्राकालेऽस्मिन्नार्यावर्त्ते भिक्षुसङ्घे चत्वारः प्रमुखनिकाया आसन्, येष्वेक आर्यमूलसर्वास्तिवादनिकायोऽप्यासीत्। धर्मगुप्त-

**सर्वास्तिवादः**

महीशासक-काश्यपीयनिकाया अपि सामान्येन एतन्निकायान्तर्भूता एवासन्, न किमपि प्रमुखं वैशिष्ट्यमित एषु निकायेषु ।

गन्धारेषु कश्मीरेषु चायं निकायः पूर्वं वैभाषिकनिकायनाम्ना ख्याति-मुन्नतिं चालभत । 'विभाषया दीव्यन्ति चरन्ति वेति वैभाषिकाः' इति व्युत्पत्तिः । ज्ञानप्रस्थानग्रन्थस्य व्याख्या नाम्ना 'विभाषा' आसीत्, वसुमित्रोऽस्या व्याख्याया रचयिता । ज्ञानप्रस्थानस्य च रचयिता सर्वास्तिवादी कात्यायनीपुत्रः—इत्यैति-ह्यविदः । अस्या विभाषाया रचनाकालो महाराजकनिष्कतः परवर्ती । अस्यां व्याख्यायां सर्वास्तिवादनिकायस्य प्रमुखाणां सर्वेषामाचार्याणां मतानि यथायथ-मुपनिबद्धानि—विनेया यथेच्छं किमपि मतं गृह्णीयुरिति । 'महाविभाषा-शास्त्रम्' इति चास्याः पूर्णं नाम । अस्याश्च विपुलकायत्वेन जिज्ञासूनां दुरधि-गमतयाऽऽचार्येण वसुबन्धुना 'अभिधर्मकोष'नाम्ना एपा संक्षेपं नीता ।

यत्किञ्चिदिदं जगति सत् तत्सर्वं वैभाषिकनये विषयि-विषयभेदेन द्विधा विभक्तुं शक्यते । विषयिगतविभागे त्रयो भेदाः—पञ्च स्कन्धाः, द्वादशायतनानि, अष्टादश धातवश्च । विषयगतविभागोऽपि द्विविधः—संस्कृतासंस्कृतभेदेन । तत्र संस्कृता धर्माः कारणजनिताः, अत एव तेऽस्थायिनोऽनित्याः, गतिमन्तः, सास्रवाश्च । असंस्कृतास्तु धर्मा न कारणजनिता इति

वैभाषिकनयः

ते शाश्वताः, नित्याः, निश्चलाः, अनास्रवाश्च । वैभाषिकाः 'सर्वं वस्तु क्षणचतुष्टयमात्रस्थायि' इति मन्यन्ते । तेषु प्रथमः उत्पत्तिक्षणः, द्वितीयोऽस्तित्वक्षणः, तृतीयो विलयनक्षणः, चतुर्थोऽन्तिमश्च विनाशक्षणः । अयमेव बौद्धानां क्षणिकवादः । वैभाषिकाणां नये पृथिव्यप्तेजो-वायुरूपाणि चत्वार्येव तत्त्वानि, न त्वाकाशः । परमाणूनां परस्परं संयोगेन वस्तु स्वरूपमादधाति, सर्वाण्यपि वस्तून्यन्ते परमाणुषु लीयन्ते—इति तेषां समयः । ते हि द्व्यणुकस्य त्र्यणुकस्य च सत्तां नाङ्गीकुर्वन्ति । तेषां मते परमाणुष्वपि रूपम्, रसः, गन्धः, स्पर्शो वाऽस्ति, परमतीन्द्रियत्वात् तस्य सत्ता न प्रतीयते । सति च परमाणूनां सङ्घाते एषां सत्तापि प्रत्येतुं शक्यते वैभाषिका ज्ञानग्राहकं विज्ञानम् ( मनः, चित्तं वा ) मन्यन्ते । एषामिदं चित्तं

नैयायिकानामात्ममनसोः सम्मिश्रितं रूपमिव । 'विषयैः सह सन्निकृष्य इन्द्रियैर्यज्ज्ञानं प्राप्यते तच्चित्ताय समर्प्य तानि स्वयमुपरतानि भवन्ति'—इति वैभाषिकाणां नयः। इमानीन्द्रियाणि च भौतिकतत्त्वसम्भूतानीति तेषां मतसंक्षेपः ।

वस्तुतस्तु वैभाषिकाणामयं सर्वास्तित्ववादः केवलम् 'सर्वं चित्तमात्रम्' इति मन्यमानानां विज्ञानवादिनां प्रतिद्वन्द्वी । न हि 'सर्वमस्ति' इति प्रतिज्ञामात्रेण भवेदैक्यम् । अत्रत्योऽयं सर्वशब्दः कतिपयबाह्यार्थानां क्रोडीकरणेनैव चरितार्थः, न विवक्षितमतिलङ्घते । बाह्योऽप्यर्थः परैरिव न चिरानुवृत्तः, न वाऽन्यसलक्षणः, न वा नित्यैकहेतुकः; किन्तु क्षणिकः, स्वलक्षणः, स्वपूर्वपूर्वक्षणलक्षणहेतूपनिबन्धकश्चेति । अत्र बौद्धनये प्रत्यक्षमनुमानं चेति द्वे एव प्रमाणे ।

'सूत्रान्तमेव प्रमाणं येषां ते' इति सौत्रान्तिकशब्दव्युत्पादः । इमेऽपि सौत्रान्तिकाः सर्वास्तिवादिन एव । इमे बाह्यजगतः सत्तामनुमानेन प्रतिष्ठापयन्ति, न तु प्रत्यक्षेण । ते हि मन्यन्ते—यदा सर्वं क्षणिकम्, तदा तत्स्वरूपं प्रत्यक्षं कथं भवितुं शक्नोति ? यस्मिन् क्षणे यत्किमपीन्द्रियं केनापि वस्तुना सह सन्निकर्षमाप्नोति, तस्मिन्नेव क्षणे तद्वस्तु परिवर्तते, तत्प्रतिबिम्बमात्रं च चित्ते आधीयते, एतत्प्रतिबिम्बमाश्रित्यैव तद्वस्तु अनुमानेन ज्ञायते । एषां मते ज्ञानं स्वसंवेदकम् ।

**सौत्रान्तिकवादः**

यथा हि दीपः स्वयमेव स्वं ग्राहयति तथैव ज्ञानमपि स्वयमेव स्वं वेदयति । ज्ञानस्येयं स्वसंवेदनप्रक्रिया विज्ञानवादिनामप्यभिमता । वैभाषिका इव सौत्रान्तिका अपि आत्मनः, ईश्वरस्य वा सत्तां न स्वीकुर्वन्ति । सृष्टेरयं क्रमोऽनादिरनन्तश्च, नास्याः कोऽपि निर्माता । अस्या ईश्वरनिर्मातृत्वं बहुभिः प्रबलैर्युक्तिप्रमाणैः खण्डितम्। सौत्रान्तिकानां नये दुःखमात्रमिदं जगत् । साधारणैर्जनैरपि यत्किञ्चित् सामान्येन सुखमनुभूयते; तदपि वस्तुतो दुःखमेव ।

सर्वास्तिवादाभिमानिनाविमौ द्वावपि नयौ स्थविरनिकाया( हीनयाना )न्तःपातिनावेवेति विदुषा सम्मतिः। आचार्यनरेन्द्रदेवस्तु—"यद्यपि सौत्रान्तिकानां गणनं हीनयान एव क्रियते, तथापि तेषां केचित् सिद्धान्ताः महायान-(योगाचार-माध्यमिक-)मतानुयायिभिः सह संगच्छन्ते । अयं सौत्रान्तिक-

वादो बौद्धसिद्धान्तेषु संक्रमणावस्थाप्रदर्शनपरो दर्शनविशेषः" इति मन्यते स्म (बौ० ध० द० पृ० १२८)। एतदेव मतं वयमपि स्वीकुर्मः।

सर्वशून्यवादिनो माध्यमिकाः पुनरेवं मन्यन्ते—सर्वं वस्तु स्वगुणसमाहारमात्रम्। एवं सति आत्मा स्वगुणाच्चैतन्यादतिरिक्तं नान्यत् किञ्चिद्वस्तु। यद्यात्मा स्वकर्मभिर्दर्शनस्पर्शनादिभिर्भिन्नः, तर्हि इमानि दर्शनस्पर्शनादीन्यपि किमात्मना विना न भवितुं शक्नुयुः। एषां मते—सर्वमिदं चराचरं शून्यम्। किमिदं शून्यम्? शून्यं परमं तत्त्वम्। तथा ह्याहुः—

**माध्यमिकवादः**

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥"

तदिदं शून्यं सदसद्विशिष्टं किमप्यनिवर्चनीयं वस्तु। इदं न भावात्मकम्, नाप्यभावात्मकम्। इदमेव माध्यमिकानां मध्यमा प्रतिपदा।

शून्यवादग्रन्थेषु विंशतिः शून्यता निरूपिताः। माध्यमिकानां नये शून्यमेव केवलं तत्त्वम्। वस्तुतस्तु तत्त्वमिदं तर्काप्रतिष्ठम्। तर्केण हि सदसद्वस्तून्येव प्रमाणयितुं शक्यन्ते। यत्तु सदसद्विलक्षणम्, तन्न तर्केण तोलयितुं शक्यम्। इदं शून्यतत्त्वमौपनिषदमनिर्वचनीयतत्त्वमिव।

आचार्य-असङ्गमहाभागा विज्ञानवादस्य प्रथमे प्रवक्तारः। आर्यमैत्रेयश्च अस्य प्रतिष्ठापकः। महायानसूत्रालङ्कारमनयोरेव रचना। तत्र मूलम् मैत्रेयस्य, टीका चासङ्गस्येति सर्वे विदन्त्येव। इदमाचार्यासङ्गस्य दर्शनं समन्वयमूलकम्। अत्र वैभाषिकाणां पुद्गलनैरात्म्यम्, सौत्रान्तिकानां क्षणिकवादः, मध्यमकानां नागार्जुनप्रमुखाणां शून्यतावादश्चेत्येते सर्वेऽपि वादाः प्रतिपादिताः। परमार्थासङ्गस्य एष समन्वयः पारमार्थिको विज्ञानवादः।

**योगाचारः (विज्ञानवादः)**

अयं विज्ञानवादोऽद्वयवाद एव, यत्र द्वयस्याभावः प्रतिपाद्यते। अस्मिन् वादे सम्बोधिप्राप्त्यर्थं योगस्य सर्वातिशायिनी प्रतिष्ठा दृश्यते। अत्र विज्ञानमेव सत्त्वम्। तदिदं सर्वं दृश्यमानमनुभूयमानमाध्यात्मिकं भौतिकं च जगत्

विज्ञानाधिष्ठितम्, विज्ञानमयमेव । तदिदं सर्वात्मकं विज्ञानम् 'आलयविज्ञानम्' इत्यभिधीयते, तच्च काल-स्थितिभेदेनानन्तभेदैर्भिद्यते । सर्वमपि जगत् आलय-विज्ञानत उत्पद्यते, तत्रैव च लीयते । ज्ञेयम्, ज्ञाता—इत्युभयमप्यालयविज्ञान एवावतिष्ठते । अस्मिन् वादेऽष्टौ विज्ञानानि भवन्ति । तानि यथा—चक्षुःश्रोत्र-घ्राण-जिह्वाविज्ञानानि चत्वारि । पञ्चमं कायविज्ञानम् । षष्ठं मनोविज्ञानम् । सप्तमं क्लिष्टमनोविज्ञानम् । अष्टमञ्चालयविज्ञानमिति संक्षेपः ।

अत्र, परिकल्पित-परतन्त्र-परिनिष्पन्नभेदेन ज्ञानस्य त्रैविध्यं स्वीकृतम् । स्वप्नावस्थायां प्राप्तं ज्ञानं परिकल्पितं भवति; तस्याधारस्य कल्पनामात्रत्वात् । यदर्थं च पूर्वज्ञानमपेक्ष्यते, तत्परतन्त्रमिति कथ्यते; तस्य पूर्वज्ञानाधीनत्वात् । यथा हि—श्वस्तननीलज्ञाने इदानीन्तननीलज्ञानं कारणमिति श्वस्तननीलज्ञानं परतन्त्रम् । तत्रेदानीन्तननीलज्ञानं बीजरूपेणावतिष्ठते । यदा हि एतादृशानि बीजज्ञानानि नोत्पद्यन्ते, तेषां पूर्वज्ञानानां क्षयो भवति, तदा तज्ज्ञानं परिनिष्पन्न-मित्यभिधीयते । परिकल्पितं ज्ञानं भ्रान्तिमात्रम्, यथा रज्जौ सर्पज्ञानम् । परतन्त्रं ज्ञानमपि व्यवहारमात्रम्, यथा रज्ज्वां रज्जुत्वप्रकारकं ज्ञानम् । परिनिष्पन्नं ज्ञानं तु पारमार्थिकं सत्यम्, यथा 'सर्वं बुद्धिमयं जगत्' । इदं परिनिष्पन्नं ज्ञानं योगेनैव लब्धुं शक्यते । अविद्यामूलको हि व्यक्तिभेदः । विज्ञानस्य कर्मसंस्कारैः सह संयोग एव अविद्यामूलम् । अविद्ययैव सुखदुःखयोः, शुभाशुभयोः, साध्वसाध्वोर्भेदः प्रतीयते । यैः प्रयत्नैः विज्ञानस्य शुद्धं रूपं विकासमेति त एव मुक्तये कल्पन्ते ।

इत्थमेतावतास्माभिः संक्षेपेण बौद्धानां निकायभेदेन तेषां सिद्धान्तो विमृष्टः । इदानीं सौगतसिद्धान्तप्रतिपादनपटोरस्य तत्त्वसंग्रहस्य प्रतिपाद्यो वादो विमृश्यते ।

**ग्रन्थस्यास्य प्रतिपाद्यं वस्तु**

अस्मिन् तत्त्वसंग्रहे आचार्यः परसिद्धान्तनिरसनैकलक्ष्यो न प्रकाशयति स्वसम्मतवादप्रक्रियाम् । अविज्ञाततत्-सम्मतवादप्रक्रियस्तु जिज्ञासुर्नात्र गभीरं प्रवेष्टुं प्रभवतीत्यभिलक्ष्यात्रापि किञ्चिद् वक्ष्यते । उपर्युक्तेषु चतुर्षु वादेषु शान्तरक्षितस्य कः पक्षोऽभिप्रेतः ?' इत्यत्र वयमेतदेव ब्रूमः—अयं हि ग्रन्थकारः

नैरात्म्यबोधनैकहृदयान् सौगतसिद्धान्तान् सुखप्रचारान् विधातुकामस्तात्कालिक-कापिल-नैयायिक-मीमांसकादिवादान् एकैकशः सुदृढं निरस्यति। स्वसिद्धान्त-समर्थनोद्यतस्य पराभिमतनिरसनमिव स्वसिद्धान्तस्फोरणमपि प्रथमं कर्तव्यमासीत्, परं ग्रन्थेऽस्मिन् तत्र तत्र परपक्षनिरसन इव स्वसम्मतप्रक्रियात्त्वबोधनेऽस्य समादरो न दृश्यते। नात्र स्कन्धायतनादयः प्रतीत्यसमुत्पादा विस्तरतो निरूपिताः, नापि तत्प्रकारः, न वा चित्तचैत्तादिविभागः, न वा मार्गप्रक्रिया। अतोऽस्य ग्रन्थस्य ये साक्षाद्विरोधिनः कापिलादयस्तेषां वादानां निरसन एव तात्पर्यमिति निश्चीयते। अत एवायं परैः सह तत्र तत्र विरोधे वैभाषिकसौत्रान्तिकादीनात्मीयेषु गणयन् समर्थयत एव। ग्रन्थहृदयं सर्वतोऽनुशीलयतां स्पष्टमिदं विज्ञायेतास्य परमतनिरसनलक्षणवादैकपरता। परमतनिरसनशेषतया त्वस्य मतमपि क्वचित् क्वचिद् गम्यते। तेनैतदनुमिनुमो यद् विज्ञानवाद एवात्र प्रस्तुत इति।

इत्थं सौगतवादानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं कार्यो मेधाविभिः स्वयम्॥

यद्यपि विद्वांस आचार्यं शान्तरक्षितं स्वातन्त्रिकमाध्यमिकमाचक्षते। परन्तु नात्राचार्येण स्वातन्त्रिकमाध्यमिकप्रक्रिया क्वचिदपि विस्तरेण निरूपिता। सा प्रक्रिया मन्ये स्वरचितेऽन्यस्मिन् मध्यमकालङ्कारनामके, परमार्थविनिश्चये वा ग्रन्थे विवृता भवेदिति।

आचार्यस्य को वादोऽभिप्रेतः?

सोऽयं शान्तरक्षितो वङ्गभूमौ ढाकामण्डले विक्रमपुरानुमण्डले जाहोराख्ये ग्रामे क्षत्त्रियकुले ख्रिष्टीयाष्टमशतकस्यादिमे भागे जातः। आचार्यबोधिसत्त्वापरनामधेयोऽयं नालन्दायां बौद्धमहाविहारे आचार्यपदमधिरूढः। अन्ते च तदानीन्तनेन भोटदेशाधिपतिना स्वदेशं सादरमाहूतस्तत्र बौद्धसिद्धान्तान् प्रचारयामास। अनेनाऽपरेऽपि ग्रन्था ग्रन्थिताः। यथा—धर्मकीर्तिकृतेर्वादन्याये विपञ्चितार्था टीका, मध्यमकालङ्कारग्रन्थ इत्यादयः। इत्येषोऽस्य जीवनवृत्तसंक्षेपः।

आचार्यः शान्तरक्षितः

अस्य ग्रन्थस्य 'पञ्जिका'व्याख्याकार आचार्यः कमलशीलस्तु आचार्य-शान्तरक्षितस्यैव शिष्यः, तस्यैव च समये नालन्दायां बौद्धमहाविहारे तन्त्रशास्त्रेऽध्यापकपदमलमकार्षीत्। अनेन 'न्यायबिन्दुपूर्वपक्षसंक्षेप'प्रभृतयोऽन्येऽपि निबन्धा निबद्धाः—इत्यैतिह्यविदः।

आचार्यः कमलशीलः

अनयोश्चरितम्, कालनिर्णयः, ये चास्मिन् ग्रन्थेऽन्ये निबन्धकारा अनूदितास्तेषां कालनिर्णयश्चास्य ग्रन्थस्य द्वितीयस्मिन् भागे भूमिकायां यथामति करिष्याम इति तावन्तं कालं प्रतीक्षमाणैः क्षन्तव्या वयं विद्वद्भिरिति।

१. संस्करणमिदमस्माभिः जैसलमेरदुर्गस्थजिनभद्रसूरीश्वरताडपत्रीय-जैनज्ञानभाण्डागारे (क्र० ३७७-३७८) निहितामनुमानत एकादश्यां द्वादश्यां वा शताब्द्यां ताडपत्रेषु लिखितां मातृकामुपजीव्य सम्पादितम्। तत्र कारिकाः पृथग् लिखिताः, पञ्जिका च पृथगिति तन्मातृकाद्वयमपि स्वीकर्तुं शक्यते। भवतु नाम। एषा मातृका क कदा केन वा लिखितेति सर्वतस्तदनुशीलनेनापि नास्माभिर्ज्ञातुं पारितम्। तस्या अशीतिसप्ताधिकैकशततमेऽन्तिमे ( १८७ ) पृष्ठे एतावदेव लिखितम्—

इदं संस्करणम्

"छ॥ छ॥ ग्रन्थाग्रं ३९९७। छ। कमलशीलसूत्रं समाप्तमिति। छ॥ मंगलमहाश्रीः॥ छ॥ शुभं भवतु लेखकपाठकयोः॥"

उक्तभाण्डागारस्य प्रबन्धाधिकारिभिः मातृकावेष्टने लिखितमस्ति—

"३७८. तत्त्वसंग्रहपंजिकावृत्ति ( कमलशीलवृत्ति ) पत्र ३१३ अनु० १२ मां शैकानु उत्तरार्ध। पत्रमाप–२४ इञ्च पत्र ३१३"

एतेन न किमपि स्पष्टं ज्ञायते यदेषा मातृका क कदा केन वा लिखितेति। केवलं वर्णरचनामाश्रित्य वयमेतावदेवानुमिनुमो यदियं मातृका दशमशताब्द्यामेकादशशताब्द्यां वा कचिदुत्तरस्मिन् भारते एव केनापि लिखिता। प्रायः शुद्धतमेयं मातृकेति अस्या लेखको बौद्धदर्शनं विद्वान्–इति वयं मन्यामहे।

२. अस्त्यस्मिन्नेव भाण्डागारे एका अन्यापि पत्रेषु लिखिता मातृका, सा तु एकोनविंशशताब्द्या अन्तिमे भागे जैसलमेरदुर्गस्थेन केनाप्याचार्यगोत्रोत्पन्नेन

ब्राह्मणेन लिखिता, प्रमादवशाद् भ्रष्टपाठबहुला केवलमुक्तमातृकायाः सामान्येन प्रतिलिपिमात्रम्। अतो न तयाऽस्माकं किमपि कार्यं सिद्धम्।

३. मातृकाणामनुशीलनप्रसङ्गेऽस्माभिः पाटणस्थश्रीहेमचन्द्रजैनग्रन्थमन्दिर-श्रीवाडीपार्श्वनाथजीजैनज्ञानमन्दिरस्थायाः प्रसिद्धायाः मातृकाया अपि, यतो गायकवाडसंस्करणं प्रकाशमासम्, नवनालन्दामहाविहारे चित्राकृतिः परिशीलिता। अस्या अन्तिमपृष्ठे लेखकेन लिखितम्—

"कमलशीलाभिधानपुस्तकं समाप्तमिति। शुभं भवतु। छ। कल्याणमस्तु। छ। मंगलमस्तु॥ छ॥ दीर्घायुरस्तु ॥ छ॥ श्रीः ॥ १॥ संवत् १४९२ वर्षे कार्तिक शु० वदि ३ तृतीयां रविवासरे श्रीमदणहिल्लपुरपत्तने। मा० १६१०२।"

अनेन स्पष्टमेव ज्ञायते यदियं मातृका पञ्चदशशताब्द्यामणहिल्लपुरपत्तने लिखितेति। अथ चास्या मातृकायाः परिशीलनेन वयं दृढं विश्वसिमो यदियं मातृका जैसलमेरदुर्गस्थभाण्डागारस्थमातृकात एव लिखिता; यतो यत्र यत्र तस्यां मातृकायां पाठो भ्रष्टस्त्रुटितो वा, तत्र तत्रास्यामपि स पाठस्त्ववश्यं भ्रष्टस्त्रुटितो वा दृश्यते। जडधिया लेखकेन च प्रमादात् पदे पदे अन्यान्यपि स्वबुद्धिमान्द्यजानि सहस्राणि स्खलितानि कृतानीति विदुषां चेतांसि दोदूयन्ते स्म।

४. यद्यपि वटोदरस्थ-गायकवाडग्रन्थमालातः १९२६तमे ख्रिष्टाब्दे प्रकाशितं संस्करणं पाटणस्थमातृकामुपजीव्यैव विदुषा सम्पादकेन एम्बर कृष्णमाचार्यमहाभागेन सम्पादितम्, तथापि तेन विदुषा दर्शनानां स्वकीयगभीरज्ञान-साहाय्येन बहु संशोधितमिति हृदयेन स्वीकृत्य तम्प्रति स्वकीयां कृतज्ञतां प्रकाशयामः। एतत्संस्करणमप्यस्माभिरादर्शपुस्तकत्वेन गृहीतम्।

एव तत्त्वसंग्रहस्य मूलसंशोधने त्रीण्येवेमानि पुस्तकान्यस्माभिरादर्शत्वेन गृहीतानि। टीकायाः ( पञ्जिकायाः ) संशोधने तु एतदतिरिक्तं यत्र यत्रान्येषां ग्रन्थानामुद्धरणान्यागतानि तेषां संशोधने तेषां ग्रन्थानाम् ( इदानीमुपलभ्यमान-ग्रन्थानाम् ) संस्करणान्यपि गृहीतानि।

अस्य ग्रन्थस्य सम्पादनेऽस्माभिरेषा शैली अनुसृता—

१. प्रायो मूलपाठः पञ्जिकापाठश्च सर्वत्र जैसल्मेरमातृकामुपजीव्यैव स्वीकृतः; केवलं यत्र तत्रस्थस्तस्याः सर्वथाऽशुद्धः पाठ एव टिप्पण्यां स्थापितः । तत्र च गायकवाडसंस्करणस्थः पाठः, पाटणमातृकापाठो वा गृहीतः । क्वचिद्विशिष्टेषु स्थलेषु एषां त्रयाणामपि पुस्तकानां पाठस्यासङ्गततया तत्रास्माभिः भोटभाषानुवादपाठो दत्तः, एषां च पाठष्टिप्पण्यां स्थापितः ।



२. ग्रन्थे पूर्वापरसङ्गतिबोधनपराणि शीर्षकाणि कमलशीलपञ्जिकोद्धृतशब्दैरेव निर्माय तत्र तत्र स्थापितानि ।

३. बोद्धॄणां सौकर्याय ग्रन्थेऽस्मिन्नुद्धृतानामपरदार्शनिकानां ग्रन्थानाम (इदानीमुपलभ्यमानानामेव) स्थलसङ्केतोऽपि तत्र तत्रोद्धरणतोऽनुपदमेव कोष्ठके कृतः । ये त्विदानीमनुपलभ्यमानाः ग्रन्थास्तेषामपि उद्धरणानि तद्बोधकचिह्नं दत्त्वा 'कश्चिद्विद्वान् स्वाध्यायकाले इदं पूरयेत्' इति बुद्ध्या रिक्तकोष्ठकमेव स्थापितम् ।

४. उद्द्योतकरोक्तान्युद्धरणानि तु अस्माभिर्न पूरितानि; न्यायवार्त्तिके तेषामक्षरशोऽनुपलम्भात् । उद्द्योतकरेण कस्यचिदन्यग्रन्थस्य प्रणयनसम्भवाच्च । यदि द्वितीयभागस्य मुद्रणावधिपर्यन्तमस्मन्मित्राणि विद्वांस एतन्निर्णयेयुर्यत् तानि उद्धरणानि न्यायवार्त्तिकस्यैव सन्तीति, तर्हि वयमुद्धरणसूच्यां तेषामपि स्थलसङ्केतं विदध्याम ।

५. तिसृष्वपि मातृकासु उपलभ्यमानाः त्रुटितांशा अस्माभिर्वाराणसेयसंस्कृतविश्वविद्यालये सरस्वतीभवने निहितायाः भोटभाषयामनूदितायास्तत्त्वसङ्ग्रह-पञ्जिकामातृकातः संस्कृत्य पूरिताः, पूरयिष्यामश्च ।

६. अद्यत्वे प्रकाशितेषु अपरदार्शनिकानां ग्रन्थेषु तत्त्वसंग्रहोद्धरणानां कृते गायकवाड़संस्करणस्य पृष्ठाङ्का दत्ताः विद्वद्भिः । अस्मत्संस्करणेन तेषां साम्यनिरूपणाय अनुसन्धित्सूनां सौकर्याय चास्मिन् संस्करणे सर्वत्र तत्संस्करणस्य पृष्ठप्रारम्भाङ्कः कोष्ठके मुद्रापितः ।

एवं ग्रन्थमिमं प्रमाणान्तरभावपरीक्षापर्यन्तं संस्कृत्य, परिष्कृत्य च विदुषां समक्षमुपस्थापयामः। त्वरमाणैरप्यस्माभिर्हृदयेनैवैतत् कार्यं कृतमिति विद्वांसः प्रमाणम्। अनुपदमेव चास्य महतो ग्रन्थस्यावशिष्टभागमपि

ग्रन्थस्थास्य अवशिष्टांशः

प्रकाशयिष्यामो यत्रान्ते ग्रन्थसहायिकाः सूच्यः, यथा— कारिकार्धसूची, ग्रन्थसूची, ग्रन्थकारसूची, ग्रन्थग्रन्थकारपरिचयः, अन्येषां ग्रन्थानां ग्रन्थकाराणां चैतिह्यम्, ग्रन्थान्तःपातिविशिष्टशब्दसूची; विशिष्टा भूमिका च निवेशयिष्यते। अन्ते च—

बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे,
धृत्वा मूर्त्तौ च शान्तौ समरसमिलितौ चन्द्रसूर्याख्यवातौ।
पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनम्,
सोऽयं सर्वज्ञदेवः प्रभवतु भवतां भूयसे मङ्गलाय॥

वसन्तपञ्चमी २०२४
बौद्धभारतीभवनम्
वाराणसी

सम्पादकः

# संक्षिप्तसंकेतविवरणम्

ग्रन्थकर्त्रा च व्याख्यात्रा ये ये ग्रन्था इहोद्धृताः ।
तेषां संक्षेपसंकेतः स्फुटं विव्रियतेऽधुना ॥

| संकेतः | नाम | प्रकाशनस्थानम् | वत्सरः |
|---|---|---|---|
| अ० को०, अभि० को० | =अभिधर्मकोषः | काशीविद्यापीठम्, काशी | १९३२ |
| अ० को० भा० | =अभिधर्मकोश-भाष्यम् | काशीप्रसाद जा० संस्थानम् पटना | १९६८ |
| ऋ० वे० | =ऋग्वेदः | पं० सातवलेकरसंस्करणम् | |
| काद० | =कादम्बरी | निर्णयसागरमुद्रणालयः, बम्बई | १९१२ |
| का० ल० | =काव्यालङ्कारः | बिहारराष्ट्रभाषापरिषद्, पटना | १९६२ |
| जा० मा० | =जातकमाला | मिथिलाविद्यापीठम्, दरभङ्गा | १९५९ |
| तत्त्व० | =तत्त्वसंग्रहः | इदमेवास्मत्सम्पादितं संस्करणम् | १९६८ |
| तत्त्वटी० | =तत्त्वटीका | अमुद्रिता | |
| दी० नि० | =दीर्घनिकायः | नालन्दाप्रकाशनम्, नालन्दा | १९५९ |
| ध० प०, धर्मप० | =धर्मपदम् | नालन्दाप्रकाशनम्, नालन्दा | १९५९ |
| न्या० द० | =न्यायदर्शनम् | अस्मत्सम्पादितम्, भारतीय-विद्याप्रकाशनम्, काशी | १९६६ |
| न्या० वा० | =न्यायवार्त्तिकम् | चौखम्बासंस्करणम्, वाराणसी | १९१५ |
| पा० म० भा० | =पातञ्जलभाष्यम् | निर्णयसागरसंस्करणम्, बम्बई | १९१६ |
| पा० सू० | =पाणिनिसूत्रम् | [ द्र० अस्मत्सम्पादिता काशिका ] तारा पब्लिकेशन्स, वाराणसी | १९६२-६७ |
| प्र० भा० | =प्रशस्तपादभाष्यम् | चौखम्बासंस्करणम्, वाराणसी | १९६५ |
| प्र० भा० उप० | =वैशेषिकदर्शनम्, उपस्कारसहितम् | गुजरातीप्रेससंस्करणम्, बम्बई | |
| प्र० वा० | =प्रमाणवार्त्तिकम् | ( मनोरथनन्दिवृत्तियुतम् ) बी० ओ० आर० सोसायटी, पटना | १९३७ |
| प्र० विनि० | =प्रमाणविनिश्चयः | महिशूरसंस्करणम्, मैसूर | |
| प्र० समु० | =प्रमाणसमुच्चयः | महिशूरसंस्करणम्, मैसूर | |
| बौ० ध० द० | =बौद्धधर्मदर्शनम् | बिहारराष्ट्रभाषापरिषद्, पटना | १९५६ |

| संकेतः | नाम | प्रकाशनस्थानम् | वत्सरः |
|---|---|---|---|
| बार्ह० सू० | =बार्हस्पत्यसूत्रम् | चौखम्बासंस्करणम्, वाराणसी | १९५६ |
| म० भार० | =महाभारतम् | गीताप्रेस, गोरखपुर | २०१३ वै० |
| म० व० | =महावग्गो | नालन्दाप्रकाशनम्, नालन्दा | १९५६ |
| म० वि० | =मध्यान्तविभङ्ग-सूत्रम् | | |
| मी० द० शा० भा० | =मीमांसादर्शन-शावरभाष्यम् | आनन्दाश्रमसंस्करणम्, पूना | १९२९ |
| मी० सू० | =मीमांसासूत्रम् | चौखम्बासंस्करणम्, वाराणसी | १९०० |
| ल० सू० | =लङ्कावतारसूत्रम् | मिथिलाविद्यापीठम्, दरभङ्गा | १९६३ |
| वा० प० | =वाक्यपदीयम् | पूनाविश्वविद्यालयप्रकाशनम्, पूना | १९६५ |
| वि० का० प० | =विज्ञानकायपादः | अमुद्रितः | |
| वै० द० | =वैशेषिकदर्शनम् | गायकवाड़संस्करणम्, बडौदा | १९६१ |
| वै० द० भा० | =वैशेषिकदर्शनस्य प्रशस्तपादभाष्यम् | चौखम्बासंस्करणम्, वाराणसी | १९६५ |
| शा० सू० | =शालिस्तम्बसूत्रम् | मिथिलाविद्यापीठम्, दरभङ्गा | १९६१ |
| श्लो० वा० | =श्लोकवार्त्तिकम् | चौखम्बासंस्करणम्, वाराणसी | १८९८ |
| सं० नि० | =संयुक्तनिकायः | निर्णयसागरसंस्करणम्, बम्बई | १९४१ |
| सां० का० | =सांख्यकारिका | नालन्दाप्रकाशनम्, नालन्दा | १९१९ |
| हेतुमु० | =हेतुमुखम् | अमुद्रितम् | |



# विषयक्रमः

स्वयं कमलशीलेन व्याख्यातोऽयं यथा यथा ।
तथैवास्य प्रबन्धस्य विषयक्रम उच्यते ॥

## गुणपदार्थपरीक्षा २६१



## १२. कर्मपदार्थपरीक्षा २८६



## १३. सामान्यपदार्थपरीक्षा २९२

## ४. विशेषपदार्थपरीक्षा ३२४



## १५. समवायपदार्थपरीक्षा ३२६



## १६. शब्दार्थपरीक्षा ३३८

## १७. प्रत्यक्षलक्षणपरीक्षा ४४८

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ।।

—अश्वजित्

श्र· व· द्वि·
२-११-८२

❀ नमो बुद्धाय ❀

## आचार्यशान्तरक्षितविरचितः

# तत्त्वसङ्ग्रहः

मङ्गलमुखेनानुबन्धचतुष्टयनिरूपणम्

प्रकृतीशोभयात्मादिव्यापाररहितं चलम् ।
कर्मतत्फलसम्बन्धव्यवस्थादिसमाश्रयम् ॥ १ ॥
गुणद्रव्यक्रियाजातिसमवायाद्युपाधिभिः ।
शून्यमारोपिताकारशब्दप्रत्ययगोचरम् ॥ २ ॥

---

# कमलशीलकृता पञ्जिका

❀ नमो वीतरागाय ❀

ज्ञेयाम्भोनिधिमन्थनादधिगतैस्तत्त्वामृतैर्यो जग-
ज्जातिव्याधिजरादिदुःखशमनैः कारुण्यतोऽतर्पयत् ।
तस्मै तत्त्वविदांवराय जगतः शास्त्रे प्रणम्यादरात्
तत्त्वानामिह संग्रहे स्फुटतरा प्रारभ्यते पञ्जिका ॥ १ ॥

वक्तुं वस्तु न मादृशा जडधियोऽपूर्वं कदाचित्क्षमाः[1]
क्षुण्णो[2] वा बहुधा बुधैरहरहः कोऽसौ न पन्थाः क्वचित् ।
किन्तु स्वार्थपरस्य मे मतिरियं पुण्योदयाकांक्षिणः
तत्त्वाभ्यासमिमं शुभोदयफलं कर्तुं समभ्युद्यता ॥ २ ॥

---

१. कदापि क्षमाः—गा० ३। २. क्षुण्णो—जै० ।

स्पष्टलक्षणसंयुक्तप्रमाद्वितयनिश्चितम् ।
अणीयसाऽपि नांशेन मिश्रीभूतापरात्मकम् ॥ ३ ॥
असंक्रान्तिमनाद्यन्तं प्रतिविम्बादिसन्निभम् ।
सर्वप्रपञ्चसन्दोहनिर्मुक्तमगतं परैः ॥ ४ ॥

---

[G. 2] इह हि शास्त्रे प्रेक्षावतामभिधेयप्रयोजनावसायपूर्विका प्रवृत्तिर्महत्सु च प्रसादः सर्वश्रेयोऽधिगतेः कारणं प्रथममित्यालोच्य भगवति प्रसादोत्पादनार्थम्, शास्त्रे चास्मिन्नादरेण श्रोतुः प्रवृत्त्यर्थं स्वशास्तृपूजाविधिपूर्वकमस्य शास्त्रस्य प्रकृतीत्यादिभिः श्लोकैः तत्त्वसंग्रह इत्येतत्पर्यन्तैरभिधेय-प्रयोजने प्राह ।

तथा हि—यद्यभिधेयमस्य न कथ्येत, तदोन्मत्तादिवाक्यवदानर्थक्यं सम्भावयन् प्रेक्षावान्न प्रवर्त्तेतापि श्रोतुमित्यभिधेयमस्यावश्यवचनीयम् । तथा सत्यभिधेये काकदन्तादिपरीक्षाशास्त्रवदभिमतप्रयोजनरहितं शास्त्रं प्रेक्षावन्तः श्रोतुमपि नाद्रियन्त इति ततस्तत्प्रवृत्त्यर्थमादौ प्रयोजनमभिधानीयम् । प्राधान्येन तु प्रयोजनमेव प्रवृत्त्यङ्गम्; तदर्थितयैव शास्त्रेषु श्रोतृजनस्य प्रवृत्तेः । तच्चाभिधेयशून्येन शास्त्रेणाशक्यं सम्पादयितुमिति शास्त्रस्य प्रयोजनोपायतासन्दर्शनार्थमभिधेयकथनम् । तच्च प्रयोजनमनुगुणोपायमुपदर्शनीयम्, न पुनरशक्यतत्साधनानुष्ठानम्; अन्यथा विषहरतक्षकचूडारत्नालङ्कारोपदेशशास्त्रवत् सत्यपि प्रयोजने तत्साधनानुष्ठानाशक्यतां मत्वा न प्रवर्त्तेत प्रेक्षावान् । अत एवोक्तम्—

"सम्बद्धानुगुणोपायं[1] पुरुषार्थाभिधायकम् ।
परीक्षाऽधिकृतं[2] वाक्यमतोऽनधिकृतं[3] परम्" ॥ इति ।

तस्माच्छास्त्रेषु प्रवृत्त्यर्थमभिधेयादिकथनम् ।

ननु प्रेक्षावतां प्रवृत्तिर्निश्चयादेव, निश्चयश्च प्रमाणादेव, न चास्य प्रयोजनवाक्यस्यात्राभिधेयादौ बाह्येऽर्थे प्रामाण्यमस्ति; तत्रास्य प्रतिबन्धाभावात् । तथा हि—न तावत्तादात्म्यलक्षणः प्रतिबन्धः[4]; अत्यन्तभेदात् । नापि तदुत्पत्तिलक्षणः; इच्छामात्रप्रतिबद्धत्वाद् वाक्यस्य । न चाप्रतिबद्धाद् वाक्याज्जिज्ञासितेऽर्थे

---

१. सम्बन्धानु०—इत्यपि पाठः । २. परीक्षाऽविकृतं—गा० ।
३. ०मतो न विकृतं—गा० । ४. प्रतिबन्धो(द्धो?)—गा० ।

स्वतन्त्रश्रुतिनिस्सङ्गो जगद्धितविधित्सया ।
अनल्पकल्पासंख्येयसात्मीभूतमहादयः ॥ ५ ॥
यः प्रतीत्यसमुत्पादं जगाद गदतांवरः ।
तं सर्वज्ञं प्रणम्यायं क्रियते तत्त्वसंग्रहः ॥ ६ ॥

---

ज्ञानमुत्पद्यमानं प्रमाणं युक्तम्; अतिप्रसङ्गात्। विवक्षायां च यद्यपि प्रामाण्यं वाक्यस्य, तथापि न तत्प्रेक्षावतः प्रवृत्त्यङ्गम्। न हि ये यथा विवक्षन्ति ते तथैवानुष्ठानकाले कुर्वन्ति; विसंवादनाभिप्रायस्य[1] अन्यथा प्रतिज्ञायाऽप्यन्यथा शास्त्ररचनासम्भवात्। अपि च यः प्रमाणान्तरादधिगतशास्त्रप्रयोजनः, तं प्रति प्रयोजनवाक्योपन्यासोऽनर्थक एव; तस्य प्रमाणान्तरादेव प्रवृत्तत्वात्। यश्चापि प्रमाणान्तरेण बाधितशास्त्रप्रयोजनः, तं प्रति सुतरामनर्थक एव; तस्य प्रमाणान्तरेण बाधितत्वादेव प्रवृत्त्यसम्भवात्। एतच्च द्वयमभ्युपगम्योच्यते; न तु किञ्चिदर्वाग्दृशां प्राक्प्रवृत्तेः प्रयोजनादिसाधकं तद्बाधकं वा प्रमाणमस्ति, येनामी [2]तत्सदसत्तामवगच्छेयुः; तस्याः[3] प्रवृत्तिसमधिगम्यत्वात्। किन्तु [G. 3] योऽनधिगतशास्त्रप्रयोजनादिस्तं प्रति वाक्यमिदमारभ्यते। तस्य च प्रेक्षावतः संशय एव वाक्यतोऽस्मादुपजायते, न निश्चयः; अप्रमाणत्वात्। स च संशयः प्रागपि वाक्योपन्यासादस्तीति व्यर्थः प्रयोजनादिवाक्योपन्यासः?

तदत्राभिधीयते—यत्तावदुक्तम् 'निश्चयेनैव प्रेक्षावतां प्रवृत्तिः' इति, तदसत्; संशयेनापि प्रवृत्तिदर्शनात्, यथा कृषीवलादीनाम्। स्यादेतत्—यद्यपि कृषीवलादेर्भाविनि फले संशयस्तथापि तत्फलसाधननिश्चयस्तेषां विद्यत एव, तेन निश्चयपूर्विकैव तेषां प्रवृत्तिरिति? तदसम्यक्; यदर्थं हि यस्य प्रवृत्तिः सा तत्संशयेऽपि तस्य भवतीत्येतावदिह प्रकृतम्। न च कृषीवलादयः साधनार्थं[4] तेषु[5] प्रवर्त्तन्ते येन साधनविषयनिश्चयसद्भावान्निश्चयपूर्विका प्रवृत्तिरेषामुपवर्ण्यते,[6]

---

१. विसंवादना(द)भिप्रायस्य। —गा०।
२. तेषां प्रयोजनादीनां सत्तामसत्तां वावगच्छेयुरित्यर्थः।
३. सदसत्ताया इत्यर्थः।
४. साधननिश्चयार्थमित्यर्थः।
५. बीजादिषु।
६. एषाम्—कृषीवलादीनाम्।

किं तर्हि ? फलार्थं ते तत्र प्रवर्त्तन्ते । तत्र च फले प्रतिबन्धादिसम्भवान्न निश्चयोऽस्तीत्यतः संशयपूर्विकैव तेषां प्रवृत्तिः । यापि चाऽऽद्यायां प्रवृत्तौ साधननिश्चयार्था प्रवृत्तिरेषाम्, तत्रापि न साधननिश्चयः; तदर्थत्वादेव प्रवृत्तेः ।

अपि च—साधननिश्चयोऽपि तेषां भाविफलापेक्षया भवन्नवश्यमेतदनागतमेवंविधं फलं साधयिष्यतीत्येवंरूपो भवेत्, यद्वा प्रतिबन्धकसहकारिवैकल्ययोरसम्भवे सत्यवश्यमभिमतफलसम्पादनायालमेतदित्येवंरूपः । न तत्र तावदाद्यो युक्तरूपः; सम्भवत्सहकारिवैकल्यप्रतिबन्धकोपनिपातस्य कस्यचिदुपलब्धतथाविधफलस्यापि शाल्यादेरनागतफलं प्रत्यसाधनत्वदर्शनेन सर्वत्राऽऽशङ्काया अव्यावृत्तेः । यदाह—

"सामग्रीफलशक्तीनां परिणामानुबन्धिनि ।
अनैकान्तिकता कार्ये प्रतिबन्धादिसम्भवात्" ॥ ( प्र०वा० ३.७ ) इति ।

अथ द्वितीयः, तदा युक्ततरमेतत्; एवंरूपत्वादेव सर्वस्याः प्रमाणपूर्विकायाः प्रवृत्तेः । अत एव चाचार्याः[1] तत्र योग्यतानुमानेन विशेषणं विदधति—असति प्रतिबन्धे योग्यमेतदिति । किन्तु फलमप्यनेन रूपेण निश्चितमेवेति न साधनस्यैव निश्चयः । न चाप्येवंप्रवृत्तौ परमार्थतः फलनिश्चयपूर्विका प्रवृत्तिः सिद्ध्यति; प्रतिबन्धाद्यसत्त्वस्यैव [2]अपरदर्शनैर्निश्चेतुमशक्यत्वात् ।

स्यादेतत्—यद्यपि परमार्थतः प्रतिबन्धाभावो निश्चेतुमशक्यः, तथापि यदि प्रतिबन्धो न स्यात्, तदावश्यमस्मात् फलप्राप्तिर्नियमेन—इत्येवंविधो निश्चयः प्रमाणपूर्विकायां प्रवृत्तौ विद्यत एव, न त्वप्रमाणपूर्विकायाम्; अन्यथा प्रमाणाप्रमाणपूर्विकयोः प्रवृत्त्योर्विशेषो न स्यात्; स च तथाविधोऽपि निश्चयो वाक्यान्न सम्भवत्येव; बाह्येऽर्थे तत्र तस्याप्रतिबन्धेनाप्रमाणत्वादिति ? सत्यमेवैतत्; किन्तु यदि वाक्यान्न कस्यचित्प्रेक्षावतः [G.4] प्रवृत्तिरस्तीत्येतत्सिद्धं भवेत्, तदा सर्वमेवैतत्स्यात्; यावता दृश्यन्ते हि केचिदप्रत्यक्षफलानां केषाञ्चित्प्रवृत्तिनिवृत्त्योर्महा[3]शंसापायश्रवणादनाश्रित्यागमप्रामाण्यमासितुमशक्नुवन्तो वचनात् प्रवर्त्तमानाः । न

---

१. धर्मकीर्तिपादा इत्यर्थः । २. अर्वाग्दर्शनैरित्यर्थः ।
३. आशंसा=संस्तवः ।

चैतावता तेषां प्रेक्षावत्ताहानिः, अभ्युपायेनैव प्रवृत्तेः; न ह्यागमादृते ऽत्यन्तपरोक्षार्थविषये प्रवृत्तावन्योऽभ्युपायोऽस्ति। अवश्यं च प्रवर्त्तितव्यं त्वागमात्, व्याहतागमपरिग्रहं हि कुर्वाणा अप्रेक्षापूर्वकारिणः स्युः। अव्याहतागमसमाश्रयेण तु प्रवृत्तौ कथं न प्रेक्षावन्तो भवेयुः, तस्यैव सम्यगुपायत्वात्! न चागमस्य पुरुषातिशयप्रणीततया यथार्थत्वमवधार्य तत्र निश्चयादेव प्रवर्त्तन्त इति युक्तं वक्तुम्; पुरुषातिशयस्यैवापरदर्शनैर्निश्चेतुमशक्यत्वात्। न चागमान्न प्रवर्त्तन्ते प्रेक्षावन्तोऽपि, तद्वदिहापि अव्याहतप्रयोजनादिवाक्यश्रवणाच्छास्त्रेषु प्रवर्त्तमानाः प्रेक्षापूर्वकारिणो भविष्यन्ति; उपायेनैव प्रवृत्तेः। न ह्यत्रापि प्रवृत्तावभ्युपायान्तरमस्ति; शास्त्रार्थस्य प्राक्प्रवृत्तेरत्यन्तपरोक्षत्वात्।

यच्चाप्युक्तम्—'विवक्षायां यद्यपि प्रामाण्यम्' इत्यादि, तदप्यसारम्; यतो यथाविवक्षितमप्यर्थं शास्त्रेण परिसमापयन्त उपलभ्यन्ते; तद्वदिहापि कदाचिद्यथाप्रतिज्ञातार्थपरिसमाप्तिर्भविष्यतीति मत्वा प्रेक्षावतः प्रवृत्तिः केन वार्येत। न चाप्यसम्भवाशङ्कया[1] निवृत्तिर्युक्ता; अर्थसंशयेनापि प्रवृत्तेः। अन्यथा प्रमाणपूर्विकायामपि प्रवृत्तौ फलासम्भवाशङ्कायाः[2] सम्भवात् क्वचिदपि प्रवृत्तिर्न स्यात्। नाप्यनर्थावाप्तिशङ्का; शास्त्रादनिष्टफलावाप्त्यसम्भवात्। न चाप्यभिमतफलाप्राप्तिसम्भावनालक्षणानर्थावाप्तिशङ्केति युक्तं वक्तुम्; तस्याः सर्वत्र प्रवृत्तौ तुल्यत्वात्।

यच्चोक्तम्—'योऽनधिगतशास्त्रप्रयोजनस्तं प्रति वाक्यमिदमारभ्यते' इति? वयमप्येवं ब्रूमः; किन्तु यद्यपि प्रयोजनवाक्योपन्यासात् प्राक् तस्य संशयोऽस्ति, स तु प्रयोजनसामान्ये—किमिदं प्रयोजनवद्? आहोस्विन्न? इति। न च प्रयोजनमात्रसन्देहात् प्रवृत्तिर्युक्ता; सर्वत्रैव प्रवृत्तिप्रसङ्गात्, प्रयोजनमात्रस्य चानर्थित्वात्। किन्तु प्रतिनियतसाधनोपादानहेतोः प्रयोजनविशेषविषयकात्[3] संशयात् प्रवृत्तिर्दृश्यते; क्वचिदेव साधनेऽर्थिनां प्रवृत्तेः, प्रयोजनविशेषस्य चाकांक्षितत्वात्। न चान्यः प्रयोजनवाक्यात् प्राक् प्रयोजनविशेषविषयसंशयोत्पत्तिहेतुः कश्चिदस्ति, येन शास्त्रान्तरपरिहारेण प्रतिनियतशास्त्रपरिग्रहं कुर्वीत।

---

१. ०वाशङ्कायाः—जै०। २. आशङ्काया इत्यर्थः।

३. ०विषयात्—गां०।

[ G. 5 ] ननु प्रयोजनविशेषार्थितैव पुंसः प्रयोजनविशेषसंशयोत्पत्तिहेतुः प्राग्विद्यत एव, तथा हि—प्रयोजनविशेषाकांक्षापरिगतमनसः प्रथमतरमेवं भवत्येव—किमिदमस्मदधिगतप्रयोजनेन सप्रयोजनम् ? आहोस्विदन्येन ? किं वा निष्प्रयोजनम् ? इति; तत्साधकबाधकप्रमाणाभावे तस्य न्यायप्राप्तत्वात्, प्रयोजनविशेषप्रतिपादकशास्त्रान्तरोपलब्धेश्च; अतो भवत्येव प्रागपि प्रयोजनविशेषविषयसंशय इति व्यर्थः प्रयोजनवाक्योपन्यासः ?

नैतदस्ति; यद्यपि प्रयोजनविशेषार्थितापि संशयविशेषहेतुर्भवति, तथापि न सा सर्वेषां सम्मुखीभवति; अव्युत्पन्नपुरुषार्थानां मूढधियां केषाञ्चिदसम्मुखीभावात्। तथा हि—मोक्षः परमपुरुषार्थतया सिद्धः, अथ च सन्ति केचिदव्युत्पन्ना ये तमपि परमपुरुषार्थं पुरुषार्थतया न जानन्ति, प्राग्ये[1] न तं प्रार्थयिष्यन्ते ते। न वा सम्मुखीभूता प्रयोजनविशेषाकांक्षा प्रयोजनविशेषविषयसन्देहोत्पत्तिहेतुर्युक्ता; कारणसत्ताधीनत्वात् कार्याणाम्। यदि नाम सा केषाञ्चिदपि सम्मुखीभवति, तथाप्यसौ[2] साधनान्तरपरित्यागेन प्रतिनियतसाधनोपादानहेतोः संशयविशेषस्य हेतुर्न भवति; सर्वत्र साधकबाधकप्रमाणाभावेन [3]तस्यास्तद्धेतुत्वेन[4] न्यायप्राप्तत्वात्। न चैतावन्मात्रेण प्रवृत्तिर्युक्ता; सर्वत्र प्रवृत्तिप्रसङ्गात्। न च शक्यं केनचित्सर्वत्र प्रवर्त्तितुमित्यतः फलविशेषार्थिनोऽपि प्रतिनियतसाधनपरिग्रहनिबन्धनाभावादुदासीरन्। तस्मात् प्रतिनियतसाधनपरिग्रहहेतुप्रयोजनविशेषविषयसंशयोत्पादनायात्यन्तपरोक्षार्थविषयागमप्रणयनवत् फलविशेषार्थिना प्रतिनियतसाधनपरिग्रहायाभिधानीयमेव प्रयोजनवाक्यम्। तथा हि—तेनास्यैव शास्त्रस्यार्थविशेष उपदर्श्यते, नान्यस्य। अतोऽनेन प्रतिनियतसाधनसाध्यफलविशेषविषयः संशयो जन्यते। स च श्रोता 'कदाचिन्ममायमर्थविशेषो निष्पत्स्यते' इति प्रयोजनवाक्योपजनितात् प्रयोजनविशेषविषयादत्यन्तपरोक्षार्थविषयागमोपजनितादिव संशयात् प्रवर्त्ततापीत्यतः प्रयोजनवाक्योपन्यासः

१. 'प्रगे ये' इत्युचितः पाठः। २. आकांक्षेत्यर्थः

३. आकांक्षाया इत्यर्थः।

४. संशयहेतुत्वेनेत्यर्थः।

अवश्यं चैतदेवं विज्ञेयम्, अन्यथाऽत्यन्तपरोक्षार्थविषयागमप्रणयनमपि व्यर्थं स्यात्; प्रागप्यागमप्रणयनाद्दानादिषु फलविशेषार्थिनां साधकबाधकप्रमाणाभावेन तत्संशयस्य विद्यमानत्वात्। किन्तु [1]असावव्युत्पन्नस्वर्गादिफलानां नैवोत्पद्यते; तत्कारणभूतायाः फलविशेषार्थिताया असम्मुखीभावात्। येषां चोपजायते, तेषामपि सर्वत्रोपलादिभक्षणेऽपि प्रवृत्तिहेतुतया साधारणत्वादुपलादिभक्षणपरिहारेण न[2] प्रतिनियतदानादिपरिग्रहहेतुर्भवतीति मत्वा तदर्थमागमप्रणेतृभिरागमः प्रणीयते; तद्वत्प्रयोजनवाक्यमपि [ G 6 ] शास्त्रकारैरित्यचोद्यमेतत्।

न चापि जिज्ञासितप्रयोजनविशेषप्रतिपादकं शास्त्रान्तरमुपलब्धम्, येन तदुपलब्धिबलादभिमतप्रयोजनविशेषविषयः सन्देहो भवेत्। न ह्यभिमतप्रयोजनविशेषसाधने शास्त्रान्तरे सम्भवति कश्चित् प्रेक्षावान् परं शास्त्रान्तरमारभते; प्रेक्षावत्त्वहानिप्रसङ्गात्। अतो न शास्त्रान्तरोपलब्धिरपि विवक्षितप्रयोजनविशेषसन्देहहेतुर्भवति। तस्माच्छ्रोतृजनप्रवृत्त्यर्थः प्रयोजनादिवाक्योपन्यास इति स्थितम्।

यस्तु मन्यते—'न श्रोतृजनप्रवृत्त्यर्थं प्रयोजनादिकथनम्, ततः संशयोत्पत्तेः, संशयेन तु प्रेक्षावतः प्रवृत्त्यसम्भवात्; किन्तु यत्प्रयोजनरहितमनर्थकं वा तन्नारब्धव्यम्, यथा काकदन्तपरीक्षोन्मत्तादिवाक्यम्; प्रयोजनरहितं चेदं शास्त्रम्, अतो न श्रोतुं कर्तुं वा प्रारब्धव्यमित्येवं व्यापकानुपलब्ध्या यः प्रत्यवतिष्ठते तस्य हेतोरसिद्धतोद्भावनार्थमादौ प्रयोजनादिवाक्योपन्यासः' इति, तदसम्यगिव लक्ष्यते; संशयेनापि प्रवृत्तेः प्रसाधितत्वात्, असिद्धतोद्भावनस्य च वैयर्थ्यात्। एवं हि तदर्थवद्भवेत्, यदि तस्य परस्यातो वाक्यात् प्रवृत्तिर्भवेत्, यावतोद्भावितायामप्यनेन वाक्येनासिद्धतायां नातो वाक्यात् प्रेक्षावतो यथोक्तव्यापकासत्त्वनिश्चयः समुत्पद्यते, येनासौ प्रवर्त्तितो भवेत्; पूर्ववद्वाक्यस्यास्याप्रमाणत्वात्। संशयेन च प्रेक्षापूर्वकारिणो भवन्मतेन प्रवृत्त्यसम्भवात्। अतो विफलमेवासिद्धतोद्भावनम्। नापि कश्चित् प्रेक्षावानविदितशास्त्रशरीरोऽकस्माद्व्यापकाभावं निश्चित्यानेन प्रत्यवतिष्ठते। नापि तत्प्रत्यवस्थानात्[3] स्वयं विदितशास्त्रप्रयोजनोऽपि शास्त्रकृन्नारभेत

१. असौ=संशयः। २. पा० पुस्तके नास्ति।
३. व्यापकाभावप्रत्यवस्थानादित्यर्थः।

वक्तुश्च, श्रोता वा प्रेक्षापूर्वकारी निर्निबन्धनाद्वाक्यान्निवर्त्तते, येन तयोः प्रवृत्त्यर्थमसिद्धतोद्भावनं स्यात्।

अथापि स्याद्—योऽप्रेक्षापूर्वकारी सोऽनिबन्धनमकस्मादपि यथोक्तव्यापकाभावं गृह्णीयात्, परैश्च ग्राहयेदपि; अतस्तं प्रत्यसिद्धतोद्भावनं क्रियत इति? एतदप्ययुक्तम्। यदि तत्तेषां प्रवृत्त्यङ्गं शास्त्रेषु न भवति, तदा विफलमेव तं प्रत्यसिद्धतोद्भावनम्; अन्यथा ह्यतिप्रसङ्गः स्यात्। सन्ति हि बहुतरा असम्बद्धप्रलापिनः केचित्, तेषामप्ययुक्ताभिधायित्वप्रतिपादनाय बहुतरं शास्त्रप्रवृत्तावनुपयुज्यमानकमपि वक्तव्यमापद्येत। तस्मादवश्यमेव हेत्वसिद्धतोद्भावनं शास्त्रारम्भे मा भूद्विफलमतिप्रसङ्गो वेति श्रोतृजनप्रवृत्तिफलमेव वर्णनीयम्। ततश्च योऽपि व्यापकानुपलब्ध्या न प्रत्यवतिष्ठेत, न चाश्रुत्वा प्रयोजनं प्रवर्त्तेत, तं प्रत्यपि सार्थकमेव किं न भवेत्। यथा विभक्तं प्राक्। [G. 7] तस्मात् [1]श्रोतृजनप्रवृत्त्यर्थमेवाभिधेयादिकथनमिति स्थितम्; न तु पुनः स्वार्थम्, ततः स्वयमप्रवृत्तेः, अन्यथोन्मत्तकप्रलापवदसम्बद्धमेव स्यात्।

यत्पुनरुक्तमाचार्येण[2] न्यायबिन्दौ—"स्वयमप्येवं प्रतिपत्तिर्भवतीति स्वार्थानुमानेऽप्यस्याः प्रयोगः[3]" (न्या० बि० २. ४४) इति, न तद्बहिर्भूतं प्रयोगमधिकृत्य, किं तर्हि? अन्तर्जल्पात्मकमेव; स्वार्थानुमानस्य ज्ञानात्मकत्वात्। यच्च "प्रायः प्राकृतशक्तिः[4]" (प्र० वा० १. २) [5]इत्यादिकमुक्तम्, तदपि वक्रोक्त्या परेषामीर्ष्यादिमलोपहतचेतसां भाजनीकरणार्थमित्यलं बहुना॥

१. अत्र 'न' इति पदं जै०, पा० पुस्तकयोर्विद्यते।

२. आचार्येण=धर्मकीर्तिना।

३. 'प्रयोगदर्शनाभ्यासात् स्वयमप्येवं व्यवच्छेदप्रतीतिर्भवतीति स्वार्थेऽप्यनुमानेऽस्याः प्रयोगनिर्देशः'—इति न्यायबिन्दुः (२. ४४)।

४. 'प्राकृतसक्तिः' इति मनोरथनन्दिवृत्तिसम्मतः पाठः।

५. इत्थं तावदयं सम्पूर्णः श्लोकः—

प्रायः प्राकृतसक्तिरप्रतिबलप्रज्ञो जनः केवलम्,
नानर्थ्येव सुभाषितैः परिगतो विद्वेष्ट्यपीर्ष्यामलैः।
तेनायं न परोपकार इति नश्चिन्तापि चेतश्चिरम्,
सूक्ताभ्यासविवर्द्धितव्यसनमित्यत्रानुबद्धस्पृहम्॥ (प्र० वा० १. २)

शास्तृपूजाविधानं तु भगवति सर्वश्रेयोऽधिगतिहेतोः प्रसादस्योत्पादनार्थम् । तथा हि—गुणगणाख्यानविधिनाऽमुना भगवतो माहात्म्यमुद्भाव्यते, तदुपश्रुत्य च श्रद्धानुसारिमनसां तावदसंशयं भगवति झगिति[1] चित्तप्रसादः समुदेति । येऽपि प्रज्ञानुसारिणः, तेऽपि तथाविधेषु बाधमपश्यन्तः, प्रज्ञादीनां च गुणानामभ्यासात्प्रकर्षमवगच्छन्तो वक्ष्यमाणादप्यतीन्द्रियार्थदृक्साधकात्प्रमाणात् 'नूनं जगति सम्भाव्यन्त एव तथाविधाः सूरयः' इत्यवधार्य भगवति प्रसादमुपजनयन्त्येव । तत्प्रसादाच्च तद्गुणास्तत्प्रवचनेषु तदाश्रिते च शास्त्रादौ परीक्षापुरःसरमुद्ग्रहणार्थमाद्रियन्ते, ततः श्रुतमय्यादिप्रज्ञोदयक्रमेण यावत्परं श्रेयोऽधिगच्छन्तीति महत्सु प्रसादः सर्वश्रेयोऽधिगतेः प्रधानं कारणम् । अत एव प्रायेण प्रसिद्धशास्तृकप्रवचनाश्रयेण प्रणीयमानेषु शास्त्रेषु शास्त्रकृतः शास्त्रस्यादौ तावत् स्वशास्तृपूजामेव विदधति; तस्यास्तत्प्रवृत्तावप्यङ्गभावस्य लेशतो विद्यमानत्वात् । अत एवोक्तम्—"शास्त्रं प्रणेतुकामः स्वशास्तुर्माहात्म्यज्ञापनार्थं[2] तस्मै नमस्कारमारभते" इति (अ० को० भा० १. १) । अतो नानर्थकं शास्तृपूजाविधानमिति स्थितम् ।

तत्र तं प्रणम्येत्येतत्पर्यन्तेन शास्तृपूजाविधानं निर्दिष्टम् । क्रियते तत्त्वसंग्रह इत्यनेनाभिधेय-प्रयोजने प्राह ।

तथा हि—अभिधेयमस्य शास्त्रस्य प्रकृत्यादिव्यापाररहितत्वादीनि प्रतीत्यसमुत्पादविशेषणानि तत्त्वानि । तानि च सामर्थ्यात् तत्त्वशब्देन दर्शितान्येव; अन्येषां तत्त्वार्थत्वानुपपत्तेः । ननु च वाक्यस्यैवाभिधेयवत्त्वं नान्यस्येति न्यायः, न च सकलं शास्त्रं वाक्यम्, अपि तु वाक्यसमूहः, तत्कुतोऽस्याभिधेयसम्भवः ? नैतदस्ति; यद्यपि वाक्यसमूहात्मकं शास्त्रम्, तथापि तानि वाक्यानि परस्परव्यपेक्षासम्बन्धावस्थितानि, अन्यथोन्मत्तादिवाक्यसमूहवदसङ्गतार्थमेव स्यात् । ततश्च परस्परसम्बद्धानेकशब्दसमूहात्मकत्वात् तदन्यवाक्यवद्वाक्यमेव शास्त्रम् । न हि पदैरेव वाक्यमारभ्यते, अपि तु वाक्यैरपि । अतो महावाक्यत्वादभिधेयवदेव शास्त्रमित्यचोद्यम् ।

---

१. झटित्यर्थेऽयं कमलशीलसमयप्रयोगः । महाभारतेऽपि बहुत्र प्रयुक्तोऽयं शब्दः ।
२. 'गुणाख्यानपूर्वकम्' इत्यधिकः पाठो भाष्ये ।

[G. 8] प्रयोजनं तु संग्रहशब्देन दर्शितम् । तथा हि—प्रयोजनमुपदर्श्यमानं शास्त्रेषु प्रवृत्तिकामानां शास्त्रगतमेव तदुपदर्शनीयम्[1], नान्यगतम्, अन्यथा ह्यसङ्गताभिधानं स्यात् । उक्तञ्च—"शास्त्रेषु हि परं प्रवर्त्तयितुकामो वक्ता शास्त्रादौ प्रयोजनमभिधत्ते, न व्यसनितया" इति[2] ( ) । कथं च परः प्रयोजनोपदेशाच्छास्त्रेषु प्रवर्तितो भवति ? यदि तद्गतमेव प्रयोजनमभिधीयते, नान्यगतम्; न हि [3]अन्यगतप्रयोजनाभिधानादन्यत्र प्रेक्षावतः प्रवृत्तिर्भवेत् । विशिष्टार्थप्रतिपादनसमर्थं च वचनं शास्त्रमुच्यते, नाभिधेयमात्रम्, नापि शब्दमात्रमर्थप्रतिपादनसामर्थ्यशून्यम्; अतो नाभिधेयादिगतं प्रयोजनमुपदर्शनीयम् ।

यत्पुनराचार्येण[4] "सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः" (न्या० वि० १.१) इति यत् प्रयोजनं निर्दिष्टम्; तत् प्रयोजनप्रयोजनस्य कथनम्; नाभिधेयस्य प्रयोजनम्; सम्यग्ज्ञानव्युत्पत्तेरेव सम्यग्ज्ञानशब्देन विवक्षितत्वात् । सम्यग्ज्ञानव्युत्पत्तिपूर्विकेत्यर्थः । एवं सति तन्निर्दिष्टमित्येतत्प्रयोजनाभिधानं[4] सङ्गतार्थं भवेत्, अन्यथा दुःश्लिष्टमेव स्यात् ।

तच्च प्रयोजनं शास्त्रस्य त्रिविधम्—क्रियारूपम्, क्रियाफलम्, क्रियाफलस्य फलम् । तथा हि—शास्त्रस्य परप्रतिपादनायाऽऽरभ्यमाणस्य कारणत्वं वा भवेत्, कर्तृत्वं वा; कर्तृकरणयोश्च साधनत्वान्न यथोक्तप्रयोजनव्यतिरिक्तं प्रयोजनमस्ति, क्रियापेक्षत्वात् साधनस्य । त्रिविधस्यापि च क्रियादेस्तदविनाभावित्वात्तत्प्रयोजनत्वं युक्तमेव । साक्षात्पारम्पर्यकृतस्तु विशेषः । फलरूपं तु प्रयोजनं प्रधानम्, तदर्थत्वात् क्रियारम्भस्य । तत्र सर्ववाक्यानां स्वाभिधेयप्रतिपादनलक्षणा क्रिया साधारणा, सा चातिप्रतीतया न प्रयोजनत्वेनोपदर्शनीया; तस्यां शास्त्रस्य व्यभिचाराभावात् । अनभिधेयत्वाशङ्काव्युदासार्थमुपदर्शनीयेति चेत् ? न; अभिधेयकथनादेव तदाशङ्काया व्युदस्तत्वात् । नाप्यभिधेयविशेषप्रतिपिपादयिषया तदुप-

१. उपदर्शनीयम्—पा०, गा० ।　　२. पा० पुस्तके नास्ति ।
३. अन्य(त्रपि )( गत ? )—गा० ।
४–४. अयं पाठः सर्वेष्वपि पुस्तकेषु त्रुटित एव दृश्यते, अस्माभिस्तु भोटदेशीयानुवादस्य संस्कृतच्छायाऽत्र स्थापिता ।

दर्शनम्; अभिधेयविशेषकथनादेव तस्य प्रतिपादितत्वात्। तस्मादसाधारणा या क्रिया सोपदर्शनीया। सा त्वस्य शास्त्रस्य विद्यत एव तत्त्वसंग्रहलक्षणा; यतोऽनेन शास्त्रेण तेषां तत्त्वानामितस्ततो विप्रकीर्णानामेकत्र बुद्धौ विनिवेशलक्षणः संग्रहः क्रियते; अतस्तामेव संग्रहशब्देन दर्शितवान्।

अस्याश्च तत्त्वसंग्रहक्रियायाः [1]प्रतिपाद्यसन्तानगतस्तत्त्वसुखावबोधः फलम्। तदपि संग्रहशब्देन प्रकाशितमेव। एकत्र हि संक्षिप्तस्य तत्त्वस्य प्रतिपत्तुः सुखेनोद्ग्रहो जायते, दुःखेन तु विप्रकीर्णस्येति कृत्वा सुखोद्ग्रहकारणं संग्रहं संग्रहशब्देन प्रतिपादयंस्तत्त्वसुखावबोधार्थमिदमारभ्यत इति प्रकाशयति। न तु तत्त्वावबोधमात्रमस्य फलम्; एवं हि शास्त्रस्य प्रणयनवैयर्थ्यं स्यात्[2], [G. 9] पूर्वाचार्यैरेव तत्त्वनिश्चयस्य कृतत्वात्। अतो विशेषतः परानुग्रहस्यापि भावात्, परार्थत्वाच्च शास्त्रस्य। तस्मात् पूर्वाचार्यैः प्रतिपादितान्यपि तत्त्वानि यो मन्दधीरतिविप्रकीर्णतया सुखमवधारयितुमशक्तः, तं प्रति सुखावधारणाय तत्त्वसंग्रह आरभ्यमाणो न विफलतामेष्यतीति मन्यमानः शास्त्रमिदमारभते। अत एव 'क्रियते तत्त्वसंग्रहः' इत्याह; अन्यथा 'क्रियते तत्त्वनिश्चयः' इत्येवमुक्तं स्यात्, एवं हि यथाविवक्षितार्थप्रतिपादनं स्फुटमेव कृतं भवेत्। तस्मात्तत्त्वसुखावबोध एव तत्त्वसंग्रहक्रियायाः फलम्। तस्यापि च सुखावबोधस्याचिरेणाभ्युदयनिःश्रेयसावाप्तिः प्रयोजनम्।

तच्चातिप्रतीतमेवेति नोक्तम्; 'तत्त्वज्ञानादभ्युदयनिःश्रेयसावाप्तिर्भवति' इति सर्वास्तिकानां प्रसिद्धत्वात्। अथ वा—जगद्धितविधित्सयेत्येतस्योत्तरत्रानुवृत्तेस्तदपि दर्शितमेव। तथा हि—तदनुवृत्तौ 'जगद्धितविधित्सया तत्त्वसंग्रहः क्रियते' इति वाक्यार्थो जायते। जगद्धितविधित्सा च तत्त्वसंग्रहक्रियायाः कथं हेतुर्भवति, यदि जगद्धितविधानं तत्त्वसंग्रहक्रियायाः फलं स्यात्। यथा पिपासया सलिलमानयतीत्यत्र सलिलपानं तदानयनक्रियायाः फलमिति गम्यते, तद्वदिहापि; ततश्च 'जगद्धितविधानार्थं तत्त्वसंग्रहः क्रियते' इत्यर्थः सन्तिष्ठते। एतच्चानुगुणो-

---

१. 'प्रतिपत्तृ' इति गा० संस्करणसम्पादकः। वस्तुतस्तु 'प्रतिपाद्य' इत्यस्य विनेयार्थत्वे सममिष्टमिति ध्येयम्। २. पा० गा० पुस्तकयोर्नास्ति।

पायमेव प्रयोजनमुपदर्शितम् । तथा हि—अभ्युदयनिःश्रेयसावाप्तिर्जगद्धितमुच्यते, तस्य चाविपर्यासो हेतुः; सर्वसंक्लेशस्य विपर्यासमूलत्वात्, संक्लेशविपरीतत्वाच्च जगद्धितस्य । अतस्तद्धेतुविपरीतोऽस्य हेतुरवतिष्ठते । अविपर्यासश्च यथावत्कर्मफलसम्बन्धाभिसम्प्रत्ययः, अविपरीतपुद्गलधर्मनैरात्म्यावबोधश्च । स चास्मादविपरीतप्रतीत्यसमुत्पादसम्प्रकाशकाच्छास्त्राच्छ्रवणचिन्ताभावनाक्रमेणोपजायत इत्यतोऽवगम्यत एव—'तत्त्वसंग्रहक्रियातो जगद्धितमपि सम्पद्यते' इति । अभ्युदयनिःश्रेयसावाप्तौ च सत्यामभिमतार्थपरिसमाप्त्या पुरुषस्याकांक्षाविच्छेदादतो नापरमूर्ध्वं प्रयोजनं मृग्यमिति प्रयोजननिष्ठा ।

सम्बन्धस्त्वभिधेयप्रयोजनाभ्यां न पृथगुपदर्शनीयः; निष्फलत्वात् । तथा हि—सम्प्रदर्श्यमानः शास्त्रप्रयोजनयोः साध्यसाधनभावलक्षणो दर्शनीयः, नान्यो गुरुपर्वक्रियादिलक्षणः; तस्यार्थिप्रवृत्तेरनन्तत्वात् । स च साध्यसाधनभावः प्रयोजनाभिधानादेव दर्शितः । तथा हि 'इदमस्य प्रयोजनम्' इति दर्शयता दर्शितं भवति—'इदमस्य साधनम्' इति । न हि यो यन्न साधयति तत्तस्य प्रयोजनं भवति; अतिप्रसङ्गात् । तस्मात्सामर्थ्यलभ्यत्वान्नासौ प्रयोजनाभिधेयाभ्यां पृथगभिधानीयः । स हि नाम तस्मात् पृथगुपादानमर्हति [G. 10] यो यस्मिन्नभिहितेऽपि न गम्यते; यथाभिधेयप्रयोजनयोरन्यतराभिधानेऽपि नेतरावगतिर्भवति । न च सम्भवोऽस्ति, यत्प्रयोजनाभिधानेऽपि यथोक्तः सम्बन्धो नाभिहितः स्यादिति द्वे एवाभिधेयप्रयोजने वाच्ये ।

एतच्चाभिधेयादि न वाक्यार्थतया विभक्तमस्माभिः, अपि तु वाक्यादवयवानपोद्धृत्य तदर्थतया । वाक्यार्थस्तु यथोक्तसंग्रहकरणमेव । यदा गुणीभूतस्याप्यभिधेयादेर्वाक्यादस्मात् प्रतीयमानत्वाद् वाक्यार्थत्वमविरुद्धमेव । प्राधान्येन हि वाक्यस्यानेकार्थाभिधानं विरुद्धम्, न तु गुणप्रधानभावेन ।

अथापरिमितगुणगणाधारे भगवति किमिति प्रतीत्यसमुत्पाददेशनयैव स्तोत्राभिधानम् ? तदेतदचोद्यम्; सर्वत्रैव तुल्यपर्यनुयोगत्वात् । न च शक्यमपरिमितगुणोद्भावनया पूजाभिधानं कर्तुमिति गुणैकदेशोद्भावनयैव सा विधेया । तेन प्रतीत्यसमुत्पाददेशनोद्भावनया वा सा विहिता, अन्यथा वेति न कश्चिद्विशेषः ।

तथाप्युच्यते विशेषः । तथा हि—यथाभूतगुणसम्पद्योगाद्यभ्युदयनिःश्रेयस[1]-प्रापणतो जगतः शास्ता भवति भगवान्, स एवाभ्युदयनिःश्रेयसार्थिनां भगवच्छरणादिगमनहेतुरभिधानीयः । प्रतीत्यसमुत्पाददेशनया चाभ्युदयादिसम्प्रापको भगवान् । तथा हि—अविपरीतप्रतीत्यसमुत्पाददेशनातस्तदर्थावधारणात् सुगतिहेतुरविपरीतकर्मफलसम्बन्धादिसम्प्रत्यय उपजायते, पुद्गलधर्मनैरात्म्यावबोधश्च निःश्रेयसहेतुः श्रुतचिन्ताभावनाक्रमेणोत्पद्यते, तदुत्पत्तौ ह्यविद्या संसारहेतुर्निवर्त्तते, तन्निवृत्तौ च तन्मूलं सकलं क्लेशज्ञेयावरणं निवर्त्तत इति सकलावरणविगमादपवर्गसम्प्राप्तिर्भवति । तेन [2]प्रतीत्यसमुत्पाददेशनाप्रधानमिदं भगवतः प्रवचनरत्नमित्यविपरीतप्रतीत्यसमुत्पादाभिधायित्वेन भगवतः स्तोत्राभिधानम् ।

स चायं प्रतीत्यसमुत्पादः परैर्विषमहेतुः प्रमाणव्याहतपदार्थाधिकरणश्चेष्यते । अतस्तन्निरासेन यथावदेव भगवतोक्त इति दर्शनार्थं वक्ष्यमाणसकलशास्त्रप्रतिपाद्यार्थतत्त्वोपक्षेपार्थं च बहूनां यथोक्तप्रतीत्यसमुत्पादविशेषणानामुपादानमिति समुदायार्थः ।

अवयवार्थस्तूच्यते । तत्र प्रकृतीशोभयात्मादिव्यापाररहितमित्यादौ सर्वत्र यः प्रतीत्यसमुत्पादं जगादेति सम्बन्धः । तत्र प्रकृतिः = साङ्ख्यपरिकल्पितं सत्त्वरजस्तमोरूपं प्रधानम्, ईशः = ईश्वरः, उभयम् = एतदेव द्वयम्, आत्मा = सृष्टिसंहारकारक एकः पुरुषस्तदन्यश्च संसारी, आदिग्रहणेन कालादिपरिग्रहः, तेषां व्यापारः = कारणभावः, तेन रहितम् = तद्व्यापारशून्यमित्यर्थः । [G. 11] तत्रेदमुक्तं भगवता—"स चायमङ्कुरो न स्वयंकृतो न[3] परकृतो[3] नोभयकृतो नेश्वरनिर्मितो न प्रकृतिसंभूतो नैककारणाधीनो नाप्यहेतुसमुत्पन्नः" (शा.सू. १०२) इति । एतेन प्रधानेश्वरोभयाहेतुकशब्दब्रह्मात्मपरीक्षाणामुपक्षेपः । अथ स तमेवम्भूतं प्रतीत्यसमुत्पादं किमक्षणिकं जगाद ? नेत्याह—चलमिति । चलम् = अस्थिरम्, क्षणिकमिति यावत् । अन्यस्य चलत्वायोगादिति भावः । तत्रेदमुक्तं भगवता—

---

१. ०सम्पद्योगादभ्यु०—पा०, गा० ।
२. प्रतीत्यसमुत्पादप्रधानमिदं—पा०, गा० ।
३–३. पा०, गा० पुस्तकयोर्नास्ति ।

"क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ।
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" ॥ ( ) इति ।

अयं च स्थिरभावपरीक्षोपक्षेपः ।

यद्येवम्, कर्मफलसम्बन्धादिव्यवस्थायाः प्रतीत्यसमुत्पाद आश्रयो न प्राप्नोति, चलत्वात् ? इत्यत आह—कर्मेत्यादि । एतच्च पश्चात्प्रतिपादयिष्याम इति भावः । तत्र कर्म = शुभाशुभम्, तत्फलं चेष्टानिष्टम्, तयोः सम्बन्धो जन्यजनकभावलक्षणः, तस्य व्यवस्था = संस्थितिः, व्यवहार इति यावत् । आदिशब्देन स्मृतिप्रत्यभिज्ञानसंशयनिश्चयस्वयंनिहितप्रत्यनुमार्गणदृष्टार्थकुतूहलविरमणकार्यकारणभावतदधिगन्तृप्रमाणबन्धमोक्षादिव्यवस्थापरिग्रहः, तेषां समाश्रय इति विग्रहः । तत्रोक्तं भगवता—"इति हि भिक्षवोऽस्ति कर्मास्ति फलं कारकस्तु नोपलभ्यते, य इमान् स्कन्धान्विजहात्यन्यांश्च स्कन्धानुपादत्तेऽन्यत्र धर्मसंकेतात् । तत्रायं धर्मसंकेतो यदुतास्मिन्सतीदं भवति" ( ल० सू० १०. १८५ ) इत्यादि । अयं च कर्मफलसम्बन्धपरीक्षोपक्षेपः । स पुनरयं प्रतीत्यसमुत्पादः स्कन्धधात्वायतनानां द्रष्टव्यः; तेषामेव प्रतीत्यसमुत्पन्नत्वात् ॥ १ ॥

ननु द्रव्यगुणकर्मादयो वस्तुभूताः सन्ति, तेषां कस्मान्न भवति ? इत्यत्राह—गुणेत्यादि । गुणाश्च द्रव्याणि च क्रियाश्च जातिश्च समवायश्चेति द्वन्द्वः । जातिशब्देन परमपरं च द्विविधमपि सामान्यं गृह्यते । आदिशब्देन अन्त्यद्रव्यवर्त्तिनां[1] विशेषाणाम्; ये च धर्मिव्यतिरेकिणो धर्माः कैश्चिदुपवर्ण्यन्ते, यथा—'षण्णामपि पदार्थानामस्तित्वं सदुपलम्भकप्रमाणविषयत्वम्' इत्येवमादयः, तेषां ग्रहणम् । गुणादयश्च ते उपाधयश्च विशेषणानीति विशेषणसमासः । तैः शून्यं रहितमित्यर्थः । तत्रेदमुक्तं भगवता—"सर्वं सर्वमिति ब्राह्मण ! यावदेव पञ्च स्कन्धा द्वादशायतनान्यष्टादश धातवः" इति ( ) । अयं च षट्पदार्थपरीक्षोपक्षेपः । ननु चोपाध्यभावे कथं प्रतीत्यसमुत्पादः शब्दविकल्पाभ्यां विषयीक्रियते, न च ताभ्यामविषयीकृतमभिधातुं पार्यते, न च शब्दविकल्पयोरुपाधिमन्तरेण प्रवृत्तिरस्ति, तत्कथं तं भगवान् जगाद ? इत्याह—आरोपिता-

1. परमाणुवर्तिनामित्यर्थः ।

कारेत्यादि । [ G. 12 ] आरोपितः = बाह्यत्वेनाध्यारोपितः, आकारः = स्वभावो यस्य शब्दप्रत्यययोर्गोचरस्य स तथोक्तः, आरोपिताकारः[1]—शब्दप्रत्यययोर्गोचरः = विषयो यत्र प्रतीत्यसमुत्पादे स तथोक्तः । प्रत्ययशब्दः शब्दशब्दसन्निधानादाविष्टाभिलापात्मके प्रत्ययविशेषे विकल्पे द्रष्टव्यः; तयोरेकविषयत्वाव्यभिचारित्वेन सहचरितत्वात् । तेनैतदुक्तं भवति—यद्यप्युपाधयो न सन्ति, तथापीतरेतरव्यावृत्तवस्तुदर्शनद्वारायातो बहीरूपत्वेनाध्यवसितो विकल्पः प्रतिबन्धात्मकः शब्दार्थस्तत्रास्ति । न हि परमार्थतः शब्दानामसौ गोचरः, तत्र सर्वविकल्पानामतीतत्वात्; किन्तु यथैवाविचारितरमणीयतया लोके शब्दार्थः सिद्धः, तथैव भगवद्भिरपि [2]समुपेक्षिततत्त्वार्थैर्गजनिमीलिकया परमार्थावताराय तद्भावनासंवृत्त्या प्रकाश्यते, उपायान्तराभावात् । समारोपिताकारत्वेऽपि शब्दार्थस्य पारम्पर्येण वस्तुप्रतिबन्धात्तदधिगमे हेतुत्वमस्त्येवेति तथाविधं वस्तु तेषां सामर्थ्यात् प्रकाशितमेव भवतीति न विप्रलम्भसम्भवः । तत्रेदमुक्तं तायिना—

"येन येन हि नाम्ना वै यो यो धर्मोऽभिलप्यते ।
नासौ संविद्यते तत्र धर्माणां सा हि धर्मता" ॥ (ल. सू. १०. ५००) इति ।

अयं च शब्दार्थपरीक्षोपक्षेपः ॥ २ ॥

अथ किमयं तीर्थिकपरिकल्पितपदार्थवत् प्रतिपादकप्रमाणद्रविणदरिद्रतया वचनरचनामात्रसारः ? आहोस्विदस्ति किञ्चिदस्य प्रतिपादयितृ प्रमाणम् ? अस्तीत्याह—स्पष्टेत्यादि । स्पष्टं च तल्लक्षणं चेति विशेषणसमासः । स्पष्टत्वं च लक्षणस्यासम्भाव्याप्त्यतिव्याप्तिदोषरहितत्वात् । तीर्थिकप्रमाणलक्षणं त्वस्पष्टमिति दर्शनार्थम् 'स्पष्टलक्षणम्' इत्याह । तेन संयुक्तम् = समन्वितं यत्प्रमाद्वितयम् = प्रत्यक्षानुमानाख्यम्, तेन निश्चितम् । एतच्च सर्वपरीक्षासु प्रतिपादयिष्यति । एतदपि भगवतोऽनुमतम् । यथोक्तम्—

"तापाच्छेदाच्च निकषात् सुवर्णमिव पण्डितैः ।
परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात्" ॥ (तत्त्व० ३५८७) इति ।

---

१. अत्र जै० पुस्तके 'स्वभावो यस्य' इत्यधिकः पाठः ।

२. 'समपेक्षित०' इति गा० सम्पादकाभिमतः पाठः ।

तत्र प्रत्यक्षस्य लक्षणम्—भ्रान्तिकल्पनाभ्या रहितत्वम्। तच्च भगवतोक्तमेव। यदाह—"चक्षुर्विज्ञानसमङ्गी[1] नीलं विजानाति, नो तु नीलम्[2]" (वि० का० पा०) इति। तथा हि 'नीलं विजानाति' इत्यनेनाविपरीतविषयत्वख्यापनादभ्रान्तत्वमुक्तम्, 'नो तु नीलम्' इत्यनेन नामानुविद्धार्थग्रहणप्रतिक्षेपात् कल्पनारहितत्वम्। अनुमानस्यापि लक्षणमुक्तमेवानुमानाश्रयं लिङ्गं दर्शयता। तथा हि—साध्यार्थाविनाभूतं लिङ्गं विनिश्चितं सदनुमानज्ञानस्य कारणम्, तच्च "यत्किञ्चिद् भिक्षवः समुदयधर्मकं सर्वत्र निरोधधर्मकम्" (  ) इत्येवं साध्येन हेतोर्व्याप्तिमुपदर्शयता स्फुटतरमेव प्रकाशितम्। यथोक्तम्—

"अनुमानाश्रयो लिङ्गमविनाभावलक्षणम्।
[G. 13] व्याप्तिप्रदर्शनाद्धेतोः साध्येनोक्तः[3] स[4] च स्फुटः"॥
(प्र० वा० १. २८७) इति।

तच्च लिङ्गं स्वभाव-कार्यानुपलम्भविशेषभेदेन त्रिधा भिद्यते। तत्र 'यत्किञ्चिद्भिक्षवस्समुदयधर्मकम्' इत्यनेन स्वभावाख्यं लिङ्गमुपदर्शितमेव। कार्याख्यमपि—

"धूमेन ज्ञायते वह्निः सलिलं च बलाकया।
निमित्तैर्ज्ञायते गोत्रं बोधिसत्त्वस्य धीमतः"॥ इति ब्रुवता दर्शितम्।

अनुपलम्भविशेषाख्यमपि दर्शितमेवानुपलम्भमात्रस्य प्रामाण्यं प्रतिक्षिपता। यथोक्तम्—"मा भिक्षवः पुद्गलः पुद्गलं प्रमिणोतु, पुद्गले वा प्रमाणमुद्गृह्णातु, क्षण्यते हि भिक्षवः पुद्गलः पुद्गलं प्रमिण्वन्। अहं वा पुद्गलं प्रमिणुयाम्, यो वा स्यान्मादृशः" (  ) इति। एतेन हि स्वभावविप्रकृष्टेष्वनुपलम्भमात्रस्य प्रामाण्यं प्रतिक्षिप्तम्। 'अहं वा' इत्यादि ब्रुवताऽनुपलम्भविशेषस्यैव प्रामाण्यमित्येतदपि स्फुटतरमेव दर्शितम्। अयं च प्रत्यक्षानुमानप्रमाणान्तरपरीक्षाणामुपक्षेपः।

अथ किमयं प्रतीत्यसमुत्पादः केनचिद्वस्तुत्वादिना रूपेण सान्वयः, यथाहुः स्याद्वादिनः? आहोस्विदसंकीर्णस्वभावः? किं चातः? सान्वयत्वे प्रत्यक्षादीनां

---

१. चक्षुर्विज्ञानसङ्गी—गा०। २. द्र०—आ० नरेन्द्रदेवकृता अभिधर्मकोशव्याख्या, २५ पृ०। ३. 'साध्यो नोक्तः' गा०। ४. स अविनाभाव इत्यर्थः।

लक्षणसाङ्कर्यम्, कार्यकारणयोश्च स्वभावाभेदादजन्यजनकत्वम्, ततश्च न स्पष्टलक्षणयोगिप्रमाद्वितयनिश्चितत्वम्। नापि प्रतीत्यसमुत्पादार्थो युक्तः; असङ्कीर्णस्वभावत्वेऽपि सहकारिणां भेदाविशेषादजनकाभिमतपदार्थक्रियाकारित्वं न भवेत्? अत्राह—अणीयसापीत्यादि। एवं मन्यते—उत्तर एवात्र पक्षः। न चात्र यथोक्तदोषावसरः—इति पश्चात् प्रतिपादयिष्यामः। मिश्रीभूतः = सङ्कीर्णः, अपरात्मा यत्रेति विग्रहः। अपरस्य = कारणादेः स्वभावस्य, यत्र लेशतोऽपि कार्यादात्मन्यनुगमो नास्तीत्यर्थः। अणीयसापीति = सूक्ष्मतरेणापि। न केवलं बहुभिः सत्त्वज्ञेयत्वादिभिरित्यपिशब्देन दर्शयति। एकस्यापि हि रूपस्यानुगमे सर्वात्मनानुगतिः स्यादिति भावः। एतच्च पश्चात् प्रतिपादयिष्यति। स चायमुक्तो भगवता—"कथं न[1] शाश्वततोऽङ्कुरः[1]? यस्मादन्योऽङ्कुरोऽन्यद्बीजम्, न तु य एवाङ्कुरस्तदेव बीजम्।......तथा विसदृशो बीजादङ्कुर इति, अतो न संक्रान्तितः[2]" (शा. सू. पृ. १०२) इति। अयं च स्याद्वादपरीक्षोपक्षेपः॥३॥

अथ किमसङ्कीर्णस्वभावा अपि स्कन्धादयोऽध्वस्वजहत्स्वभावा एव वर्त्तन्ते, यथाहुरेके संक्रान्तिवादिनः सर्वास्तिवादाः? नैवमित्याह—असंक्रान्तिमिति। यदि तु संक्रान्तिः स्यात्, तदा सर्वात्मना सत्त्वान्न किञ्चिज्जन्यमस्तीति प्रतीत्यसमुत्पादस्यैवायोग इति भावः। न विद्यते संक्रान्तिः = अध्वसु सञ्चारः स्कन्धादीनां [G. 14] यत्रेति विग्रहः। एतच्चाभिहितं भगवता। यथोक्तम्—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचित्सन्निचयं गच्छति। इति हि भिक्षवश्चक्षुरभूत्वा भवति, भूत्वा च प्रतिविगच्छति" (   ) इति। अयं च त्रैकाल्यपरीक्षोपक्षेपः।

अथ किमयं दृष्टमात्रकालभावी, यथाहुश्चार्वाकाः—"भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः" इति? नेत्याह—अनाद्यन्तमिति। अविद्यमानावाद्यन्तावस्मिन्निति विग्रहः। एतदपि निर्दिष्टं भगवता—"अनवराग्रो हि भिक्षवो जातिसंसारः" (सं० नि० १५.१) इत्यादिना। अवरमित्यन्तोऽभिधीयते, अग्रमिति चादिः, तयोः प्रतिषेधाद् 'अनवराग्रः' इत्युच्यते। एतच्चानुत्पन्नार्यमार्गानधिकृत्योक्तम्,

१–१. नु शाश्वतो०—सर्वत्र।  २. संक्रमते—सर्वत्र।

उत्पन्नार्येमार्गाणां तु सान्त[1] एव संसारः। अत एवोक्तम्—"दीर्घो बालस्य संसारः सद्धर्ममविजानतः" (ध० प० ५.६०) इति। अयं च **लोकायतपरीक्षोपक्षेपः**।

अथ किमयं प्रतीत्यसमुत्पादो बहिरर्थात्मकः ? आहोस्विच्चित्तमात्रशरीर इति ? आह—**प्रतिबिम्बादिसन्निभमिति**। एतेन चित्तमात्रात्मक एवेति दर्शयति। तथा हीदमुक्तं भवति—यथा हि प्रतिबिम्बालातचक्रगन्धर्वनगरादयश्चित्तमात्रशरीराः, तथाऽयमपीति। एतच्चोक्तं भगवता—

"बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनालुठितं[2] चित्तमर्थाभासं प्रवर्त्तते" ॥ (ल.सू. १०.१५४-५५) इति।

अयं च **बहिरर्थपरीक्षोपक्षेपः**।

तदेवं यथोक्तासदर्थकल्पनाजालरहितत्वं प्रतीत्यसमुत्पादस्य प्रतिपाद्योपसंहरन्नाह—**सर्वप्रपञ्चेत्यादि**। सर्वेषां यथोक्तानां प्रकृतिहेतुत्वादीनां प्रपञ्चानां सन्दोहः = समूहः, तेन निर्मुक्तः। अथ किमयमन्यैरपि हरि-हर-हिरण्यगर्भादिभिरेवमभिसम्बुद्धः ? नेत्याह—**अगतं परैरिति**। सर्वतीर्थानां वितथात्मदृष्ट्यभिनिविष्टत्वाद्भगवत एवायमावेणिकोऽभिसम्बोध इति दर्शयति। एतच्च सर्वपरीक्षासु प्रतिपादयिष्यति ॥ ४ ॥

अथायमेवम्भूतः प्रतीत्यसमुत्पादः किं स्वयमभिसम्बुध्य गदितो भगवता ? आहोस्वित् पराभिमतापौरुषेयवेदाश्रयेण, यथाहुर्जैमिनीयाः—

"तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टा न विद्यते।
वचनेन तु नित्येन यः पश्यति स पश्यति" ॥ (तत्त्व० ३१७४) इति ?

नैवमित्याह—**स्वतन्त्रश्रुतिनिःसङ्ग इति**। स्वतन्त्रा श्रुतिः = स्वतः प्रमाणभूतो वेदः, नित्यं वचनमिति यावत्। तस्या निःसङ्गः = निरास्थः, तन्निरपेक्ष एव साक्षाद्दर्शी प्रतीत्यसमुत्पादं गदितवानित्यर्थः। न चाप्यपौरुषेयं वाक्यमस्ति, यथोक्तं **भगवता**—"इत्येते, आनन्द, पौराणा महर्षयो वेदानां कर्त्तारो मन्त्राणां प्रवर्त्तयितारः" इति (दी. नि. १.३.३४)। एतच्च पश्चात्प्रतिपादयिष्याम इति भावः। अयं च **श्रुतिपरीक्षायाः स्वतन्त्रप्रामाण्यपरीक्षायाश्चोपक्षेपः**।

---

१. शान्त—पा०, गा०। २. 'वासनालुलितम्' इति तत्रस्थः पाठः।

[ G. 15 ] अथ समधिगताशेषस्वार्थसम्पत्तेर्भगवतः किमर्थमियं प्रतीत्यसमुत्पाददेशना ? इत्याह—जगद्धितविधित्सयेति । जगते हितं जगद्धितम् । तत्पुनरविपरीतप्रतीत्यसमुत्पादावबोधोपायमशेषक्लेशज्ञेयावरणप्रहाणम्, तद्विधातुमिच्छा जगद्धितविधित्सा, सा तद्देशनायाः कारणम् । साऽपि जगद्धितविधित्सा कुतोऽस्य जायेत ? इत्याह–अनल्पेत्यादि । अनल्पैः कल्पासङ्ख्येयैः सात्मीभूता महादया यस्येति विग्रहः । सा च महादया भगवतः समधिगताशेषस्वार्थसम्पत्तेरपि परार्थकरणव्यापारापरित्यागादवगम्यते ॥ ५ ॥

अथासौ सात्मीभूतमहादयः किं कृतवान् ? इत्याह — य इत्यादि । य इति सामान्यवचनोऽपि बुद्धे भगवति वर्त्तते[1]; अन्यस्य यथोक्तगुणासम्भवात् । प्रतीत्यसमुत्पादमिति। हेतून् = प्रत्ययान्; प्रतीत्य = समाश्रित्य, यः स्कन्धादीनामुत्पादः स प्रतीत्यसमुत्पादः । एतदुक्तं भवति—हेतुप्रत्ययबलेनोत्पन्नान् स्कन्धादीन्यो जगादेति। यद्यपि 'समुत्पादः' इति व्यतिरेकीव निर्देशः, तथापि प्रतीत्यसमुत्पन्नमेव वस्तु भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तथा निर्दिश्यते । यद्वा—समुत्पद्यत इति समुत्पादः, 'कृत्यल्युटो बहुलम्' ( पा० सू० ३.३.११३ ) इति वचनात् कर्त्तरि घञ् । ततः प्रतीत्यशब्देन 'सुप्सुपा[2]' ( पा० सू० २.१.४ ) इति मयूरव्यंसकादित्वाद् ( पा० सू० २.१.७२ ) समासः । असमस्तमेव वा । एतेन च सर्वेण भगवतः सम्यक्परहितानुष्ठानसम्पत् सोपाया परिदीपिता भवति । तथा हि—यः प्रतीत्यसमुत्पादमेवम्भूतं जगादेत्यनेन यथावत्परहितानुष्ठानं भगवतो दर्शितम् । इदमेव हितानुष्ठानं भगवतो यत्परेषामविपरीतस्वर्गापवर्गमार्गोपदेशः । यथोक्तम्—

"युष्माभिरेव कर्त्तव्यमाख्यातारस्तथागताः" (ध० प० २०.२७६) इति ।

अस्याश्चाविपरीतपरहितानुष्ठानसम्पद उपायो धर्मेषु साक्षाद्दर्शित्वम्, महाकरुणा च; यतः कृपालुरपि यथाभूतापरिज्ञानान्न सम्यक्परहितमुपदेष्टुं समर्थः, परिज्ञानवानपि कृपाहीनो नैवोपदिशेत्, उपदिशन्नप्यहितमप्युपदिशेद् । तस्मात्

---

१. प्रवर्तते—पा०, गा० ।          २. 'सह सुपा' इति पाणिनिसूत्र पाठः ।

# प्रकृतिपरीक्षा

## साङ्ख्यमतानुवादः

अशेषशक्तिप्रचितात् प्रधानादेव केवलात् ।
कार्यभेदाः प्रवर्त्तन्ते तद्रूपा एव भावतः ॥ ७ ॥

---

प्रज्ञाकृपे द्वे अपि सम्यक् परहितानुष्ठानोपायौ[1] भगवतः । तच्च साक्षाद्दर्शित्वं स्वतन्त्रश्रुतिनिःसङ्गत्वेन दर्शितम् ; सात्मीभूतमहादयत्वेन च महाकरुणायोगः ।

ननु चाविपरीतः प्रतीत्यसमुत्पादो बोधिसत्त्वश्रावकादिभिरपि निर्दिष्टः, तत् कोऽत्रातिशयो भगवतः ? इत्याह—**गदतांवर** इति । यद्यपि ते श्रावकादयः प्रतीत्यसमुत्पादं गदन्ति, तथापि भगवानेव तेषां गदतांवरः = प्रधानम्[2] । भगवदुपदिष्टस्यैव धर्मतत्त्वस्य प्रकाशनान्न हि तेषां स्वतो यथोक्तप्रतीत्यसमुत्पाददेशनायां शक्तिरस्ति । सर्वगुणदोषप्रकर्षापकर्षनिष्ठाधिष्ठानत्वाद्वा [ G. 16 ] भगवानेव श्रेष्ठः, नेतरे; तेषां तद्विपरीतत्वात् । एतेन च भगवतः श्रावकादिभ्यो विशिष्टत्वप्रतिपादनेन सवासनाशेषक्लेशज्ञेयावरणप्रहाणलक्षणा स्वार्थसम्पत्[3] परिदीपिता भवति । अन्यथा कथमिव तेभ्यो विशिष्टो भवेत्, यदि यथोक्तगुणयोगिता न स्याद्भगवतः ! अत एवाह—**तं सर्वज्ञमिति** । अयं च **सर्वज्ञसिद्ध्युपक्षेपः** । अथ तं प्रणम्य किं क्रियते ? इत्याह—**क्रियते तत्त्वसंग्रह** इति । यथोक्तान्येव प्रतीत्यसमुत्पादविशेषणानि तत्त्वानि; अविपरीतत्वात् । तेषामितस्ततो विप्रकीर्णानामेकत्र हि संक्षेपः = संग्रहः । तत्प्रतिपादकत्वाद् ग्रन्थस्यापि तथा व्यपदेशः—सीताहरणं काव्यमिति यथा । अथ वा—समन्ताद्वा गृह्यन्ते अनेन तत्त्वानीति संग्रहः, ग्रन्थ एवोच्यते । 'क्रियते' इति प्रारब्धापरिसमाप्तकालापेक्षया वर्तमानकालनिर्देशः ॥ ६ ॥

तत्र प्रकृतिव्यापाररहितत्वप्रतिपादनाय **साङ्ख्यमतमुपदर्शयन्नाह—अशेषशक्तिप्रचितादित्यादि** ।

---

१. ०नोपायो—गा० ।　　२. पा०, गा० पुस्तकयोर्नास्ति ।
३. स्वधि(०धी ?)सम्पत्—गा० ।

यदशेषाभिर्महदादिकार्यप्रागजनिकाभिरात्मभूताभिः शक्तिभिः, प्रचितम् = युक्तं सत्त्वरजस्तमसां साम्यावस्थालक्षणं प्रधानम्, तत एवैते महादादयः कार्यभेदाः प्रवर्त्तन्ते इति कापिलाः। प्रधानादेवेत्यवधारणं कालपुरुषादिव्यवच्छेदार्थम्। केवलादिति वचनं सेश्वरसाङ्ख्योपकल्पितेश्वरनिरासार्थम्। प्रवर्त्तन्त इति साक्षात् पारम्पर्येण वोत्पद्यन्त इत्यर्थः। तथा हि तेषां प्रक्रिया—प्रधानाद् बुद्धिः प्रथममुत्पद्यते, बुद्धेश्चाहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणि शब्दस्पर्शरसरूपगन्धात्मकानि, इन्द्रियाणि चैकादशोत्पद्यन्ते; पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाः, मनश्चैकादशमिति; पञ्चभ्यश्च तन्मात्रेभ्यः पञ्च भूतानि —शब्दादाकाशम्, स्पर्शाद्वायुः, रूपात् तेजः, रसादापः, गन्धात् पृथिवीति। यथोक्तमीश्वरकृष्णेन—

"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥" (सां० का० २२) इति।

तत्र महानिति बुद्धेराख्या। बुद्धिश्च 'अयं घटः', 'अयं पटः' इति विषयाध्यवसायलक्षणा। अहङ्कारस्तु—'अहं सुभगः', 'अहं दर्शनीयः' इत्याद्यभिमानलक्षणः। मनस्तु सङ्कल्पलक्षणम्। तद्यथा—कश्चिदेवं बटुः शृणोति ग्रामान्तरे भोजनमस्तीति, तत्र तस्य सङ्कल्पः स्यात्—यास्यामीति, 'किं तत्र गुडदधि [G 17] स्यात्, उतस्विद्दधि' इत्येवं सङ्कल्पवृत्ति मन इति। तदेवं बुद्ध्यहङ्कारमनसां परस्परं विशेषो बोद्धव्यः। शेषं सुबोधम्। एते च महदादयः प्रधानपुरुषौ चेति पञ्चविंशतिरेषां तत्त्वानि। यथोक्तम्—

"पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे रतः।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥" (      ) इति।

एते यथोक्ताः कार्यभेदाः प्रधानात् प्रवर्त्तमाना न बौद्धाद्यभिमता इव कार्यभेदाः कारणादत्यन्तभेदिनो भवन्ति, किन्तु तद्रूपा एव। तत् = प्रधानम्, रूपम् = आत्मा येषामिति विग्रहः। त्रैगुण्यादिरूपेण प्रकृत्यात्मभूता एवेति। तथा हि—लोके यदात्मकं कारणं भवति, तदात्मकमेव कार्यमुपलभ्यते, यथा—कृष्णैस्तन्तुभिरारब्धः पटः कृष्णो भवति, शुक्लैस्तु शुक्लः। एवं प्रधानमपि

त्रिगुणात्मकम् । तथा बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतात्मकं व्यक्तमपि त्रिगुणमुपलभ्यते, तस्मात्तद्रूपम् । किञ्च—अविवेकि । तथा हि—'इमे सत्त्वादयः', 'इदं च महदादि व्यक्तम्' इति पृथग्न शक्यते कर्तुम्; किन्तु ये गुणास्तद्व्यक्तं यद्व्यक्तं ते गुणा इति । किञ्च—द्वयमपि व्यक्तमव्यक्तं च विषयः; भोग्यस्वभावत्वात् । सामान्यं च सर्वपुरुषाणाम्; भोग्यत्वात्, मल्लदासीवत् । अचेतनात्मकं च; सुखदुःखमोहावेदकत्वात् । प्रसवधर्मि च । तथा हि—प्रधानं बुद्धिं जनयति, बुद्धिरप्यहङ्कारम्, अहङ्कारोऽपि तन्मात्राणीन्द्रियाणि चैकादश, तन्मात्राणि महाभूतानि जनयन्तीति । तस्मात् त्रैगुण्यादिरूपेण तद्रूपा एवामी कार्यभेदाः प्रवर्त्तन्ते । यथोक्तम्—

"त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥" (सा० का० ११) इति ।

ननु यदि तद्रूपा एव कार्यभेदाः, तत्कथं शास्त्रे व्यक्ताव्यक्तयोर्वैलक्षण्यमुपवर्णितम्, तथा हीश्वरकृष्णेनोक्तम्[1]—

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥" (सा० का० १० ) इति ।

तत्र ह्ययमर्थः—हेतुमत् = कारणवत्, व्यक्तमेव । तथा हि—प्रधानेन हेतुमती बुद्धिः, अहङ्कारो बुद्ध्या हेतुमान्, पञ्चतन्मात्राण्येकादशेन्द्रियाण्यहङ्कारेण हेतुमन्ति, भूतानि तन्मात्रैः । न त्वेवमव्यक्तम्; तस्य कुतश्चिदप्यनुत्पत्तेः । तथा व्यक्तमनित्यम्; उत्पत्तिधर्मकत्वात् । न त्वेवमव्यक्तम्, तस्यानुत्पत्तिमत्त्वात् । यथा च प्रधानपुरुषौ दिवि भुवि चान्तरिक्षे च सर्वत्र व्यापितया वर्त्तेते, न तथा व्यक्तं वर्त्तते, किन्तु तदव्यापि । यथा च संसारकाले त्रयोदशविधेन बुद्ध्यहङ्कारेन्द्रियलक्षणेन शरीरेण करणेन संयुक्तं सूक्ष्मशरीराश्रितं व्यक्तं संसरति, न त्वेवमव्यक्तम्; तस्य विभुत्वेन सक्रियत्वायोगात् । बुद्ध्यहङ्कारादिभेदेन चानेकविधं व्यक्तमुपलभ्यते, नाव्यक्तम्; तस्यैकस्यैव सतो लोकत्रय-

१. कृष्णोक्तम्—पा०, गा० ।

यदि त्वसद्भवेत्कार्यं कारणात्मनि शक्तितः ।
कर्तुं तन्नैव शक्येत [1]नैरूप्याद् वियदब्जवत् ॥ ८ ॥

---

[G. 18] कारणत्वात् । आश्रितं च व्यक्तम्; यद्यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । न त्वेवमव्यक्तम्; तस्याकार्यत्वात् । लिङ्गं च व्यक्तम्; लयं गच्छतीति कृत्वा । तथा हि—प्रलयकाले भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहङ्कारे, अहङ्कारो बुद्धौ, बुद्धिश्च प्रधाने । न त्वेवमव्यक्तं क्वचिदपि लयं गच्छति; तस्याविद्यमानकारणत्वात् । सावयवं च व्यक्तम्; शब्दस्पर्शरसरूपगन्धात्मकैरवयवैर्युक्तत्वात् । न त्वेवमव्यक्तम्; प्रधानात्मनि शब्दादीनामनुपलब्धेः । किञ्च—यथा पितरि जीवति पुत्रो न स्वतन्त्रो भवति; तथा व्यक्तं सर्वदा कारणायत्तत्वात् परतन्त्रम्, न त्वेवमव्यक्तम्; तस्य नित्यमकारणाधीनत्वात् ।

तदेतत् सर्वमाशङ्कयाह—भावत इति । भावतः = परमार्थतः, ताद्रूप्यम् । प्रकृतिविकारभेदेन तु परिणामविशेषाद्भेदो यथोक्तो न विरुध्यत इत्यर्थः ।

अथ वा—भावत इति । स्वभावतस्त्रैगुण्यरूपेण तद्रूपा एव प्रवर्त्तन्ते । सत्त्वरजस्तमसां तूत्कटानुत्कटत्वविशेषात्सर्गवैचित्र्यं महदादिभेदेनाविरुद्धमेवेत्यर्थः । तदनेन 'कारणात्मनि कार्यमस्ति' इति प्रतिज्ञातं भवति ॥ ७ ॥

तत्र कथमवगम्यते प्रागुत्पत्तेः सत्कार्यम्? इत्याह—यदीत्यादि । सत्कार्यत्वप्रसिद्धये परैः पञ्च हेतव उक्ताः—

"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च[2] सत्कार्यम्" ॥ (सां० का० ९) इति ।

तत्र प्रथमहेतुसमर्थनार्थमिदमुच्यते—यदि त्वसद्भवेत्कार्यमित्यादि । यदि हि कारणात्मनि प्रागुत्पत्तेः कार्यं नाभविष्यत्, तदा तन्न केनचिदकरिष्यत, यथा—गगननलिनम् । प्रयोगः—यदसत्तन्न केनचित् क्रियते, यथा गगनाम्भोरुहम्, असच्च प्रागुत्पत्तेः परमतेन कार्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः । न चैवं भवति, तस्माद्यत्क्रियते तिलादिभिस्तैलादिकार्यं तत्तस्मात्प्रागपि सदिति सिद्धम् । शक्तित

---

१. नैरुप्याद्—गा० । २. करणभावाच्च—गा० ।

कस्माच्च नियतान्येव शालिबीजादिभेदतः ।
उपादानानि गृह्णन्ति तुल्येऽसत्त्वेऽपरं न तु ॥ ९ ॥
सर्वं च सर्वतो भावाद् भवेदुत्पत्तिधर्मकम् ।
तादात्म्यविगमस्येह सर्वस्मिन्नविशेषतः ॥ १० ॥

---

इति । शक्तिरूपेण । व्यक्तिरूपेण तु कापिलैरपि प्राक् सत्त्वस्यानिष्टत्वात् । नैरूप्यादिति । निःस्वभावत्वात् ॥ ८ ॥

द्वितीयहेतुसमर्थनार्थमाह— कस्माच्चेत्यादि ।

[ G. 19 ] यदि त्वसद्भवेत्कार्यम्, तदा पुरुषाणां प्रतिनियतोपादानग्रहणं न स्यात् । तथा हि— शालिफलार्थिनः शालिबीजमेवोपाददते, न कोद्रवबीजम्; तथा 'श्वो मे ब्राह्मणा भोक्तारः' इति दध्यर्थिनः क्षीरमुपाददते, न सलिलम् । तत्र यथा शालिबीजादिषु शाल्यादीनामसत्त्वम्, तथा कोद्रवबीजादिष्वपीति तत्किमिति तुल्येऽपि सर्वत्र शालिफलादीनामसत्त्वे प्रतिनियतान्येव शालिबीजादीन्युपादीयन्ते, यावता कोद्रवादयोऽपि शालिफलार्थिभिरुपादीयेरन्, असत्त्वाविशेषात् । अथ तत्फलशून्यत्वात् तैस्ते[1] नोपादीयन्ते ? यद्येवम्, शालिबीजमपि शालिफलार्थिना नोपदेयं स्यात्; तत्फलशून्यत्वात्, कोद्रवबीजवत् । न चैवं भवति, तस्मात्तत्र[2] तत्कार्यमस्तीति गम्यते ॥ ९ ॥

तृतीयहेतुसमर्थनार्थमाह—सर्वं चेत्यादि ।

यदि च 'सदेव कार्यमुत्पद्यते' इति भवतां मतम्, तस्मात् सर्वस्मात् पदार्थातृणपांसुलोष्ठादिकात् सर्वं सुवर्णरजतादि कार्यमुत्पद्येत । कस्मात् ? तादात्म्यविगमस्य सर्वस्मिन्नविशिष्टत्वात् । विवक्षिततृणादिभावात्मताविरहस्य सर्वस्मिन्नुत्पत्तिमति भावे निर्विशिष्टत्वादित्यर्थः । पूर्वं कारणमुखेन प्रसङ्ग उक्तः, सम्प्रति तु कार्यद्वारेणेति विशेषः । न च सर्वं सर्वतो भवति । तस्मादयं नियमः, तत्रैवं तस्य सम्भवादिति गम्यते ॥ १० ॥

---

१. तैस्तैः—गा० । तैः=नरैस्ते=कोद्रवा इत्यर्थः ।

२. शालावित्यर्थः ।

शक्तीनां नियमादेषां नैवमित्यप्यनुत्तरम् ।
शक्यमेव यतः कार्यं शक्ताः कुर्वन्ति हेतवः ॥ ११ ॥
अकार्यातिशयं यत्तु नीरूपमविकारि च ।
विकृतवात्महान्याप्तेस्तत्क्रियेत कथं नु तैः ! ॥ १२ ॥

---

स्यादेतत्—कारणानां प्रतिनियतेष्वेव कार्येषु शक्तयः प्रतिनियताः, तेन 'कार्यस्यासत्त्वेऽपि किञ्चिदेव कार्यं क्रियते, न गगनाम्भोरुहम्; किञ्चिदेवोपादानमुपादीयते, यदेव समर्थम्, न तु यत्किञ्चित्; किञ्चिदेव तु कुतश्चिद्भवति, न तु सर्वं सर्वतः' ? इत्येतच्चोद्यमुत्थाप्योत्तराभिधानव्याजेन चतुर्थहेतुसमर्थनार्थमाह—शक्तीनामित्यादि ।

एषामिति । कारणाभिमतानां भावानाम् । नैवमिति । यथोक्तं दूषणं न भवतीत्यर्थः । तदेतदनुत्तरं बौद्धादेः । कस्मात् ? यस्माच्छक्ता अपि हेतवः कार्यं कुर्वाणाः शक्यक्रियमेव कुर्वन्ति, नाशक्यम् ॥ ११ ॥

ननु केनैतदुक्तम्—अशक्यं कुर्वन्तीति, येनैतत् प्रतिषिध्यते भवता; किन्त्वसदपि कार्यं कुर्वन्तीत्येतावदुच्यते, तच्च तेषां शक्यक्रियमेवेति ? अत आह—अकार्यातिशयमित्यादि ।

[G. 20] एवं मन्यते—असत्कार्यकारित्वाभ्युपगमादेवाशक्यक्रियं कुर्वन्तीत्युक्तं भवति । तथा हि—यदसत् तन्नीरूपम् = निःस्वभावम्, यच्च नीरूपं तच्छशविषाणादिवदकार्यातिशयम् = अनाधेयातिशयम्, यच्च नाधेयातिशयं तदाकाशवदविकारि । तत्तथाभूतमसमासादितविशेषरूपं कथं केनचिच्छक्यते कर्तुम् !

अथापि स्यात्—सदवस्थाप्रतिपत्तेर्विक्रियत एव तत् ? इत्यत आह—विकृतावात्महान्याप्तेरिति । यस्माद्विकृताविष्यमाणायां यस्तस्यात्मा = स्वभावो नीरूपाख्यो वर्ण्यते, तस्य हानिः प्राप्नोति । न ह्यसतः स्वभावापरित्यागे सति [1]सद्रूपतापत्तिर्युक्ता । परित्यागे वा न तर्हि असदेव सद्रूपतां प्रतिपन्नमिति सिद्ध्येत् । अन्यदेव हि सद्रूपम्, अन्यच्चासद्रूपम्; परस्परपरिहारेण तयोरवस्थितत्वात् ।

---

१. तद्रूपता०—गा० ।

कार्यस्यैवमयोगाच्च किं कुर्वत्कारणं भवेत् ।
ततः कारणभावोऽपि बीजादेर्नावकल्पते[1] ॥ १३ ॥
सुखाद्यन्वितमेतच्च व्यक्तं व्यक्तं समीक्ष्यते ।
प्रसादतापदैन्यादिकार्यस्येहोपलब्धितः ॥ १४ ॥

---

तस्माद् यदसत्, तदशक्यक्रियमेव । तथाभूतपदार्थकारित्वाभ्युपगमे हि कारणानामशक्यकारित्वमेवाभ्युपगतं स्यात् । न चाशक्यं केनचित् क्रियते, यथा—गगनाम्भोरुहम् । अतः शक्तिप्रतिनियमादित्यनुत्तरमेतत् ॥ १२ ॥

पञ्चमहेतुसमर्थनार्थमाह—कार्यस्यैवमित्यादि ।

एवम् = अनन्तरोक्तया नीत्या । यद्वा—यथोक्ताद्धेतुचतुष्टयात् । असत्कार्यवादे सर्वथापि कार्यस्यायोगात् किं कुर्वद्बीजादि कारणं भवेत् । ततश्चैवं शक्यते वक्तुम्—न कारणं बीजादिः, अविद्यमानकार्यत्वाद्, गगनाब्जवदिति । न चैवं भवति, तस्माद्विपर्यय इति सिद्धम्—प्रागुत्पत्तेः सत्कार्यमिति ॥ १३ ॥

स्यादेतद्, यद्यपि नाम सत्कार्यमित्येवं सिद्धम्, प्रधानादेवैते कार्यभेदाः प्रवर्त्तन्ते इत्येतत्तु कथं सिद्ध्यति ? इत्याह—सुखाद्यन्वितमित्यादि ।

तत्र प्रधानास्तित्वसाधने पञ्चामी वीतप्रयोगाः परैरुक्ताः । यथोक्तम्—

"भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्तम् ।" ( सा० का० १४–१५ ) इति ।

१. अयमर्थः—अस्ति प्रधानम्, भेदानां परिमाणात् । इह [G. 21] लोके यस्य कर्त्ता भवति तस्य परिमाणं दृष्टम्, यथा—कुलालः परिमितान्मृत्पिण्डात् परिमितं घटं करोति प्रस्थग्राहिणम्, आढकग्राहिणम् । इदं च महदादि व्यक्तं परिमितं दृष्टम्—एका बुद्धिः, एकोऽहङ्कारः; पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्चभूतानि ( इति ) । अतोऽनुमानेन साधयामः—अस्ति प्रधानं यत् परिमितं व्यक्तमुत्पादयतीति । यदि प्रधानं न स्यान्निष्परिमाणमिदं व्यक्तं स्यात् ।

---

1. ०न विकल्पते—गा० ।

२. इतश्चास्ति प्रधानम्; भेदानामन्वयदर्शनात्। यज्जातिसमन्वितं हि यदुपलभ्यते, तत्तन्मयकारणसम्भूतम्; यथा—घटशरावादयो भेदा मृज्जात्यन्वितास्ते मृदात्मककारणसम्भूताः। सुखदुःखमोहादिजातिसमन्वितं चेदं व्यक्तमुपलभ्यते, कुतः? प्रसादतापदैन्यादिकार्योपलब्धेः। तथा हि—प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः सत्त्वस्य कार्यम्। सुखमिति च सत्त्वमेवोच्यते। तापशोषभेदस्तम्भोद्वेगापद्वेगा रजसः कार्यम्। रजश्च दुःखम्। दैन्यावरणसादनाध्वंसबीभत्सगौरवाणि तमसः कार्यम्। तमश्च मोहशब्देनोच्यते। एषां च महदादीनां प्रसादतापदैन्यादिकार्यमुपलभ्यते। तस्मात् सुखदुःखमोहानां त्रयाणामेते सन्निवेशविशेषा इत्यवसीयते[1]। तेन सिद्धमेषां प्रसादादिकार्यतः सुखाद्यन्वितत्वम्। तदन्वयाच्च तन्मयप्रकृतिसम्भूतत्वं सिद्धम्। तत्सिद्धौ च सामर्थ्याद्यासौ प्रकृतिस्तत् प्रधानमिति सिद्धम्—अस्ति प्रधानम्, भेदानामन्वयदर्शनादिति।

३. इतश्चास्ति प्रधानम्; शक्तितः प्रवृत्तेः। इह लोके यो यस्मिन्नर्थे प्रवर्त्तते स तत्र शक्तः; यथा—तन्तुवायः पटकरणे। अतः साधयामः—प्रधानस्यास्ति शक्तिर्यया व्यक्तमुत्पादयतीति। सा च शक्तिर्निराश्रया न सम्भवति, तस्मादस्ति प्रधानं यत्र शक्तिर्वर्त्तत इति।

४. इतश्चास्ति प्रधानम्; कारणकार्यविभागात। इह लोके कार्यकारणयोर्विभागो दृष्टः। तथा हि—मृत्पिण्डः कारणम्, घटः कार्यम्, स च मृत्पिण्डाद्विभक्तस्वभावः, तथा हि—घटो मधूदकपयसां धारणसमर्थः, न मृत्पिण्डः। एवमिदं महदादिकार्यं दृष्ट्वा साधयामः—अस्ति प्रधानम्, यस्मान्महदादिकार्यमुत्पन्नमिति।

५. इतश्चास्ति प्रधानम्; वैश्वरूप्यस्याविभागात्। वैश्वरूप्यमिति त्रयो लोका उच्यन्ते, एते हि प्रलयकाले क्वचिदविभागं गच्छन्ति। तथा हि—पञ्चभूतानि पञ्चसु तन्मात्रेष्वविभागं गच्छन्ति, तन्मात्राणि पञ्चेन्द्रियाणि चाहङ्कारे, अहङ्कारो बुद्धौ, बुद्धिः प्रधाने; तदेवं प्रलयकाले त्रयो लोका अविभागं गच्छन्ति। अविभागो नाम अविवेकः। यथा क्षीरावस्थायाम् अन्यत् क्षीरम्, अन्यद्दधि—इति विवेको न शक्यते कर्तुम्, तद्वत्प्रलयकाले 'इदं व्यक्तमिदमव्यक्तम्' इति विवेको

---

१. इत्य( नु ? )मीयते—गा०।

ततस्तन्मयसम्भूतं तज्जात्यन्वयदर्शनात् ।
कुटादिभेदवत्तच्च प्रधानमिति कापिलाः ॥ १५ ॥

साङ्ख्यमतनिरासः

तदत्र सुधियः प्राहुस्तुल्या सत्त्वेऽपि चोदना ।
यत्तस्याममुत्तरं वः स्यात् तत्तुल्यं सुधियामपि ॥ १६ ॥

---

न [G 22] शक्यते कर्तुम् । अतो मन्यामहे--अस्ति प्रधानं यत्र महदादिलिङ्गमविभागं गच्छतीति ।

तदत्राचार्येण 'समन्वयात्' इत्ययमेव हेतुरुक्तः परिशिष्टानामुपलक्षणार्थः । तत्र सुखादीत्यादिशब्देन दुःखमोहयोर्ग्रहणम् । व्यक्तमिति महदादिभूतपर्यन्तम् । व्यक्तं समीक्ष्यत इति । स्पष्टमुपलभ्यत इत्यर्थः । कथम् ? इत्याह—प्रसादेत्यादि । आदिशब्दः प्रत्येकमभिसम्बध्यते । एतच्चास्माभिः पूर्वमेव व्याख्यातम् ॥ १४ ॥

एवं 'समन्वयात्' इत्यस्य हेतोः सिद्धिमुपदर्श्य प्रमाणं रचयन्नाह--तत इत्यादि ।

तन्मयसम्भूतमिति । सुखादिमयं यत्कारणं तस्मात्सम्भूतमित्यर्थः । अयं च साध्यनिर्देशः । तज्जात्यन्वयदर्शनादिति हेतुः । तया त्रैगुण्यलक्षणया जात्या अनुगतत्वदर्शनादित्यर्थः । कुटादिभेदवदिति । घटादिभेदवत् । यच्च तन्मयं कारणं तत्प्रधानमिति कापिलाः = साङ्ख्या वर्णयन्ति ॥ १५ ॥

तदत्रेत्यादिना प्रतिविधानमारभते ।

तत्र यत्तावदुक्तम्—'प्रधानादेवामी[1] कार्यभेदास्तद्रूपा एव प्रवर्त्तन्ते' (तत्त्व० ७) इति, तत्रेदं निरूप्यते—यद्यमी कार्यभेदाः प्रधानस्वभावा एव, तत्कथमेषां ततः कार्यतया प्रवृत्तिर्भवति, न हि यद्यस्मादव्यतिरिक्तं तत्तस्य कारणं कार्यं वा युक्तम्; भिन्नलक्षणत्वात् कार्यकारणयोः । अन्यथा हि 'इदं कार्यमिदं कारणं वा' इत्यसङ्कीर्णव्यवस्था कथं भवेत् । ततश्च यद्भवद्भिः—'मूलप्रकृतेः कारणत्वमेव,

---

१. प्रधानादेरमी—गा० ।

भूतेन्द्रियलक्षणस्य षोडशकस्य गणस्य कार्यत्वमेव, बुद्ध्यहङ्कारतन्मात्राणां च पूर्वोत्तरापेक्षया कार्यत्वं कारणत्वं च' इति व्यवस्थानं कृतम्, तन्न स्यात्। यथोक्तम्—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥"

(सा० का० ३) इति।

सर्वेषामेव हि परस्पराव्यतिरेकात् कार्यत्वं कारणत्वं वा प्रसज्येत। यद्वा—आपेक्षिकत्वात् कार्यकारणभावस्य रूपान्तरस्य चापेक्षणीयस्याभावात् सर्वेषां पुरुषवन्न प्रकृतित्वम्, नापि विकृतित्वं स्यात्; अन्यथा पुरुषस्यापि प्रकृतिविकारव्यपदेशः स्यात्। आह च—

"यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च।
वदता रुद्रिलेनैव ख्यापिता विन्ध्यवासिता॥" ( ) इति।

यच्च 'इदं [G. 23] हेतुमत्त्वादिधर्मयोगि व्यक्तं विपरीतमव्यक्तम्' (सा० का० १०) इति वर्णितम्, तदपि बालप्रलपितमेव। न हि यद्यस्मादभिन्नस्वभावं तत्तद्विपरीतं युक्तम्, रूपान्तरत्वलक्षणत्वाद्वैपरीत्यस्य; अन्यथा भेदव्यवहारोच्छेद एव स्यात्। ततश्च सत्त्वरजस्तमसां चैतन्यानां च परस्परं भेदाभ्युपगमो निर्निबन्धन एव स्यात्, ततश्च सहोत्पत्तिविनाशप्रसङ्गः; एकयोगक्षेमलक्षणत्वादभेदव्यवस्थानस्य। तस्माद् व्यक्तरूपाव्यतिरिक्तत्वादव्यक्तमपि हेतुमत्त्वादिधर्मयोगि प्राप्नोति, व्यक्तस्वरूपवत्, व्यक्तं वाऽहेतुमत्त्वादिधर्मयुक्तं स्यादव्यक्तरूपवदित्येकान्त एव; अन्यथा अतिप्रसङ्गः स्यात्। किञ्च—अन्वयव्यतिरेकनिश्चयसमधिगम्यो लोके कार्यकारणभाव प्रसिद्धः। न च प्रधानादिभ्यो महदाद्युत्पत्तिनिश्चये[1] कश्चिदन्वयो व्यतिरेको वा प्रतीतोऽस्ति, येन 'प्रधानान्महान्, महतोऽहङ्कारः' इत्यादि सिध्येत्। तस्मान्निर्निबन्धन एवायं प्रधानादिभ्यो[1] महदाद्युत्पत्तिव्यवहारः। न चापि नित्यस्य कारणभावोऽस्ति, येन प्रधानात् कार्यभेदानामुत्पत्तिः सिद्ध्येत्; नित्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधात्।

---

१—१. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति।

स्यादेतत्—नास्माभिरपूर्वस्वभावोत्पत्त्या कार्यकारणभावोऽभीष्टः, येन स्वरूपाभेदे सति स विरुध्येत; यावता प्रधानं सर्पकुडलादिवन्महदादिरूपेण परिणामं गच्छत्तेषां महदादीनां कारणमिति व्यपदिश्यते, ते च महदादयस्तत्परिणामरूपत्वात् तत्कार्यतया व्यपदिश्यन्ते, परिणामश्चैकवस्त्वधिष्ठानत्वादभेदेऽपि न विरुध्यत इति ? तदेतदसम्यक्; परिणामासिद्धेः । तथा हि—परिणामो भवन् पूर्वरूपपरित्यागाद्वा भवेत्, अपरित्यागाद्वा । यद्यपरित्यागात्, तदाऽवस्थासाङ्कर्यं स्यात्; [1]वृद्धत्वाद्यवस्थायामपि युवत्वाद्यवस्थोपलब्धिप्रसङ्गात् । अथ परित्यागात्, तदा स्वभावहानिप्रसङ्गः, ततश्च पूर्वकं स्वभावान्तरं निरुद्धम्, अपूर्वं स्वभावान्तरमुत्पन्नमिति न कस्यचित् परिणामः सिद्धयेत् ।

किञ्च—तस्यैवान्यथाभावलक्षणः परिणामो वर्ण्यते, तच्चान्यथात्वमेकदेशेन वा भवेत्, सर्वात्मना वा ? न तावदेकदेशेन; एकस्यैकदेशासम्भवात् । नापि सर्वात्मना; तदर्थान्तरोत्पादे पूर्वविनाशप्रसङ्गात् । तस्मान्न तस्यैवान्यथात्वं युक्तम्; स्वभावान्तरोत्पादनिबन्धनत्वात् तस्येति[2] ।

अथापि स्याद्—व्यवस्थितस्य धर्मिणो धर्मान्तरनिवृत्त्या धर्मान्तरप्रादुर्भावः परिणामो वर्ण्यते, न तु स्वभावस्यान्यथात्वादिति ? तदेतदसम्यक् । तथा हि—स प्रवर्त्तमानो निवर्त्तमानश्च धर्मो धर्मिणोऽर्थान्तरभूतो वा स्यात्, अनर्थान्तरभूतो वा ? यद्यर्थान्तरभूतः, तदा धर्मी तदवस्थ एवेति कथमसौ परिणतो नाम । न ह्यर्थान्तरभूतयोः पटाश्वयोरुत्पादविनाशे सत्यविचलितात्मस्वरूपस्य घटादेः परिणामो भवति; अतिप्रसङ्गात् । एवं हि पुरुषोऽपि परिणामी स्यात् । [3]तत्सम्बद्धयोर्धर्मयोरुत्पादविनाशात्तस्य[4] [G. 24] परिणामो व्यवस्थाप्यते, नान्यस्येति चेत् ? न; सदसतोः सम्बन्धाभावेन तत्सम्बन्धित्वासिद्धेः । तथा हि—सम्बन्धो [5]भवन् सतो वा भवेद्, असतो वा । न तावत्सतः; तस्य समधिगताशेषस्वभावसम्पत्तेरनपेक्षतया क्वचिदपि पारतन्त्र्यायोगात् । नाप्यसतः; तस्य सर्वोपाख्याविरहलक्षणतया

---

१. वृद्धत्वा०—गा० ।
२. इदं स्थिरमतिलक्षणखण्डनं प्रतीयते ।
३. धर्मिसम्बद्धयोरित्यर्थः ।
४. धर्मिण इत्यर्थः ।
५. भवेत्—गा० ।

क्वचिदप्याश्रितत्वानुपपत्तेः। न हि शशविषाणादिः क्वचिदाश्रितो युक्तः। न चापि व्यतिरिक्तधर्मान्तरोत्पादविनाशे सति परिणामो व्यवस्थाप्यते भवद्भिः, किं तर्हि ? यत्रात्मभूतैकस्वभावानुवृत्तिरवस्थाभेदश्च, तत्र भवतां परिणामव्यवस्था। न च धर्मिणः सकाशाद्धर्मयोर्व्यतिरेके सति एकस्वभावानुवृत्तिरस्ति, धर्म्येव हि तयोरेक आत्मा, स च व्यतिरिक्त इति नात्मभूतैकस्वभावानुवृत्तिः। न चापि प्रवर्त्तमान-निवर्त्तमानधर्मद्वयव्यतिरिक्तो [1]धर्मी उपलब्धिलक्षणप्राप्तो दर्शनपथमवतरति कस्य-चिदित्यतः स तादृशोऽसद्व्यवहारविषय एव विदुषाम्। अथानर्थान्तरभूत इति पक्षः ? तथाप्येकस्माद्धर्मिस्वरूपादव्यतिरिक्तत्वाद्विनाशोत्पादवतोर्धर्मयोरपि धर्मि-स्वरूपवदेकत्वमेवेति केनाश्रयेण धर्मी परिणतः स्यात्, केनाश्रयेण[2] धर्मा वा। अवस्थातुश्च धर्मिणः सकाशादव्यतिरेकाद्धर्मयोरवस्थातृस्वरूपवन्न निवृत्तिः, नापि प्रादुर्भावः। धर्माभ्यां च धर्मिणोऽनन्यत्वाद्धर्मस्वरूपवदपूर्वस्योत्पादः, पूर्वस्य च च विनाश इति नैकस्य कस्यचित् परिणामः सिद्धयति। तस्मान्न परिणामवशादपि भवतां कार्यकारणव्यवहारो युक्त इति।

एतच्च[3] स्पष्टमेव दूषणमिति कृत्वा तदुपेक्ष्य यश्चायमसत्कार्यवादे दोषः परैरुक्तः, तं पश्चात्प्रतिविधास्यामः—इति मन्यमानस्तुल्यदोषापादनव्याजेन सत्कार्य-वादमेव तावद् दूषयते—तदत्रेत्यादि। सुधिय इति सौगताः। ते प्राहुः—येयम् 'असदकरणात्' इत्यादिना पञ्चधा चोदना कृता, सा सत्त्वेऽपि = सत्कार्यवाद-पक्षेऽपि तुल्या। तथा हि शक्यमिदमित्थमभिधातुम्

"न सदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥" इति।

न सत्कार्यमिति व्यवहितेन सम्बन्धः। कस्मात् ? सदकरणात्, उपादान-ग्रहणादित्यादेर्हेतोः। यश्चोभयोर्दोषो न तमेकश्चोदयेदिति भावः।

ननु च कथमियं समता भवति, यावता तत्र 'असदकरणात्' इत्येवं चोदना, अन्यत्र 'सदकरणात्' इति ? न; अभिप्रायापरिज्ञानात्। अकरणनियतोपा-दानपरिग्रहादिमात्रविवक्षया हीदमुक्तम्; सत्कार्यवादेऽप्यकरणादीनां तुल्यत्वात्।

---

१. धर्म—गा०। २. पा०, गा० पुस्तकयोर्नास्ति। ३. पूर्वोक्तदूषणमित्यर्थः।

यदि दध्यादयः सन्ति दुग्धाद्यात्मसु सर्वथा ।
तेषां सतां किमुत्पाद्यं हेत्वादिसदृशात्मनाम् ॥ १७ ॥
हेतुजन्यं[1] न[1] तत्कार्यं सत्त्वातो हेतुवित्तिवत् ।
अतो नाभिमतो हेतुरसाध्यत्वात् परात्मवत् ॥ १८ ॥

---

तस्यां च चोदनायां यदुत्तरं भवतां सत्कार्यवादिनाम्, तदसत्कार्यवादिनां सुधियां बौद्धानां भविष्यति ॥ १६ ॥

[G. 25] कथमसौ तुल्या ? इत्याह— यदीत्यादि ।

'सदकरणात्' इत्येतत्समर्थनार्थमिदम् । यदि दुग्धाद्यात्मसु क्षीरादीनां स्वभावेषु दध्यादिलक्षणानि सर्वथा = सर्वात्मना विशिष्टरसवीर्यविपाकादिना विभक्तेन रूपेण मध्यावस्थावत् सन्ति, तदा तेषां सतां किमुत्पाद्यं रूपमस्ति, येन ते कारणैर्दुग्धादिभिर्जन्या स्युः ! हेत्वादिसदृश आत्मा येषामिति विग्रहः । हेतुः = प्रकृतिः, आदिशब्देन चैतन्यम्, [2]तेषां च मध्यावस्थाभाव्यपुनर्जन्यं निष्पन्नं रूपं गृह्यते । एतेन [3]कार्यकारणभावभङ्गप्रसङ्गसाधनं प्रमाणद्वयं सूचितम् ॥ १७ ॥

साम्प्रतं स्फुटमेव प्रमाणयन्नाह—हेतुजन्यमित्यादि ।

हेतुः = प्रधानम्, लोकप्रसिद्धं क्षीरादि । तत्कार्यमिति महदादि, लोकप्रसिद्धं च दध्यादि । सत्तात इति सत्त्वात् । हेतुवित्तिवदिति । हेतुः = प्रधानम्, लोकप्रसिद्धं च क्षीरादि, वित्तिः = चैतन्यम्, ताभ्यां तुल्यं वर्तत इति हेतुवित्तिवत् । प्रयोगः = यत्सर्वात्मना सत्र तत् केनचिज्जन्यम्, यथा प्रकृतिश्चैतन्यं वा[4] । सदेव च कार्यं मध्यावस्थायाम् । सच्च सर्वात्मना परमतेन दध्यादीति व्यापकविरुद्धोपलब्धिप्रसङ्गः । न वाऽनैकान्तिकताहेतोः । अनुत्पाद्यातिशयस्यापि जन्यत्वे सर्वेषां जन्यत्वप्रसङ्गोऽनवस्थाप्रसङ्गश्च बाधकं प्रमाणम्;

---

१–१. न हेतुजन्यं—पा०, गा०
२. दध्यादीनामित्यर्थः ।
३. 'भङ्ग' इति पदं पा० पुस्त नास्ति ।
४. लौकिकसाध्यापेक्षया दृष्टान्तोऽयम् ।

अथास्त्यतिशयः कश्चिदभिव्यक्त्यादिलक्षणः ।
यं हेतवः प्रकुर्वाणा न यान्ति वचनीयताम् ? ॥ १९ ॥

---

जनितस्यापि पुनर्जन्यत्वसङ्गात् । एवं तावत् कार्यत्वाभिमतानामकार्यत्वप्रसङ्गापादनं कृतम् ।

इदानीं कारणाभिमतानामकारणत्वप्रसङ्गापादनं कुर्वन्नाह—अतो नाभिमत इत्यादि अभिमतः = पदार्थ इति शेषः । तेनायमर्थो भवति—मूलप्रकृत्यादिर्बीजदुग्धादिश्चाभिमतः पदार्थो विवक्षितस्य महदादेर्दध्यादेश्च न हेतुः, जनकव्यवहारयोग्यो न प्राप्नोतीत्यर्थः[1] । कस्मात् ? असाध्यत्वात् । नास्य साध्यमस्तीत्यसाध्यः, तद्भावस्तत्त्वम् । [2]एतच्चानन्तरोक्तात् कार्यत्वप्रतिषेधात् सिद्धम् । अत एव 'अतः' इत्युक्तम् । परात्मवदिति अन्यस्वभाववत् । अकारणाभिमतपदार्थस्वभाववदित्यर्थः । अकारणाभिमतश्च पदार्थश्चैतन्यम्; "न प्रकृतिर्न विकृतिः पुरुषः" ( सां० का० ३ ) इति वचनात् । प्रयोगः—यदविद्यमानसाध्यं न तत्कारणम्, यथा चैतन्यम् । (G. 26) अविद्यमानसाध्यश्चाभिमतः पदार्थ इति व्यापकानुपलब्धिः । एतच्च द्वयमपि प्रसङ्गसाधनम्, अतो नोभयसिद्धोदाहरणेन किञ्चित् ।

यस्तु मन्यते साङ्ख्यः—"पुरुषस्यापि प्रतिबिम्बोदयन्यायेन भोगं प्रति कर्तृत्वमस्ति" इति, तं प्रत्येवं व्याख्या—परश्चासावात्मा च, मुक्त इत्यर्थः । तस्य हि मुक्तत्वाद्भोगं प्रत्यपि कर्तृत्वं नास्तीति नोदाहरणासिद्धिः ॥ १८ ॥

अथेत्यादिना परमतेन[3] हेत्वोरसिद्धिमाशङ्कते ।

तत्र यदि प्रथमो हेतुः 'सर्वात्मनाऽभिव्यक्त्यादिरूपेणापि सत्त्वात्' इति सविशेषणः क्रियते, तदा न सिद्ध्यति । न ह्यस्माभिरभिव्यक्त्यादिरूपेणापि सत्त्वमिष्यते कार्यस्य, किं तर्हि ? शक्तिरूपेण । अथ सामान्येन निर्विशेषणः, तदाऽनैकान्तिकः; यस्मादभिव्यक्त्यादिलक्षणस्यातिशयस्योत्पद्यमानत्वात् न सर्वस्य कार्यत्वप्रसङ्गो भविष्यति । अत एव द्वितीयोऽपि हेतुरसिद्धः; साध्यस्य विद्यमानत्वात् । अभिव्यक्त्यादिलक्षण इति । आदिशब्देनोद्रेकावस्थाविशेषपरि-

---

1. भवतीत्यर्थः । २. असाध्यत्वमित्यर्थः । ३. परमते—प्र०, प्र० ।

प्रागासीद्यद्यसावेवं न किञ्चिद्वृत्तमुत्तरं ।
नो चेत्सोऽसत्कथं तेभ्यः प्रादुर्भावं समश्नुते ॥ २० ॥
नातः साध्यं समस्तीति नोपादानपरिग्रहः ।
नियतादपि नो जन्म न च शक्तिर्न च क्रिया ॥ २१ ॥

ग्रहः । यमिति अतिशयम् । वचनीयतामिति वाच्यताम् । 'नाभिमतो हेतुरसाध्यत्वात्' इत्यादिर्दोषो न भवतीति यावत् ॥ १९ ॥

प्रागासीदित्यादिना प्रतिविधत्ते ।

तत्र विकल्पद्वयम्—कदाचिदसावतिशयोऽभिव्यक्त्याद्यवस्थातः प्राक् प्रकृत्यवस्थायामप्यासीद्वा ? न वा ? यद्यासीत्, तदा भवद्भिर्द्वयोरपि हेत्वोर्न किञ्चिदसिद्धत्यादिकमुक्तमुत्तरम् । नो चेत् प्रागासीत्, एवमपि सोऽतिशयः कथं तेभ्यो हेतुभ्यः प्रादुर्भावमश्नुवीत ! 'असदकरणात्[1]' इति भवतां न्यायान्न युक्तमेतदित्यभिप्रायः ॥ २० ॥

एवं तावत् 'सदकरणात्' इत्ययं हेतुः समर्थितः ।

साम्प्रतम् 'उपादानपरिग्रहात्' इत्यादिहेतुचतुष्टयसमर्थनार्थमाह—नातः साध्यमित्यादि ।

यथोक्तया नीत्या साध्यस्याभावादुपादानपरिग्रहो न प्राप्नोति; तत्साध्यफलवाञ्छयैव (G. 27) तेषां प्रेक्षावद्भिः परिग्रहात् ।

नियतादेव क्षीरादेर्दध्यादीनां जन्मेत्येतदपि न प्राप्नोति; साध्यस्यासम्भवादेव । एतच्च 'सर्वसम्भवाभावात्' इत्येतस्य समर्थनम् । तथा हि—सर्वस्मात् सम्भवाभाव एव नियताज्जन्मेत्युच्यते, तच्च सत्कार्यवादपक्षे साध्याभावान्न युज्यते ।

तथा शक्तस्येति, शक्यकरणमित्येतदपि द्वयं न युज्यते; साध्यस्याभावादेव । यदि हि केनचित् किञ्चिदभिनिर्वर्त्येत तदा निर्वर्त्तकस्य शक्तिर्व्यवस्थाप्येत, निवर्त्त्यस्य च [2]करणं सिध्येत्, नान्यथा । तद्दर्शयति—न च शक्तिर्न च क्रियेति ॥ २१ ॥

---

१. असदकारणात्—गा० । २. निष्पादनमित्यर्थः ।

अविद्धकर्णोपन्यस्तद्वितीयप्रमाणखण्डनम्

एतदेव [1]यथायोगमवशिष्टेषु हेतुषु ।
योज्यं दूषणमन्यच्च किञ्चिन्मात्रं प्रकाश्यते ॥ ८२ ॥

उद्द्योतकरोक्तहेतावधिकदूषणाधानम्

स्थित्वा प्रवृत्तिरण्वादेर्न सिद्धा क्षणभङ्गतः ।
व्यभिचारश्च तेनैव तस्यापि क्रमवृत्तितः[2] ॥ ८३ ॥

---

असावेकबुद्धिश्चेति विग्रहः । यद्वा—नित्यैका बुद्धिरस्येति समासः । साध्यशून्यतेति । साधर्म्यदृष्टान्तस्येति शेषः । व्यभिचारश्चेति । हेतोरित्यध्याहारः । कथमित्याह : सौ घेत्यादि ॥ ८१ ॥

यथोक्तम्—'[3]तन्वादीनाम्' (तत्त्व० ४९) इत्यादि, तत्राह -एतदेवेत्यादि । तत्रापि हि 'रूपादिमत्त्वात्' इत्यादिसाधनेष्वेतदेव हि यथासम्भवं दूषणं वाच्यम् । एतदेवेति । असिद्धत्वम्, प्रतिबन्धाभावाद् व्यभिचारः, सति प्रतिबन्धे विरुद्धत्वम्, साध्यवैकल्यम्, सामान्येन सिद्धसाध्यतेत्यादि । तथा हि—तत्रापि यादृशं रूपादिमत्त्वं चेतनावदधिष्ठितं तादृशं [4]तन्वादिषु न सिद्धम् । रूपादिमत्त्वमात्रस्य प्रतिबन्धासिद्धेर्व्यभिचारः । प्रतिबन्धाभ्युपगमे सति इष्टविपरीतसाधनाद् विरुद्धत्वम् । साधर्म्यदृष्टान्तस्य साध्यविकलता; नित्यैकचेतनाधिष्ठितत्वेन साध्यधर्मेणान्वयासिद्धेः । सामान्येन सिद्धसाध्यता; विशेषेण व्यभिचारो घटादिष्वन्यथादर्शनादिति । एवमन्येष्वपि हेतुषु योज्यम् ॥ ८२ ॥

यच्च 'स्थित्वा प्रवृत्तेः' (तत्त्व० ५०) इति साधनमुक्तम्, तत्राधिकं दूषणमाह—स्थित्वेत्यादि ।

सर्वभावानामुदयसमनन्तरापवर्गितया क्षणमात्रमपि न स्थितिरस्तीति कुतः स्थित्वा प्रवृत्तिर्भविष्यति । तस्मात् प्रतिवाद्यसिद्धो हेतुः । अनैकान्तिकश्च तेनैवेश्वरेण; यत ईश्वरः क्रमवत्सु कार्येषु स्थित्वा प्रवर्त्तते । अथ च नासौ चेतनावदधिष्ठितः, अनवस्थाप्रसङ्गात् ।

---

1. यथायोग्य०—पा०, गा० । 2. क्रमवृत्तिता—पा०, गा० ।
3. तर्वादीनाम्—पा०, गा० । 4. तर्वादिषु—पा०, गा० ।

प्रशस्तमतिमतखण्डनम्

प्रलये लुप्तविज्ञानस्मृतयः पुरुषा न नः
आभास्वरादिसम्भूतेस्तत एवेह सम्भवात् ॥ ८४ ॥
विमुखस्योपदेष्टृत्वं श्रद्धागम्यं परं यदि ।
वैमुख्यं वितनुत्वेन धर्माधर्मविवेकतः ॥ ८५ ॥

---

अथ 'अचेतनत्वे सति' इति सविशेषणो हेतुः क्रियते, यथा प्रशस्तमतिना कृतः ? तथापि सन्दिग्धविपक्षव्यावृत्तिकतयाऽनैकान्तिकत्वमनिवार्यमेव । यदेव हि विशेषणं विपक्षाद्धेतुं निवर्त्तयति तदेव न्याय्यम्, यत् पुनर्विपक्षे सन्देहं न व्यावर्तयति तदुपात्तमप्यसत्कल्पमेव । पूर्वोक्तश्चासिद्धतादिदोषः सविशेषणत्वेऽपि तदवस्थ एव ॥ ८३ ॥

[ G. 53 ] यच्चोक्तम्—'सर्गादौ व्यवहारश्च' ( तत्त्व० ५१. का० ) इत्यादि, तत्राह—प्रलय इत्यादि । 'उत्तरकालं प्रबुद्धानाम्' इत्येतद् विशेषणमसिद्धम् । तथा हि—नास्मन्मतेन प्रलयकाले प्रलुप्तज्ञानस्मृतयो वितनुकरणाः पुरुषाः सन्तिष्ठन्ते, किन्त्वाभास्वरादिषु स्पष्टज्ञानातिशययोगिषु देवनिकायेषूत्पद्यन्ते; ये तु प्रतिनियतनिरयादिविपाकसंवर्त्तनीयकर्माणः, ते लोकधात्वन्तरेषूत्पद्यन्त इति विवर्त्तकालेऽपि तत एवाभास्वरादेश्च्युत्वा इहा-लुप्तज्ञानस्मृतय एव सम्भवन्ति । तस्मात् 'उत्तरकालं प्रबुद्धानाम्' इति विशेषणमसिद्धम् । अनैकान्तिकश्च हेतुः; सन्दिग्धविपक्षाव्यावृत्तिकत्वात् ।

किञ्च—अन्योपदेशपूर्वकत्वमात्रे साध्ये सिद्धसाध्यता, अनादेर्व्यवहारस्य सर्वेषामेवान्योपदेशपूर्वकत्वस्येष्टत्वात् । अथेश्वरलक्षणपुरुषोपदेशपूर्वकत्वं साध्यते, तदाऽनैकान्तिकत्वम् । अन्यथाऽपि व्यवहारसम्भवाद् दृष्टान्तस्य साध्यविकलता । एतच्च पूर्वमेव सामान्यं दूषणमुक्तम् ॥ ८४ ॥

विरुद्धश्च हेतुः, अभ्युपेतबाधा च प्रतिज्ञाया इति दर्शयन्नाह— विमुखस्योपदेष्टृत्वमित्यादि । यदीश्वरोपदेशपूर्वकत्वं व्यवहारस्य सम्भवेत्, तदा स्यादविरुद्धता हेतोः; यावताऽसौ [1]विगतमुखत्वादुपदेष्टा न युक्तः । तच्च विमुखत्वं

---

१. विमत—पा० ।

ईश्वरबाधकप्रमाणोपन्यासः

१. अनुमानविरोधश्च व्याप्तेः सर्वत्र साधने।
न विरुद्धेन धर्मेण व्याप्तिर्हेतोः प्रकल्पते ॥ ८६ ॥

---

वितनुत्वेन, शरीरविरहादित्यर्थः। तच्च विगततनुत्वमस्य कथं सिद्धम्? इत्याह—धर्माधर्मविवेकत इति। शरीरकारणधर्माधर्मविरहादित्यर्थः। तथा चोद्द्योतकरेणोक्तम्—"यथा बुद्धिसत्तायामीश्वरस्य प्रमाणसम्भवो नैवं धर्मादिसत्त्वे प्रमाणमस्ति" ( ) इति। तस्मादीश्वरस्योपदेष्टृत्वासम्भवात्तदुपदेशकत्वं व्यवहारस्य न सिद्ध्यति, किन्त्वीश्वरव्यतिरिक्तान्यपुरुषोपदेशपूर्वकत्वम्; अत इष्टविघातकारित्वाद् विरुद्धो हेतुः। अथेश्वरस्योपदेष्टृत्वमङ्गीक्रियेत? तदा विमुखत्वमभ्युपेतं हीयत इत्यभ्युपेतबाधा।

'महाभूतादिकं व्यक्तम्' (तत्त्व० ५२) इत्यादौ तु प्रयोगे हेतूनां पूर्ववदनेकान्तिकत्वम्; विपक्षे बाधकप्रमाणाभावात्, सामान्येन सिद्धसाध्यता, विशेषेण दृष्टान्तस्य साध्यविकलतेति योजनीयम् ॥ ८५ ॥

[G. 54] एवं विस्तरेणेश्वरसाधकानि प्रमाणानि निराकृत्य, साम्प्रतं व्याप्तिदोषोद्भावनमुखेन तद्बाधकं प्रमाणं स्वपक्षसिद्ध्यर्थमुपदर्शयितुमाह—अनुमानविरोधेत्यादि।

सर्वत्र यथोक्ते साधने साध्येन या हेतोर्व्याप्तिस्तस्या अनुमानविरोधो वक्ष्यमाणः। अथ प्रतिज्ञायाः कस्मादनुमानविरोधो नोद्भाव्यते? यदि प्रतिज्ञा साधनाङ्गं स्यात्, तदा तद्दोषोद्भावनं स्यात्; यावता साक्षात् पारम्पर्येण वाऽसौ न साध्यसिद्धेरङ्गभावं प्रतिपद्यते, ततश्च साधनदोषाभिधाने प्रस्तुते यत् प्रतिज्ञादोषोद्भावनं तद् दोषोद्भावनं वादिनो निग्रहस्थानं स्यात्, तस्मान्न साधनप्रयोगेषु प्रतिज्ञादोषो वाच्यः। यत्र तु क्वचित् प्रतिज्ञाविरोध उद्भाव्यते, तत्र तन्मुखेन व्याप्तेरेव तद्विघटनं क्रियत इति प्रहीतव्यम्। यद्वा—साधनप्रयोगादन्य[illegible]द् द्रष्टव्यम्।

अथ व्याप्तिकालेऽपि कथमनुमानविरोधो भवति? इत्याह—न विरुद्धेनेत्यादि। विरुद्धेनेति = प्रमाणव्याहतेन। तस्याऽसम्भवादेव न युक्ता व्याप्तिः, न ह्यसता व्याप्तिरवकल्प्यत इति यावत् ॥ ८६ ॥

नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः ।
गगनाम्भोजवत् सर्वमन्यथा युगपद् भवेत् ॥ ८७ ॥

---

किं तदनुमानं येन व्याप्तिर्बाध्यते ? इत्याह—नेश्वरो जन्मिनामित्यादि। यदुत्पत्तिविकलं न तत्कस्यचित् कारणम्, यथा गगनाम्भोजम्। उत्पत्तिविकलश्च ईश्वर इति व्यापकविरुद्धोपलब्धिः[1]। प्रसङ्गसाधनं चेदम्, तेनाश्रयासिद्धता न चोदनीया। सर्वमन्यथा युगपद्भवेदिति। अप्रतिबद्धसामर्थ्यकारणत्वादेककालभिमतकार्यग्रामवत् सर्वं युगपद्भवेदित्यर्थः। एतदत्र बाधकं प्रमाणम्।

अथ वा—अर्थकथनमात्रमेतत्। एवं तु प्रसङ्गसाधनं कर्त्तव्यम्—यदविकलकारणं तद्भवत्येव, यथा—अन्त्यावस्थाप्राप्तायां सामग्र्यामविकलकारणो भवन्नङ्कुरः। अविकलकारणं च सर्वमीश्वरहेतुकं जगदिति युगपद्भवेत्।

स्यादेतत्—नेश्वर एव केवलं कारणम्, अपि तु धर्मादिसहकारिकारणान्तरमपेक्ष्य करोति, निमित्तकारणत्वादीश्वरस्य; तेन धर्मादेः कारणान्तरस्य वैकल्यादविकलकारणत्वमसिद्धमिति ? तदेतदसम्यक्; यदि हि तस्य सहकारिभिः कश्चिदुपकारः कर्त्तव्यो भवेत्, तदा तस्य सहकारिणि व्यपेक्षा, यावता नित्यत्वात् परैरनाधेयातिशयस्य न किञ्चित् तस्य सहकारिभ्यः प्राप्तव्यमस्तीति [G. 55] किमिति तांस्तथाभूताननुपकारिणः सहकारिणोऽपेक्षेत !

किञ्च—येऽपि ते सहकारिणस्तेऽपि सर्व एवेश्वरस्यायत्तजन्मतया नित्यं समवहिता[2] एवेति कथमसिद्धता हेतोः ! न चानैकान्तिकता, अविकलकारणत्वहानिप्रसङ्गात्, अविकलकारणस्याप्यनुत्पत्तौ सर्वदैवानुत्पत्तिप्रसङ्गोऽविशेषात्।

उद्द्योतकरस्त्वाह—"यद्यपि नित्यमीश्वराख्यं कारणमविकलं भावानां सन्निहितम्, तथापि न युगपदुत्पत्तिरीश्वरस्य; बुद्धिपूर्वकारित्वात्। यदीश्वरः सत्तामात्रेणैवाबुद्धिपूर्वं भावानामुत्पादकः स्यात्, तदा स्यादेतच्चोद्यम्; यदा तु बुद्धिपूर्वकं करोति तदा न दोषः; तस्य स्वेच्छया कार्येषु प्रवृत्तेः। अतोऽनैकान्तिकतैव हेतोः" (न्या० वा० ४. १. २१) इति। तदेतदयुक्तम्; न

---

१. ०पलब्धेः—जै०। २. समवहता—गा०।

२. ये वा क्रमेण जायन्ते ते नैश्वरहेतुकाः ।
यथोक्तसाधनोद्भूता जडानां प्रत्यया इव ॥ ८८ ॥

---

हि कार्याणां कारणस्येच्छाभावाभावापेक्षया प्रवृत्तिनिवृत्ती भवतः, येनाप्रतिबद्धसामर्थ्येऽपीश्वराख्ये कारणे सदा सन्निहिते तदीयेच्छाऽभावान्न प्रवर्त्तन्त इति इति स्यात्, किं तर्हि ? कारणगतसामर्थ्यभावाभावानुविधायिनो भावाः । तथा हि—इच्छावतोऽपि कर्तुरसमर्थान्नोत्पद्यन्ते, समर्थाच्च बीजादेरनिच्छावतोऽपि समुत्पद्यन्ते । तत्र यदीश्वराख्यं कारणं कार्योत्पादकालवदप्रतिहतशक्ति सदैवावस्थितं[1] भावानाम्, तत्किमिति[1] तदीयामनुपकारिणीं तामिच्छामपेक्षन्ते, येनोत्पादकालवद् [2]युगपन्नोत्पद्येरन् ! एवं हि तैरविकलकारणत्वमात्मनो दर्शितं भवेत्, यदि युगपद्भवेयुः । न चापीश्वरस्य परैरनुपकार्यस्य काचिदपेक्षाऽस्ति, येनेच्छामपेक्षेत ।

अपि च—बुद्धिव्यतिरेकेण नान्येच्छाऽस्ति, बुद्धिश्चेश्वरस्य भवद्भिर्नित्यैकरूपाऽभीष्टा, ततश्च बुद्धिपूर्वकारित्वेऽपीश्वरस्य किमिति भावानां युगपदुत्पादो न भवति, ईश्वरवत् तद्बुद्धेरपि सदा सन्निहितत्वात् !

अथाप्यनित्या तस्य बुद्धिरङ्गीक्रियते, तथापीश्वरसत्तामात्रभावित्वात् तस्या ईश्वरवत् सदाभाव एवेति स एव दोषः । तस्माद् 'बुद्धिमत्त्वात्' इति विशेषणमकिञ्चित्करमेवेति नानैकान्तिकता हेतोः । न चापि विरुद्धता; सपक्षे भावात् । न चैवं भवति, तस्माद्विपर्ययः । प्रयोगः—यद्यदा न भवति, न तत्तदानीमविकलकारणम्, यथा—कुशूलस्थितबीजावस्थायामनुत्पद्यमानोऽङ्कुरः । न भवति चैकपदार्थोत्पादकाले सर्वं विश्वमिति व्यापकानुपलब्धिः । न च सिद्धसाध्यता: ईश्वरस्य कारणत्वे सति विकलकारणत्वानुपपत्तेः प्रसाधितत्वात् ॥ ८७ ॥

अपरमपि प्रमाणमाह—ये वा क्रमेणेत्यादि ।

[ G. 56 ] यथोक्तेभ्यः स्वारम्भकावयवसन्निवेशविशिष्टत्वादिभ्यः साधनेभ्य उद्भूता इष्टसाध्यधर्मिविषया जडानामीश्वरकारणाभिनिवेशिनां प्रत्ययाः = निश्चया

---

१–१. वस्थितम्, भावास्तत्किमिति—पा०, गा० ।

२. युगपत्त उत्पद्येरन्—पा०, गा० ।

तेषामपि तदुद्भूतौ विफला साधनाभिधा।
नित्यत्वादचिकित्स्यस्य नैव सा सहकारिणी ॥ ८९ ॥
येषु सत्सु भवद्दृष्टमसत्सु न कदाचन।
तस्यान्यहेतुताक्लृप्तावनवस्था कथं न ते ॥ ९० ॥

---

इवेत्यर्थः। ननु यथोक्तदोषदुष्टत्वान्नैतेभ्य इष्टे साध्ये प्रत्ययाः समुत्पद्यन्त इति न दृष्टान्तधर्मिसिद्धिः ? सत्यमेतत्; अत एव 'जडानाम्' इत्युक्तम्। जडानां हि [1]साधनाभासविवेकाक्षमतया साधनाभासेभ्योऽपि तेषां प्रत्ययाः समुत्पद्यन्त एव ॥ ८८ ॥

नन्वेवमपि साध्यविकलो दृष्टान्तः, तेषामपि जडप्रत्ययानामीश्वरस्य निमित्तकारणत्वेनेष्टत्वात् ? इत्यत आह—तेषामपीत्यादि। तेषामपि = जडप्रत्ययानाम्। तदुद्भूताविति ईश्वरादुद्भूताविष्यमाणायाम्। विफला साधनाभिधा—साधनाभिधानं व्यर्थं स्यात्। ईश्वरादेव तेषामुत्पत्तेरिति भावः। ननु साधनाभिधां सहकारिणीमपेक्ष्य तेषामीश्वरो जनको भविष्यति, न केवलः, तेनासौ विफला न भविष्यति ? इत्यत आह—नित्यत्वादित्यादि। यद्यसौ साधनाभिधा तस्येश्वरस्यासमर्थं स्वभावमपनीय समर्थमादधीत, तदा स्यात् सा तस्य सहकारिणी, यावता नित्यत्वादीश्वरोऽनुत्पाद्यानिवर्त्यस्वभावतया न केनचित् किञ्चित्[2] स नीयत[2] इति न साधनाभिधा तस्यासौ सहकारिणी युक्ता ॥ ८९ ॥

अपि च—यथापरिदृष्टसामर्थ्यसाधनादिकारणव्यतिरेकेणापरिदृष्टसामर्थ्यस्यापीश्वरस्य कारणभावे कल्प्यमानेऽतिप्रसङ्गो भवतां प्राप्नोति; यतस्तमपीश्वरं परिकल्प्यापरमपि ढेट्कपकादिकं कल्पनीयमेव, विशेषाभावादिति दर्शयन्नाह—येष्वित्यादि। भवद्दृष्टं यदित्युपस्कारः[3]। अन्यहेतुताक्लृप्ताविति। यथापरिदृष्टसामर्थ्येभ्यो हेतुभ्योऽन्यो हेतुः, तद्भावोऽन्यहेतुता, तस्याः क्लृप्तिः = कल्पनेति विग्रहः ॥ ९० ॥

---

१. साधनाविवेका०—पा०, गा०।
२. वि( चि )कित्सनीय—जै०।
३. यदिति शेष इत्यर्थः।

### ईश्वरस्य सर्वज्ञतानिरासः

कर्तृत्वप्रतिषेधाच्च　　सर्वज्ञत्वं　　निराकृतम् ।
बोद्धव्यं　　त बलेनैव　　सर्वज्ञत्वोपपादनात् ॥ ९१ ॥

### ईश्वरस्यैकत्वनिरासः

यथोक्तदोषदुष्टानि मा भूवन् साधनानि वा ।
तथाऽपि　　कर्तुरैकत्वं　व्यभिचारोपदर्शनात् ॥ ९२ ॥

---

यदुक्तम्—'सर्वकर्तृत्वसिद्धौ च' (तत्त्व० ५४) इत्यादि, तत्राह—कर्तृत्वेत्यादि । सर्वकर्तृत्वबलेनासौ सर्वज्ञो भवद्भिरिष्यते, तेन तन्निराकरणात् सर्वज्ञत्वमपि तस्यायत्नतो निराकृतमेव ॥ ९१ ॥

[ G. 57 ] अभ्युपेत्य साधनानामदुष्टत्वं दूषणान्तरमाह—यथोक्तेत्यादि । यथोक्ता दोषा अनुमानविरोधपर्यन्ताः । अयमत्र समुदायार्थः—यद्यपि तनुगिरिप्रभृतीनामेभ्यः साधनेभ्यो बुद्धिमान् कर्त्ता सिद्ध्यति, तथाऽप्यसौ य एवैकस्य हेतुः स एवान्यस्यापीति न निश्चित एवेति प्रतिकार्यं भिन्नस्यापि कर्तुः सम्भाव्यमानत्वात् सौधादेश्चैकस्यापि बहुभिः करणेक्षणात्, अतो नैकः कर्त्ता प्रतिपादयितुं शक्यते । यावच्चैकः कर्त्ता न सिद्धः, तावत् कुतः सर्वज्ञत्वसिद्धिरिति !

अत्र प्रशस्तमतिरेककर्तृत्वसिद्धये प्रमाणयति—"एकाधिष्ठाना ब्रह्मादयः पिशाचान्ताः; परस्परातिशयवृत्तित्वात् । इह येषां परस्परातिशयवृत्तित्वम्, तेषामेकायत्तता दृष्टा, यथेह लोके गृहग्रामनगरदेशाधिपतीनामेकस्मिन् सार्वभौमे नरपतौ । तथा च भुजगरक्षोयक्षप्रभृतीनां परस्परातिशयवृत्तित्वम् । तेन मन्यामहे— 'तेषामप्येकस्मिन्नीश्वरे पारतन्त्र्यम्' इति । तत्र यदि 'एत ईश्वराख्येनाधिष्ठिताः' इत्ययमर्थः साधयितुमिष्टः, तदाऽनैकान्तिकता; विपर्यये बाधकप्रमाणाभावात्, प्रतिबन्धासिद्धेः, दृष्टान्तस्य च साध्यविकलता । अथ 'अधिष्ठायकमात्रेण साधिष्ठानाः' इति साध्यते, तदा सिद्धसाध्यता; यत इष्यत एवास्माभिर्भगवता सम्बुद्धेन सकललोकचूडामणिना सर्वमेव जगत् कारुण्यवशादधिष्ठितम्, यत्प्रभावादद्याप्यभ्युदयनिःश्रेयससम्पदमासादयन्ति साधवः ।

एककर्तुरसिद्धौ च सर्वज्ञत्वं किमाश्रयम् ।
प्रमाणद्स्वकप्रतिक्षेपः
तत्सिद्धौ साधनं प्रोक्तं जैमनीयेषु राजते ॥ ९३ ॥

इदं चापरं तेनैव[1] साधनमुक्तम्—"सप्त भुवनान्येकबुद्धिनिर्मितानि; एकवस्त्वन्तर्गतत्वात्, एकावसथान्तर्गतापवरकवत् । यथैकावसथान्तर्गतानामपवरकाणां सूत्रधारैकबुद्धिनिर्मितत्वं दृष्टम्, तथैकस्मिन्नेव भुवनेऽन्तर्गतानि सप्त भुवनानि, तस्मात्तेषामप्येकबुद्धिनिर्मितत्वं निश्चीयते; यद्बुद्धिनिर्मितानि चैतानि स भगवान्महेश्वरः सकलभुवनैकसूत्रधारः" ( ) इति । तदत्र हेतुरसिद्धः; नैकं भुवनमावसथादि वाऽस्ति, व्यवहारलाघवार्थं बहुष्वियं संज्ञा कृता । अत एव दृष्टान्तोऽपि साधनविकलः । एकसौधान्तर्गतानामपवरकादीनामनेकसूत्रधारघटितत्वदर्शनाच्चानैकान्तिको हेतुः । एवमन्येष्वपि साधनेषु यथायोगं दूषणं वाच्यम् ॥ ९२ ॥

यच्चोक्तम्—"विमतेरास्पदं वस्तु" ( तत्त्व० ५५ ) इत्यादि, तत्राह—तत्सिद्धौ साधनमित्यादि । [ G. 58 ] यदि सामान्येन 'अस्ति कश्चित् सर्वज्ञः' इति साध्यते, तदा नास्मान् प्रतीदं भवतां साधनं राजते; सिद्धसाध्यतादोषात् । किन्तु ये सर्वज्ञापवादिनो जैमिनीयास्तेष्वेव शोभते । अत्रेश्वराख्यः सर्वज्ञः साध्यते, तदा प्रतिबन्धासिद्धेर्हेतोरनैकान्तिकता, दृष्टान्तस्य साध्यविकलतेति[2]—अतो नास्मान् प्रति साधनमेतद्राजत इति भावः ।

यच्चापि 'विचित्रोदय'[3] इत्यादि धर्मिविशेषणमुपात्तम्, तस्य न कश्चिदुपयोगोऽस्ति ? केवलं परव्यामोहनाय स्वप्रक्रियाघोषणमिदं क्रियते भवद्भिः । तथा हि—विना धर्म्यादिविशेषणैनैवंविधेन यदि साधनमसिद्धतादिदोषरहितम्, तदा भवत्येवाभिमतसाध्यसिद्धिः; अथासिद्धतादिदोषदुष्टं साधनम्, तदैवंविधविशेषणोपादानेऽपि न साध्यसिद्धिरस्तीति सर्वथा व्यर्थमेव विशेषणम् । यत् पुनर्विपक्षाद्धेतुं व्यावर्त्तयति तदेव विशेषणं न्याय्यम् । किञ्च—आश्रया-

१. प्रशस्तमतिनैवेत्यर्थः । २. साध्यविकलेति-–जं० । ३. पूर्वं ५६ तमे पृष्ठे ।

# उभयपरीक्षा

## सेश्वरसाङ्ख्याभिमत प्रकृतीश्वरोभयहेतुत्वनिरासः

प्रकृतीश्वरयोरेवं हेतुत्वप्रतिषेधनात् ।
प्रत्येकं सहितं कर्तृ नोभयं जन्मिनामिदम् ॥ ९४ ॥
साहित्यं सहकारित्वादेतयोः कल्पते[1] च यत् ।
तत् स्यादतिशयाधानादेकार्थक्रिययापि वा ॥ ९५ ॥

---

सिद्धो हेतुः । न हि यथोक्तविशेषणविशिष्टो धर्मी प्रसिद्धोऽस्ति प्रतिवादिनः, तस्मान्न शास्त्रप्रसिद्धो धर्मी कर्त्तव्यः ॥ ९३ ॥

इतीश्वरपरीक्षा

उभयव्यापाररहितत्वप्रतिपादनार्थमाह—प्रकृतीश्वरयोरित्यादि ।

तत्र केचित् साङ्ख्या आहुः—"न प्रधानादेव केवलादमी कार्यभेदाः प्रवर्तन्ते, तस्याचेतनत्वात् । न ह्यचेतनोऽधिष्ठायकमन्तरेण स्वकार्यमारभमाणो दृष्टः । न च पुरुषोऽधिष्ठायको युक्तः; तस्य [2]तदानीमज्ञत्वात् । तथा हि— बुद्ध्यध्यवसितमेवार्थं पुरुषश्चेतयते, बुद्धिसंसर्गाच्च पूर्वमसावज्ञ एव, न जातु किञ्चिदर्थं विजानाति । न चाविज्ञातमर्थं शक्तः कश्चित् कर्तुमिति नासौ कर्त्ता । तस्मादीश्वर एव प्रधानापेक्षः कार्यभेदानां कर्त्ता, न केवलः । न हि देवदत्तादिः केवलः पुत्रं जनयति, नापि केवलः कुलालो घटं करोति" इति । तदेतदपि प्रत्येकं प्रकृतीश्वरयोर्हेतुत्वनिषेधात् सहितमपि नेदमीश्वरप्रधानाख्यमुभयं जन्मिनाम् = उत्पत्तिमताम्, कर्तृ = जनकम्—इति सिद्धम् ॥ ९४ ॥

ननु यदि नाम प्रत्येकमनयोः कर्तृत्वं निषिद्धम्, तथापि सहितयोरनिषिद्धमेव, न हि केवलानां चक्षुरादीनां चक्षुर्ज्ञानोत्पत्तिं प्रति सामर्थ्याभावे सहितानामपि न भवति ? इत्याशङ्क्याह—साहित्यमित्यादि । [G. 59]

साहित्यं नाम सहकारित्वम् । तच्च द्विविधम्—परस्परातिशयाधानाद्वा स्याद्, एकार्थकारित्वाद्वा ।

---

1. कल्प्यते—पा०; कल्पिते—गा० । 2. शरीरकरणकाले—इत्यर्थः ।

न युक्ता कल्पनाऽऽद्यस्य निर्विकारतया तयोः ।
न द्वितीयस्य कार्याणां यौगपद्यप्रसङ्गतः ॥ ९६ ॥

सेश्वरसाङ्ख्याभिमतहेतावसिद्धतोद्भावनम्

अथोच्यते प्रधानस्य त्रिरूपत्वं व्यवस्थितम् ।
तत्रायं रजसा युक्तः सर्गहेतुर्महेश्वरः ॥ ९७ ॥
उद्भूतवृत्तिसत्त्वं तु यदा संश्रयते पुनः ।
तदा सर्वस्य लोकस्य स्थितेर्याति निमित्तताम् ॥ ९८ ॥
उद्भूतशक्तिरूपेण तमसा युज्यते यदा ।
प्रलयं सर्वजगतस्तदा किल करोत्ययम् ॥ ९९ ॥
रजःसत्त्वादिरूपादि तदेवं सहकारिणः ।
क्रमेणैवास्य वर्तन्ते कार्याणां नाक्रमस्ततः ॥ १०० ॥

---

तत्र न तावदाद्यस्यातिशयाधानलक्षणस्य सहकारित्वस्य कल्पना युक्ता, कस्मात् ? तयोरीश्वरप्रधानयोर्नित्यत्वेन निर्विकारत्वात् । नापि द्वितीयस्य, कल्पना युक्तेति प्रकृतेन सम्बन्धः । कस्मात् ? कार्याणां यौगपद्यप्रसङ्गात् । अविकलाप्रतिहतसामर्थ्यस्येश्वरप्रधानाख्यकारणस्य सदा सन्निहितत्वेनाविकलकारणत्वात्[1] । अत्र च पूर्ववत् 'यदविकलकारणम्' इत्यादि प्रसङ्गसाधनं वाच्यम् ॥९५–९६॥

अथोच्यत इत्यादिना परमतेन 'यदविकलकारणम्' इत्यस्य हेतोरसिद्धतामुद्भावयति । यद्यपि कारणद्वयमेतन्नित्यसन्निहितम्, तथापि क्रमेणैवाऽमी कार्यभेदाः प्रवर्त्तिष्यन्ते; यत ईश्वरस्य प्रधानगतास्त्रयो गुणाः सत्त्वादयः सहकारिणः, तेषां च क्रमवृत्तित्वात् तत्कार्येष्वपि क्रमो भवति । तथा हि—यदोद्भूतवृत्तिना रजसा युक्तो भवति महेश्वरः, तदा सर्गहेतुः प्रजानां भवति; प्रसवकार्यत्वाद् रजसः । यदा तु सत्त्वं समुद्भूतवृत्ति संश्रयते, तदा लोकानां स्थितिकारणं भवति; सत्त्वस्य स्थितिहेतुत्वात् । यदा तु तमसोद्भूतशक्तिना समायुक्तो भवति, तदा प्रलयं नाशं सर्वजगतः करोति; तमसः प्रत्ययहेतुत्वात् । यथोक्तम्—

---

1. °कारणात्—पा°, गा° ।

तत्प्रतिविधानम्

इहोच्यते तयोरेकक्रियाकाले समस्ति किम् ।
तदन्यकार्यनिष्पत्तिसामर्थ्यं यदि वा न तत् ॥ १०१ ॥
यद्यस्ति सर्गकालेऽपि द्वयमप्यपरं भवेत् ।
एवमन्यस्य सद्भावे द्वयमन्यत् प्रसज्यते ॥ १०२ ॥
न हि तत्पररूपेण पुनरन्यस्य कारकम् ।
स्वरूपं च तदेवास्य तत्क्रियाविरतिः कुतः ॥ १०३ ॥
तत्सामर्थ्यवियोगे तु नैव तज्जनकं भवेत् ।
अन्यदा शक्तिशून्यत्वाद् वियदम्भोरुहादिवत् ॥ १०४ ॥

---

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशतन्त्रिणे[1] त्रयीमयाय त्रिगुणात्मने नमः ॥

( काद० १ ) इति ।

किलशब्दोऽसम्भावनायाम् ॥ ९७–१०० ॥

[ G. 60 ] इहोच्यत इत्यादिना प्रतिविधत्ते । तयोरिति प्रकृतीश्वरयोः । एकक्रियाकाल इति । सर्गस्थितिप्रलयानामन्यतमस्यैकस्य क्रियाकाले तदपरकार्यद्वयोत्पादनसामर्थ्यं किमस्ति ? उत नास्ति ? इति विकल्पद्वयम् । तत्र यद्यस्ति, तदा [2]सर्गकालेऽविकलकारणत्वादपरं कार्यद्वयं स्थितिप्रलयात्मकं भवेदुत्पादवत् । एवं स्थितिकालेऽप्युत्पादविनाशौ प्राप्नुतः, प्रलयकाले च स्थित्युत्पादौ स्याताम् । न चैतद् युक्तम् । न हि परस्परपरिहारेणावस्थितानामेकत्र धर्मिण्येकदा सद्भावो युक्तः ॥ १०१–१०२ ॥

स्यादेतत् तदेककार्योत्पादकाले तयोः प्रकृतीश्वरयोरपरकार्यद्वयोत्पादनाय रूपान्तरं न सन्निहितमिति, तेन तदानीं तयोर्न प्रसङ्गः ? इत्याह—न हीत्यादि । तदिति प्रकृतीश्वराख्यं कारणम् । अन्यस्येति पाश्चात्त्यस्य कार्यद्वयस्य । न पररूपेण, किं तर्हि ? स्वरूपेणैव कारणमिति भावः ॥ १०३ ॥

---

१. ०नाशहेतवे—इति तत्रस्थः पाठः ।
२. सर्गकालेप्यविकल०—पा०, गा० ।

उत्कटं शक्तिरूपं च यदि तन्मात्रकारणम् ।
सर्वदा तद्भवेद्धेतोर्नित्यरूपस्य सन्निधेः ॥ १०५ ॥
न चापरं परैरिष्टमतो नैवान्यतोऽपि तत् ।
नापि स्वतन्त्रमेवेदं कादाचित्कत्वसम्भवात् ॥ १०६ ॥
स्वतो भावे ह्यहेतुत्वं स्वक्रियाया विरोधतः ।
अपेक्षया हि भावानां कादाचित्कत्वसम्भवः ॥ १०७ ॥

---

स्यादेतत्—यद्यपि तत्परस्वरूपेण न कारणम्, तथाप्येककार्योत्पादकाले परिशिष्टकार्यद्वयोत्पत्तये सामर्थ्यमस्य नास्ति, तेन कार्यद्वयस्य तदानीमनुत्पादः ? इत्याह—तत्सामर्थ्येत्यादि । अन्यदेति । अभिमतकार्यारम्भकाले ॥ १०४ ॥

स्यादेतत्—यद्यपि प्रधाने सर्वा शक्तिः सन्निहिता, तथापि योद्भूतवृत्तिर्भवति सैव कारणतां प्रतिपद्यते, नान्या; तेन यौगपद्यं कार्याणां न भविष्यति ? इत्याह—उत्कटमित्यादि । [G. 61] इदं हि [1]सत्त्वादीनामुत्कटं रूपं न तावन्नित्यं युक्तं वक्तुम्; कादाचित्कत्वात् । ततश्चास्य भावः कदाचित् प्रकृतीश्वरादेव कारणाद्, अन्यतो वा हेतोः, स्वतन्त्रो वा स्यादिति त्रयो विकल्पाः । तत्र प्रथमे पक्षे तदुत्कटं रूपं सर्वदा भवेत्; प्रकृतीश्वराख्यस्य हेतोर्नित्यरूपत्वेन सदा सन्निहितत्वात् ॥ १०५ ॥

द्वितीयेऽपि पक्षे प्राह—न चापरमित्यादि । न हि प्रकृतीश्वरव्यतिरिक्तमपरं कारणमिष्टम्, येनान्यतस्तदुद्भवेत् ।

नापि तृतीयः पक्षो युक्त इत्याह—नापीत्यादि ॥ १०६ ॥

अथ स्वातन्त्र्ये सति कादाचित्कत्वस्य को विरोधः ? इत्याह—स्वत इत्यादि । स्वतः = स्वभावात्, भावे = जन्मनि सति, अहेतुकत्वं नियमतो भवेत् । ननु स्वभावादुत्पद्यमानः कथमहेतुको भवति, यावता स्वभाव एव तस्य हेतुः प्रतीयते ? इत्याह—स्वक्रियाया विरोधत इति । स्वस्मिन् स्वरूपे क्रियाया हेतुभावस्य विरोधात् । स्यादेतद्—भवत्वहेतुकत्वम्, तथापि किमिति कादाचित्कत्वं

---

१. सर्वादीना०—पा० ।

तथा हि न स्वभावस्य[1] स्वात्मनि व्यापृतिर्मता ।
निष्पन्नस्यात्मनोऽप्यस्यामवस्थायां प्रसिद्धितः ॥ १०८ ॥
अनिष्पन्नात्मतत्त्वस्तु नैव व्याप्रियते क्वचित् ।
सर्वशक्तिवियुक्तत्वाद् आकाशकमलादिवत् ॥ १०९ ॥

## स्वाभाविकजगद्वादपरीक्षा

### स्वभाववादोपन्यासः

सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते ।
स्वभाववादिभिस्ते हि नाहुः स्वमपि कारणम् ॥ ११० ॥

---

न युज्यते ? इत्याह—अपेक्षया हीत्यादि । स्वभावान्तरायत्तवृत्तयो हि भावाः कादाचित्का युक्ताः; परभावाभावप्रतिबद्धत्वात् तेषां सदसत्तयोः । ये पुनरपरायत्तवृत्तयः, तेषामपेक्षणीयस्य कस्यचिदभावात् किमिति कदाचिद्भवेयुः ॥ १०७ ॥

अथ स्वक्रियाविरोध एव कथं सिद्धः ? इत्याह—तथा हीत्यादि । आत्मानं हि जनयन् स्वभावो निष्पन्नो वा ? न वा ? न तावन्निष्पन्नः; तस्यामवस्थायामात्मनोऽपि निष्पन्नरूपाव्यतिरेकित्वेन प्रसिद्धेर्निष्पन्नत्वात्, स्वभाववत् । ततश्च जन्यसम्भवात् कुत्रासौ भावो व्याप्रियेत ! ॥ १०८ ॥

नाप्यनिष्पन्न इति दर्शयति—अनिष्पन्नेत्यादि । [G. 62] क्वचिदिति सामान्यवचनम् । न स्वात्मभूते, नापि परभूत इत्यर्थः । सति व्यापारे निष्पन्नात्मतत्त्व एव स्यात् । एतावन्मात्रलक्षणत्वान्निष्पन्नस्येति भावः ॥ १०९ ॥

इत्युभयपरीक्षा

---

आदिशब्दोपात्तस्वभाववादिवादमल्पवक्तव्यतया क्रममनाश्रित्यैव निराकुर्वन्नाह—सर्वेत्यादि । स्वभाववादस्तु यद्यपि [2]आदिशब्देनाहत्य नोपात्तः, तथाऽपि [3]स्वभाववादिमतोपादानात् सूचित एव । तत्र ये 'स्वत एव भावा जायन्ते' इति

---

१. ह्यभावस्य—पा०, गा० ।
२. तत्त्वसंग्रहस्य मङ्गलश्लोके आदिशब्देनेत्यर्थः ।
३. स्वभाववादिनतो०—पा०; स्वोभाववादिमतो०—गा० संस्करणसम्पादकः ।

राजीवकेसरादीनां वैचित्र्यं कः करोति हि !
मयूरचन्द्रकादिर्वा विचित्रः केन निर्मितः ! ॥ १११ ॥
यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् ।
कादाचित्कतया तद्वद् दुःखादीनामहेतुता ॥ ११२ ॥

---

वर्णयन्ति, ते 'स्वक्रियाया [1]विरोधतः' ( तत्त्व० १०७ ) इत्यादिना निरस्ताः । साम्प्रतं स्वभाववादिनो निरस्यन्ते । त एवमाहुः—न स्वतो नापि परतो भावानां जन्म, किं तर्हि ? सर्वहेतुनिराशंशम्, स्वपरकारणनिरपेक्षमित्यर्थः ।

ननु ये 'स्वत एव भावा भवन्ति' इति वर्णयन्ति, तेभ्य एषां को भेदः ? इत्याह—ते हीत्यादि । ते = स्वभाववादिनः । स्वमिति स्वरूपम् । अपि-शब्दात् पररूपमपि । पूर्वकास्तु स्वभावं कारणमिच्छन्ति, एते तमपि नेच्छन्तीति भेदः ॥ ११० ॥

अत्र च युक्तिं वर्णयन्ति—यदुपलब्धिलक्षणप्राप्तं सदनुपलभ्यमानसत्ताकम्, तद् प्रेक्षावतामसद्व्यवहारविषयः, यथा—शशविषाणम् । अनुपलभ्यमानसत्ताकं च भावानां[2] कारणमिति स्वभावानुपलब्धिः । न चायमसिद्धो हेतुरित्यादर्शयन्नाह—राजीवेत्यादि । राजीवम् = पद्मम्, तस्य केसरादय इति विग्रहः । आदि-ग्रहणान्नालदलकर्णिकादीनां कण्टकतैक्ष्ण्यादीनां च ग्रहणम् । वैचित्र्यमिति । संस्थान-वर्ण-कार्कश्यादिभेदम् । कः करोतीति । नैव कश्चित् । ईश्वरादेः कारणस्यानुपलभ्यमानत्वादिति भावः ॥ १११ ॥

स्यादेतत्—यदि नाम बाह्यानां भावानां कारणानुपलब्धेरहेतुत्वं सिद्धम्, आध्यात्मिकानां तु कथं सिद्धम् ? इत्याह—यथैवेत्यादि ।

[ G. 63 ] यदि नाम प्रत्यक्षतो निर्हेतुकत्वं दुःखादीनां न सिद्धम्, तथाप्यनुमानतः सिद्धमेव । तथा हि—यत् कादाचित्कं तदहेतुकं निश्चितम्, यथा—कण्टकतैक्ष्ण्यादि । कादाचित्कं च [3]दुःखादीति स्वभावहेतुः । न चापि यस्य भावाभावयोर्यस्य भावाभावौ नियमेन भवतः, तत् तस्य कारणमिति

---

१. विरोध-जै० । २. सुखदुःखादीनामित्यर्थः । ३. दुःखादीनीति सर्वत्र पाठः ।

स्वभाववादप्रतिविधानम्

सरोजकेसरादीनामन्वयव्यतिरेकवत् ।
अवस्थातिशयाक्रान्तं बीजपङ्कजलादिकम् ॥ ११३ ॥
प्रत्यक्षानुपलम्भाभ्यां निश्चितं कारणं तदा ।
किमित्यन्यस्तदा हेतुरमीषां परिपृच्छ्यते ॥ ११४ ॥

---

युक्तम्; व्यभिचारात् । तथा हि—सति स्पर्शे चक्षुर्विज्ञानं भवति, असति च न भवति । अथ च नासौ[1] चक्षुर्विज्ञानकारणम् । तस्माद् कार्यकारणभावलक्षणमेतद्व्यभिचारीत्यतः सिद्धम्—सर्वहेतुनिराशंसं भावानां जन्मेति ॥११२॥

सरोजकेसरादीनामित्यादिना प्रतिविधत्ते । अनेन हेतोरसिद्धिं प्रत्यक्षविरोधं च प्रतिज्ञार्थस्य दर्शयति । यदुक्तम्—"राजीवकेसरादीनां कारणं नोपलभ्यते" (तत्त्व० १११) इति तदसिद्धम्; प्रत्यक्षानुपलम्भाभ्यां बीजपङ्कजलादेरन्वयव्यतिरेकवतः कारणत्वेन निश्चितत्वात् । तथा हि—यस्मिन् सत्येव यस्य जन्म भवति, यस्य च विकाराद्यस्य विकारः, तत्तस्य कारणमुच्यते । तच्चैवम्भूतं बीजादिकमुच्छूनादिविशिष्टावस्थाप्राप्तं राजीवकेसरादीनामन्वयव्यतिरेकवत् भावाभाववत् प्रत्यक्षानुपलम्भाभ्यां निश्चितमित्यसिद्धो हेतुः ।

यच्चाप्युक्तम्—"कार्यकारणलक्षणं व्यभिचारि" (तत्त्व० पृ० ६९–७०) इति, तदप्यसिद्धम्; स्पर्शस्यापि नीरूपहेतुतया[2] चक्षुर्विज्ञानेऽपि निमित्तभावस्येष्टत्वात् । तथा हि—स्पर्श इति भूतान्युच्यन्ते, तानि चोपादायोपादाय रूपं वर्तते, ततश्चक्षुर्विज्ञानं प्रति स्पर्शस्य निमित्तभावोऽस्त्येव । केवलं साक्षात्-पारम्पर्यकृतो विशेषः ।

न चापि व्यतिरेकमात्रमस्माभिः कार्यकारणभावनिश्चयहेतुत्वेनाभ्युपगतम्, किं तर्हि ? विशिष्टमेव । तथा हि—येषु सत्सु समर्थेषु तदन्येषु हेतुषु यस्यैकस्याभावाद्यन्न भवति तत्तस्य कारणमिति वर्ण्यते, न तु यस्याभावे यन्न भवतीति व्यतिरेकमात्रम्; अन्यथा मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्य मातृविवाहाभावे सत्यभावप्रसङ्गात् । न चैवम्भूतस्य व्यतिरेकस्य स्पर्शेन व्यभिचारोऽस्ति ।

---

१. स्पर्श इत्यर्थः । २. रूपहेतुतया–पा०, गा० ।

नियतौ देशकालौ च भावानां भवतः कथम् ।
यदि तद्धेतुता नैषाम्, स्युस्ते सर्वत्र सर्वदा ॥ ११५ ॥
क्वचित् कदाचित् कस्मिंश्चिद् भवन्तो नियताः पुनः ।
तत्सापेक्षा भवन्त्येते तदन्यपरिहारतः ॥ ११६ ॥
तदपेक्षा तथावृत्तिरपेक्षा कार्यतोच्यते ।
प्रत्यक्षा च तथा वृत्तिः सिद्धास्तेनेह हेतवः ॥ ११७ ॥
तत्स्वाभाविकवादोऽयं प्रत्यक्षेण प्रबाध्यते ।
प्रत्यक्षानुपलम्भाभ्यां हेतुरूपस्य निश्चयात् ॥ ११८ ॥

---

तथा हि—यदि रूपादिसन्निधानं प्रदर्श्य स्पर्शस्यैकस्याभावात् 'चक्षुर्विज्ञानं न भवति' इत्येवं प्रदर्श्येत, तदा स्याद् व्यभिचारः; [G. 64] न चैतच्छक्यं प्रदर्शयितुम्, अतो नास्ति कार्यकारणभावलक्षणस्य व्यभिचारः ॥ ११३–१४ ॥

न केवलं वीजादिः कारणत्वेन निश्चितो भावानाम्, देशकालावपि प्रतिनियतौ निश्चिताविति दर्शयति—नियतावित्यादि । यदि हि राजीवादीनां तद्धेतुता = प्रतिनियतदेशकालहेतुता न स्यात्, तदा येयमुपलादिदेशपरिहारेण सलिलादावेव प्रतिनियतदेशे[1] वृत्तिः, या च शिशिरादिसमयपरिहारेण निदाघादिसमये वृत्तिः, सा न प्राप्नोति; किन्तु सर्वत्र देशे काले च ते राजीवादयो भावा भवेयुः; तन्निरपेक्षत्वात् । तदन्यदेशकालपरिहारान्नियमेन प्रतिनियतदेशादौ वर्त्तमानास्तत्सापेक्षा भवन्तीति निश्चीयते ॥ ११५–१६ ॥

ननु निरभिप्रायाणां भावानां केयमपेक्षा ? इत्याह—तदपेक्षा तथावृत्तिरिति । तदन्यदेशादिपरिहारेण नियते देशादौ या वृत्तिः, इयमेव 'अपेक्षा' इत्युच्यते, न त्वभिप्रायात्मिका । स्यादेतद्—यदि नाम तदपेक्षा तेषाम्, तथापि तत्कार्यता[2] कथमवसिता ? इत्याह—अपेक्षा कार्यतोच्यत इति । न ह्यन्या तत्कार्यता, किं तर्हि ? येयं तथावृत्तिलक्षणा सैव तत्कार्यतोच्यते । सा च तथावृत्तिरेषां कथं सिद्धा ? इति चेदाह—प्रत्यक्षेत्यादि ॥ ११७ ॥

---

१. प्रतिनियते देशे–जै० । २. सत्कार्यता–जै० ।

मा वा प्रमाणसत्ता भूद्धेतुसद्भावसिद्धये ।
तथापि मानाभावेन नैवार्थासत्त्वनिश्चयः ॥ ११९ ॥
यस्मादर्थस्य सत्ताया व्यापकं न च कारणम् ।
प्रमाणं भेदसद्भावाद् व्यभिचारात्तदुद्भवात् ॥ १२० ॥

---

तदिति तस्मात् । तेषु वा राजीवादिषु स्वाभाविकवाद इति समासः । प्रत्यक्षेण प्रबाध्यत इति । अनुपलम्भस्याप्यन्योपलम्भतया[1] प्रत्यक्षात्मकत्वात् । यत् पुनः सुखादीनामहेतुकत्वसाधनाय 'कादाचित्कत्वात्' इति साधनमुक्तम्, तत्साध्यविपरीतसाधनाद् विरुद्धम्; अहेतोरनपेक्षस्य कादाचित्कत्वानुपपत्तेः । दृष्टान्तस्य च साध्यविकलतेति भावः ॥ ११८ ॥

[G. 65] एवं तावत् प्रत्यक्षविरुद्धत्वं प्रतिज्ञार्थस्य, हेतोश्चासिद्धतोद्भाविता । साम्प्रतमभ्युपगम्य हेतोः सिद्धिमनैकान्तिकत्वं प्रतिपादयन्नाह—मा वेत्यादि । यद्यनुपलम्भमात्रं हेतुत्वेनोपादीयते, तदानैकान्तिकता; यतो मानाभावेन प्रमाणाभावमात्रेण हेतुना नैवार्थसत्ताया अभावनिश्चयः ॥ ११९ ॥

कस्मान्न भवति? इत्याह—यस्मादित्यादि । व्यापको हि स्वभावो निवर्त्तमानः स्वं व्याप्यं निवर्त्तयति, कारणं वा कार्यम्; तत्र तादात्म्यतदुत्पत्तिभ्यां व्याप्यकार्ययोः प्रतिबद्धत्वात् । न[2] च प्रमाणमर्थसत्ताया व्यापकम्; कस्मात्? भेदसद्भावात् । अभिन्न एव हि व्यापको भवेत्, यथा—वृक्षत्वं शिंशपायाः; भिन्नस्य कारण एवान्तर्भावात्[2] । न च प्रमाणार्थसत्तयोरभेदः; भिन्नाभासत्वात् । नापि प्रमाणमर्थस्य कारणम्; व्यभिचारात्, प्रमाणमन्तरेणापि भावात् । तथा हि—देशकालस्वभावविप्रकृष्टानामर्थानां प्रमाणेनाविषयीकृतानामपि सत्त्वमविरुद्धमेव । न च येन विनाऽपि यद् भवति, तत्तस्य कारणं युक्तम्; अतिप्रसङ्गात् । कारणत्वाभ्युपगमे वा स्वपक्षपरित्यागः । तदुद्भवाच्च न प्रमाणमर्थसत्ताकारणम् । तथा हि—अर्थादेव विषयभूतात् प्रमाणमुद्भवति । न पुनः प्रमाणात् प्रमेयोऽर्थः ॥ १२० ॥

---

१. ०पलम्भनतया—पा०, गा० ।
२–२. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

यश्च नैवंविधो भावस्तस्य नैव निवृत्तितः।
ऐकान्तिकमसम्बन्धाद् गम्यतेऽन्यनिवर्त्तनम् ॥ १२१ ॥
सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी।
[1]विन्ध्यादिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः ॥ १२२ ॥
अहेतुकत्वसिद्ध्यर्थं न चेद्धेतुः प्रयुज्यते।
न चाप्रामाणिकी[2] सिद्धिरतः पक्षो न सिद्ध्यति ॥ १२३ ॥
तत्सिद्धये च हेतुश्चेत् प्रयुज्येत तथाऽपि न।
सिद्धेस्तद्धेतुजन्यत्वात् पक्षस्ते सम्प्रसिद्ध्यति ॥ १२४ ॥

---

अथापि स्याद्—अप्रतिबद्धमपि प्रमाणमर्थसत्ताया निवर्त्तकं भविष्यति ? इत्याह—यश्चेत्यादि। नैवंविध इति। न कारणम्, नापि व्यापकम्। न ह्यप्रतिबद्धस्य निवृत्त्याऽन्यस्य नियमेन निवृत्तिर्युक्ता; अतिप्रसङ्गात्। एवं हि अश्वनिवृत्तौ गोरपि निवृत्तिः स्यात् ॥ १२१ ॥

अपि चानुपलब्धेर्हेतुत्वेनोपादीयमाना सर्वपुरुषोपलम्भनिवृत्तिलक्षणा वोपादीयते ? स्वोपलम्भनिवृत्तिलक्षणा वा ? न तावदाद्या; तस्या अर्वाग्दर्शनेन निश्चेतुमशक्यतया सन्दिग्धत्वात्। [G. 66] न हि सर्वैः पुरुषैर्मयूरचन्द्रिकादीनामदृष्टं कारणं नोपलभ्यत इत्यत्रार्वाग्दर्शिनः किञ्चिदस्ति प्रमाणम्। याऽपि स्वेनादृष्टिः सा व्यभिचारिणी, कस्मात् ? गिरिकुहरान्तर्गतस्य दूर्वाप्रवालशिलाशकलादेरनुपलब्धस्यापि सत्त्वतः, सत्त्वाविरोधादित्यर्थः। तन्न निश्चितमेवासत्त्वम्; सन्देहात् ॥ १२२ ॥

अपि चैवं भवान् पर्यनुयोज्यः—किं 'निर्हेतुका भावाः' इत्यस्य स्वपक्षस्य सिद्धये भवता हेतुः कश्चिदुपादीयते ? आहोस्विन्न ? तत्र यदि नोपादीयते, तदा पक्षस्ते न सिद्ध्यति; न हि प्रमाणमन्तरेणार्थस्य सिद्धिरस्ति। अथोपादीयते ? तथापि न हि पक्षस्ते सम्प्रसिद्ध्यतीति वक्ष्यमाणेन सम्बन्धः। कस्मात् ?

---

१. विन्ध्याद्रि०—पा०, गा०।
२. चाप्रामाणिका—जै०; चाप्रमाणिकी—गा०।

तथा हि ज्ञापको हेतुर्वचो वा तत्प्रकाशकम् ।
सिद्धेर्निमित्ततां गच्छन् साध्यज्ञापकमुच्यते ॥ १२५ ॥
अतः कारक एवायं ज्ञापको हेतुरुच्यते ।
साध्यानुत्पादकत्वात्तु कारको न प्रकाश्यते ॥ १२६ ॥

---

सिद्धेस्तद्धेतुजन्यत्वात्—प्रमेयार्थविषयायाः सिद्धेर्निश्चयस्य तेन हेतुना जन्यमानत्वात् । तथा चोक्तमार्यसूरपादैः[1]—

"न हेतुरस्तीति वदन् सहेतुकं ननु प्रतिज्ञां स्वयमेव सादयेत्[2] ।
अथापि हेतुः प्रणयालसो भवेत् प्रतिज्ञया केवलयास्य किं भवेत्" ॥

( जा० मा० २३.२७. ) इति ॥ १२३–१२४ ॥

स्यादेतत्—ज्ञापको हेतुर्मया प्रयुज्यते, न कारकः, तत्कस्मात् पक्षो मे न सिध्यति ? इत्याह—तथा हीत्यादि । ज्ञापको हेतुरिति त्रिरूपं लिङ्गं स्वार्थानुमानकाले । वचो वेति परार्थानुमानकाले । तत्प्रकाशकमिति तस्य हेतोः प्रकाशकम् । सिद्धेरिति प्रमेयार्थनिश्चयस्य । अन्यथा यदि सिद्धेरपि निमित्तभावं न यायात्, तदा कथं [3]तज्ज्ञापकं भवेत् । एवं हि सर्वं सर्वस्य ज्ञापकं प्रसज्येत ॥ १२५ ॥

यद्येवम्, कथमयमाचार्यैर्विभागः कारकाज्ज्ञापकस्य क्रियते ? अत्र च ज्ञानवशादर्थनिर्देशः, नोत्पादकवद्भूतार्थवशादित्याह— साध्यानुत्पादकत्वादित्यादि[4] । साध्यानुत्पादकत्वादसौ ज्ञापक उच्यते न कारक इति । यस्तु साध्यास्याङ्कुरादेरुत्पादकः [G. 67] स कारक उच्यत इत्यदोषः । एतेन सर्वेण यदार्यसूरोक्तदूषणस्योपरि[5] चोद्यमापतति तत्प्रतिविहितं भवति । तथाहि तत्रेदं चोद्यं भवति—न हेतुरस्तीति सहेतुकं वदन्नपि .ज्ञमिति सादयेत्, स हि ज्ञापकं हेतुं ब्रूते, कारकं तु प्रतिक्षिपतीति ? तदत्रोत्तरम्—ज्ञापकोऽपि कारक एव ज्ञानहेतुत्वा-

---

१. ०माचार्यसूरिपादैः— पा०, गा० । २. 'हापयेत्' इति [illegible]थः पाठः ।
३. न—पा०, नु—गा० । ४. पा०, गा० पुस्तकयोर्नास्ति ।
५. ०चार्यसूर्युक्त०—पा०, गा०; ०चार्यसूर्योक्त०—जै० ।

तस्मात् सहेतवोऽन्येऽपि भावा नियतजन्मतः ।
साध्यार्थविषयं यद्वज्ज्ञानं साधनभावि ते ॥ १२७ ॥

## शब्दब्रह्मपरीक्षा

### शब्दब्रह्मवादिमतम्

नाशोत्पादासमालीढं ब्रह्म शब्दमयं परम् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥ १२८ ॥

---

दिति । एतेन स्ववचनविरोध उद्भाव्यते । न त्वहेतुत्वसाधकः कश्चिद्धेतुरस्ति; व्याप्तेः प्रत्यक्षादिबाधितत्वात् ॥ १२६ ॥

तस्मादित्यादिनोपसंहारव्याजेनानुमानबाधितत्वं च प्रतिज्ञार्थस्य दर्शयति—अन्येऽपीति । साध्यार्थविषयज्ञानव्यतिरेकिणो राजीवकेसरादयः । नियतजन्मत इति । नियतपदार्थसन्निधाने सतीति शेषः । प्रयोगः—ये नियतपदार्थसन्निधाने सति नियतजन्मानः; ते सहेतुकाः, यथा भवत्साधनसन्निधानभाविसाध्यार्थविषयं ज्ञानम्, तथा च राजीवादयो भावा इति स्वभावहेतुः ॥ १२७ ॥

इति स्वाभाविकवादपरीक्षा ।

---

नाशोत्पादेत्यादिना [1]शब्दब्रह्मवादिमतमुपक्षिप्य दूषयति ।

तत्र[1] शब्दब्रह्मवादिनो ब्रुवते—पूर्वापरादिविभागरहितमनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म तस्यायं रूपादिर्भावग्रामः परिणाम इति प्रतीयते । यथोक्तम्—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः" ॥ (वा० प० १.१) इति ।

तत्र आदिः = उत्पादः, निधनम् = नाशः, तदभावादनादिनिधनम् अक्षरमिति; अकाराद्यक्षरस्य निमित्तत्वात् । एतेनाभिधानरूपेण विवर्त्तो दर्शितः । अर्थभावेनेत्यादिना पुनरभिधेयविवर्त्तः । प्रक्रियेति भेदाः । ब्रह्मेति नामसङ्कीर्तनम् ।

अस्यैव श्लोकस्यार्थं निर्दिशति—नाशोत्पादासमालीढमिति । नाशो-

---

१–१ पा०, गा० पुस्तकयोर्नास्ति ।

तन्निराकरणम्

इति सञ्चक्षते येऽपि, ते वाच्याः किमिदं निजम् ।
शब्दरूपं परित्यज्य नीलादित्वं प्रपद्यते ॥ १२९ ॥

---

त्वादग्रहणमुपलक्षणम् । इदमप्यत्र बोद्धव्यम्—पूर्वापरदेशविभागरहितमिति । तथा हि—अनादिनिधनत्वं पूर्वापरदेशविभागरहितत्वमपि तत्र निर्दिष्टम् । शब्दमयमिति शब्दस्वभावम् । अत एव शब्दस्तत्त्वमस्य शब्दतत्त्वं तदुच्यते । [ G. 68 ] शब्दोऽस्याविपरीतं रूपमित्यर्थः । परमिति प्रणवात्मकम् ।

प्रणवो हि किल सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिः, स च वेदः । अयं तु वर्णपदक्रमेणावस्थितो वेदस्तदधिगमोपायः, तस्य प्रतिछन्दकन्यायेनावस्थितः । तं तु परमं ब्रह्माणमभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तःकरणाः[1] पश्यन्तीति ।

अत्र च प्रमाणयन्ति—ये यदाकारानुस्यूतास्ते तन्मयाः, यथा—घटशरावोदञ्चनादयो मृद्विकाराः मृदाकारानुगताः पदार्था मृण्मयत्वेन प्रसिद्धाः । शब्दाकारानुस्यूताश्च सर्वभावा इति स्वभावहेतुः; यतः प्रत्यक्षत एव सर्वार्थानां शब्दाकारानुगमः सिद्धः । तथा हि—सर्व[2] एव प्रत्ययोऽर्थेषूपजायमानः शब्दोल्लेखानुगत एवोपजायते । यथोक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन वर्त्तते" ॥
( वा० प० १. १२३ ) इति ।

ज्ञानाकारनिबन्धना च वस्तूनां स्वभावप्रज्ञप्तिः । अतः सिद्धमेषां शब्दाकारानुस्यूतत्वम्, तत्सिद्धौ च तन्मयत्वमपि सिद्धमेव; तन्मात्रभावित्वात्तन्मयत्वस्येति ॥ १२८ ॥

ते वाच्या इत्यादिना प्रतिज्ञार्थं तावद्[3] दूषयति ।

अत्र कदाचिच्छब्दपरिणामरूपत्वाद्वा जगतः शब्दमयत्वं साध्यत्वेनेष्टम्, कदाचिच्छब्दादुत्पत्तेर्वा, यथा 'अन्नमयाः प्राणाः' इति; हेतौ मयड्विधानात् । अत्र

---

१. 'करणाः' इति पा० पुस्तके नास्ति । २. शब्द—पा०. गा० ।
३. 'तावद्' इति पा०. गा० पुस्तकयोस्त्रुटितः ।

न वा तथेति, यद्याद्यः पक्षः संश्रीयते तदा ।
अक्षरत्वबियोगः स्यात् पौरस्त्यात्मविनाशतः ॥ १३० ॥
अथाप्यनन्तरः पक्षः, तत्र नीलादिवेदने ।
अश्रुतेरपि विस्पष्टं भवेच्छब्दात्मवेदनम् ॥ १३१ ॥
येन शब्दमयं सर्वं मुख्यवृत्त्या व्यवस्थितम् ।
शब्दरूपापरित्यागे परिणामाभिधानतः ॥ १३२ ॥
अगौणे चैवमेकत्वे नीलादीनां व्यवस्थिते ।
तत्संवेदनवेलायां कथं नास्त्यस्य वेदनम् ॥ १३३ ॥

---

न तावदाद्यः पक्षः; परिणामस्यैवानुपपत्तेः । तथा हि—शब्दात्मकं ब्रह्म नीलादिरूपतां प्रतिपद्यमानं कदाचिन्निजं स्वाभाविकं शब्दरूपं परित्यज्य प्रतिपद्येत ? अपरित्यज्य वा ? तत्र यदि 'परित्यज्य' इत्याद्यः पक्ष आश्रीयते, तदा 'अनादिनिधनम्' (वा० प० १.१) इत्यनेन वचनेन यदक्षरत्वमविनाशित्वमभ्युपगतं तस्य हानिः स्यात्; पौरस्त्यस्वभावविनाशात् । अथ 'अपरित्यज्य' इत्यनन्तरः पक्षः, तदा नीलादिसंवेदनकालेऽप्यश्रुतेर्बधिरस्य [1]शब्दसंवेदनं प्राप्नोति, नीलादिसंवेदनवत्तदव्यतिरेकात् । प्रयोगः—यद्यदव्यतिरिक्तं तत्तस्मिन् संवेद्यमाने संवेद्यते, यथा—नीलादिसंवेदनावस्थायां तस्यैव नीलादेरात्मा, नीलादव्यतिरिक्तश्च शब्द [G. 69] इति स्वभावहेतुः । अन्यथा भिन्नयोगक्षेमत्वात् तत्स्वभावत्वमेव प्रसिद्ध्येत्—इत्येतदत्र बाधकं प्रमाणम् ॥ १२९-१३१ ॥

एतदेव विस्तरेण प्रतिपादयन्नाह—येनेत्यादि । येन = यस्मात्, भवद्भिर्मुख्यत एव शब्दस्वभावं जगदिति वर्ण्यते । कस्माद् ? इत्याह—शब्दरूपापरित्याग इति ॥ १३२ ॥

यदि नाम मुख्यतः शब्दमयमवस्थितम्, ततः किम् ? इत्याह—अगौणे चेत्यादि । एकत्वे नीलादीनामिति । शब्देन सहेति शेषः । तत्संवेदनवेलायामिति । तेषां नीलादीनां संवेदनावस्थायाम् । कथं नास्त्यस्य वेदनमिति ।

---

१. शब्दः संवेदनं—पा०, गा० ।

अस्यावित्तौ हि नीलादेरपि न स्यात् प्रवेदनम् ।
ऐकात्म्याद्भिन्नधर्मत्वे भेदोऽत्यन्तं प्रसज्यते ॥ १३४ ॥
विरुद्धधर्मसङ्गो हि बहूनां भेदलक्षणम् ।
नान्यथा व्यक्तिभेदानां कल्पितोऽपि भवेदसौ ॥ १३५ ॥

---

तस्यापि नीलादिस्वभाववदुपलब्धिलक्षणप्राप्तत्वाद् युक्तमेव संवेदनमित्यभिप्रायः ॥ १३३ ॥

अथास्य वेदनं नेष्यते, तदा नीलादेरपि शब्दस्वरूपवदसंवेदनप्रसङ्गः । ऐकात्म्यात्, शब्देन सह नीलादीनामेकस्वभावत्वादित्यर्थः । अन्यथा नीलादीनां शब्देन सह भिन्नधर्मत्वेऽभ्युपगम्यमानेऽत्यन्तमेदोऽङ्गीकर्त्तव्यः ॥ १३४ ॥

कस्मात् ? इत्याह—विरुद्धेत्यादि[1] । न ह्येकस्यैकदैकप्रतिपत्त्रपेक्षया ग्रहणमग्रहणं च युक्तम्; एकत्वहानिप्रसङ्गात् । अन्यथा हि यदि [2]विरुद्धधर्माध्यासोऽप्येकत्वं स्यात्, तदा घटादीनां यः कल्पित इष्टो व्यक्तिभेदः, सोऽपि न भवेत् । न केवलं ब्रह्मणः स्वरूपभेदो नास्तीत्यपि शब्दः; यतस्तस्य स्वात्मनि व्यवस्थितस्य नास्ति भेदः, विकारविषयत्वादस्येति सिद्धान्तः । तथा हि—न घटाद्यात्मना तस्यानादिनिधनत्वमिष्यते, किं तर्हि ? परमात्मना घटादयो हि दृश्यमानोदयव्ययाः परिच्छिन्नदेशाश्चोपलभ्यन्त इति । अयं च 'अश्रुतेः स्पष्टं [G. 70] शब्दसंवेदनं स्यात्' इति यः प्रसङ्ग उक्तः, स यदि ब्रह्मणो रूपमुपलब्धिलक्षणप्राप्तमिष्यते, तदा द्रष्टव्यः । यदि पुनः 'अतिसूक्ष्मम्', 'अतीन्द्रियम्' इति वर्ण्यते, तदाऽयमदोषः । किन्तु नीलादीनामपि तादूप्यात् तत्स्वरूपवदग्रहणप्रसङ्ग इत्ययं दोषो वाच्यः । ततश्चायं नियमो नोपपद्यते । उदयव्ययवतीमेवार्थमात्रामपरदर्शनाः[3] प्रतियन्तीति ।

स्यादेतद्—यथा भवतां क्षणिकत्वं नीलाद्यव्यतिरिक्तं नीलादिसंवेदनेऽपि न संवेद्यते तद्वच्छब्दरूपमिति ? तदेतदसम्यक्; न हि नीलादिसंवेदने क्षणि-

---

१. पा० गा० पुस्तकयोर्नास्ति । २. ०धर्माध्यासे०—पा०, गा० ।
३. अर्वाग्दर्शना इत्यर्थः ।

अपरोऽपि दूषणप्रकारः

प्रतिभावं च यद्येकः शब्दात्माऽभिन्न इष्यते ।
सर्वेषामेकदेशत्वमेकाकारा च विद्भवेत् ॥ १३६ ॥
प्रतिव्यक्ति तु भेदेऽस्य ब्रह्मानेकं प्रसज्यते ।
विभिन्नानेकभावात्मरूपत्वाद् व्यक्तिभेदवत् ॥ १३७ ॥

---

कत्वं न संवेद्यते, किन्तु गृहीतमपि निर्विकल्पेन चेतसा भ्रान्तिनिमित्तेन गुणान्तरसमारोपान्न विनिश्चीयत इत्युच्यते । तेनानुभवापेक्षया तद् गृहीतमेव, निश्चयज्ञानापेक्षया त्वगृहीतमिति ज्ञानभेदेनैकस्य गृहीतत्वमगृहीतत्वं चाविरुद्धमेव । न चैवं भवतां पक्षे शब्दस्य ग्रहणाग्रहणे युक्ते; सर्वज्ञानानां सविकल्पकताभ्युपगमात् । एकेनैव ज्ञानेन सर्वात्मना तस्य निश्चतत्वात्, अगृहीतस्वभावान्तरानुपपत्तेः । यथोक्तम्—

"निश्चयैः ।

यन्न निश्चीयते रूपं तत्तेषां विषयः कथम् ॥" ( ) इति ।

अथ किञ्चिदविकल्पमपि ज्ञानमभ्युपगम्यते ? न तर्हि वक्तव्यम्—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" ( वा० प० १ १२३ ) इति । शब्दाकारानुस्यूतत्वादिति च हेतुर्न सिद्ध्येत्, ततश्च प्रमाणाभावाच्छब्दात्मकत्वव्यवस्थानं भावानामनिबन्धनमेव स्यात् । किञ्च — क्षणिकत्वं भावानां प्रमाणान्तरतः सिद्धेरनुभूतमपि न निश्चीयत इति व्यपदिश्यते । शब्दात्मता तु भावानां कुतः सिद्धा येन साऽप्येवं व्यवस्थाप्यते । ॥ १३५ ॥

अपरमपि दूषणमार्गमाह—प्रतिभावं चेत्यादि । स हि शब्दात्मा परिणामं गच्छन् प्रतिपदार्थं भेदं वा प्रतिपद्यते ? न वा ? तत्र यदि न भिन्न इति पक्षः, तदा सर्वेषां नीलादीनामेकदेशत्वं प्राप्नोति । एकदेशत्वमित्युपलक्षणम् । कालपरिणामव्यापारावस्थाविशेषाद्यपि ग्राह्यम् । एकाकारा च, वित् = प्रतिभासः, भवेत् = प्राप्नोति; सर्वेषां नीलादीनामेकशब्दरूपाव्यतिरेकात् ॥ १३६ ॥

अथ प्रतिव्यक्ति भेदोऽस्य शब्दात्मनोऽङ्गीक्रियते. तदा ब्रह्मणोऽनेकत्वं प्राप्नोति; [ G. 71 ] विभिन्नानेकभावात्मरूपत्वात् विभिन्नोऽनेकभाव ...

अथान्यो दूषणविधिः

नित्यशब्दमयत्वे च भावानामपि नित्यता ।
तद्यौगपद्यतः सिद्धः परिणामो न सङ्गतः ॥ १३८ ॥
एकरूपतिरोभावे ह्यन्यरूपसमुद्भवे ।
मृदादाविव संसिध्येत् परिणामस्तु नाक्रमे ॥ १३९ ॥
अथापि कार्यरूपेण शब्दब्रह्ममयं जगत् ।
तथाऽपि निर्विकारत्वात्ततो नैव क्रमोदयः ॥ १४० ॥

---

अनेकपदार्थस्वभावः, रूपम् = स्वभावो यस्येति विग्रहः, तद्भावस्तत्त्वम् । एकं च परमब्रह्मेष्यते, अतोऽभ्युपेतबाधा प्रतिज्ञाया इति भावः ॥ १३७ ॥

दूषणान्तरमप्याह—नित्यशब्दमयत्वे चेत्यादि । नित्यशब्दमयत्वे = नित्यशब्दस्वभावत्वे । जगतः शब्दः स्वरूपं चेद् भावानामपि नित्यत्वं प्राप्नोति । ततश्च सर्वकालं भावानां शब्देन सह यौगपद्यतः सिद्धेः सिद्धत्वात्, परिणामात्मा न प्राप्नोति । तदिति तस्मादर्थे[1], तेषां वा नीलादीनां यौगपद्यं तद्यौगपद्यमिति विग्रहः ॥ १३८ ॥

अथ यौगपद्यतः सिद्धस्यापि कस्मात् परिणामो न भवति ? इत्याह—एकरूपेत्यादि ।

नाक्रमे तु वस्तुनि परिणामः सिद्ध्येदिति भिन्नक्रमस्तुशब्दः । एवं तावत् परिणामकृतं शब्दमयत्वं भावानां न युक्तम् ॥ १३९ ॥

नापि द्वितीयः पक्षो युज्यत इति दर्शयन्नाह—अथापीत्यादि ।

एवमपि शब्दस्य नित्यत्वेनाविकारित्वात् ततः क्रमेण कार्यादयो न प्राप्नुवन्ति[2] । सर्वेषामविकलाप्रतिबद्धसामर्थ्यकारणाद् युगपदेवोत्पादः स्यात् । कारणवैकल्याद्धि कार्याणि परिलम्भन्ते[3], तच्चेदविकलं तत् किमपरमपेक्षेरन्, येन युगपन्न भवेयुः ! ॥ १४० ॥

---

१. तस्मादित्यर्थे—पा०, गा० ।
२. प्राप्नोति—पा०, गा० ।
३. प्रतिलम्बन्ते—पा०, गा० ।

अन्यान्यरूपसम्भूतौ तस्मादेकस्वरूपतः ।
विवृत्तमर्थरूपेण कथं नाम तदुच्यते ! ॥ १४१ ॥
अतद्रूपपरावृत्तमृद्रूपत्वोपलब्धितः ।
कुम्भकोशादिभेदेषु मृदात्मैकोऽत्र कल्पते ॥ १४२ ॥
नीलपीतादिभावानां न त्वेवमुपलभ्यते ।
अशब्दात्मपरावृत्तिरबीजा कल्पनाऽपि तत् ॥ १४३ ॥

शब्दब्रह्मवादिनः शङ्का

अथाविभागमेवेदं ब्रह्मतत्त्वं सदा स्थितम् ।
अविद्योपप्लवाल्लोको विचित्रं त्वभिमन्यते ? ॥ १४४ ॥

---

अपि च—यदि तस्मादेकस्वभावाच्छब्दात्मनोऽन्यान्यस्य स्वभावस्योत्पत्तिरङ्गीक्रियते, तदा तद् ब्रह्म विवृत्तमर्थरूपेणेत्येतन्न सिद्ध्येत्, न ह्यर्थान्तरस्योत्पादेऽन्यस्य तत्स्वभावमनाविशतस्ताद्रूप्येण विवर्त्तो युक्तः । तस्मात सर्वथापि प्रतिज्ञार्थो नावकल्पते ॥ १४१ ॥

[ G. 72 ] 'शब्दाकारानुस्यूतत्वात्' इति च हेतुरसिद्ध इति दर्शयन्नाह—अतद्रूपेत्यादि । न हि भावानां परमार्थे नैकरूपानुगमोऽस्ति; सर्वेषां स्वस्वभावव्यवस्थिततया समानजातीयव्यावृत्तस्वभावत्वात् । काल्पनिकं तु विजातीयव्यावृत्तिकृतमेकाकारानुस्यूतत्वमेषां व्यवस्थाप्यते । यथा घटशरावोदञ्चनादिषु परमार्थतो भिन्नेष्वप्यमृदात्मकपदार्थव्यावृत्तिकृतो मृदात्मा कल्प्यते तत्र, तदपि काल्पनिकमेषां नीलादीनां शब्दाकारानुस्यूतत्वं न सम्भवति। न हि नीलपीतादिषु शब्दरूपमुपलभामहे, अनुपलभमानाश्च कथमशब्दात्मकव्यवच्छेदकृतं शब्दाकारानुस्यूतत्वं कल्पयामः । तस्मादबीजेयं कल्पनेत्यसिद्धो हेतुः ॥ १४२–१४३ ॥

यदुक्तम्—"सर्वेषामेकदेशत्वमेकाकारा च विद्भवेत्" ( तत्त्व० १३६ ) इति, तत्र परमतमाशङ्कते—अथाविभागमेवेत्यादि । अथापि स्यात्—अविभक्तमेव सदा ब्रह्मात्मकं तत्त्वमविकारि परमार्थतोऽवस्थितम् । न तस्य परमार्थेन परिणामः, किन्त्वविद्यातिमिरोपहतबुद्धिलोचना नीलादिभेदेन विचित्रमिव मन्यन्ते । यथोक्तम्—

तत्समाधानम्

तत्रापि वेद्यते रूपमविद्योपप्लवैर्जनैः ।
यन्नीलादिप्रकारेण त्यागादाने निबन्धनम् ॥ १४५ ॥
तद्रूपव्यतिरेकेण ब्रह्मरूपमलक्षितम् ।
कथं व्युत्थितचेतोभिरस्तित्वेन प्रतीयते ॥ १४६ ॥
न तत्प्रत्यक्षतः सिद्धमविभागमभासनात् ।
नित्यादुत्पत्त्ययोगेन कार्यलिङ्गं च तत्र न ॥ १४७ ॥

---

"यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ।
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्त्तते" ॥ ( ) इति ।

तेन सर्वेषामेकदेशत्वप्रसङ्गो न भविष्यति; तेषामवस्तुरूपत्वात् । संविद्भेदश्च भविष्यति, अविद्योपप्लवकृतत्वात्तस्येति भावः ॥ १४४ ॥

तत्रापीत्यादिना प्रतिविधत्ते । [G. 73] प्रमाणवशाद्धि प्रमेयसत्ताव्यवस्थितिः, न चैवंरूपस्य ब्रह्मणः सिद्धये किञ्चन प्रमाणमस्ति । तथा हि—न तावत् प्रत्यक्षतस्तस्य सिद्धिः, न हि नीलादेर्हिताहितप्राप्तिपरिहाराधिष्ठानाद् व्यतिरिक्तमपरं शब्दरूपं[1] प्रतिभासते, अप्रतिभासमानं च कथं तद्व्युत्थितचेतोभिर्न्यायमार्गावस्थितैरस्तित्वेन प्रतीयताम् ! ॥ १४५-१४६ ॥

स्यादेतत्— स्वसंवेदनप्रत्यक्षत एव तत्सिद्धम्; ज्ञानात्मरूपत्वात्, तथा हि ज्योतिस्तदेव शब्दात्मकत्वाच्चैतन्यरूपत्वाच्चेति ? तदेतत् स्वसंवेदनविरुद्धम् । तथा हि—अन्यत्र गतमानसोऽपि चक्षुषा रूपमीक्षमाणोऽनादिष्टाभिलापमेव[2] नीलादिप्रत्ययमनुभवतीति । एतच्च विस्तरेण प्रतिपादयिष्यते । एतेन यदुक्तम्—"न सोऽस्ति प्रत्ययो लोके" (वा० प० १. १२३) इत्यादि, तदपि प्रत्युक्तं भवति ।

तस्मादविभागं शब्दमयं ब्रह्म न प्रत्यक्षतः सिद्धम्; तस्य तथाभूतस्याप्रतिभासनात् । नाप्यनुमानतः । तथा ह्यनुमानं भवत्कार्यलिङ्गं भवेत् ?

---

१. ब्रह्मरूपं—पा०, गा० ।  २. ०ऽनाधिष्ठा०—पा० ।

धर्मिसत्त्वाप्रसिद्धेस्तु न स्वभावः प्रसाधकः।
न चैतदतिरेकेण लिङ्गं सत्ताप्रसाधकम् ॥ १४८ ॥
ज्ञानं ज्ञेयक्रमात् सिद्धं क्रमवत् सर्वमन्यथा।
यौगपद्येन तत्कार्यं विज्ञानमनुषज्यते ॥ १४९ ॥
ज्ञानमात्रेऽपि नैवास्य शक्यरूपं[1] ततः परम्।
भवतीति प्रसक्ताऽस्य वन्ध्यासूनुसमानता ॥ १५० ॥

---

स्वभावलिङ्गं वा ? अनुपलब्धेस्तु प्रतिषेधविषयत्वाद्विधावनधिकार एव । तत्र न तावत् कार्यलिङ्गम्, नित्यात् कस्यचित् कार्यस्यानुपपत्तेः, क्रमयौगपद्याभ्यां नित्यस्यार्थक्रियाविरोधात् । नापि स्वभावलिङ्गमस्ति; तस्यैव ब्रह्माख्यस्य धर्मिणोऽसिद्धेः । न ह्यसिद्धे धर्मिणि तत्स्वभावभूतो धर्मः स्वातन्त्र्येण सिद्ध्येत् ।

अन्यत्तर्हि लिङ्गं भविष्यति ? इत्याह—न चैतदित्यादि । स्वभावकार्यव्यतिरेकेणान्यस्य साध्यार्थप्रतिबन्धाभावात् । न चाप्रतिबद्धं लिङ्गं युक्तम्; अतिप्रसङ्गात् । यदपि च शब्दरूपान्वयत्वं भावानामुक्तम्; तदसिद्धत्वादलीकत्वाच्च न शब्दरूपत्वं पारमार्थिकं ब्रह्मणः साधयितुमलम् ।

नाप्यागमात्तस्य सिद्धिः; तस्यानवस्थितत्वात् । यद्यप्यनुपलम्भाख्यमस्ति लिङ्गम्, तत्तु स्वभावहेतावेवान्तर्गतमिति भावः । यद्वा—सत्ताप्रसाधकस्य विवक्षितत्वात् । अत एवाह—सत्ताप्रसाधकमिति ॥ १४७–१४८ ॥

अपि च—

"ज्ञानमात्रार्थकरणेऽप्ययोग्यं[2] ब्रह्म गम्यताम्[2] ।
तदयोग्यतया रूपं तद्ध्यवस्तुत्वलक्षणम्" ॥

(प्र० वा० २. ५० ) इति ।

एतत् प्रतिपादयन्नाह—ज्ञानं ज्ञेयक्रमात् सिद्धमित्यादि । [G. 71] एतच्च पूर्वमीश्वरपरीक्षायां प्रसाधितम् । ततः परमिति ! त्यागादाननिबन्ध-

---

१. शक्तरूपं—पा० ।
२–२. 'अयोग्यमत एव तत्'—इति तत्रस्थः पाठः ।

विशुद्धज्ञानसन्ताना योगिनोऽपि ततो न तत् ।
विदन्ति ब्रह्मणो रूपं ज्ञाने व्यापृत्य सङ्गते. ॥ १५१ ॥

---

नान्नीलादे:[1] परमन्यदित्यर्थः । यदि वा—तत इति निगमनम् । परमिति[1] तात्त्विकम् । वन्ध्यासूनुसमानतेति । न हि वन्ध्यासूनोरवस्तुत्वव्यवस्थाया-मर्थक्रियासामर्थ्यविरहव्यतिरेकेणान्यन्निबन्धनमस्ति ॥ १४९–१५० ॥

अथेदमुच्यते—तं तु परमं ब्रह्मात्मानमभ्युदयनिःश्रेयसफलधर्मानुगृहीतान्तः-करणा योगिन एव पश्यन्तीति ? तदपि नोपपद्यत इति दर्शयति—विशुद्धे-त्यादि । यदि हि ज्ञाने योगजे तस्य व्यापारः स्यात्, तदा योगिनस्तस्य रूपं पश्यन्तीति स्यात्, यावता यथोक्तेन प्रकारेण ज्ञाने तस्य व्यापाराभावाद-युक्तमेतत् । स्यादेतत्—न तद्विषयज्ञानोत्पत्त्या योगिनस्तं पश्यन्ति; तद्व्यति-रिक्तस्य योगिनो योगिज्ञानस्य चाभावात्, किन्तु योगित्वावस्थायां स्वमात्मानं ज्योतीरूपं तत्प्रकाशमानं योगिनस्तं पश्यन्तीति ? उच्यते; यद्येवम्, प्रागयोगि-त्वावस्थायां किं तस्य रूपमिति वाच्यम् ! यदि सदैव ज्योतीरूपम्, तदा तर्हि न कदाचिदयोगित्वावस्थाऽस्ति; सदैवात्मज्योतीरूपत्वाद् ब्रह्मणः । ततश्चायत्नतः सर्वेषां मोक्षप्रसङ्गः ।

अथापि स्यात्—यथा भवतां स्वप्नाद्यवस्थासु ज्ञानमद्वयमपि विचित्राकार-परिग्रहेण प्रतिभासते, तथा [2]तदद्वयमप्यविद्यावशादविशुद्धसन्ततीनां तथा प्रकाशत इति ? तदसम्यक्; न हि तद्व्यतिरेकेणान्ये केचिदविशुद्धसन्ततयः सन्ति, येषां तत्तथा प्रतिभासते । स्वयमेव तथा प्रतिभासत इति चेत् ? एवं तर्हि मोक्षाभावप्रसङ्गः; सर्वदैव ब्रह्मणोऽद्वयरूपप्रतिभासात्मकत्वात् । अस्माकं तु विशुद्धज्ञानान्तरोदयान्मुक्तिर्युज्यत एव । न चापि भवतां तद्व्यतिरेकिण्य-विद्यास्ति, यद्वशात् तत्तथा प्रतिभासत इति स्यात् । अव्यतिरेके चाविद्यायास्त-द्वशात्तदेव तथा प्रतिभासत इति सुव्याहृतमेतत् ।

---

१–१. गा० पुस्तके द्विरावृत्तोऽयं पाठो मुद्रणप्रमादादिति ध्येयम् ।
२. ब्रह्मेत्यर्थः ।

अथापि स्याद्—अविद्यावशान्न[1] ख्यातीत्यनेनाविद्यात्मकत्वमेव तस्य ख्याप्यत इति ? यद्येवम्, सुतरां मोक्षाभावप्रसङ्ग एव ख्यापितो भवति। न हि नित्यैकरूपे ब्रह्मण्यविद्यात्मके स्थिते सति तदात्मिकाया अविद्याया व्यपगमः सम्भवति, येनाविद्याव्यपगमान्मुक्तिर्भवेत्। अथ व्यतिरिक्ताऽविद्याऽङ्गीक्रियते ? एवमपि नित्यत्वादनाधेयातिशयस्य [G 75] ब्रह्मणः सा[2] न किञ्चित्[2] करोतीति न युक्तमविद्यावशात् तथा प्रतिभासनम्। ततश्चाविद्यया सह तस्य सम्बन्धाभावात् संसाराभावप्रसङ्गः। न चापि सा तत्त्वान्यत्वाभ्यां निर्वक्तुं शक्यत इति युक्तं वक्तुम्; वस्तुधर्मस्य गत्यन्तराभावात्। अन्यथा वस्तुत्वमेव न स्यात्। न चावस्तुवशात्तथा तस्य ख्यातिर्युक्ता; अतिप्रसङ्गात्। तथाभूतस्य चार्थक्रियाकारिणः स्वभावस्यावस्थितिनामकरणेन [3]नास्ति विवादः। अस्माकं तु वितथाभिनिवेशवासनैवाविद्या, सा च वासना शक्तिरुच्यते। शक्तिश्च कारणात्मकज्ञानात्मभूतैवेति। तेन पूर्वपूर्वतः कारणभूतादविद्यात्मनो ज्ञानादुत्तरोत्तरकार्यज्ञानस्य वितथाकाराभिनिवेशिन उत्पत्तेरविद्यावशात् तथाख्यातिर्युक्ता।

तस्याश्चाविद्याया योगाभ्यासादसमर्थतरतमक्षणोत्पादक्रमेण व्यपगमात् परिशुद्धज्ञानसन्तानोदयादपवर्गप्राप्तिरित्यतो बन्धमोक्षव्यवस्था युक्तिमती। न त्वेवं भवतां सम्भवति; नित्यैकरूपत्वाद् ब्रह्मणोऽवस्थाद्वयसम्भवात्। एकत्वाच्च तस्य ब्रह्मण एकस्य मुक्तौ सर्वेषां मुक्तिप्रसङ्गः, एकस्यामुक्तौ सर्वेषाममुक्तिप्रसङ्गश्चानिवार्यः।

न चाप्ययोगित्वावस्थायामात्मज्योतीरूपत्वेऽस्य किञ्चित् प्रमाणमस्ति। प्रसाधकं ज्ञानं हि प्रकाशात्मतया स्वसंवेदनप्रसिद्धम्, न त्वेवं शब्दात्मा सर्वत्र प्रत्ययात्मनि संवेद्यत इति निर्दिष्टमेतत्। अथायोग्यवस्थायामात्मज्योतिष्ट्वमस्य नाङ्गीक्रियते, एवमपि प्रागविद्यमानं तदात्मज्योतिष्ट्वमत्यक्तपूर्वरूपस्य ब्रह्मणः पश्चाद्योग्यवस्थायां कुतः सम्भूतमिति वाच्यम्। तस्मान्मिथ्याप्रवादोऽयं शब्दब्रह्मवादो भवतामित्यलं बहुना॥ १५१॥

---

१. 'न' इति पा०. गा० पुस्तकयोर्नास्ति।
२–२, सा तत्किञ्चित्—पा०; सा न तत्किञ्चित्—गा०। ३. नोऽस्ति—गा०।

प्रधानपरिणामेन समं च ब्रह्मदर्शनम् ।
तद्दूषणानुसारेण बोद्धव्यमिह दूषणम् ॥ १५२ ॥

## पुरुषपरीक्षा

### वेदवादिमतोपन्यासः

अन्ये त्वीशसधर्माणं पुरुषं लोककारणम् ।
कल्पयन्ति दुराख्यातसिद्धान्तानुगबुद्धयः ॥ १५३ ॥
समस्तवस्तुप्रलयेऽप्यलुप्तज्ञानशक्तिमान् ।
ऊर्णनाभ इवांशूनां स हेतुः किल जन्मिनाम् ॥ १५४ ॥

---

प्रधानेत्यादिना पूर्वोक्तं दूषणमार्गमिहाप्यतिदिशति । तत्रैवं दूषणं वाच्यम्—

"न शब्दजन्यं तत्कार्यं सत्तातो हेतुवित्तिवत् ।
अतो नाभिमतो हेतुरसाध्यत्वात् परात्मवत्" ॥ इत्यादि ॥ १५२ ॥

इति शब्दब्रह्मपरीक्षा

---

अन्य इत्यादिना वेदवादिमतमुपक्षिपति ।

[G. 76] त एवमाहुः—"पुरुष एवैकः सकललोकस्थितिसर्गप्रलयहेतुः प्रलयेऽप्यलुप्तज्ञानातिशयशक्तिः" इति । तथा चोक्तम्—

"ऊर्णनाभ इवांशूनां चन्द्रकान्त इवाम्भसाम् ।
प्ररोहाणामिव प्लक्षः स हेतुः सर्वजन्मिनाम्" ॥ (    ) इति ।
तथा—"पुरुष एवैतत्सर्वं यद्भूतं यच्च भाव्यम्" (ऋ० वे० १०.९०.२) इति ।

ईशसधर्माणम् = ईश्वरतुल्यधर्माणम् ; द्वयोरपि विश्वसर्गस्थितिप्रलयनिमित्तत्वात् । एतावाँस्तु विशेषः—ईश्वरव्यतिरिक्तमन्यदप्यात्मादिकं समवाय्यादिकारणमीश्वरकारणकैरिष्यते, पुरुषवादिभिस्तु पुरुष एव कारणम् । विश्वसर्गस्थितिप्रलयनिमित्तभावस्तु द्वयोरपि समानः । दुराख्यातसिद्धान्तानुगबुद्धय इति दुराख्यातसिद्धान्तानुगा बुद्धिर्येषामिति विग्रहः । ऊर्णनाभः = मर्कटकः ॥ १५३-१५४ ॥

अस्यापीश्वरवत् सर्वं वचनीयं निषेधनम् ।
अन्योऽपि दूषणप्रकारः
किमर्थं च करोत्येष व्यापारमिममीदृशम् ॥ १५५ ॥
यद्यन्येन प्रयुक्तत्वान्न स्यादस्य स्वतन्त्रता ।
अथानुकम्पया कुर्यादेकान्तसुखितं जगत् ॥ १५६ ॥
[1]व्याधिदारिद्र्यशोकादिविविधायासपीडितम् ।
जनं तु सृजतस्तस्य काऽनुकम्पा प्रतीयते ! ॥ १५७ ॥
सृष्टेः प्रागनुकम्प्यानामसत्त्वे[2] नोपपद्यते ।
अनुकम्पाऽपि यद्योगाद्धाताऽयं परिकल्प्यते ॥ १५८ ॥

---

अस्यापीत्यादिना दूषणमारभते । ईश्वरवदिति षष्ठ्यन्ताद्वतिः । अत्राप्येवं दूषणं वाच्यम्—

"पुरुषो जन्मिनां हेतुर्नोत्पत्तिविकलत्वतः ।
गगनाम्भोजवत् सर्वमन्यथा युगपद्भवेत्" ॥ इत्यादि ।

यदि च—ईश्वरसिद्धये यथा परैः साधनान्युक्तानि, तथैव पुरुषसिद्धये पुरुषवादिभिरुपादीयन्ते; तदा तद्वदेवासिद्धतादिदोषो वाच्यः ।

अन्यमपि दूषणप्रकारमाह—किमर्थं चेत्यादि । प्रेक्षापूर्वकारिप्रवृत्तेः प्रयोजनवत्तया व्याप्तत्वात्—अतः किमर्थमयं पुरुषो जगद्रचनाव्यापारमीदृशं करोतीति वक्तव्यम् ॥ १५५ ॥

यद्यन्येनेश्वरादिना प्रयुक्तोऽनिच्छन्नपि करोति तदाऽस्य यत्स्वातन्त्र्यमभ्युपगतम्, तद्धीयेत । अथ कृपया परानुग्रहार्थं करोति, तदा नारकादिदुःखितसत्त्वनिर्माणं[3] न कुर्यात्, एकान्तसुखितमेव कुर्यात् ॥ १५६–१५७ ॥

[G. 77] किञ्च—सृष्टेः = सर्गात् प्रागनुकम्प्यसत्त्वाभावात् किमालम्ब्य[4] तस्या[4] अनुकम्पाया वशादयं धाता = स्रष्टा कल्प्येत ॥ १५८ ॥

---

१. आधि०—पा०, गा० । २. ०नुकम्पाना०—पा०, गा० ।
३. दुःखितमत्व—पा०, गा० । ४–४. यस्या—पा०, गा० ।

न चायं प्रलयं कुर्यात् सदाऽभ्युदयोगिनाम् ।
तददृष्टव्यपेक्षायां स्वातन्त्र्यमवहीयते ॥ १५९ ॥
पीडाहेतुमदृष्टं च किमर्थं स व्यपेक्षते ।
उपेक्षैव पुनस्तत्र दयायोगेऽस्य युज्यते ॥ १६० ॥
क्रीडार्था तस्य वृत्तिश्चेत् क्रीडायां न प्रभुर्भवेत् ।
विचित्रक्रीडनोपायव्यपेक्षातः शिशुर्यथा ॥ १६१ ॥
क्रीडासाध्या च या प्रीतिस्तस्य यदपि साधनम् ।
तत्सर्वं युगपत् कुर्याद्यदि तत्कृतिशक्तिमान् ॥ १६२ ॥

---

यदि चायमनुकम्पया कुरुते तदा ये[1] देवमनुष्याः[1] सदाभ्युदययोगिनस्तेषां किमिति प्रलयं करोति, ये दुःखितसन्ततय आपायिकाः सत्त्वास्तेषामेव कामं करोतु प्रलयमिति भावः। अथापि स्यात्—तेषामनुकम्प्यानां यददृष्टं धर्माधर्मलक्षणं तदपेक्ष्य सुखदुःखसमन्वितं लोकं करोति ? नैतदस्ति; एवं हि स्वातन्त्र्यमभ्युपगतं हीयेत। न चापि समर्थस्य काचिदपेक्षा। असामर्थ्ये [2]वाऽपेक्ष्यादेवलोकस्योत्पत्तेस्तत्कारणत्वमस्य हीयते॥ १५९ ॥

भवतु नाम तस्यादृष्टापेक्षा, तथापि यददृष्टं धर्माधर्मात्मकं पीडाहेतुः, तदपेक्षा कृपालोर्न युक्ता, किन्त्ववधीरणमेव तत्र तस्य कृपापरतन्त्रतया युक्तं कर्तुम्। न हि कृपालवः परदुःखहेतुमेवान्विच्छन्ति; तेषां परदुःखवियोगेच्छयैव प्रवृत्तेः ॥ १६० ॥

अथ नानुकम्पया करोति, किं तर्हि ? क्रीडार्थम् ? एतदप्यसम्यक्; एवं क्रीडोत्पादे स्वातन्त्र्यमस्य न स्यात्, सर्गस्थितिप्रलयात्मकस्य विचित्रक्रीडनोपायस्यापेक्षणात् ॥ १६१ ॥

किं च ये ते विचित्राः क्रीडनोपायाः, तत्कारणा[3] यदि शक्तिरस्यास्ति, तदा युगपदेव कुर्यात्। अथादौ तस्य न शक्तिः, तदा क्रमेणापि न कुर्यात्;

---

१-१. यदेव मनुष्याः—पा०, गा०। २. वापेक्ष्यादेव लोकस्य—गा०।
३. तत्कारणे—पा०, गा०।

क्रमेणापि न शक्तः स्यान्नो चेदादौ स शक्तिमान् ।
नाविभक्तस्य युज्येते शक्त्यशक्ती हि वस्तुनः ॥ १६३ ॥
अथ स्वभावतो वृत्तिः सर्गादावस्य वर्ण्यते ।
पावकादेः प्रकृत्यैव यथा दाहादिकर्मणि ॥ १६४ ॥

---

अशक्तावस्थाया अविशिष्टत्वात् । न ह्येकस्यैकत्र वस्तुनि शक्तत्वमशक्तत्वं च परस्परविरुद्धं धर्मद्वयं युक्तम् । [G. 78] किमर्थं च व्यापारमीदृशमारभत इत्यादि सर्वो विकल्प ईश्वरेऽपि साधारणः ।

तेन यदाह प्रशस्तमतिः—"परानुग्रहार्थमीश्वरः प्रवर्त्तते, यथा कृतार्थः कश्चिन् मुनिरात्महिताहितप्राप्तिपरिहारार्थासम्भवेऽपि परहितार्थमुपदेशं करोति, तथेश्वरोऽप्यात्मीयामैश्वर्यविभूतिं विख्याप्य प्राणिनोऽनुग्रहीष्यन् प्रवर्त्तते" ( ) इति । अथ वा "शक्तिस्वाभाव्यात्, यथा कालस्य—वसन्तादीनां पर्यायेणाभिव्यक्तौ स्थावरजङ्गमविकारोत्पत्तिः स्वभावतः, तथेश्वरस्याप्याविर्भावानुग्रहसंहारशक्तीनां पर्यायेणाभिव्यक्तौ प्राणिनामुत्पत्तिस्थितिप्रलयहेतुकत्वम्" ( ) इति । तदप्यनेनैव प्रतिविहितम् । तथा हि—'परानुग्रहार्थं प्रवर्त्तते' इत्यत्रेदमेव प्रतिविधानम्—'अनुग्रहः परं कुर्यादेकान्तसुखितं जगत्' इत्यादि । 'शक्तिस्वाभाव्यात्' इत्यत्रापीदमेव दूषणम्—

सर्गस्थित्युपसंहारान् युगपद्व्यक्तशक्तिकः ।
युगपज्जगतः कुर्यान्नो चेत् सोऽव्यक्तशक्तिकः ॥
न व्यक्तशक्तिरीशोऽयं क्रमेणाप्युपपद्यते ।
व्यक्तशक्तिरितोऽन्यश्चेद्भावो ह्येकः कथं भवेत् ॥ इति ।

कालस्यापि वसन्ताद्यभिव्यक्तौ पर्यायेण प्रवृत्तावयमेव दोषः । शीतोष्णान्वयभेदभाजस्तु भावा एव हि प्रतिक्षणविनाशिनः काल इत्येतत् पश्चात् प्रतिपादयिष्यते¹ ॥ १६२–१६३ ॥

अथ स्वभावतो वृत्तिरित्यादिनोद्द्योतकरमतमाशङ्कते । स ह्याह—"न हि भगवतः क्रीडार्था प्रवृत्तिः, अपि तु यथा पृथिव्यादीनां महाभूतानां स्वभाव एव

---

१. द्रव्यपदार्थपरीक्षान्तर्गतकालपरीक्षायामिति शेषः ।

यद्येवमखिला भावा भवेयुर्युगपत्ततः ।
तदुत्पादनसामर्थ्ययोगिकारणसन्निधेः ॥ १६५ ॥
स्वहेतुबलसम्भूता नियता एव शक्तयः ।
असर्वकालभाविन्यो ज्वलनादिषु वस्तुषु ॥ १६६ ॥
अन्यथा यौगपद्येन सर्वं कार्यं समुद्भवेत् ।
तेषामपि न चेदेष नियमोऽभ्युपगम्यते ॥ १६७ ॥
प्रकृत्यैवांशुहेतुत्वमूर्णनाभेऽपि नेष्यते ।
प्राणिभक्षणलाम्पट्याल्लालाजालं करोति यत् ॥ १६८ ॥
यथाकथञ्चिद् वृत्तिश्चेद् बुद्धिमत्ताऽस्य कीदृशी ।
नासमीक्ष्य यतः कार्यं शनकोऽपि प्रवर्त्तते ॥ १६९ ॥

---

स तादृशो यत्स्वकार्येषु प्रवृत्तिः, तथेश्वरस्यापि" ( न्या. वा. ४. १. २१ ) तदेतदयुक्तम्; एवं हि सर्वभावानां तद्व्यापारमात्रभाविनां समर्थाविकलकारणसन्निधानाद्युगपदेवोत्पादः स्यात् । न चापि बुद्धिमत्त्वं विशेषणं युक्तमिति पूर्वमेवास्माभिः प्रतिपादितम् ॥ १६४–१६५ ॥

यद्येवम्, पावकादिकार्याणामपि किं न यौगपद्यं भवति ? इत्याह- स्वहेतुबलसम्भूता इत्यादि । [G. 79] तेषामिति पावकादीनाम् । न केवलमीश्वरस्येत्यपिशब्दः । एष नियम इति स्वहेतुबलसम्भवकृतः ॥ १६६–१६७ ॥

स्यादेतत्—ऊर्णनाभः स्वभावतः प्रवृत्तः किमिति स्वकार्याणि जालादीनि युगपन्न करोति ? इत्याह—प्रकृत्यैवेत्यादि । ऊर्णनाभोऽपि न स्वभावतः प्रवर्त्तते, किं तर्हि ? प्राणिभक्षणलाम्पट्यात् कादाचित्कात् प्रतिनियतहेतुसम्भूतादित्यभिप्रायः । न ह्यसौ नित्यैकरूपः, तस्यापि स्वहेतुबलभावित्वेन कादाचित्की शक्तिः ॥ १६८ ॥

अथापि स्यात्—नानुकम्पया, न क्रीडया, किन्त्वबुद्धिपूर्वकमेव यथाकथञ्चित् प्रवर्त्तते ? इत्याह—यथाकथञ्चिदित्यादि । एवं हि कैवर्त्तादिः प्राकृतपुरुषादप्यत्यन्तानभिज्ञतया कथमसौ प्रेक्षावतामवधेयवचनः स्यात् । बुद्धिमत्तेति । प्रेक्षावत्ता । शनकः कैवर्त्तः ॥ १६९ ॥

शौर्यात्मजादयो येऽपि धातारः परिकल्पिताः ।
एतेनैव प्रकारेण निरस्तास्तेऽपि वस्तुतः ॥ १७० ॥

# आत्मपरीक्षा

## १. नैयायिक-वैशेषिकपरिकल्पितात्मपरीक्षा

### नैयायिकवैशेषिकमतोपन्यासः

अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयम्[1] ।
स्वतोऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा ॥ १७१ ॥

---

एतेनैव पुरुषदूषणेन ये वा शौरिप्रभृतयः परैर्जगतो धातारः कल्पिताः, तेऽपि निरस्ता बोधव्या इति दर्शयति—शौर्यात्मजादय इत्यादि । तत्र—शौरिः = विष्णुः । आत्मजः = ब्रह्मा । आदिशब्देन यो बुद्धिमान् कालः परैरिष्यते तस्य ग्रहणम् । यथोक्तम्—

"कालः[2] पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरति क्रमः" ॥ (        ) इति ।

सुप्तेष्विति प्रलयकाललीनेषु लोकेष्वित्यर्थः । अन्यस्याप्येवम्भूतस्य कुमति-परिकल्पितस्यापि ग्रहणात् संग्रहः ॥ १७० ॥

इति पुरुषपरीक्षा

आत्मव्यापाररहितत्वं प्रतिपादयन्नाह—अन्ये पुनरित्यादि । ते हि शरीरेन्द्रियबुद्धिव्यतिरिक्तमात्माख्यं द्रव्यमिच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञान-धर्मा-धर्म-संस्काराणामाश्रयं समवायिकारणमचिद्रूपम्, अविनाशि, सर्वगतम्, शुभाशुभ-कर्मभेदानां कर्तृ, तत्फलस्य चेष्टानिष्टस्य भोक्तृ परिकल्प यन्ति; अन्यथा यदि आत्मा न भवेत्, तदा कः प्रेत्य कर्मफलानि भुञ्जीत । न ह्यन्येन कृतमन्यो भुङ्क्ते । एवं हि अकृताभ्यागमदोषः स्याद्; अकर्तुरेव फलाभिसम्बन्धात् । कृतविप्रणाशश्च; कर्तुः फलेनानभिसम्बन्धनात् । न चैवमिष्यते । तस्मादवश्यं[2]

---

१. समाश्रयः—जै० । २–२, पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

शुभाशुभानां कर्त्तारं कर्मणां तत्फलस्य च ।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः ॥ १७२ ॥
ज्ञानयत्नादिसम्बन्धः कर्तृत्वं तस्य भण्यते ।
सुखदुःखादिसंवित्तिसमवायस्तु भोक्तृता ॥ १७३ ॥
निकायेन विशिष्टाभिरपूर्वाभिश्च सङ्गतिः ।
बुद्धिभिर्वेदनाभिश्च जन्म तस्याभिधीयते ॥ १७४ ॥
प्रगात्ताभिर्वियोगस्तु मरणं जीवनं पुनः ।
सदेहस्य मनोयोगो धर्माधर्माभिसत्कृतः ॥ १७५ ॥

---

य[1] एव कर्ता स [1]एव भोक्ताऽङ्गीकर्तव्य इति । तेन योऽसौ कर्ता भोक्ता च स आत्मा ।

अथ यदि चिद्रूपो न भवति, तत्कथमचेतयमानः कर्ता युज्यते ? इत्याह—चेतनायोगादित्यादि । चेतनायोगादसौ चेतयते इति कृत्वा चेतनः, न पुनः स्वरूपतः; अचिद्रूपत्वात् । यथा वर्णयन्ति कापिलाः—"चैतन्यं पुरुषस्य स्वं रूपम्" (            ) इति ।

यदि तर्हि नित्योऽसौ, कथं कर्ता भोक्ता च ? कथं वा तस्य जन्म, मरणम्, जीवनं वा व्यवस्थाप्यते ? न हि नित्यैकरूपस्य सर्वमिदं युज्यते, यथाऽऽकाशस्य ? इत्याह—ज्ञानेत्यादि । ज्ञान-प्रयत्न-चिकीर्षाणां तत्रात्मनि समवायः = कर्तृत्वम्, सुखादिसंवित्समवायः = भोक्तृत्वम् ।

निकायेन विशिष्टाभिः शरीरबुद्धीन्द्रियवेदनाभिरपूर्वाभिरभिसम्बन्धः = जन्म तस्यात्मनो गीयते । देवमनुष्यादिर्भोगनिकायः । वेदनाभिश्चेति च कारणशरीरम्, इन्द्रियाणि च समुच्चीयन्ते । तत्र शरीरेन्द्रियैः संयोगलक्षणस्तस्य सम्बन्धः, बुद्धिवेदनाभिस्तु समवायलक्षणः । कथं श्रोत्रेण संयोगः ? तत्रापि संयुक्तसंयोगोऽस्ति, आत्मना हि संयुक्ता तदीया दृष्टाभिसंस्कृता कर्णशष्कुली, तया च संयुक्तमाकाशात्मकं श्रोत्रम्[1] ।

---

१—१, पाठोऽयं पा०, गा० पुस्तकयोस्त्रुटितो दृश्यते ।

शरीरचक्षुरादीनां वधाद्धिंसाऽस्य कल्प्यते ।
इत्थं नित्येऽपि पुंस्येषा प्रक्रिया विमलेक्ष्यते ॥ १७६ ॥

प्रागात्ताभिः[1] शरीरेन्द्रियबुद्धिवेदनाभिर्वियोगः = मरणमस्य गीयते । जीवनं तु तस्य सदेहस्य यो मनसा योगो धर्माधर्मापेक्षः । हिंसा तु शीररचक्षुरादीनां वधात् तस्यात्मनः कल्प्यते । वर्ण्यत इत्यर्थः । तथा च सूत्रम्—"कार्याश्रयकर्तृवधाद्धिंसा" (न्या० सू० ३.१.६) इति । कार्याश्रयः = शरीरम्; सुखादेः कार्यस्याश्रयत्वात् । कर्तृ णि = इन्द्रियाणि; विषयोपलब्धेः कर्तृत्वात् ॥ १७१-१७६ ॥

कथं पुनरस्यात्मनोऽस्तित्वं प्रत्येतव्यमिति ? अत्राविद्धकर्णस्तावत्प्रमाणयति—"सदाद्यविशेषविषयाविषयज्ञेयविषया मदीयाः प्रत्यक्षानुमानोपमानशाब्द-स्मृति-प्रभिज्ञान-सिद्धातिदर्शनार्षारेकविपर्ययाः[1] [G. 80] स्वप्नस्वप्नान्तिकाः प्रज्ञानविशेषा मदीयशरीरादिव्यतिरिक्तसंवेदकसंवेद्याः; स्वकारणायत्तजन्मवत्त्वसामान्यविशेषवत्त्वबोधात्मकत्वाशुतरविनाशित्वसंस्कारानाधायकत्वप्रत्ययत्वेभ्यः, पुरुषान्तरप्रत्ययवत् । वैधर्म्येण प्रत्यस्तमिता[2] घटादयः" इति । तत्र सदादयः षडविशेषाः पूर्वं व्याख्याताः[3] । तेषां सदादीनां षण्णां विषयो द्रव्यगुणकर्माणि । अविषयः सामान्यविशेषसमवायाः । तदेतदुभयात्मकं ज्ञेयं विषयो येषां[4] प्रत्यक्षादीनां ज्ञानविशेषाणां ते तथोक्ताः । प्रत्यक्षानुमानोपमानेत्यादिस्तु द्वन्द्वनिर्देशः । सिद्धदर्शनं ज्योतिःशास्त्राद्युपनिबद्धम् । तद्धि सिद्धानां दर्शनं सिद्धं वा दर्शनमिति कृत्वा सिद्धदर्शनमुच्यते । प्रातिभं तु ज्ञानमार्षम्, यथा—श्वो मे भ्राता गमिष्यतीति । तद्धि प्रायेणर्षीणां भवतीति कृत्वार्षमुच्यते । आरेकः = संशयः । विपर्ययः = विपर्यासः । प्रथमस्वप्नावस्थाभावी प्रत्ययः = स्वप्नः । तद्विषयं स्वप्नेऽपि यदपरं ज्ञानं भवति स स्वप्नान्तिकः । एत एव प्रज्ञानविशेषाः । शेषं सुबोधम् ।

१—१. पाठोऽयं पा०, गा० पुस्तकयोस्त्रुटितो दृश्यते ।
२. प्रशस्तमिता—पा० गा० ।
३. इहैव पूर्वं ५६तमे पृष्ठे ।
४. पा०, गा० पुस्तकयोर्नास्ति ।

अविद्धकर्णमतम्

ज्ञानानि च मदीयानि तन्वादिव्यतिरेकिणा ।
संवेदकेन वेद्यानि प्रत्ययत्वात् तदन्यवत् ॥ १७७ ॥

शङ्करस्वामिमतम्

इच्छादयश्च सर्वेऽपि क्वचिदेते समाश्रिताः ।
वस्तुत्वे सति कार्यत्वाद्रूपवत् स च नः पुमान् ॥ १७८ ॥
वस्तुत्वग्रहणादेष न नाशे व्यभिचारवान् ।
हेतुमत्त्वेऽपि नाशस्य यस्मान्नैवास्ति वस्तुता ॥ १७९ ॥

उद्द्योतकरमतम्

रूपादिप्रत्ययाः सर्वेऽप्येकानेकनिमित्तकाः ।
मयेति प्रत्ययेनैषां प्रतिसन्धानभावतः ॥ १८० ॥
नर्त्तकीभ्रूलताभङ्गे बहूनां प्रत्यया इव ।
अन्यथा प्रतिसन्धानं न जायेतानिबन्धनम् ॥ १८१ ॥

---

तदेतत् प्रमाणमर्थतो निर्दिशन्नाह—ज्ञानानि चेत्यादि। तन्वादीत्यत्रादिशब्देन बुद्धीन्द्रियवेदनाः परिगृह्यन्ते। प्रत्ययात्वादित्युपलक्षणम्। तदन्येऽपि स्वकारणःयत्तजन्मवत्त्वादयो ग्राह्याः ॥ १७७ ॥

[G. 81] शङ्करस्वामी पुनरन्यथा प्रमाणयति—"इच्छादयः क्वचिदाश्रिताः; वस्तुत्वे सति कार्यत्वाद्, रूपादिवत्" इति। तद्दर्शयति—इच्छादयश्चेत्यादि।

वस्तुत्वग्रहणादित्यादिना वस्तुत्वे सतीति विशेषणस्य साफल्यं दर्शयति ॥ १७८–१७९ ॥

उद्द्योतकरस्तु प्रमाणयति—"देवदत्तस्य रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः, मयेति प्रत्ययेन प्रतिसन्धीयमानत्वात्। कृतसमयानामेकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकपुरुषाणां प्रत्ययवत्।" (  ) अस्यायमर्थः—यथा किल नर्त्तकीभ्रूभङ्गानन्तरमस्माभिर्वस्त्राणि प्रक्षेप्तव्यानीत्येवं कृतसमयानां बहूनां नानाकर्तृका नानाभूताः प्रत्यया निमित्तस्य भ्रूभङ्गस्यैकत्वात् 'मया दृष्टो मया दृष्टः' इति प्रतिसन्धीयन्ते, तथेहापि नानाविषयाः प्रत्यया निमित्तस्यैकत्वात् प्रतिसन्धास्यन्ते। यच्च तदेकं निमित्तं स आत्मेति। प्रतिसन्धानं पुनः 'मया

बुद्धीन्द्रियादिसङ्घातव्यतिरिक्ताभिधायकम् ।
आत्मेति वचनं यस्मादिदमेकपदं मतम् ॥ १८२ ॥
सिद्धपर्यायभिन्नत्वे यच्चैवं परिनिश्चितम् ।
यथानिर्दिष्टधर्मेण तद्युक्तं [1]घटशब्दवत् ॥ १८३ ॥
प्राणादिभिर्वियुक्तश्च जीवद्देहो भवेदयम् ।
नैरात्म्याद् घटवत्तस्मान्नैवास्त्यस्य निरात्मता ॥ १८४ ॥

नित्यत्वादिसाधनेऽविद्धकर्णमतम्

सद्योजाताद्यविज्ञानवेदकेनैव वेद्यते ।
सर्वमुत्तरविज्ञानं मज्ज्ञानत्वात् तदाद्यवत् ॥ १८५ ॥

---

दृष्टं मया श्रुतम्' इत्येवमादीनां प्रत्ययानामेकज्ञातृनिमित्तत्वेन घटनम् । नर्त्तकी-भ्रूक्षेपे तु प्रत्ययानामेकविषयत्वापादनम् । सर्वथा प्रतिसन्धानमुच्यते यदेकमर्थं निमित्तीकृत्य प्रत्ययानां सम्बन्धनम् ।

तदेतत्प्रमाणं दर्शयन्नाह—रूपादिप्रत्यया इति । सुबोधम् ॥१८०-१८१॥

अयमपरस्तदीयः प्रयोगः—"आत्मेति पदं शरीरेन्द्रियमनोबुद्धिवेदनासङ्घात-व्यतिरिक्तवचनम्; प्रसिद्धपर्यायव्यतिरिक्तत्वे सत्येकपदत्वात्, घटादिशब्दवत्" । तदाह—बुद्धीन्द्रियादीत्यादि । [G. 82] सिद्धपर्यायभिन्नत्व इति । बुद्धीन्द्रियादीनां ये सिद्धाः पर्याया धीप्रभृतयस्तेभ्यां भिन्नत्वे सतीत्यर्थः । यच्चैवं परिनिश्चितमिति । सिद्धपर्यायभिन्नत्वे सत्येकपदत्वेन । यथानिर्दिष्ट-धर्मेणेति । बुद्ध्यादिव्यतिरिक्तार्थाभिधायित्वेन ॥ १८२–१८३ ॥

पुनः स[2] एव व्यतिरेकिणं हेतुमात्मसिद्धये प्रयुक्तवान्—"नेदं निरात्मकं जीवच्छरीरम्; अप्राणादिमत्त्वप्रसङ्गाद्, घटादिवत्" ( ) इति । तद्दर्शयति—प्राणादिभिरित्यादि । अस्य निरात्मतेति । जीवद्देहस्य । यद्वा—अस्यात्मनो निरात्मता निःस्वभावता नास्ति, अपि तु सत्त्वं सिद्धमित्यर्थः ॥ १८४ ॥

---

१. पटशब्दवत्—पा०, गा० । २. उद्द्योतकर इत्यर्थः ।

मदीयेनात्मना युक्तं दूरदेशविवर्त्त्यपि[1] ।
क्षित्यादिमूर्त्तिमत्त्वादेरस्मदीयशरीरवत् ॥ १८६ ॥
एवं च सत्त्वनित्यत्वविभुत्वानां विनिश्चये ।
आत्मनो न निरात्मानः सर्वधर्मा इति स्थितम् ॥ १८७ ॥

(उत्तरपक्षः)

अविद्धकर्णमतप्रतिविधानम्

तदत्र प्रथमे तावत् साधने सिद्धसाध्यता ।
सर्वज्ञादिप्रवेद्यत्वं त्वज्ज्ञानस्येष्यते यतः ॥ १८८ ॥

---

अथ नित्यत्वविभुत्वे कथमस्य प्रतिपत्तव्ये इति ?—अत्राविद्धकर्णस्तावत् प्रमाणयति—"मातुरुदरनिष्क्रमणोत्तरकालं मदीयाद्यप्रज्ञानसंवेदकसंवेद्यान्यतत्कालानि मदीयानि प्रज्ञानानि; मदीयप्रज्ञानत्वात्, आद्यमदीयप्रज्ञानवत्" ( )। एवं दुःखादयोऽपि पक्षीकर्त्तव्याः। एतच्च नित्यत्वेऽनुमानम्। तदेतद्दर्शयति—सद्योजाताद्येत्यादि। तदाद्यवदिति। तस्योत्तरकालभाविनो ज्ञानस्याद्यं तदाद्यम् ॥ १८५ ॥

विभुत्वसिद्धये प्रमाणयति—"अवनिजलानिलमनांसि विप्रतिपत्तिविषयभावापन्नानि दूरतरवर्त्तीनि मदीयेनात्मना सह सम्बध्यन्ते; मूर्त्तत्ववेगवत्त्वपरत्वापरत्वमिथःसंयोगविभागवत्त्वेभ्यः, मदीयशरीरादिवत् ( ) इति। तद्दर्शयति—मदीयेत्यादिना ॥ १८६ ॥

एवमित्यादिनोपसंहरति ॥ १८७ ॥

तदत्रेत्यादिना प्रतिविधत्ते। [G. 83] प्रथमे साधन इति 'ज्ञानानि च मदीयानि' (तत्त्व० १७७) इत्यादौ। तत्र सिद्धसाध्यता भवदीयप्रत्ययानामस्माभिर्भवच्छरीरादिव्यतिरेकिणा सर्वविदा श्रावकप्रत्येकबुद्धैस्तदन्यैश्च परचित्तवेदिभिर्वेदनाभ्युपगमात् ॥ १८८ ॥

---

1. ०निवर्त्त्यपि—पा०, गा०।

प्रकाशकानपेक्षं च स्वचिद्रूपं प्रजायते ।
अन्यविज्ञानमप्येवं साध्यशून्यं निदर्शनम् ॥ १८९ ॥
तदाकारोपरक्तेन यदन्येन प्रवेद्यते ।
तस्योदाहरणत्वेऽपि भवेदन्येन संशयः ॥ १९० ॥

---

यश्चापि 'पुरुषान्तरप्रत्ययवत्' इति साधर्म्यदृष्टान्तः, स साध्यविकल इति दर्शयन्नाह—प्रकाशकानपेक्षं चेत्यादि । यतः पुरुषान्तरीयकमपि ज्ञानं प्रकाशकान्तरानपेक्षं स्वसंविद्रूपमेवोपजायते । तेन तन्वादिव्यतिरिक्तसंवेदकसंवेद्यत्वेन साध्येन शून्यमिदं निदर्शनम् ॥ १८९ ॥

अथापि स्यात्—नान्यदीयं चित्तमात्रमुदाहरणत्वेनाभिप्रेतम्, किन्तु यस्मिन् विषये विज्ञानमागृहीततदाकारमुपजायते, तदिहोदाहरणम् ? इष्टमित्याह—तदाकारोपरक्तेनेत्यादि । एवमपि यत्स्वसंविद्रूपमेव ज्ञानं ज्ञानान्तरसंवेदनरहितमुत्पद्यते तेन संशयो [1]भवेद्, [1]अनैकान्तिको हेतुरिति यावत् । अथ तदपि स्वव्यतिरिक्तसंवेदकसंवेद्यमुदयव्ययधर्मकत्वप्रमेयत्वस्मर्यमाणत्वेभ्यो[2] विषयवदिति मतम् ? तदत्रापि साध्यविपर्यये बाधकाभावाद् व्यतिरेको न निश्चितः । उत्तरोत्तरज्ञानानुभवे चानवस्था । न ह्यव्यक्तव्यक्तिको विषयः सिद्ध्येत् । ततश्चैकविषयसिद्ध्यर्थं ज्ञानपरम्परामनुसरतः सकलमेव पुरुषायुषमुपयुज्येत । अथापि किं[3] [3]विज्ञानमनवस्थाभयात् स्वसंविदितरूपमेवोत्पद्यत इति ? यथा तेनैवोदयव्ययधर्मकत्वादीनां हेतूनामनैकान्तिकता, तद्वदेवान्येषामपि ज्ञानानां स्वसंवेदनत्वाभ्युपगमे कः प्रद्वेषः ! अथ तदसंविदितरूपमेवेष्यते ? एवमपि तदसिद्धौ सर्वेषां पूर्वज्ञानानामप्रसिद्धिः; अनभिव्यक्तव्यक्तिकत्वात् । ततश्च विषयोऽपि न प्रसिद्ध्येत् ।

येषां तु विज्ञानवादिनां मतम्—'सर्वमेव ज्ञानं ग्राह्यग्राहकवैधुर्यात् स्वयमेव प्रकाशते, न तु ज्ञानान्तरेण वेद्यते' इति, तान् प्रति साध्यविकलता दोषोऽकम्प्य एव । एवमन्येष्वपि कारणायत्तजन्मवत्त्वादिषु साधनेषु सिद्धसाध्यतादिदोषा वाच्याः ।

---

१–१. भवेदतो तै०—गा० सम्पादकः । २. ०स्मर्यमाणप्रमाणत्वेभ्यो—पा०, गा० । ३–३. किंचिज्ज्ञान०—पा०, गा० ।

## शङ्करस्वामिमतखण्डनम्

क्वचित् समाश्रितत्वं च यदीच्छादेः प्रसाध्यते ।
तत्र कारणमात्रं चेदाश्रयः परिकल्प्यते ॥ १९१ ॥
इष्टसिद्धिस्तदाधारस्त्वाश्रयश्चेन् मतस्तव ।
तदापि[1] गतिशून्यस्य निष्फलाऽऽधारकल्पना ॥ १९२ ॥
आश्रयो बदरादीनां कुण्डादिरुपपद्यते ।
गतेर्विबन्धकरणाद् विशेषोत्पादनेन वा ॥ १९३ ॥

---

यच्चापि 'सदादि' इत्यादि धर्मिविशेषणं कृतम्, तत्पूर्ववदनर्थकम्, न ह्यस्य प्रस्तुतसाध्यसिद्धावङ्गभावोऽस्ति । [G. 84] तथा हि—एतावता किं न गतम्, 'मदीयाः प्रत्यक्षादिप्रत्यया मदीयशरीरादिव्यतिरिक्तसंवेदकसंवेद्याः' इति । प्रत्यक्षानुमानादिप्रविभागेणापि धर्मिप्रभेदोऽनर्थक एव; 'मदीयाः प्रत्ययाः' इत्येतावतैव गतत्वात् । न चापि प्रतिवादिनो यथोक्तविशेषणविशिष्टो धर्मी सिद्ध इत्याश्रयासिद्धता च हेतूनाम् । अथापि विफलं विशेषणमुपादाय तत्साधनार्थमन्यदेव साधनमुच्यते ? तथा सति प्रकृतादर्थादप्रकृतसम्बद्धार्थमर्थान्तरं निग्रहस्थानं भवेत् ॥ १९० ॥

यच्चोक्तम्—'इच्छादयश्च' (तत्त्व० १७८) इत्यादि, तत्र यदि कारणमात्रमाश्रय इच्छादीनां साध्यते, तदा सिद्धसाध्यता । न हि निष्कारणा इच्छादयोऽस्माभिरिष्यन्ते; 'चतुर्भिश्चित्तचैत्ता हि' ( ) इति वचनात् । परिकल्प्यत इति । वर्ण्यत इत्यर्थः ॥ १९१ ॥

अथाधारलक्षण आश्रयः साध्यते, तदापि प्रतिज्ञार्थस्यानुमानबाधितत्वान्न तेन हेतोर्व्याप्तिः सिद्ध्यतीति दर्शयति—**तदाधार** इत्यादि । तेषामिच्छादीनामाधारः तदाधारः । मूर्त्तानां हि भावानां प्रसर्पणधर्माणां स्यादधःपातप्रतिबन्धादाधारकल्पना । ये तु सुखादयो गतिशून्याः, तेषामधःपतनासम्भवात् किं कुर्वन्नात्मादिराधारः स्यात् ! ॥ १९२ ॥

---

१. तथापि—पा०, गा० ।

नीरूपस्य च नाशस्य कार्यत्वं नैव युक्तिमत् ।
अतो विशेषणं व्यर्थं हेतावुक्तं परैरिह ॥ १९४ ॥

उद्द्योतकरमतखण्डनम्

मयेति प्रतिसन्धानमविद्योपप्लवादिदम् ।
क्षणिकेष्वपि भावेषु[1] कर्त्रेकत्वाभिमानतः[2] ॥ १९५ ॥

---

ननु यथा घटादयो बदरादीनामकिञ्चित्करा अप्याधाराः, तद्वदात्मा सुखादीनामाधारो भविष्यति ? इत्याह—आश्रय इत्यादि । गतेर्विघ्नन्धकरणादित्यक्षणिकपक्षे । विशेषोत्पादनेन वेति क्षणिकपक्षे । उपादानकारणसमानदेशोत्पादनं तत् । अयं द्विविधोऽपि प्रकार इच्छादीनां न सम्भवतीति न तेषां कश्चिदाधारो युक्तः ॥ १९३ ॥

यच्चापि 'वस्तुत्वे सति' इति विशेषणम्, तदनर्थकमेव; व्यवच्छेद्याभावादिति दर्शयन्नाह—नीरूपस्येत्यादि । [ G. 85 ] यदि हि विनाशस्य कार्यत्वं सम्भवेत्, तदा तद्व्यवच्छेदाय 'वस्तुत्वे सति' इति विशेषणं सार्थकं भवेत्; यावता तस्यावस्तुतया हेतुभिर्न किञ्चित् क्रियत इति कथं हेतुमत्ता भवेत् ! प्रयोगः—यदवस्तु न तत् कस्यचित् कार्यम्, यथा—शशविषाणम् । अवस्तु च नाश इति व्यापकविरुद्धोपलब्धेः । कार्यत्वे सति वस्तुत्वप्रसङ्गः सुखादिवत्—इतीदमत्र बाधकं प्रमाणम् ।

किञ्च—अभ्युपगमविरोधो भवताम् । तथा हि—कार्यमित्यात्मलाभाख्यात् स्वकारणसमवायात् सत्तासमवायाद्वाऽभिधानप्रत्ययौ भवतः । न च विनाशस्य द्रव्यादिस्वभावरहितस्य स्वकारणे समवायोऽस्ति, तत्र वा सत्तायाः; तस्य नीरूपत्वात् । अन्यथा ह्यसौ द्रव्यादिवदाश्रितोऽपि स्याद्, वस्तु चेति न हेतुविशेषणेन व्यवच्छेद्यो भवेत् । अतः 'वस्तुत्वे सति' इति विशेषणं व्यर्थम् ॥ १९४ ॥

'रूपादिप्रत्ययाः' ( तत्त्व० १८० ) इत्यादावाह—मयेत्यादि । 'मया दृष्टम्', 'मया श्रुतम्' इत्येवं यदेकज्ञातृनिमित्तत्वेन प्रत्ययानां घटनलक्षणं प्रतिसन्धानं तदेतदनैकान्तिकम्; यतः क्षणिकेष्वपि भावेषु भ्रान्तादेककर्तृत्वाभि-

---

१. सर्वेषु—पा०, गा० । २. ०दिभासतः—पा०, गा० ।

मिथ्याविकल्पतश्चास्मान्न युक्ता तत्त्वसंस्थितिः ।
सामर्थ्यभेदाद् भिन्नोऽपि भवत्येकनिबन्धनम् ॥ १९६ ॥
एकानुगामिकार्यत्वे पौर्वापर्यं विरुध्यते ।
रूपशब्दादिचित्तानां शक्तकारणसन्निधेः[1] ॥ १९७ ॥
एकानन्तरविज्ञानात् षड्विज्ञानसमुद्भवः ।
युगपद् वेद्यते व्यक्तमत इष्टप्रसाधनम् ॥ १९८ ।

मानतः प्रतिसन्धानसम्भवात् । तस्मादेवम्भूतात् प्रतिसन्धानान्न युक्ता वस्तुव्यवस्था ।

कथं पुनर्भवतः क्षणाः प्रतिसन्धाननिमित्ततामुपगच्छन्ति ? इत्याह—सामर्थ्यभेदादित्यादि । सामर्थ्यभेदात् = सामर्थ्यविशेषात् । अनेकोऽप्यर्थ एकाकारपरामर्शादिकार्यस्यैकस्य निबन्धनम् = कारणम्, यथा—गुडूच्यादयो ज्वरादिशमना इति पश्चाद्विस्तरेण प्रतिपादयिष्यति ॥ १९५–१९६ ॥

अथ भ्रान्तत्वमेव कथमस्य निश्चितम् ? इत्याह—एकानुगामीत्यादि । यदि ह्येकस्य पूर्वोत्तरकालानुयायिन आत्मादेर्नित्यस्य कार्यत्वमेषां नीलादिप्रत्ययानां स्यात्, तदा क्रमभावित्वमेषां विरुध्येत; अविकलकारणत्वेन युगपदेवोत्पादप्रसङ्गात् । न चापि नित्यस्य परापेक्षाऽस्ति; तस्य केनचिदनुपकार्यत्वात् ॥१९७॥

[G.86] किञ्च—सामान्येन कारणपूर्वकत्वमात्रं प्रसाध्यते तदा सिद्धसाध्यतेति दर्शयति—एकानन्तरेत्यादि । यत एकस्मादनन्तरविज्ञानात् समनन्तरप्रत्ययात् षण्णां चक्षुरादिविज्ञानानामुत्पादः स्पष्टं संवेद्यते । तथा हि—यदैव नर्त्तकीरूपं पश्यति तदैव मुरजादिशब्दं शृणोति, कुवलयादिगन्धं च जिघ्रति, कर्पूरादिरसमास्वादयति, व्यजनानिलादिस्पर्शं चानुभवति, वस्त्रादि च मनसाऽऽदातुं चिन्तयति ।

न चालातचक्रदर्शनवत्तद्दृष्टिराशुसञ्चारादिति युक्तं वक्तुम्; अस्पष्टप्रतिभासितत्वप्रसङ्गात् । तथा हि—दर्शनानां प्रतिसन्धानादयं सकृद्ग्रहाभिमानो भवता

1. ०सन्निधिः—जै० ।

क्रमिणां त्वेकहेतुत्वं नैवेत्युक्तमनन्तरम् ।
अतोऽनुमानबाधाऽस्मिन् व्याप्तेर्व्यक्तं समीक्ष्यते ॥ १९९ ॥
नर्त्तकीभ्रूलताभङ्गो नैवेकः परमार्थतः ।
अनेकाणुसमूहत्वादेकत्वं तस्य कल्पितम् ॥ २०० ॥
एककार्योपयोगित्वादेकशब्दस्य गोचरः ।
साध्योऽप्येवंविधोऽभीष्टो यदि सिद्धप्रसाधनम् ॥ २०१ ॥

---

वर्ण्यते, प्रतिसन्धानं च स्मृत्या क्रियते, सा चातीतविषयत्वादस्पष्टा, स्पष्टश्चायं सकृद्रूपादिप्रतिभासः संवेद्यते । किञ्च—सरः, रस इत्यादौ सुतरामाशु सकारादिवर्णग्राहिणां ज्ञानानामुदयोऽस्तीति. अत्रापि सकृद्ग्रहाभिमानः स्यात्, ततश्च न क्वचित् क्रमो व्यवसीयेत । एतच्च पश्चाद्विस्तरेण प्रतिपादयिष्यते । इह तु 'व्यक्तम्' इति वचनात् परिहारदिक् प्रदर्शितैव ॥ १९८ ॥

अथ नित्यैकरूपदार्थहेतुत्वादेषामेकनिमित्तत्वं प्रसाध्यते, तदा व्याप्तेरनुमानबाधा ? इति दर्शयति—क्रमिणामित्यादि । अनन्तरमिति । 'एकानुगामि' ( तत्व० १९७ ) इत्यादिना । तत्रेदं बाधनम्—ये सन्निहिता अप्रतिबद्धसामर्थ्यकारणास्ते युगपदेव भवन्ति, यथा—समग्रसामग्रीकाः सकृद्भाविनोऽङ्कुरादयः । सन्निहिताप्रतिबद्धसामर्थ्यकारणाश्च देवदत्तस्य रूपादिविषयाः प्रत्यया इति स्वभावहेतुः । न चैवं सम्भवति, तस्माद्विपर्ययः ॥ १९९ ॥

दृष्टान्तस्यापि साध्यविकलतेति दर्शयति—नर्तकीत्यादि । न हि नर्त्तकीभ्रूलतादिरेकोऽस्ति; तस्यानेकाणुसमूहत्वात् । यद्येवम्, कथमेकशब्दविषयत्वं तस्य भवति ? इत्याह—एकत्वं तस्य कल्पितमिति ॥ २०० ॥

[ G. 87 ] अथ कल्पनायाः किं निबन्धनम् ? इत्याह—एककार्योपयोगित्वादित्यादि । यस्मादसौ भ्रूलताभङ्ग एकस्मिन् कार्ये चक्षुर्विज्ञानादिक उपयुज्यते, तस्माद्भिन्नोऽप्येकशब्दविषयो भवति । अथापि स्याद्—अस्माभिरेवंविध एव कल्पितैकत्वः साध्योऽभिप्रेतः, तेन[1] साध्यविकलता दृष्टान्तस्य न

---

१. पा० पुस्तके नास्ति; अतः—गा० ।

बुद्धिचित्तादिशब्दानां व्यतिरिक्ताभिधायिता ।
नैवैकपदभावेऽपि पर्यायाणां समस्ति नः ॥ २०२ ॥
अतोऽनैकान्तिको हेतुर्ननूक्तं तद्विशेषणम् ।
उच्यते नैव सिद्धं तच्चेतःपर्यायतास्थितेः ॥ २०३ ॥
अहङ्काराश्रयत्वेन चित्तमात्मेति गीयते ।
संवृत्त्या वस्तुवृत्त्या तु विषयोऽस्य न विद्यते ॥ २०४ ॥

---

भवति ? इत्याह—साध्योऽपीत्यादि । एवं हि सिद्धसाध्यता; पूर्वापरीभूतानां संस्काराणामेकप्रत्ययनिमित्तानेकसत्त्वप्रज्ञप्तिविषयत्वात् ॥ २०१ ॥

यच्चोक्तम्--'बुद्धीन्द्रियादि' तत्त्व० १८२ इत्यादि, अत्राह—बुद्धिचित्तेत्यादि । एकपदत्वादित्यनैकान्तिको हेतुः । तथा हि—बुद्धिश्चित्तं ज्ञानमिन्द्रियमक्षं वेदना चित् तनुः कायः शरीरम्—इत्यादीनां बुद्धीन्द्रियवेदनाशरीरपर्यायाणामेकपदत्वेऽपि नास्मन्मतेऽस्ति तद्व्यतिरिक्तपदार्थाभिधायितेति ततो विपक्षाद्व्यावृत्त्यसिद्धेरनैकान्तिकत्वम् ।

ननु चेदमेवाशङ्क्य—'सिद्धपर्यायभिन्नत्वे सति' इति तस्य हेतोर्विशेषणमुक्तम्, तत्कथमनैकान्तिकता भवति ? तदत्राभिधीयते—असिद्धमेतद्धेतुविशेषणम्, कस्मात् ? चेतःपर्यायतास्थितेः । आत्मेत्येतस्य चित्तपर्यायत्वव्यवस्थानात् । यथोक्तम्—

"चित्तमेवाहङ्कारसंश्रयत्वादात्मेत्युपचर्यते" (      ) इति ।

आत्मेत्युपचर्यते, व्यवह्रियत इत्यर्थः । तेन यदुक्तमुद्द्योतकरेण—"मुख्यासम्भवादुपचारो न युक्तः" (      ) इति, तदभिप्रायापरिज्ञानादिति प्रतीतव्यम् । एतदेव गीयत इत्यनेन स्पष्टयति । तस्मादप्रसिद्धविशेषणो[1] हेतुः । एतच्च संवृत्त्या सविषयत्वमुपगम्यास्य हेतोरनैकान्तिकत्वमुक्तम् ।

यदि तु परमार्थेन तु बुद्ध्यादिव्यतिरिक्तार्थाभिधायित्वं प्रसाध्यते, तदा व्याप्तेरनुमानबाधितत्वादयुक्त एवायं हेतुरिति दर्शयन्नाह—वस्तुवृत्त्येत्यादि । अध्यारोपितार्थविषयत्वात् सर्वस्यैव शाब्दस्य [ G. 88 ] व्यवहारस्येति पश्चात् प्रतिपाद-

---

१. ०दसिद्ध०—पां०, गा० ।

नभस्तलारविन्दादौ यदेकं विनिवेश्यते ।
कारकादिपदं तेन व्यभिचारोऽपि दृश्यते ॥ २०५ ॥
संकेतमात्रभाविन्यो वाचः कुत्र न सङ्गताः ।
नैवात्मादिपदानां च प्रकृत्याऽर्थप्रकाशनम् ॥ २०६ ॥
प्राणादीनां च सम्बन्धो यदि सिद्धः सहात्मना ।
भवेत्तदा प्रसङ्गोऽयं युज्यतेऽसङ्गतोऽन्यथा ॥ २०७ ॥

---

यिष्यते । तेनास्यात्मशब्दस्य विषयो नास्त्येवेति कथं हेतोः साध्येन व्याप्तिर्भवेदिति भावः ॥ २०२–२०४ ॥

सविशेषणोऽप्यनैकान्तिको हेतुरिति दर्शयन्नाह—नभस्तलारविन्दादावित्यादि । यदा[1] हि गगनकुसुमादावत्यन्ताभावेन केनचित् कारकादिपदं निवेश्यते, तदा तस्योभयप्रसिद्धेः शरीरादिवाचकव्यतिरिक्तत्वे सत्येकपदत्वमस्ति । न च शरीरादिव्यतिरिक्तवस्तुविषयत्वमपीत्यनैकान्तिको हेतुः ॥ २०५ ॥

कथं पुनः कारकादिपदं निरुपाख्ये शक्यं नियोक्तुम् ? इत्याह—संकेतमात्रभाविन्य इत्यादि । स्वतन्त्रेच्छामात्रभावी हि सङ्केतः, तन्मात्रवाचिन्यश्च वाचः; तत्कथमासां क्वचिदपि प्रवृत्तिप्रसररोधो भवेत् ?

अथापि स्याद्—'असामयिकैकपदत्वात्' इत्ययं हेत्वर्थो विवक्षितः, तेन व्यभिचारो न भविष्यति ? इत्याह—नैवेत्यादि । न हि सङ्केतमन्तरेण शब्दानां प्रकृत्याऽर्थप्रकाशनमस्ति; अव्युत्पन्नस्यापि ततोऽर्थप्रतीतिप्रसङ्गात् । स्वेच्छया च नियोगाभावप्रसङ्गात्, सङ्केतवैयर्थ्यप्रसङ्गाच्च । तस्मादात्मादिपदानां नैव प्रकृत्याऽर्थप्रकाशनं सिद्धमित्यसिद्धो हेतुः । अथाविशेषास्पदपदार्थान्तर्भूतज्ञेयविषयत्वे सतीत्यपरं विशेषणमुपादीयते । यथोक्तं भाविविक्तेन—"एवमपि यथोक्तविशेषणासिद्धेरसिद्धो हेतुर्व्याप्त्यभावाच्चानैकान्तिकः" (        ) ॥ २०६ ॥

यच्चोक्तम्—"प्राणादिभिर्वियुक्तश्च" ( तत्त्व० १८४ ) इत्यादि, तत्राह—प्राणादीनां चेत्यादि । यदि हि प्राणादीनामात्मना सह तादात्म्यलक्षणः, तदुत्पत्ति-

---

1. यथा—पा०, गा० ।

न वन्ध्यासुतशून्यत्वे जीवद्देहः प्रसज्यते ।
प्राणादिविरहे ह्येवं तवाप्येतत् प्रसञ्जनम् ॥ २०८ ॥
न तावदिह तादात्म्यं भेदाङ्गीकरणात् तयोः ।
कार्यकारणता नापि 'यौगपद्यप्रसङ्गतः ॥ २०९ ॥
तदात्मनो निवृत्तौ हि तत्सम्बन्धविवर्जिताः ।
किममी विनिवर्तन्ते प्राणापानादयस्तनोः ॥ २१० ॥

---

लक्षणो वा कश्चित् सम्बन्धः सिद्धो भवेत्, तदात्मनिवृत्तौ शरीरे प्राणादिनिवृत्तिप्रसङ्गो युक्तिमान् भवेत् । अन्यथा [ G. 89 ] ह्यप्रतिबद्धस्य निवृत्तावन्यनिवृत्तिप्रसङ्गोऽसङ्गत एव स्याद्; अतिप्रसङ्गात् । न हि वन्ध्यापुत्रनिवृत्तौ तदसम्बद्धानां प्राणादीनां निवृत्तिर्भवति । तस्माद्यथा 'वन्ध्यासूनुनिवृत्तौ तदसम्बद्धानामपि प्राणादीनां निवृत्तिः प्राप्नोति, घटादिवत्' इति केनचित् प्रसङ्गापादनं क्रियमाणमनैकान्तिकं भवति, एवं तवाप्येतदात्मनिवृत्तौ प्र्णादिनिवृत्तिप्रसञ्जनमनैकान्तिकमेव; सम्बन्धासिद्धेरिति भावः ॥ २०७-२०८ ॥

कथं पुनः सम्बन्धासिद्धिः ? इत्याह—न तावदित्यादि । भेदाङ्गीकरणात्तयोरिति । तयोः = आत्मप्राणादिकयोर्न तादात्म्यलक्षणः सम्बन्धोऽस्ति; स्वभावभेदाभ्युपगमात् । तथा हि—अनित्या अव्यापिनो मूर्ताश्च प्राणादयः, तद्विपरीतस्त्वात्मा । नापि तदुत्पत्तिलक्षणः; प्राणादीनामविकलकारणत्वेन यौगपद्यप्रसङ्गात् । न चैतद्व्यतिरेकेण सम्बन्धान्तरमस्ति । तस्मात् सम्बन्धरहिताः प्राणादयः किमिति तनोः शरीराज्जीवनविशिष्टाद्विनिवर्त्तन्ते । नैव तेनानैकान्तिको हेतुरिति भावः । एतेनेच्छाद्वेषप्रयत्नसुखदुःखज्ञानादीनि यान्यात्मलिङ्गत्वेन परैरुक्तानि, तानि प्रतिषिद्धानि द्रष्टव्यानि; सम्बन्धासिद्धेः । प्रयोगः—'ये यत्र न प्रतिबद्धास्ते तस्य गमका न भवन्ति, यथा तिलादेर्बलाकादयः । न प्रतिबद्धाश्च प्राणादय आत्मनीति व्यापकानुपलब्धिः । न चासिद्धो हेतुः; पूर्वं द्विविधस्यापि सम्बन्धस्य निरस्तत्वात् । न चाप्यनैकान्तिकः; सर्वस्य सर्वगमकत्वप्रसङ्गात् । न चापि विरुद्धः; सपक्षे भावादिति'।

एवं च साधनैः सर्वैरात्मसत्त्वाप्रसिद्धितः।
नित्यव्यापित्वयोरुक्तं[1] साध्यहीनं निदर्शनम् ॥ २११ ॥
अन्यैः प्रत्यक्षसिद्धत्वमात्मनः परिकल्पितम्।
स्वसंवेद्यो ह्यहङ्कारस्तस्यात्मा विषयो मतः ॥ २१२ ॥
तदयुक्तम्; अहङ्कारे तद्रूपानवभासनात्।
न हि नित्यविभुत्वादिनिर्भासस्तत्र लक्ष्यते ॥ २१३ ॥

---

यच्चाप्याह—"कर्तुः प्रसिद्धिः करणप्रसिद्धेः" (          ) इति, तदसिद्धम्; न हि चक्षुरादीनां परमार्थेन करणत्वं सिद्धम्, विज्ञानोत्पत्तौ सर्वेषां हेतुभावस्य तुल्यत्वात्। स्वेच्छामात्रपरिकल्पितत्वाच्च कर्तृकरणव्यवहारस्येति। कर्तृत्वमात्रसाधने सिद्धसाध्यता; परिकल्पितस्यानिरस्तत्वात्। पारमार्थिककर्तृत्वसाधनेऽनैकान्तिकता; तथाभूतेन कर्त्रा क्वचिदपि चक्षुरादीनां प्रतिबन्धासिद्धेः ॥ २०९-२१० ॥

यच्चोक्तम्—"सद्योजातार्थविज्ञान०" ( तत्त्व० १८५ ) इत्यादि, तत्राह—एवं चेत्यादि। [G. 90] 'आद्यज्ञानवत्, मदीयशरीरवत्' इति यदेतन्निदर्शनमुक्तम्, तदुभयं साध्यधर्मविकलम्; आत्मनोऽसिद्धत्वात्। अतोऽनैकान्तिकता हेतोः ॥ २११ ॥

अन्यैरित्यादिना पुनरप्युद्द्योतकर-भाविविक्तादीनां पक्षमाशङ्कते। ते ह्येवमाहुः—"प्रत्यक्षत एवात्मा सिद्धः, तथा हि—[illegible] 'अहम्' इति ज्ञानं रूपादिज्ञानवत् प्रत्यक्षम्। अस्य च न रूपादिर्विषयः; तद्विज्ञानभिन्नप्रतिभासत्वात्। तस्मादन्य एव विषयः" इति ॥ २१२ ॥

तदयुक्तमित्यादिना प्रतिविधत्ते। असिद्धमहङ्कारस्यात्मविषयत्वम्; तदाकारशून्यत्वात्। प्रयोगः—यद्यदाकारशून्यं न तत्तद्विषयम्[2], यथा—चक्षुर्ज्ञानं न शब्दविषयम्। आत्माकारशून्यं च 'अहम्' इति ज्ञानमिति व्यापकानुपलब्धिः। न चायमसिद्धो हेतुरिति दर्शयति—न हीत्यादि। तथा हि—नित्यविभुत्वचेतन-

---

1. 'व्यापित्वयो'—इति पा० पुस्तके नास्ति। 2. तद्विषयम्—पा०, गा०।

गौरवर्णादिनिर्भासो व्यक्तं तत्र तु विद्यते ।
तत्स्वभावो न चाऽऽत्मेष्टो नायं तद्विषयस्ततः ॥ २१४ ॥
यदि प्रत्यक्षगम्यश्च सत्यतः पुरुषो भवेत् ।
तत्किमर्थं विवादोऽयं तत्सत्त्वादौ प्रवर्त्तते ॥ २१५ ॥
तथा हि निश्चयात्माऽयमहङ्कारः प्रवर्त्तते ।
निश्चयारोपबुद्ध्योश्च बाध्यबाधकता स्थिता ॥ २१६ ॥

---

त्वादिगुणोपेत आत्मेष्यते, न चात्राहम्प्रत्यये नित्यत्वादिप्रतिभासो लक्ष्यते; किन्तु गौरोऽहं मन्दलोचनः परिक्लिशस्तीव्रवेदनाभिन्नः— इत्यादिदेहावस्थासंस्पर्शेनोत्पत्ते- गौरवर्णादिलक्षणः प्रतिभासः प्रतीयते। तस्माद्देहाद्यवस्थासंस्पर्शेनोत्पद्यमानोऽहङ्कारो देहाद्यालम्बन एवेति ज्ञायते ।

व्यक्तमिति । स्पष्टम्; अस्खलद्वृत्तित्वात् । ततश्च यदुक्तमुद्द्योतकर- प्रभृतिभिः—"उपभोगायतने शरीरेऽयमात्मोपचारः, यथा—अनुकूले भृत्ये राजा ब्रूते—य एवाहं स एवायं मे भृत्यः" इति, तदपास्तं भवति । यथा हि — यद्ययं गौणः स्यात्, तदास्खलद्वृत्तिर्भवेत् । न हि लोके सिंहमाणवकयोर्मुख्यारोपितयो- र्द्वयोरपि 'सिंहः' इत्यस्खलिता बुद्धिर्भवति । 'मदीयाः शरीरादयः' इति व्यतिरेक- दर्शनात् स्खलद्वृत्तिरहङ्कारः शरीरादिष्विति चेत् ? न; आत्मन्यपि स्खलद्- वृत्तित्वप्रसङ्गात् । तत्रापि हि मदीय आत्मेति व्यतिरेको दृश्यते । कल्पितोऽत्र भेद इति चेत् ? इतरत्रापि समानमस्तु । तर्हि 'गौरोऽहम्' इत्यादिप्रत्ययो मुख्यः, तथाऽपि [ G, 91 ] कस्मादात्माऽस्य विषयो न भवति ? इत्याह— तत्स्वभाव इति । गौरादिस्वभावः; तस्य रूपादिगुणासम्भवात् ॥२१३-२१४॥

एवं तावत् 'तदाकारशून्यत्वान्नात्मविषयोऽहङ्कारो युक्तः' इति वर्णितम् । तत्र विवादभावप्रसङ्गाच्च न युक्त इति दर्शयति—यदीत्यादि । तस्यात्मनः सत्त्व- नित्यत्वविमुक्त्यादौ ॥ २१५ ॥

स्यादेतद्—यथा भवतां प्रत्यक्षीकृतेऽपि नीलादौ तत्स्वभावाव्यतिरिक्ते[1] क्षणि- कत्वादौ विवादः प्रवर्त्तते, तथाऽऽत्मन्यपि भविष्यति ? इत्याह—तथा हीत्यादि ।

---

१. तत्स्वभावाव्यति क्षणि०—पा० ।

स्वपक्षस्थापनम्

तस्मादिच्छादयः सर्वे नैवात्मसमवायिनः ।
क्रमेणोत्पद्यमानत्वाद् बीजांकुरलतादिवत् ॥ २१७ ॥
अथ वाऽऽध्यात्मिकाः सर्वे नैरात्म्याक्रान्तमूर्त्तयः ।
वस्तुसत्त्वादिहेतुभ्यो यथा बाह्या घटादयः ॥ २१८ ॥
सात्मकत्वे हि नित्यत्वं तद्धेतूनां प्रसज्यते ।
नित्याश्चार्थक्रियाऽशक्ता नातः सत्त्वादिसम्भवः ॥ २१९ ॥

---

युक्तो हि नीलादौ प्रत्यक्षेण गृहीतेऽपि तदव्यतिरिक्ते क्षणिकत्वादौ विवादः; तस्य प्रत्यक्षस्य निर्विकल्पत्वेनानिश्चयात्मकतया[1] क्षणिकत्वादेरनिश्चितत्वात् । न च निश्चयेन विषयीकृते वस्तुनि तद्विपरीताकारग्राहिणः समारोपप्रत्ययस्य प्रवृत्तिरस्ति, येन विवादो भवेत्; तयोः सहावस्थायित्वेन बाध्यबाधकभावात् । इयमेव हि निश्चयानां स्वार्थप्रतिपत्तिर्यत् तन्निश्चयनं ते चेन्न निश्चिन्वन्ति, न गृह्णन्त्येवेति प्राप्तम् ॥ २१६ ॥

तदेवं परपक्षं निराकृत्य स्वपक्षं स्थापयन्नाह—तस्मादित्यादि । प्रयोगः—ये क्रमेणोत्पद्यन्ते ते नात्मसमवायिनः, यथा—बीजाङ्कुरलतादयः । क्रमेणोत्पद्यन्ते च सुखादय इति विरुद्धव्याप्तोपलब्धेः । आत्मसमवायित्वविरुद्धेनानात्मसमवायित्वेन क्रमोत्पत्तेर्व्याप्तत्वात् । सन्निहिताविकलकारणत्वाद्युगपदुत्पत्तिप्रसङ्गो विपर्यये बाधकं प्रमाणम् ।

अथ वा—ये वस्तुत्वकृतकत्वोत्पत्तिमत्त्वादिधर्मोपेताः, ते सर्वे निरात्मानः; यथा—बाह्या घटादयः । वस्तुत्वादिधर्मोपेताश्चाध्यात्मिका जीवच्छरीरमनोबुद्धिदुःखसुखादय इति स्वभावहेतुः ॥ २१७–२१८ ॥

[G 92] कथं पुनरत्र व्याप्तिः सिद्धा ? इत्याह—सात्मकत्वे इत्यादि । यदि सात्मकत्वम् = आत्माधिष्ठितत्वं देहादीनां भवेत्, तदैषामात्मा हेतुः स्यात् । न ह्यकारणमधिष्ठाता युक्तः; अतिप्रसङ्गात् । ततश्च तद्धेतूनाम् = आत्महेतुकानां शरीरादीनामविकलकारणतया नित्यत्वम् = अक्रमित्वं प्रसज्येत ।

---

१. ०निश्चायकतया—पा०, गा० ।

उद्द्योतकरमतखण्डनम्

घटादिषु समानं च यन्नैरात्म्यं[1] निषिध्यते ।
परैर्जीवच्छरीरेऽस्मिंस्तदस्माभिः प्रसाध्यते ॥ २२० ॥

---

स्यादेतद्—यदि नाम नित्यत्वमेषां प्रसक्तम्, तथापि वस्तुत्वादिकमनुवृत्तमेव ? इत्याह—नित्याश्चेत्यादि । नित्याश्च सन्तः शरीरादयोऽर्थक्रियायामशक्ताः । प्रसज्यत इति प्रकृतमर्थाद्वचनपरिणामेन सम्बध्यते; नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति भावः । अर्थक्रियासामर्थ्यनिवृत्तौ च वस्तुत्वनिवृत्तिः; अर्थक्रियासामर्थ्यलक्षणत्वाद् वस्तुनः । वस्तुत्वनिवृत्तौ सत्त्वादीनामपि वस्तुधर्माणां निवृत्तिरिति सिद्धा व्याप्तिः ॥ २१९ ॥

उद्द्योतकरस्त्वाह—"अथ निरात्मकमिति कोऽर्थः साध्यत्वेनेष्टः ? यदि तावदात्मनोऽनुपकारकमिति ? न दृष्टान्तोऽस्ति । न हि किञ्चिदात्मनोऽनुपकारकमस्ति । अथात्मप्रतिषेधः— आत्मा शरीरं न भवतीति ? कस्य चात्मा शरीरम् । उत्तरपदविषयत्वाच्च निसः किं सात्मकमिति वाच्यम् ? न ह्यसत्युत्तरपदे निसः प्रयोगं पश्यामः, यथा निर्मक्षिकमिति । अथ शरीर आत्मा प्रतिषिध्यते ? सिद्धं साधयसि । कस्य वा शरीर आत्मा विद्यते ? अथ शरीरमात्मसम्बन्धि[2] न[2] भवतीति ? पुनर्दृष्टान्तो नास्ति । सर्वे चैते विशेषप्रतिषेधाः, विशेषप्रतिषेधाच्च सामान्यं गम्यते । एवं सति यत्प्रतिषेद्धव्यं तदभ्यनुज्ञातं भवति । अथात्मशब्दः शब्दत्वादनित्यविषय इति साध्यते ? तथापि नित्यशब्देनानैकान्तिकः । शरीरादीनां चोपचारादात्मवाच्यत्वात् सिद्धसाधनम् । अथ शरीरादिव्यतिरिक्तानित्यपदार्थविषयत्वेनानित्यविषय आत्मशब्दः साध्यते ? तथापि रूपादिव्यतिरिक्तविषयाभ्युपगमाद्विरोधः" ( ) इति ।

तदेतत् प्रतिविधत्ते—घटादिष्वित्यादि । तदेतद्भवतोऽपि तुल्यं चोद्यम् । तथा हि—घटादिषु बाह्येषु आत्मानधिष्ठितत्वेन तदुपभोगानायतनत्वेन वा नैरात्म्यं भवद्भिरपीष्यत एव; अन्यथा नेदं निरात्मकं [3]जीवच्छरीरमप्राणादिमत्त्व-

---

१. यन्नैरात्मा—पा० । २–२. आत्मसम्बन्धेन—पा० ।
३. जीवशरीर०—पा०, गा० ।

प्रसङ्गाद् घटादिवदिति प्रसङ्गे दृष्टान्तत्वेन तेषामुपादानं न [G. 93] स्यात्। ततश्च तत्रापि घटादिषु तुल्यं चोद्यम्—'कथमेषां नैरात्म्यं यदि तावदात्मनोऽनुपकारकम्' इत्यादि। तस्माद्येन प्रकारेण—आत्मानधिष्ठितत्वेन वा तदुपभोगानायतनत्वेन वा तेषु घटादिषु बाह्येषु सर्वेषु साधारणं नैरात्म्यं भवतामपि प्रसिद्धम्। यच्च जीवच्छरीरे भवद्भिर्निषिध्यते—नेदं निरात्मकं जीवच्छरीरमिति, यस्य निषेधाज्जीवच्छरीरमेव सात्मकमुपगम्यते, न मृतशरीरघटादय इति, तदेवास्माभिः प्रसाध्यते—निरात्मकं जीवच्छरीरं वस्तुत्वादिभ्य इति। तस्मात् 'आत्मनोऽनुपकारकम्' इत्यादिविकल्पोऽनास्पद एव; भवतामपि नैरात्म्यस्य प्रसिद्धत्वात्।

किञ्च—यत्तावदुक्तमात्मानुपकारित्वसिद्धौ—'न दृष्टान्तोऽस्ति' इति, तदसम्यक्; तथा हि—शक्यमेवं प्रसाधयितुम्—यो यस्य स्वभावातिशयं नाधत्ते नासौ तस्योपकारी, यथा—विन्ध्यो हिमवतः। नादधते[1] चात्मनो नित्यैकरूपस्य स्वभावातिशयं शरीरादय इति व्यापकानुपलब्धेः। न चासिद्धो हेतुः; स्वभावातिशयस्यात्माव्यतिरिक्तत्वात्। तदाधाने सत्यात्मन एवाऽऽधानं स्यात्, ततश्चानित्यत्वप्रसङ्गः। व्यतिरेके च स्वभावातिशयस्य सम्बन्धनिबन्धनाभावात् 'तदीयोऽसौ' इति सम्बन्धो न सिद्ध्येत्। तस्मान्नित्यस्य न कश्चिदुपकारी सम्भवति; तस्य तत्राकिञ्चित्करत्वात्।

यच्चोक्तम्—'कस्य चात्मा शरीरम्' इति, तदप्यसम्यक्; सन्ति हि केचिदेवंविधा ये शरीरादीनात्मपरिणामरूपान् वर्णयन्ति, यथा—उपनिषद्वादिनः। अतस्तान् प्रति[2] प्रतिषिध्यते।

यच्चोक्तम्—'उत्तरपदार्थविषयत्वान्निसः किं सात्मकमिति वाच्यम्' इति, तदप्यसङ्गतम्; न ह्युत्तरपदार्थः सन्नेव निषिध्यते, किं तर्हि? समारोपितः; सतः प्रतिषेद्धुमशक्यत्वात्। ततश्च योऽसौ परेण भ्रान्त्या समारोपितोऽर्थः स एवोत्तरपदार्थो भवति; यतस्तमेवानूद्य परस्य मिथ्याज्ञानत्वमाख्यापयितुं प्रतिषेधः क्रियते। अन्यथा हि 'अक्षणिकाः प्रदीपादयः' इत्यादौ बौद्धपरिकल्पित-

१. नाधत्ते—पा०, गा०। २. जै०, पा० पुस्तकयोर्नास्ति। एवमग्रेऽपि।

### आत्मनः कर्तृत्वभोक्तृत्वादिनिरासः

इत्थमात्माप्रसिद्धौ च प्रक्रिया तत्र या कृता ।
निरास्पदैव सा सर्वा वन्ध्यापुत्र इव स्थिता ॥ २२१ ॥

---

क्षणिकत्वनिषेधे भवता क्रियमाणे चोद्यमेतदापतत्येव—न ह्यसत्युत्तरपदे नञः प्रयोगं पश्याम इति ।

यच्चोक्तम्—'कस्य वा शरीर आत्मा विद्यते' इति, तदप्यसम्यक्; तथा हि येषां दर्शनम्—अङ्गुष्ठपर्वार्धश्यामाकादिफलप्रमाण आत्मेति, तेषां मतेनात्मनो मूर्तत्वाच्छरीरस्थितिरस्त्येवेति, तान्प्रति प्रतिषेधो युज्यत एव ।

यच्चोक्तम्—'शरीरस्यात्मसम्बन्धित्वनिषेधे दृष्टान्तो नास्ति' इति, तदसिद्धम्; परस्परमुपकार्योपकारकत्वाभावाद्विन्ध्यहिमवतोरिव नात्मशरीरयोः सम्बन्धोऽस्तीति पूर्ववत् प्रसाधयितुं शक्यत्वात् ।

यच्चोक्तम्—'विशेषप्रतिषेधाच्च सामान्यं गम्यते' इति, तदनेकान्तम्; भवद्भिः प्रदीपादीनां क्षणिकत्वप्रतिषेधेऽपि कस्यचित् क्षणिकत्वसामान्येनानभ्युपगमात् । अथापि स्यात्—इष्यत [ G. 91 ] एवास्माभिरचिरकालावस्थायित्वनिबन्धना प्रदीपादौ क्षणिकशब्दप्रवृत्तिः, अतः सामान्येन क्षणिकत्वं सिद्धमेवेति ? यद्येवम्; आत्मशब्दप्रवृत्तिरप्यस्माभिरहङ्कारसन्निसृते[1] चेतसीष्टैवेति सिद्धः सामान्येनात्मा ।

यच्चोक्तम्—अथात्मशब्दोऽनित्यविषय[2] इत्यादिपक्षद्वयम्, तदप्यसङ्गतमेव; अनभ्युपगमात् । न ह्यात्मशब्दस्य कश्चित् परमार्थेन विषयोऽभ्युपगतः, नापि रूपादिव्यतिरिक्तः, न चापि नित्यशब्दस्य परमार्थेन कचिन्नित्ये वस्तुनि वृत्तिः सिद्धा, येन व्यभिचारः स्यात् । नापि शरीरादिष्वात्मशब्दस्योपचाराद् वृत्तिः; अस्खलद्गतित्वादित्युक्तम् । अतो न प्रसिद्धसाधनम् ॥ २२० ॥

तदेवमात्माख्यस्य धर्मिणः प्रमाणव्याहतत्वेनाप्रसिद्धत्वात् तत्र या कर्तृत्वभोक्तृत्वादिप्रक्रिया भवद्भिरुपचरिता, सा वन्ध्यापुत्र इव निरास्पदेति न पृथग्दूषणमस्याः क्रियते; आश्रयनिराकरणेनैवास्याः प्रतिक्षिप्तत्वात् ।

---

१. ०संमिश्रिते—पा०, गा० । २. ०अनित्यत्वविषय—पा०, गा० ।

## २. मीमांसकपरिकल्पितात्मपरीक्षा

### ( पूर्वपक्षः )

### मीमांसकमतोपन्यासः

व्यावृत्त्यनुगमात्मानमात्मानमपरे पुनः ।
चैतन्यरूपमिच्छन्ति चैतन्यं बुद्धिलक्षणम् ॥ २२२ ॥
यथाऽहेः कुण्डलावस्था व्यपैति तदनन्तरम् ।
सम्भवत्यार्जवावस्था सर्पत्वं त्वनुवर्त्तते ॥ २२३ ॥

---

कृतनाशाकृताभ्यागमदोषश्च यथा न भवति तथा कर्मफलसम्बन्धपरीक्षायां प्रतिपादयिष्यते ॥ २२१ ॥

इति नैयायिकवैशेषिकपरिकल्पितात्मपरीक्षा

मीमांसकपरिकल्पितात्मनिराकरणमाह—व्यावृत्त्यनुगमात्मानमित्यादि । व्यावृत्तिः = सुखदुःखाद्यवस्थानां परस्परतो भेदः[1], अनुगमः = चैतन्यद्रव्यत्व-सत्त्वादीनामनुवृत्तिः, तावेतौ व्यावृत्त्यनुगमावात्मा स्वभावो यस्येति विग्रहः । एतदुक्तं भवति—सुखादिरूपेण व्यावृत्तं सत्त्वादिरूपेणानुगतमात्मानं चिद्रूपमपरे जैमिनीया वर्णयन्ति । तच्च चैतन्यं न बुद्धिव्यतिरेकेणान्यत्, यथा साङ्ख्यै-रिष्यते, किं तर्हि ? बुद्धिरेवेति दर्शयति—चैतन्यं बुद्धिलक्षणमिति । बुद्धिलक्षणम्, बुद्धेः स्वरूपमित्यर्थः । बुद्धिव्यतिरेकेणापरस्य चिद्रूपत्वाप्रतीते-रिति भावः ॥ २२२ ॥

कथं पुनरेकस्यात्मनः परस्परविरुद्धं व्यावृत्त्यनुगमात्मकं स्वभावद्वयं युज्यते ? इत्याह—यथाऽहेरित्यादि । [ G. 95 ] यथा किलाहेः = सर्पस्यैक-स्यापि सतः कुण्डलावस्थानिवृत्तावार्जवावस्थाप्रादुर्भावः, सर्पत्वं पुनरवस्थाद्वयेऽ-प्यनुवर्त्तते; तथाऽऽत्मनोऽपि नित्यचैतन्यस्वभावस्यैकस्यापि सतो नाशेपस्वभाव-विगमः, नापि नैयायिकादिपरिकल्पितात्मवदशेषस्वभावानुगमः, किं तर्हि ? सुखाद्यवस्था निवर्त्तन्ते प्रवर्त्तन्ते च, चैतन्यरूपं तु सर्वत्रानुयायीत्यतो न विरोध इति समुदायार्थः ।

---

1. भेदाः—पा०, गा० ।

तथैव नित्यचैतन्यस्वभावस्यात्मनोऽपि न।
निःशेषरूपविगमः सर्वस्यानुगमोऽपि वा ॥ २२४ ॥
किन्त्वस्य विनिवर्त्तन्ते सुखदुःखादिलक्षणाः।
अवस्थास्ताश्च जायन्ते चैतन्यं त्वनुवर्त्तते ॥ २२५ ॥
स्यातामत्यन्तनाशे[1] हि[1] कृतनाशाकृतागमौ।
सुखदुःखादिभोगश्च नैव स्यादेकरूपिणः ॥ २२६ ॥
न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते।
ततोऽवस्थावतस्तत्त्वात् कर्तैवाप्नोति तत्फलम् ॥ २२७ ॥

---

अवयवार्थस्तूच्यते—नित्यचैतन्यस्वभावस्येति। नित्यं चैतन्यं स्वभावो यस्येति विग्रहः। सर्वस्येति। रूपस्येति शेषः। अनुगमोऽपि वेति। नेति प्रकृतेन सम्बन्धः। ताश्चेति सुखदुःखाद्यवस्थाः ॥ २२३–२२५ ॥

अथ कस्मादेकान्तेन व्यावृत्तिपक्ष एव नाश्रीयते, यथा बौद्धैर्निरन्वयविनाशवादिभिरिष्यते? एकान्तिको वाऽन्वयः, यथा नैयायिकादिभिराश्रीयते? इत्याह—स्यातामित्यादि। यदि हि निरन्वयो विनाशः स्यात्, तदा कृतस्य कर्मणो नाशः स्यात्; कर्तुः फलानभिसम्बन्धात्। अकृताभ्यागमश्च स्यात्, अकर्तुः फलाभिसम्बन्धनात्। एकरूपत्वे चात्मनः सुखदुःखादिभोगो न स्यात्; आकाशवत्; अभोक्त्रवस्थातो भोक्त्रवस्थायां विशेषाभावात्। तथा चोक्तं कुमारिलेन—

"तस्मादुभयहानेन व्यावृत्त्यनुगमात्मकः।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत्" ॥
(श्लो० वा०, आ० २८) इति ॥ २२६ ॥

ननु चोभयरूपे पुंसि याऽवस्था कर्त्री न सा भोक्त्रीति तावेव कृतनाशाकृताभ्यागमाविहापि प्राप्तौ? इत्याह—न चेत्यादि। [G. 96] न हि पुंसः कर्तृत्वभोक्तृत्वे अवस्थां समाश्रिते, किन्तु पुरुषमेव; यस्मात् पुमानेव

---

१–१. स्यातां ह्यत्यन्तनाशेऽस्य–पा०, गा०।

### आत्मास्तित्वसाधकं प्रमाणम्

पुमानेवंविधश्चायं प्रत्यभिज्ञानभावतः ।
प्रमीयते प्रबाधा च नैरात्म्यस्यामुनैव हि ॥ २२८ ॥
अहं वेद्मीत्यहम्बुद्धिर्ज्ञातारं प्रतिपद्यते ।
स चात्मा यदि वा ज्ञानं स्यादेकान्तविनश्वरम् ॥ २२९ ॥
यद्यात्मा विषयस्तस्याश्चतुरस्रं तदाऽखिलम् ।
क्षणिकज्ञानपक्षे तु सर्वमेवातिदुर्घटम् ॥ २३० ॥
तथा हि 'ज्ञातवान्[1] पूर्वमहमेव च सम्प्रति ।
अहमेव प्रवेद्मीति या बुद्धिरुपजायते ॥ २३१ ॥

---

करोति भुङ्क्ते च, न त्ववस्था । ततः = तस्मात्[2], अवस्थावतः पुरुषस्य, तत्त्वात्—अपरित्यक्तपूर्वरूपत्वात्, कर्त्तैव तत्फलम् = तस्य कर्मणः फलमाप्नोतीत्यदोषः ॥ २२७ ॥

किं पुनरस्यात्मनोऽस्तित्वे साधकं प्रमाणम् ? इत्याह—पुमानित्यादि । 'अहमेव ज्ञातवान्, अहमेव वेद्मि' इत्यादेरेककर्तृविषयस्य प्रत्यभिज्ञानस्य भावतः सत्त्वात्, आत्मा प्रसिद्धः । अमुनैव च प्रत्यभिज्ञानेन बौद्धादिपरिकल्पितस्य नैरात्म्यस्य बाधापि सिद्धा । यथोक्तम्—

"तेनास्मात् प्रत्यभिज्ञानात् सर्वलोकावधारितात् ।
नैरात्म्यवादबाधः स्यात्" ॥ (श्लो० वा०, आ० १३६) इति ॥२२८॥

कथं पुनः प्रत्यभिज्ञानप्रत्ययत एतद् द्वयं प्रसिध्यति ? इत्याह—अहमित्यादि । [ G. 97 ] 'अहं वेद्मि' इत्ययमहम्प्रत्ययो ज्ञातारं प्रतिपद्यते—इत्यत्राविवाद एव; वेद्मीति कर्तृप्रत्ययसामानाधिकरण्यात् । स च ज्ञाता भवन्नात्मा वा भवेत्, ज्ञानं वा भवत् परिकल्पितमेकान्तविनश्वरं क्षणिकमिति कल्पनाद्वयम् । तत्र यद्यात्मेति पक्षः, तदाखिलं चतुरस्रम्, सर्वं[3] शोभनमित्यर्थः[3]; अभिमतार्थप्रसिद्धेः । अथ ज्ञानमिति पक्षः, तदा सर्वमतिदुर्घटम् । तथा हि—'अहं ज्ञातवान्, अह-

---

१. ज्ञानवान्—जै० । २. तस्मात्, ( तस्य )—गा० ।
३–३. पा०, गा० पुस्तकयोर्नास्ति ।

तस्या ज्ञानक्षणः को नु विषयः परिकल्प्यते ।
अतीतः साम्प्रतः किं वा किं वासावथ सन्ततिः ॥ २३२ ॥
तत्राऽऽद्ये विषये [1]ज्ञाते ज्ञातवानिति युज्यते ।
जानामीति न युक्तं तु[2] नेदानीं वेत्त्यसौ यतः ॥ २३३ ॥
वर्त्तमाने तु विषये प्रवेद्मीत्युपपद्यते ।
ज्ञातवानित्यसत्यं तु नैवासीत् प्रागिदं यतः ॥ २३४ ॥
अत एव द्वयं ग्राह्यं नैव तस्याः प्रकल्प्यते ।
न ह्युभौ ज्ञातवन्तौ वा जानीतो वाधुना पुनः ॥ २३५ ॥
सन्तानोऽपि न तद्बाह्यो द्वितयस्याप्यसम्भवात् ।
न ह्यसौ [3]ज्ञातवान् पूर्वमवस्तुत्वान्न वाधुना ॥ २३६ ॥
तस्मादयमहङ्कारो वर्त्तते यत्र गोचरे ।
उक्तादन्यत्र सिद्धोऽसावात्मा शाश्वतरूपवान् ॥ २३७ ॥

---

मेव च साम्प्रतं वेद्मि' इति योऽयमेककर्तृप्रत्यवमर्शेनाहम्बुद्धिरुपजायते, तस्या विज्ञानक्षणो विषयत्वेन कल्प्यमानः—कदाचिदतीतो वा कल्प्यते, यद्वा साम्प्रतो वर्तमानः, उभौ[4] वाऽतीतसाम्प्रतौ[4], यद्वा सन्ततिरिति चत्वारः पक्षाः ।

तत्राद्ये—अतीते ज्ञाने विषयत्वेन कल्प्यमानः 'ज्ञातवान्' इत्ययमाकारावसायो युज्यते; पूर्वं तेन ज्ञातत्वात् । सम्प्रति जानामीत्येतत्तु न युक्तम्; न ह्यसावतीते[5] ज्ञानक्षण[5] इदानीं वर्त्तमानकाले वेत्ति; तस्य पूर्वनिरुद्धत्वात् । अथ वर्त्तमानं विषय इति द्वितीयः पक्षः, तदा वेद्मीत्येतद्युक्तम्; इदानीं तस्य वेदकत्वात् । ज्ञातवानित्येवमाकारग्रहणं तु न युक्तम्; कस्मात् ? नैवासीत् प्रागिदं यतः । इदमिति वर्त्तमानं ज्ञानम् । अत एव—अस्या बुद्धेर्वैमुख्येन प्रवृत्तेः, नातीतं साम्प्रतं च विज्ञानद्वयं ग्राह्यमिति सिद्धम् । न हि वर्त्तमानातीतावुभौ ज्ञानक्षणौ[6] ज्ञातवन्तौ, नापि साम्प्रतं जानीतः । किं तर्हि ? एको ज्ञातवान्, अपरो जानाति । अत एव

---

१. ज्ञाने—जै० । २. च—पा०, गा० ।
३. ज्ञानवान्—जै० । ४–४. उतातीतसाम्प्रतौ—पा०, गा० ।
५–५. अतीतज्ञाना०—पा०, गा० । ६. ज्ञानलक्षणौ—पा०, गा० ।

आत्मनः शाश्वतत्वसाधनम्

व्यतीताहंकृतिर्ग्राह्यो[1] ज्ञाताऽद्याप्यनुवर्त्तते ।
अहम्प्रत्ययगम्यत्वाद् इदानीन्तनबोद्धृवत् ॥ २३८ ॥
एष वा ह्यस्तनो ज्ञाता ज्ञातृत्वात्तत एव वा ।
ह्यस्तनज्ञातृवत् तेषां प्रत्ययानां च साध्यते ॥ २३९ ॥
एकसन्तानसम्बद्धज्ञात्रहम्प्रत्ययत्वतः[2] ।
ह्यस्तनाद्यतनाः सर्वे तुल्यार्था एकबुद्धिवत् ॥ २४० ॥

---

सन्तानोऽपि तयाऽहम्बुद्ध्या ग्राह्यो न भवति, द्वितयस्य = अतीतवर्त्तमानज्ञान-क्रियाद्वयस्यासम्भवात् । तथा हि— नासौ सन्तानो ज्ञातवान् पूर्वम्, नाप्यधुना जानाति; तस्य कल्पितत्वेनावस्तुत्वात् । न चावस्तुनो ज्ञातृत्वं भवति, तस्य वस्तु-धर्मत्वात् । तस्माद् यथोक्तज्ञानव्यतिरेकेण यत्र विषयेऽयमहङ्कारो वर्त्तते स आत्मेति सिद्धम् ॥ २२९–२३७ ॥

अथ शाश्वतरूपत्वमस्य कथं सिद्धम् ? इत्याह—व्यतीतेत्यादि । [ G. 98 ] योऽतीताहम्प्रत्ययगम्यः[3] सोऽद्याप्यनुवर्त्तते, यथेदानीन्तनो बोद्धा अहम्प्रत्ययगम्यश्च[4] व्यतीताहङ्कारविषयो बोद्धेति स्वभावहेतुः । अथ वा—यो ज्ञाता अहम्प्रत्ययबाह्यो वा स व्यतीताहंकृतिर्ग्राह्यः; यथा ह्यस्तनो ज्ञाता । अहम्प्रत्यय-गम्यश्चायमिदानीन्तनो बोद्धेति स्वभावहेतुः ॥ २३८–२३९ ॥

एष वेति । इदानीन्तनो बोद्धा । तत एवेति । अहम्प्रत्ययगम्यत्वात् । एवं ज्ञातारं धर्मिणं कृत्वा प्रयोगो दर्शितः, साम्प्रतमहम्प्रत्ययानां साध्यधर्मितां कृत्वा प्रयोगान्तरं दर्शयन्नाह—तेषामित्यादि । तेषामिति अतीताद्यतनानाम-हम्प्रत्ययानाम् । साध्यतेति । साध्यधर्मितेत्यर्थः ।

कथम् ? इत्याह—एकसंन्तानेत्यादि । 'ह्यस्तनाद्यतनाः सर्वे अहम्प्रत्ययाः' इत्ययं साध्यधर्मिनिर्देशः । 'तुल्यार्थाः' इति साध्यधर्मः । एकविषया इत्यर्थः । एकेन देवदत्तादिसन्तानेन सम्बद्धो यो ज्ञाता तत्र तस्य वा येऽहम्प्रत्यया एक-

---

१. ०कृतिश्चाद्यो–पा०, गा० । २. ०सम्बन्ध०—पा०, गा० ।
३. योऽहम्प्रत्यय०—पा०, जै० । ४–४. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

(उत्तरपक्षः,

तदत्र चिन्त्यते नित्यमेकं चैतन्यमिष्यते ।
यदि बुद्धिरपि प्राप्ता तद्रूपैव तथा सति ॥ २४१ ॥

कुमारिलमुखेनैव तन्मतोपन्यासः

बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य च ।
नित्यत्वमेकता चेष्टा भेदश्चेद्[1] विषयाश्रयः ॥ २४२ ॥

(श्लो० वा०, श० अ० ४०४)

---

सन्तानसम्बद्धज्ञात्रहम्प्रत्ययाः, तद्भावस्तत्त्वम् । अयं च हेतुनिर्देशः । अहम्प्रत्ययत्वमात्रं पुरुषान्तरीयेष्वप्यहङ्कारेषु प्रवर्त्तते— इत्यतोऽनैकान्तिकत्वपरिहारार्थमेकसन्तानसम्बद्धज्ञातृविषयत्वं हेतुविशेषणं कृतम् । एकबुद्धिवदिति दृष्टान्तः । तेषामेवाहम्प्रत्ययानां मध्ये विवक्षितैकबुद्धिवदित्यर्थः ॥ २४० ॥

तदत्रेत्यादिनोत्तरपक्षमारभते । यदि हि चैतन्यं नित्यैकरूपमङ्गीक्रियते, तदा बुद्धिरपि चैतन्यरूपाव्यतिरेकान्नित्यैकरूपा प्राप्नोति । न चैवमिष्टम्; अतोऽभ्युपगमविरोधः प्रतिज्ञायाः । तथा हि भाष्यकारेणोक्तम्—'क्षणिका हि सा न बुद्ध्यन्तरकालमवतिष्ठते' । ( ) इति । तथा जैमिनिनाऽप्युक्तम्— "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्" इति (मी०सू० १.१.४) । नित्यत्वे सति जन्मायोगात् । स्ववचनविरोधश्च कुमारिलस्य । यथोक्तं तेनैव—

"न हि तत्क्षणमप्यास्ते जायते वाऽप्रमात्मकम् ।
येनार्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत्" ॥

(श्लो० वा०, चो० ५५) इति ।

एकत्वाच्च बुद्धेः प्रमाणषट्काभ्युपगमविरोधश्च । तथा प्रत्यक्षविरोधोऽपि; निरन्तरमध्यारोपितानेकविधार्थचिन्तायामुदयव्ययानुषङ्गिणीनां बुद्धीनामतिविस्पष्टमनुभूयमानत्वात् ॥ २४१ ॥

कुमारिलस्तु सर्वं विरोधराशिमपश्यन्नाह—बुद्धीनामित्यादि । [G. 99] बुद्धीनां पुरुषस्य च नित्यत्वमेकता चेष्टा, कस्मात्? चैतन्यस्वा-

---

1. 'भेदस्तु' इति तत्रस्थः पाठः ।

स्वरूपेण यथा[1] वह्निर्नित्यं दहनधर्मकः[2] ।
उपनीतं दहत्यर्थं दाह्यं नान्यन्न चान्यथा ॥ २४३ ॥
( श्लो० वा०, श० अ० ४०५ )

यथा वा दर्पणः स्वच्छो यथा वा स्फटिकोपलः ।
यदेवाऽऽधीयते तत्र तच्छायां प्रतिपद्यते ॥ २४४ ॥
( श्लो० वा०, श० अ० ४०६ )

तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।
गृह्णन्ति करणानीतान् रूपादीन् धीरसौ च नः ॥ २४५ ॥
( श्लो० वा०, श० अ० ४०७ )

तेनोपनेतृसंरम्भभङ्गित्वाद् भङ्गिनी मतिः ।
न नित्यं दाहको वह्निर्दाह्यासन्निधिना यथा ॥ २४६ ॥
( श्लो० वा०, श० अ० ४०८ )

---

भाव्यात्—बुद्धिलक्षणचैतन्यस्वाभाव्यात् पुरुषस्यास्मन्मतेनेत्यर्थः । कथं तर्हि रूपबुद्धिः, रसबुद्धिरित्यादिभेदः प्रतीयते ? इत्याह—भेदश्चेद्विषयाश्रय इति । चेच्छब्दः परमताभ्युपगमे । यद्येवं कल्प्यत इत्यर्थः ॥ २४२ ॥

स्यादेतद्–यदि नित्यैका बुद्धिस्तदा किमिति क्रमेण रूपादीन् प्रतिपद्यते; यावता सकृदेव प्रतीयाद्, विशेषाभावात् ? इत्याह–स्वरूपेणेत्यादि । यथा किल वह्निर्नित्यं दहनात्मकोऽपि सन्न सर्वदा सर्वं दहति, किं तर्हि ? उपनीतम् = ढौकितमेव दहति । तत्रापि यदेव दाह्यम् = दग्धुं शक्यं तदेव दहति, नाश्मादिकमित्यतो दाह्यमित्याह ॥ २४३ ॥

यथा वेत्यादिना दृष्टान्तान्तरमाह । मलिनस्य च्छायाप्रतिपत्त्यभावात् स्वच्छ इत्युक्तम् । आधीयत इति । ढौक्यत इत्यर्थः । तथैवेति दार्ष्टान्तिकोपदर्शनम् । यद्यपि पुमांसो व्यापिनः, तथाऽप्यदृष्टवशाद्देह एव वर्तमानाश्चक्षुरादिकरणोपनीतान् विषयान् गृह्णन्ति, नान्यत्र । यत्त्वेतन्नित्यं चैतन्यम्, असावस्माकं धीः = बुद्धिः, न तु साङ्ख्यवत्तद्व्यतिरेकिणी बुद्धिः ॥ २४४–२४५ ॥

---

१. तथा—पा०, गा० । २. दहनकर्मकः— इति श्लोकवार्तिकस्थः पाठः ।

तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।
घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसम्मतम् ॥ २४७ ॥
( श्लो० वा०, श० अ० ४०९ )

सैवेति नोच्यते बुद्धिरर्थभेदानुसारिभिः ।
न चास्त्यप्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते[1] ॥ २४८ ॥
( श्लो० वा०, श० अ० ४१० )

कुमारिलमतखण्डनम्

ननु हस्त्यादिशून्यायां भूमावारोपकारिणः ।
प्रत्यया ये प्रवर्त्तन्ते भेदस्तत्र किमाश्रयः ? ॥ २४९ ॥

---

यद्येवम्, कथमसौ धीर्भङ्गिनी प्रसिद्धा ?—इत्येतदाशङ्क्य तेनेत्यादिना सूचितमेव कारणमुपदर्शयन् बुद्धेर्भङ्गिनीत्वं समर्थयते । उपनेतारः = रूपादीनां विषयाणां प्रापयितारश्चक्षुरादयः, तेषां संरम्भः = व्यापारः, तस्य भङ्गित्वात्, भङ्गिनी मतिर्लक्ष्यते । न त्वसौ स्वतो विनाशिनी । यदि तर्हि न स्वतो विनाशिनी, तदा सर्वमर्थमुपलभेतेति तदवस्थमेव चोद्यम् ? इत्यत [ G. 100 ] आह—न नित्यं दाहक इत्यादि । तथा न नित्यं बुद्धिः सर्वमर्थमुपलभते; सर्वदा सर्वस्य विषयस्यासन्निधानादिति भावः ॥ २४६ ॥

अथ नित्यत्वमस्याः कथमवगम्यते ? इत्याह—तत्रेत्यादि । तत्रेति वाक्योपन्यासे । बोधात्मकत्वेन = बुद्धिर्बुद्धिरिति प्रत्यभिज्ञायमानत्वात्, शब्दवन्नित्या बुद्धिः । यद्येवम्, इयं घटबुद्धिः, इयं पटबुद्धिरिति कथमिदं बुद्धीनां वैलक्षण्यं लोके प्रतिपत्तृभिरुपगतम् ? इत्याह—घटेत्यादि । तद्भेदादिति, घटहस्त्यादिभेदात् ॥ २४७ ॥

सैवेत्यादिना एतदेव स्पष्टयति । अर्थभेदानुसारिभिरिति प्रतिपत्तृभिः । अनेनान्वयव्यतिरेकाभ्यां अर्थभेदकृत एव बुद्धेर्भेद इति दर्शयति । न चास्त्यप्रत्यभिज्ञानमिति । अस्त्येव प्रत्यभिज्ञानमित्यर्थः ॥ २४८ ॥

नन्वित्यादिना प्रतिविधत्ते । यदि ह्यर्थभेदकृत एव बुद्धेर्भेदः, तदा ये हस्त्या-

---

१. भेदे उपाश्रिते—पा० ।

(शङ्का)

अन्यदेशादिभाविन्यो व्यक्तयश्चेन्निबन्धनम् ।
सर्वत्रालम्बनं यस्माद् देशकालान्यथात्मकम् ॥ २५० ॥

(उत्तरम्)

ननु तद्देशसम्बन्धो नैव तासां तथास्ति तत् ।
किमिति प्रतिभासन्ते तेन रूपेण तत्र च ॥ २५१ ॥

---

दिशून्यायां भुवि क्रमेण गजतुरगादीनवस्थितान् समारोपयन्तः प्रत्ययाः प्रवर्त्तन्ते, तेषु भेदः किमाश्रयः प्रतीयेत । नैव कश्चिद् भेदव्यवस्थाश्रयोऽस्तीति यावत् । तथा हि—न स्वतो भेदोऽस्ति; सर्वबुद्धीनामेकत्वाभ्युपगमात् । नाप्युपधानभूतविषयनानात्वम्; तत्रोपधायकस्य कस्यचिदर्थस्याभावात् ॥ २४९ ॥

स्यादेतत्—अर्थशून्यत्वमसिद्धम्, तथा चोक्तं कुमारिलेन—

"स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ।
सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ॥"
(श्लो० वा०, निरा० १०७–८) इति ।

तदेतदाशङ्कते—अन्यदेशादिभाविन्य इत्यादि । [G. 101] निबन्धनमिति । बुद्धेर्भेदव्यवस्थानं प्रति कारणमित्यर्थः । देशकालवन्यथात्मकौ अन्यप्रकारौ यस्य तत्तथोक्तम्, देशकालाभ्यां वा यथाऽऽत्मा यस्येति विग्रहः ॥ २५० ॥

नन्वित्यादिना प्रतिविधत्ते । यस्मिन् हि देशे येन क्रमेण ताः समारोपिता व्यक्तयस्तदा प्रतिभासन्ते तेन देशेन सम्बन्धो नैव तासां देशान्तरकालान्तरगतानां तथा तेन क्रमेणास्ति, तत्किमिति तेन स्वेच्छासमारोपितरूपेण प्रतिभासन्ते । न ह्यन्येन रूपेणान्यस्य प्रतिभासनं युक्तम्; अतिप्रसङ्गात् । एवं हि सर्वमेव ज्ञानं सर्वविषयं प्रसज्येत । ततश्च प्रतिनियतार्थव्यवस्थोच्छेद एव स्यात् ॥ २५१ ॥

भवन्मते हि नाकारो बुद्धेर्बाह्यस्तु वर्ण्यते ।
न विवक्षितदेशे च ³गजवास्यादयः स्थिताः ॥ २५२ ॥
सर्वार्थबोधरूपा च यदि बुद्धिः सदा स्थिता ।
सर्वदा सर्वसंवित्तिस्तत् किमर्थं न विद्यते ॥ २५३ ॥

---

किं च भवतो मीमांसकस्य मते यो भासमानः स आकारो न बुद्धेः, किन्त्वसौ बाह्यार्थस्वभावो वर्ण्यते; 'आकारवान् बाह्योऽर्थो निराकारा बुद्धिः" (     ) इति वचनात् । यदि नामैवम्भूतम्, ततः किम् ? इत्याह —न विवक्षितेत्यादि । विवक्षितो देशो यत्र तत्समारोपः कृतः । ततश्च यद्देशकालसम्बद्धास्ते गजादयस्तद्देशसम्बन्धित्वेनैव प्रतिभासेरन्, स्वविरहिणि तु देशान्तरे कालान्तरे च किमिति प्रतिभासन्ते ! तस्मान्निरालम्बना एवैते प्रत्ययाः परमार्थतोऽसङ्कीर्णस्वभावाश्चलात्मानश्च; कादाचित्कत्वादिति सिद्धम् । तत्स्वभावस्य च पुंसोऽनित्यत्वानेकत्वे च सिद्धे ।

स्यान्मतम्—प्रत्ययस्तस्य पुरुषस्य धर्मः, तेन तस्य भेदेऽपि न पुंसो भेदः; धर्मित्वात्तस्येति ? तदयुक्तम्; प्रत्ययश्चैतन्यं बुद्धिर्ज्ञानमित्यनर्थान्तरत्वात् । न हि नामभेदमात्रेण वस्तूनां स्वभावो भिद्यते । किञ्च—नामभेदेऽपि तेषां प्रत्ययानां चैतन्यात्मकमेकमनुगामिरूपमिष्टमेव । तस्य च चैतन्यस्याभेदे प्रत्ययानामपि तत्स्वभावानामविभाग एव; अन्यथा हि विरुद्धधर्माध्यासादैकान्तिको भेद एव स्यात् । एतेनैव निरालम्बनप्रत्ययप्रतिपादनेनाप्रत्यक्षत्वं बुद्धेः प्रत्युक्तम् । तथा हि—स परिस्फुरन्नाकारो न बाह्यो गजादिरिति साधितम्, ततश्च तं तथा परिस्फुरन्तमाकारमात्मभूतमेव प्रतिपाद्यमाना बुद्धयः स्वयम्प्रकाशरूपत्वात् स्वसंविद्रूपाः सिद्ध्यन्ति ॥ २५२ ॥

[G.102] यच्चोक्तम्—"स्वरूपेण यथा वह्निः" (तत्त्व० २४३) इत्यादि, तद्दूषणार्थमत्रैवोपचयन्नाह—सर्वार्थेत्यादि । यदि सर्वार्थबोधरूपा सदा बुद्धिरवस्थिता, तदा सर्वदा सर्वार्थवेदनप्रसङ्गः ॥ २५३ ॥

---

३. गजयष्ट्यादयः—पा०, गा० ।

शब्दोपधाना या बुद्धी रसरूपादिगोचरा ।
सैव हीति न चेद् भेदास्त्वया चैवोपपादिताः ॥ २५४ ॥
समस्तदाहृचरूपाणां न नित्यं दहनात्मकः ।
कृशानुरपि निःशेषमन्यथा भस्मसाद् भवेत् ॥ २५५ ॥
दाहृचार्थसन्निधावेव तस्य तद्दाहकात्मता ।
युक्ता सर्वार्थदाहो हि सकृदेवं न युज्यते ॥ २५६ ॥

---

कथम् ? इत्याह—शब्दोपधानेत्यादि । तथा हि—या शब्दोपधाना = शब्दविषया बुद्धिः, सैव रसरूपादिविषया, नान्या; ततश्चैकार्थानुभववेला-यामशेषार्थानुभवप्रसङ्गः; तदुपलम्भात्मिकाया बुद्धेः सर्वदा व्यवस्थिततत्वात् । यथोक्तम्—

"एकयाऽनेकविज्ञाने बुध्येत[1] सकृदेव तत् ।
अविशेषात्[2] क्रमेणापि मा भूत्तदविशेषतः" ॥
(प्र० वा० १. १०८) इति ।

न चेदिति । यदि या शब्दोपधाना बुद्धिः सैव रसादिगोचरा नाङ्गीक्रियते, एवं सति भेदो बुद्धीनां भवता स्ववाचैवोपपादितः स्यात् ॥ २५४ ॥

यश्चायं वह्निदृष्टान्तः ( तत्त्व० २४३ ), सोऽप्यसिद्ध इति दर्शयन्नाह—समस्तेत्यादि । न ह्यशेषदाह्यदहनस्वभावो दहनो नित्यमवस्थितः, अन्यथा सकलमेव दाह्यं भस्मसाद्भवेत्; दहनज्वालानुषक्तदाह्यवत् सदासन्निहित-स्वदाहकत्वात् । न केवलं बुद्धिः सर्वार्थबोधस्वभावा न भवतीत्यपिशब्देन दर्शयति ॥ २५५ ॥

यद्येवम्, यदि[3] नित्यदहनात्मकः कृशानुर्न भवति, कथं तर्ह्युपनीतमप्यर्थं दहेत् ? इत्याह—दाह्यार्थसन्निधावित्यादि । एवमिति समनन्तरोदितार्थाभ्यु-पगमे सति । सर्वार्थदाहो युगपन्न युज्यते[4], न प्रसज्यत इत्यर्थः ॥ २५६ ॥

---

१. 'बुद्धयाऽस्तु'—इति मनोरथनन्दिवृत्तिसम्मतः पाठः ।
२. 'अविरोधात्'—इति मनोरथनन्दिवृत्तिसम्मतः पाठः ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४. सज्यते—पा०, गा० ।

नीलोत्पलादिसम्बन्धाद् दर्पणस्फटिकादयः ।
तच्छायाविभ्रमोत्पादहेतवः क्षणभङ्गिनः ॥ २५७ ॥
सोपधानेतरावस्थ एक एवेति सर्वदा ।
तच्छायस्तद्वियुक्तो वा स दृश्येतान्यथा पुनः ॥ २५८ ॥

छायाप्रतिपत्तिनिराकरणम्

स्थिरत्वान्निर्विभागत्वान् मूर्त्तानामसहस्थितेः[1] ।
बिभर्त्ति दर्पणतलं नैव च्छायां कदाचन ॥ २५९ ॥

---

यच्चोक्तम्—"यथा वा दर्पणः" (तत्त्व० २४४) इत्यादि, तदपि दर्पणादेर्नित्यैकरूपत्वे सति न युज्यत इति दर्शयन्नाह—[G. 103] नीलोत्पलादिसम्बन्धादित्यादि । स्फटिकदर्पणादिः प्रतिक्षणध्वंसी सन् नीलोत्पलादिसम्पर्काद् विपर्यस्तज्ञानोत्पत्तावाधिपत्यं प्रतिपद्यते । अन्यथा—यद्यक्षणिकः सन् छायां प्रतिपद्येत, तदा य एव सोपधानावस्थः स एवानुपधानावस्थितिरिति कृत्वा नीलाद्युपधानवियुक्तोऽपि नीलादिच्छायः समुपलभ्येत; अपरित्यक्तपूर्वरूपत्वात् । यद्वा—उपधानावस्थायामपि नीलाद्याकारवियुक्तो दृश्येत, पूर्वरूपाविशेषादिति । एतेन—अक्षणिकपक्षे सामान्येन सर्वेषामेव स्फटिकदर्पणादीनां छायाप्रतिपत्तिरपास्ता ॥ २५७–२५८ ॥

सम्प्रति क्षणिकाक्षणिकपक्षयोश्छायाप्रतिपत्तिं प्रत्येकं निराकरोति—स्थिरत्वादित्यादि । स्थिरत्वात् = अक्षणिकत्वात्, दर्पणतलं पूर्वच्छायां [2]न बिभर्त्तीति सम्बन्धः । क्षणिकत्वेऽपि निर्विभागत्वान्न बिभर्त्तीति सम्बन्धनीयम् । तथा हि—कूपान्तर्गतोदकवद् दर्पणतले प्रतिबिम्बकमन्तर्गतमुपलभ्यते, न च दर्पणतलस्य विभागः = रन्ध्रमस्ति; निबिडतरावयवसन्निवेशात् । तस्माद् भ्रान्तिरियम् ।

अथ वा—निर्विभागत्वम् = पूर्वोत्तरावस्थायामनानात्वम् । अत्र कारणम्—स्थिरत्वादिति । तेनायमर्थो भवति—स्थिरत्वेन निर्विभागत्वात्, पूर्वोत्तरावस्थारहितत्वादित्यर्थः ।

किञ्च[3]—मूर्त्तानामसहस्थितेः, नैव दर्पणतलं छायां बिभर्त्तीति सम्बध्यते ।

---

१. मूर्तानां वाऽसहस्थितेः—जै० । २. गा० पुस्तके नास्ति । ३. किं वा—जै०

पार्श्वद्वितयसंस्थाश्च सुशुक्लं स्फटिकोपलम् ।
समीक्ष्यन्ते तदेषोऽपि न च्छायां प्रतिपन्नवान् ॥ २६० ॥
भेदः प्रत्युपधानं च स्फटिकादेः प्रसज्यते ।
तच्छायाप्रतिपत्तिश्चेत् तस्य विद्येत तात्त्विकी ॥ २६१ ॥
तस्माद् भ्रान्तिरियं तेषु विचित्राचिन्त्यशक्तिषु ।
न बुद्धौ भ्रान्तिभावोऽपि युक्तो भेदवियोगतः ॥ २६२ ॥

---

तथा हि—दर्पणतले तद्देशान्येव पर्वतादिप्रतिबिम्बान्युपलभ्यन्ते, न च मूर्ताः पदार्थाः कदाचिदेकदेशतामापद्यन्ते; ऐकात्म्यप्रसङ्गात् । एतच्च क्षणिकाक्षणिकत्वे साधारणं दूषणम् ॥ २५९ ॥

स्फटिकस्यापि भावतो नोपधानच्छायाप्रतिपत्तिरस्तीति दर्शयति—पार्श्वेत्यादि । [G. 104] तथा हि—यदैवाग्रतः स्थितः प्रतिपत्ता जपाकुसुमसम्पर्काद्रक्तं स्फटिकमुपलभते, तदैव ये पार्श्वद्वितयावस्थितास्ते सकलमेव स्फटिकोपलं सुशुक्लमुपलभन्ते, तदैव यदि छायाप्रतिपत्तिस्तस्याभविष्यत्तदा पुरोऽवस्थितपुंस इव पार्श्वद्वितयावस्थितयोरपि प्रतिपत्त्रोः रक्तावभासाप्रतिपत्तिरभविष्यत् । अयं च क्षणिकाक्षणिकपक्षयोरपि साधारणो दोषः ॥ २६० ॥

भेदः प्रत्युपधानं चेत्यादिना त्वक्षणिकत्वपक्ष एव दोषमाह । यदि हि परमार्थतः स्फटिकादेरुपधानोपरागप्रतिपत्तिर्भवेत्, तदा यथाक्रमभाविनीनामुपधानच्छायानां[1] स्वभावभेदान्नैकात्म्यम् । तद्वत् तदात्मनः स्फटिकादेरप्युपधानमुपधानं प्रति प्रत्युपधानम् = भेदः प्रसज्येत । यदि पुनर्भ्रान्तिरियमित्यङ्गीक्रियते, तदाऽयमदोष इति ज्ञापनार्थं तात्त्विकीत्याह ॥ २६१ ॥

यतश्चैव पक्षद्वयेऽपि छायाप्रतिपत्तिर्न युज्यते, तस्माद् भ्रान्तिरियमिति स्थितम् । यद्येवम्, कस्मात् स्फटिकादावेव सा भ्रान्तिर्भवति, न कुड्यादौ ? इत्याह—विचित्राचिन्त्यशक्तिष्विति । विचित्राः = नानाप्रकाराः, अचिन्त्याः शक्तयो येषां ते तथोक्ताः । न हि भावानां शक्तिप्रतिनियमः पर्यनुयोगमर्हति; स्वहेतुपरम्पराकृतत्वात्तस्य । भवतामपि चात्रांशे नास्ति विवादः । यथोक्तम्—

---

१. ०मुपधानं छायानां—पा०, गा० ।

अबोधरूपभेदं तु समानं सर्वबुद्धिषु ।
आरोप्य प्रत्यभिज्ञानं नानात्वेऽपि प्रवर्त्तते ॥ २६३ ॥

कुमारिलमतोपक्षेपः

अवस्थाभेदभेदेन शून्येऽप्येकान्ततः स्थिते ।
स्थिरात्मन्यात्मनीदं[1] यत् परैः[1] परिकल्प्यते ॥ २६४ ॥

---

"अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम् ।" (          ) इति ।

यद्येवम्, बुद्धावपि तर्हि विषयच्छायाप्रतिपत्तिर्भ्रान्तिरेवास्तु, मा भूच्छायाप्रतिपत्तिः ? इत्याह—न बुद्धावित्यादि । न बुद्धौ भ्रान्तिसद्भावो युक्तः । न केवलं छायाप्रतिपत्तिर्न युक्तेत्यपिशब्दः । कस्मात् ? भेदवियोगतः = भेदाभावात् । स्फटिकादिषु हि भ्रान्तिर्युक्ता; तेभ्यो भिन्नाया बुद्धेर्भ्रान्तायाः सम्भवात् । न त्वेवं बुद्धावपरा भ्रान्तिरूपा बुद्धिरस्ति; यस्मादेकैव बुद्धिरिष्टा । न च स्वयमेव विभ्रमरूपा जायते धीरिति युक्तं वक्तुम्; बुद्धेर्नित्यत्वाभ्युपगमात् ॥ २६२ ॥

[ G. 105 ] यत्पुनरेकत्वनित्यत्वसाधनार्थम् "तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः" ( श्लो० वा०, श० अ० ४०८ ) इत्युक्तम्, तत्राह—अबोधरूपभेदं त्वित्यादि ।

अनैकान्तिकमेतत् प्रत्यभिज्ञानम्, यस्मादबोधरूपेभ्यो घटादिभ्यो भेदम् = व्यावृत्तिं समारोप्य प्रत्यभिज्ञानं सर्वबुद्धिषु नानात्वे सत्यपि प्रवर्त्तमानमविरुद्धमेव । अवश्यं चैतद्विज्ञेयम्—यन्नानात्व एव सति विजातीयव्यावृत्तिनिबन्धनकृतमेतत् प्रत्यभिज्ञानम्, न पुनरनानात्व एवेति । तथा हि—निरालम्बनासु समारोपबुद्धिष्वर्थभेदेऽनुपाश्रितेऽप्यप्रत्यभिज्ञानमस्त्येव, न हि तत्रैवं भवति – यैव गजबुद्धिरासीत् सैव तुरङ्गस्यन्दनबुद्धिरिति । प्रसाधितं चानालम्बनत्वमासां बुद्धीनामिति न पुनरुच्यते । तेन यदुक्तम्—"न चास्त्यप्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते" ( श्लो० वा०, श० अ० ४१० ) इति, तदसिद्धमिति ग्रहीतव्यम् ॥ २६३ ॥

---

१–१. स्थिरात्मनि "यत्परैः—पा०, गा० ।

सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम।
चैतन्यद्रव्यसत्त्वादिरूपं नैव विमुञ्चति ॥ २६५ ॥
( श्लो॰ वा॰, आ॰ २९ )

न चावस्थान्तरोत्पादे पूर्वाऽत्यन्तं विनश्यति।
उत्तरानुगुणार्थं तु सामान्यात्मनि लीयते ॥ २६६ ॥
( श्लो॰ वा॰, आ॰ ३० )

स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिता।

---

किञ्च- -यदि नित्यैकरूप आत्मेष्यते भवद्भिः, तदा सुखाद्यवस्थाभेदो न प्राप्नोति। अथ सुखाद्यवस्थाभेदोऽभ्युपगम्यते, न तर्हि नित्यैकरूपत्वमस्याभ्युपेतव्यम्; न ह्येकस्य भेदाभेदौ परस्परविरुद्धौ स्वभावौ युक्ताविति? एतच्चोद्यपरिहारार्थं यत्कुमारिलेनोक्तं तत्तावद् दूषयितुमुपक्षिपन्नाह—अवस्थाभेदभेदेनेत्यादि। अवस्थानाम् = सुखादीनाम्, भेदः = नानात्वम्, तेन भेदः = पुरुषस्य नानात्वमेव, तेन शून्य इति अवस्थानानात्वेऽप्येकस्वभाव एवेत्यर्थः। अत्र कारणमाह—स्थिरात्मनीति। स्थिरः = नित्यः, आत्मा = स्वभावो यस्यात्मनः स तथोक्तः। यदि वा—अवस्थाभेदाः = अवस्थाविशेषाः सुखादयः, तेभ्य एकान्तेन भेदः = पृथग्भावः, तेन शून्यः, तदव्यतिरिक्तेऽपीत्यर्थः ॥ २६४ ॥

किं तद्, यत् परिकल्प्यते? इत्याह—सुखेत्यादि। गच्छन्नपीति प्रतिपद्यमानोऽपि। नर इति आत्मा। सत्त्वादीत्यादिशब्देन ज्ञेयत्वप्रमेयत्वकर्तृत्वभोक्तृत्वादिसामान्यधर्मपरिग्रहः ॥ २६५ ॥

[G. 106] नापि विशेषधर्मस्याप्यत्यन्तसमुच्छेद इति दर्शयन्नाह—न चेत्यादि। पूर्वेति सुखाद्यवस्था। यद्येवम्, सुखाद्यवस्थायामपि दुःखावस्था किं न संवेद्यते? इत्याह—उत्तरानुगुणार्थमित्यादि। स्वरूपेणैव हि स्थितायां सुखावस्थायां नोत्तरा दुःखावस्था भवतीत्यतः सा लीयमाना सामान्यात्मनि सर्वावस्थानुगामिनि चैतन्यद्रव्यत्वादिलक्षणे उत्तरदुःखावस्थोत्पादानुगुणा भवतीति तदर्थं सा तत्र लीयते ॥ २६६ ॥

अविरुद्धस्तु सर्वासु सामान्यात्मा प्रतीयते ॥ २६७ ॥
(श्लो० वा०, आ० ३१)

तन्निराकरणम्

तत्र नो चेदवस्थानामेकान्तेन विभिन्नता ।
पुरुषाद् तद्व्ययोत्पादे स्यातामस्यापि तौ तथा ॥ २६८ ॥
विरुद्धधर्मसङ्गे तु भेद ऐकान्तिको भवेत् ।
पुंसामिव स्वभावेन प्रतिस्वं नियतेन ते ॥ २६९ ॥

---

यद्येवम्, अवस्थान्तरवत् सामान्यात्मन्यपि लयोऽवस्थानामयुक्तः; विरोधात् ? इत्याशङ्क्याह—स्वरूपेण हीत्यादि । स्वेन सुखादिरूपेणावस्थानं परस्परं विरोधादन्योन्यं लयो न युक्तः । अवस्थान्तरे तु सामान्यात्मनि लये को विरोधो येनासौ तत्र न भवेत् । तथा ह्यसं सामान्यात्मा सर्वावस्थास्वविरुद्धोऽनुयायी दृश्यते; सर्वस्यामवस्थायां चैतन्यादीनामुपलम्भात् ॥ २६७ ॥

तत्रेत्यादिना प्रतिविधत्ते । यदि हि पुरुषादवस्थानामेकान्तेन भेदो नेष्यते, तदा तद्व्ययोत्पादे = तासामवस्थानां व्ययोत्पादे सति, अस्यापि पुंसस्तौ व्ययोत्पादौ स्याताम् । एकान्तेनेति वचनं कथञ्चिदप्यतिरेकेऽवस्थावद्दयव्ययप्रसङ्गो दुर्वार इति ज्ञापनार्थम् । प्रयोगः—यो यदव्यतिरिक्तस्तस्य तदुत्पादविनाशे सत्युत्पादविनाशौ भवतः, यथा तेषामेव सुखादीनां स्वरूपस्य । सुखाद्यव्यतिरिक्तस्वभावश्च पुरुष इति स्वभावहेतुः ॥ २६८ ॥

न चायमनैकान्तिको हेतुरित्यादर्शयन्नाह—विरुद्धेत्यादि । यदि ह्यवस्थानामेवोत्पादव्ययौ, न पुरुषस्य—इत्येवमुत्पादानुत्पादलक्षणो [G. 107] विरुद्धधर्मसङ्गोऽभ्युपगम्यते, तदा भेदप्रसङ्गः, यथा पुंसां बहूनां परस्परं प्रतिस्वं नियतेन = प्रत्यात्मनियतेन स्वभावेन परस्परतो भेदः; एतावन्मात्रनिबन्धनत्वाद् भेदव्यवहारस्येति भावः । पुंसामपि वस्त्वादिरूपेण परस्परतो भेदो नास्तीत्यतः साध्यविकलतानिवृत्त्यर्थं प्रतिस्वं नियतेनेत्युक्तम् । प्रत्यात्मनियतं रूपमेषामेकान्तेन भिन्नम्, अन्यथाऽनुभव-स्मरणादीनां प्रतिनियमाभावाद्व्यवस्थासङ्करः स्यात् । प्रयोगः—

स्वरूपेणैव लीयन्ते यद्यवस्थाश्च पुंसि वः ।
दुःखाद्यप्यनुभूयेत तत् सुखादिसमुद्भवे ॥ २७० ॥
न चान्यरूपसंक्रान्तावन्यसंक्रान्तिरिष्यते[1] ।
तादात्म्येन च संक्रान्तिरित्यात्मोदयवान् भवेत् ॥ २७१ ॥
यदि कर्तृत्वभोक्तृत्वे नैवावस्थां समाश्रिते ।
तदवस्थावतस्तत्त्वान्न कर्तृत्वादिसम्भवः ॥ २७२ ॥

---

यद्यदेकयोगक्षेमं न भवति, न तत्तेन सहाभेदि, यथा—पुमांसः परस्परं प्रत्यात्मनियतेन रूपेण भिन्नयोगक्षेमाः । नैकयोगक्षेमाश्च सुखाद्यवस्थाः पुंसा सहेति व्यापकानुपलब्धेः ॥ २६९ ॥

यच्चोक्तम्—"न [2]चावस्थान्तरोत्पादे पूर्वाऽत्यन्तं विनश्यति" ( श्लो० वा०, आ० ३० ) इति, तत्राह—स्वरूपेणैवेत्यादि । अवस्था हि सामान्यात्मनि लीयमानाः स्वरूपेणैव वा लीयेरन् ? पररूपेण वा ? यद्याद्यः पक्षः, तदा सुखादिसमुद्भवेऽपि = सुखाद्यवस्थानुभवेऽपि, तद् [3]दुःखाद्यप्यनुभूयेत; उपलब्धिलक्षणप्राप्तत्वात् ॥ २७० ॥

अथ पररूपेणेति पक्षः, तत्राह--न चेत्यादि । किञ्च—पुंसि सुखादीनां संक्रान्तिस्तादात्म्येनैवेष्टा, ततश्च दुःखादिवत्, तदव्यतिरेकादात्मा = पुरुष उदयवान् = उत्पत्तिमान् भवेत् ॥ २७१ ॥

यच्चोक्तम्—"न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते" ( श्लो० वा०, आ० २९ ) इति, तत्राह—यदीत्यादि । यदि हि पुमांसमेवाश्रितं कर्तृत्वादि स्यात्, तदत्यक्तपूर्वरूपस्यात्मनो न सम्भवेत् । प्रयोगः—योऽपरित्यक्ताकर्त्रभोक्त्रवस्थः, स न करोति न चापि भुङ्क्ते, यथा—आकाशम् । अपरित्यक्ताकर्त्रभोक्त्रवस्थश्च सर्वदा पुरुष इति व्यापकविरुद्धोपलब्धिः ॥ २७२ ॥

[ G. 108 ] "बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरात्माख्यः[4] प्रमातेति न युज्यते ॥" (प्र० समु० ४८)

---

१. 'रिष्यते'—इति पाठः पा० पुस्तके त्रुटितः ।
२. चायमवस्था—पा०, गा० । ३. तद्दुःखमप्य०—पा०, गा० ।
४. '०रात्मायं'—प्रमाणसमुच्चयस्य महिशूरसंस्करणस्थः पाठः ।

### कुमारिलखण्डनमुखेन आचार्यदिङ्नागमतमण्डनम्

तन्नित्यशब्दवाच्यत्वं नात्मनो विनिवार्यते ।
स्वरूपविक्रियावत्त्वाद् व्युच्छेदस्तस्य विद्यते ॥ २७३ ॥

### सर्पादिदृष्टान्तनिराकरणम्

सर्पोऽपि क्षणभङ्गित्वात् कौटिल्यादीन् प्रपद्यते ।
स्थिररूपे तु पुंसीव नावस्थान्तरसङ्गतिः ॥ २७४ ॥

### अहम्बुद्धयसिद्धिः

निरालम्बन एवायमहङ्कारः प्रवर्त्तते ।
अनादिसत्त्वदृग्बीजप्रभावात् क्वचिदेव हि ॥ २७५ ॥

---

इति यदेतदाचार्यदिङ्नागपादैरुक्तम्, तत्र कुमारिलेनोक्तम्—

"नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वाद्व्युच्छेदोऽस्य[1] तावता" ॥

( श्लो० वा०, आ० २२ ) इति ।

तदत्र निगमनव्याजेन दोषमाह—तदित्यादि । तत् = तस्मात्, नित्यशब्दवाच्यत्वं न वार्यतेऽस्माभिः; स्वोपादानपुरस्सरस्य प्रतिक्षणध्वंसिनश्चैतन्यस्याऽऽसंसारमविच्छेदात् । किन्तु स्वरूपस्य = स्वभावस्य, विक्रियावत्त्वात् = नियमेन पूर्वस्वभावपरित्यागात् । स्वभावान्तरप्रादुर्भावश्चेति, व्युच्छेदः = विनाशोऽस्य स्फुटतरमेवाऽऽसज्यते ॥ २७३ ॥

यश्चापि सर्पादिदृष्टान्त उपात्तः, स नित्यैकरूपो न सिध्यतीति दर्शयन्नाह—सर्पोऽपीत्यादि । यथैव हि पुंसि स्थिरैकरूपत्वादवस्थान्तरसम्भवो न युक्तः, तथा सर्पस्यापि । यदाऽनुक्षणभङ्गिताऽस्य भवेत्, तदा युक्तोऽवस्थान्तरसम्भवः; स्वभावान्तरोदयलक्षणत्वादवस्थान्तरप्रादुर्भावस्य ॥ २७४ ॥

यच्चोक्तम्—'अहं वेद्मीत्यहम्बुद्धिर्ज्ञातारं प्रतिपद्यते' ( तत्त्व० २२९ ) इति, तदसिद्धमिति दर्शयन्नाह—निरालम्बन एवायमित्यादि । न ह्यस्याहङ्कारस्य

---

१. 'विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य'—इति तत्रस्थः पाठः ।

केचिदेव हि संस्कारास्तद्रूपाध्यवसायिनि ।
आधिपत्यं[1] प्रपद्यन्ते तन्न सर्वत्र वर्त्तते ॥ २७६ ॥
तुल्यः पर्य्यनुयोगोऽयमन्यथा पुरुषेऽपि वः ।
तच्छक्तिभेदसद्भावात् सर्वमेव निराकुलम् ॥ २७७ ॥

निरालम्बनत्वसाधनम्

नित्यालम्बनपक्षे तु सर्वाहंकृतयस्ततः ।
सकृदेव प्रसूयेरन् शक्तहेतुव्यवस्थितेः ॥ २७८ ॥

---

परमार्थतः किञ्चिदालम्बनमस्ति, येनास्य विषयो ज्ञाता स्यात् । यद्येवम्, किमस्योत्पत्तेर्निबन्धनम् ? इत्याह—अनादीत्यादि । सत्त्वदृक् = सत्कायदृष्टिः, तस्या बीजम् = वासनाशक्तिरित्यर्थः । अनादि च तत्सत्त्वदृग्बीजं चेति विग्रहः । तस्य प्रभावः = आधिपत्यम् । क्वचिद्देवेति । अध्यात्मनियत इव षडायतने ॥ २७५ ॥

अथ सर्वत्र कस्मान्न प्रवर्त्तते ? इत्याह—केचिदेव हीत्यादि । [G. 109] तद्रूपाध्यवसायिनीति । पूर्वोत्तरकालानुयायिज्ञातृरूपाध्यवसायिन्यहङ्कारे । न सर्वत्रेति । सन्तानान्तरे घटादौ ॥ २७६ ॥

किञ्च—आत्मालम्बनत्वेऽप्यहङ्कारस्य, तुल्यः पर्यनुयोगः—किमित्यात्मान्तरेऽपि न प्रवर्त्तत इति । शक्तिप्रतिनियमान्नैवमिति चेत् ? यद्येवम्, अस्माकमपि शक्तिनियमात् क्वचिदेवाध्यात्मिके वस्तुनि प्रवर्त्तते, न सर्वत्रेति व्यवस्थानं सर्वमेव निराकुलम् ॥ २७७ ॥

स्यादेतत्—भवत्वेतद् व्यवस्थानम्[2]; किन्तु निरालम्बनत्वमस्य कथं सिद्धम् ? इत्याह—नित्येत्यादि । तथा ह्यस्यालम्बनं भवन्नित्यं वा भवेद् ? अनित्यं वा ? यदि नित्यम्, तदा सर्वा अहङ्कृतयः = अहङ्कारा युगपद्भवेयुः; अविकलकारणत्वात् । न ह्यकारणमालम्बनं युक्तम्; अतिप्रसङ्गात् । न चापि शक्तस्य कारणस्य सहकारिकारणापेक्षा भवतीत्यसकृच्चर्वितमेतत् ।

---

१. अवेत्यं—पा० । १. भवत्वेद्व्यव०—पा० ।

अनित्यालम्बनत्वेऽपि स्पष्टाभाः स्युस्ततः परे ।
आलम्बनार्थसद्भावं व्यर्थं पर्यनुयुञ्जते ॥ २७९ ॥

तत्र कुमारिलोक्तं दूषणम्

ज्ञातरि प्रत्यभिज्ञानं वासना कर्तुमर्हति ।
नातस्मिन् स इति प्रज्ञां न ह्यसौ भ्रान्तिकारणम् ॥ २८० ॥
तन्नाहम्प्रत्ययो भ्रान्तिरिष्टश्चेद् बाधवर्जनात् ।

कुमारिलमतखण्डनम्

नानन्तरोक्तया युक्त्या तस्य बाधोपदर्शनात् ॥ २८१ ॥

---

न चाप्येक[1] एवायमहङ्कार इति शक्यं वक्तुम्; कादाचित्कतयाऽनेकत्वसिद्धेः । तथा हि—गाढस्वापमदमूर्छासु नाहङ्कारः संवेद्यते, पुनरन्यदा च संवेद्यत इति सिद्धमस्य सर्वदाऽनुपलम्भात् कादाचित्कत्वम् । कादाचित्कत्वाच्चानेकत्वमपि सिद्धमिति सर्वा अहङ्कृतयस्तद्भावमात्रभाविन्यो युगपत् प्रसूयेरन् ॥ २७८ ॥

अथानित्यमालम्बनमिति पक्षः, तदा चक्षुरादिविज्ञानवत् स्फुटतरप्रतिभासाः सर्वा अहंकृतयः प्रसज्येरन्; साक्षाद्वस्तुस्वलक्षणग्राहित्वात् । ततः = तस्मात्, परे = तीर्थिकाः कुमारिलप्रभृतयो व्यर्थमेवास्यालम्बनं पर्यनुयुञ्जते—'तस्याज्ञानलक्षणः को नु विषयः परिकल्पितः' इत्यादि ॥ २७९ ॥

तत्र यदुक्तम्—'अनालम्बन एवायमहङ्कारोऽनादिसत्कायदृष्टिवासनाबलाद् भ्रान्तः प्रवर्त्तते' इति । अत्र कुमारिलेनोक्तं दूषणमाशङ्कते—ज्ञातरीत्यादि ।

[ G. 110 ] वासना हि ज्ञातृविषयां प्रत्यभिज्ञां कर्तुमर्हति । न पुनरतस्मिन् = अज्ञातरि, सः = ज्ञाता, इति प्रज्ञाम् = ज्ञानं[1] वासनां कर्तुमर्हतीति सम्बन्धः । कस्मात् ? न ह्यसौ भ्रान्तिकारणम्, अपि तु यथाऽनुभूतार्थविषयमेवासौ ज्ञानं जनयति, न भ्रान्तमित्यर्थः । तस्मादयमहङ्कारो वासनात उत्पद्यमानत्वात् बाधकप्रमाणाभावाच्च न भ्रान्तो युक्त इति । चेच्छब्दो भिन्नक्रमो बाधवर्जनादित्यस्यानन्तरं द्रष्टव्यः ॥ २८०—== ॥

---

1. चैक—पा०, गा० ।

वासनाया भ्रान्तिकारणत्वम्

ईश्वरादिषु भक्तानां तद्धेतुत्वादिविभ्रमाः ।
वासनामात्रभावाच्च जायन्ते विविधाः कथम् ॥ २८२ ॥
निरालम्बनता चैवमहङ्कारे यदा स्थिता ।
तन्नाहम्प्रत्ययग्राह्ये ज्ञाता कश्चन विद्यते ॥ २८३ ॥
ततः सर्वप्रमाणेषु न दृष्टान्तोऽस्ति सिद्धिभाक् ।
हेतवश्चाश्रयासिद्धा यथायोगमुदाहृताः ॥ २८४ ॥

---

नेत्यादिना प्रतिविधत्ते । अनन्तरोक्ता युक्तिः 'नित्यालम्बनपक्षे तु' ( तत्त्व० २७८ ) इत्यादिः ॥ २८१ ॥

यच्चोक्तम्—'न वासना भ्रान्तिकारणम्' इति, तदनैकान्तिकमिति दर्शयन्नाह—ईश्वरादिष्वित्यादि । यदि हि वासना भ्रान्तिकारणं न भवेत्, तदानीमीश्वरः सर्वोत्पत्तिमतां हेतुः, सर्वज्ञः, नित्यबुद्धिसमाश्रयः—इत्यादयो विभ्रमाः कथमिव वासनामात्रसम्भवादुद्भवेयुः । तथा हि—कुमारिलेनापीश्वरादिर्जगतः कर्त्ता प्रतिषिद्ध एव । वासनामात्रभावाच्चेति मात्रग्रहणं तथाभूतालम्बनार्थव्यवच्छेदार्थम् । तस्मादहङ्कारस्य निरालम्बनत्वान्न तद्ग्राह्यो ज्ञाता कश्चित् प्रसिद्धोऽस्तीति न तस्मादात्मा सिध्यतीति ।

यच्च "व्यतीताहंकृतिग्राह्यः" ( तत्त्व० २३८ ) इत्यादिनित्यसाधनमुक्तम्, तत्राह—तदित्यादि । कश्चनेति । नित्योऽनित्यो वा ज्ञाता दृष्टान्तधर्मी नास्तीत्यसिद्धो दृष्टान्तः । तथा हि—प्रथमद्वितीययोः प्रयोगयोर्धर्म्यसिद्धिर्दृष्टान्तदोषः; इदानीन्तनस्य ह्यस्तनस्य चाहम्प्रत्ययगम्यस्य ज्ञातुः कस्यचिदभावात् । तृतीये तु प्रयोगे एकबुद्धिवदिति दृष्टान्तः साध्यसाधनविकलः; अभिमताया [ G. 111 ] एकबुद्धेरेकसन्तानसम्बद्धज्ञात्रहम्प्रत्ययत्वस्य एकविषयत्वस्य चासिद्धत्वात् । अतो धर्मद्वयासिद्धिमुखेनास्याप्यसिद्धत्वमुक्तम् ।

यथायोगमुदाहृता इति । उदाहृताः = पूर्वमुपन्यस्ता ये हेतवः, यथायोगम् = यथासम्भवम् । आश्रयासिद्ध इति । तथा हि—प्रथमद्वितीययोः प्रयोगयोर्ये हेतवस्त आश्रयसिद्धाः; अहम्प्रत्ययग्राह्यस्य कस्यचिदपि धर्मिणो

## ३. कापिलपरिकल्पितात्मपरीक्षा

### साङ्ख्यमतोपन्यासः

चैतन्यमन्ये मन्यन्ते भिन्नं बुद्धिस्वरूपतः ।
आत्मनश्च निजं रूपं चैतन्यं कल्पयन्ति ते ॥ २८५ ॥
प्रधानेनोपनीतं च फलं भुंक्ते स केवलम् ।
कर्तृत्वं नैव तस्यास्ति प्रकृतेरेव तन्मतम् ॥ २८६ ॥

### साङ्ख्यीयप्रतिज्ञार्थदूषणम्

तत्रापि रूपशब्दादिचेतसां लेक्ष्यते कथम् ।
सुव्यक्तं भेदवद् रूपमेका चेच्चेतनेष्यते ॥ २८७ ॥

---

ज्ञातुरसिद्धत्वात् । तृतीये तु प्रयोगे नाश्रयसिद्धिः; प्रत्ययानां धर्मिणां सिद्धत्वात् । किन्तु तेषामेकसन्तानसम्बद्धज्ञातृविशेषणमसिद्धम्, निरालम्बनत्वस्य प्रसिद्धत्वात् । अतो यथायोगमित्युक्तम् ॥ २८२–२८४ ॥

इति मीमांसकपरिकल्पितात्मपरीक्षा

साम्प्रतं सांख्यपरिकल्पितात्मनिराकरणार्थमाह—चैतन्यमित्यादि । अन्य इति । सांख्याः । ते हि बुद्धिव्यतिरिक्तं चैतन्यमात्मनो निजं रूपं कल्पयन्ति; यतः "बुद्धिः प्रधानस्वभावा, चैतन्यं तु पुरुषस्यैव स्वरूपम्" ( ) इति तेषां समयः[1] । स च पुरुषः शुभाशुभकर्मफलस्य प्रधानोपनीतस्य भोक्ता, न तु कर्मणां कर्त्ता; प्रकृतेरेवाशेषजगत्परिणतिरूपायाः कर्तृत्वस्येष्टत्वात् । अत्र च प्रमाणयन्ति—यत्सङ्घातरूपं वस्तु तत्परार्थं दृष्टम्, तद्यथा—नयनाद्यङ्गादि[2] । सङ्घातरूपाश्च चक्षुरादय इति स्वभावहेतुः । यश्चासौ परः स सामर्थ्यादात्मेति सिद्धम् – इति परस्य[3] भावः ॥ २८५–२८६ ॥

तत्रापीत्यादिना प्रतिज्ञार्थं तावद् दूषयति । तथा हि—'चैतन्यं पुरुषस्य निजं रूपम्' ( ) इति ब्रुवता चैतन्यं नित्यैकरूपमिति प्रतिज्ञातं भवति; नित्यैकरूपात् पुरुषात्तस्याव्यतिरिक्तत्वात् । एतच्च प्रत्यक्षविरुद्धम्; यतो रूप-

---

१. सिद्धान्त इत्यर्थः । २. शयनानि—पा०, गा० । ३. साङ्ख्यस्येत्यर्थः

एकरूपे च चैतन्ये सर्वकालमवस्थिते ।
नानाविधार्थभोक्तृत्वं कथं नास्योपपद्यते ॥ २८८ ॥
न दिदृक्षादयो भिन्नास्तस्य भोगनिबन्धनम् ।
भवन्ति हि तथा भावे पुमानुत्पत्तिमान् भवेत् ॥ २८९ ॥
चैतन्यव्यतिरिक्तं हि न दिदृक्षादि विद्यते ।
तस्योदयव्ययावेशे दुर्वारः पुरुषेऽप्यसौ ॥ २९० ॥
शुभाशुभं च कर्मास्ति नैव चेदात्मना कृतम् ।
तदेव भोगभेदोऽस्य कुतः समुपजायते ॥ २९१ ॥

---

शब्दादिचेतसां सुव्यक्तम् = स्फुटतरमेव, स्वसंविदा, भेदवद्रूपम् = भिन्नस्वभावः, वेद्यते । तच्चैकत्वे सति चेतनाया नोपपद्यते ॥ २८७ ॥

[G. 112] अभ्युपगमविरोधं च दर्शयन्नाह— एकरूपेत्यादि । एकरूपश्चात्मा, अथ च नानाविधस्यार्थस्य भोक्ता— इति परस्परविरुद्धम्; अभोक्त्रवस्थानिर्विशिष्टत्वात् ॥ २८८ ॥

दिदृक्षादियोगादविरोध इति चेद् ? आह—नेत्यादि । यदि रूपादिषु दिदृक्षाशुश्रूषादयस्तस्य परस्परतो भिन्नाः = भोगनिबन्धनत्वेनोपकल्पिताः, तेऽप्यस्यात्मनो न भवन्ति = न जायन्ते । यदि हि जायेरँस्तदा, तथा = भेदेन, भावे = जातौ सत्याम्, पुमानुत्पत्तिमान् भवेत्; दिदृक्षादिवत्तदव्यतिरेकात् ॥ २८९ ॥

एतदेव व्यक्तीकुर्वन्नाह—चैतन्यव्यतिरिक्तं हीत्यादि । व्यतिरेके हि तस्य त इति सम्बन्धानुपपत्तिः; उपकारस्य सम्बन्धनिबन्धनस्याभावात् । असाविति उदयव्ययसमावेशः । प्रयोगः—यस्य [1]यद्भावव्यवस्थानिबन्धनं नास्ति, नासौ प्रेक्षवता तद्भावेन व्यवस्थाप्यः, यथा—आकाशं मूर्त्तत्वेन । नास्ति च भोक्तृत्वव्यवस्थानिबन्धनं पुरुषस्य[2] [2]दिदृक्षादीति कारणानुपलब्धेः । न चायमसिद्धो हेतुरिति प्रतिपादितम् ॥ २९० ॥

इतश्च कर्तृत्वाभावाद् भोक्तृत्वमपि तस्य न युक्तमिति दर्शयति—शुभाशुभं

---

१. सद्भाव०—पा०, गा० ।
२–२. पुरुषादिदृ०—पा०; पुरुषे दिदृ०—गा० ।

परमतोद्भावनम्

अभिलाषानुरूपेण प्रकृतिश्चेत्प्रयच्छति ।
पङ्ग्वन्धवद्धि सम्बन्धस्तयोरेष व्यवस्थितः ॥ २९२ ॥

तत्प्रतिविधानम्

यद्येवमिष्टवाञ्छायां सत्यामपि न सिद्ध्यति ।
किमिति प्रकृतिर्नैव किञ्चिदन्यदपेक्षते ॥ २९३ ॥

---

चेत्यादि । न ह्यकृतस्य कर्मणः कश्चित्फलमुपभुंक्ते, अकृताभ्यागमादिदोषप्रसङ्गात् ॥ २९१ ॥

अत्र परस्योत्तरमाशङ्कते— अभिलाषानुरूपेणेत्यादि । [ G. 113 ] यद्यपि पुरुषः कर्मणां कर्त्ता न भवति, तथापि प्रकृतिरस्य यथाभिलषितमर्थमुपनयति, तमसौ भुङ्क्त इत्यदोषः ।

ननु प्रकृतिरचेतना सती कथं शुभादिकर्मणां कर्त्री भवति, येनासौ यथाभिमतं कर्मफलं पुरुषस्य सम्पादयति ? इत्याह— पङ्ग्वन्धवद्धीत्यादि । यथा किलान्धस्य चक्षुष्मत्पुरुषसम्बन्धादर्थेषु प्रवृत्तिर्भवति, तथा महदादिकं लिङ्गं चेतनपुरुषसम्पर्काच्चेतनावदिव धर्मादिषु कार्येष्वध्यवसायं करोतीत्यदोषः । तथा चोक्तम्—

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः"

( सां० का० २१ ) इति ॥ २९२ ॥

यद्येवमित्यादिना प्रतिविधत्ते । यदि हि प्रकृतिरकृतस्यापि कर्मणः फलमभिलषितमुपनयतीति स्यात्, तदा सर्वदैवेष्टवाञ्छायां सर्वस्य पुंसोऽभिलषितोऽर्थः किमिति न सिद्ध्येत् ! स्यान्मतम् तत्कारणस्य धर्मस्याभावान्न सिद्ध्यतीति ? आह—प्रकृतिर्नैवेत्यादि । प्रकृतेर्हि धर्मः कार्यम्, स च तदव्यतिरिक्तत्वात् सदैवास्तीति भवेदेवाभिमतं फलम् । तथा हि—एतदेव सर्वं यदुत प्रकृतिपुरुषौ, तौ च सदा सन्निहिताविति, अतो नित्यमेव फलं भवेत् । किञ्च— यद्यभिलषितमर्थं प्रकृतिः प्रयच्छति, तदाऽनिष्टं किमिति प्रयच्छेत्, न ह्यनिष्टं कश्चिदभिलषति ॥ २९३ ॥

अर्थोपभोगकाले च यदि नैवास्य विक्रिया ।
नैव भोक्तृत्वमस्य स्यात् प्रकृतिश्चोपकारिणी ॥ २९४ ॥
विक्रियायाश्च सद्भावे नित्यत्वमवहीयते ।
अन्यथात्वं विकारो हि तादवस्थ्ये च तत्कथम् ! ॥ २९५ ॥

परमतेन तस्य भोक्तृत्वनिरूपणम्

स्यान्मतम्---विषयाकारा बुद्धिरादौ विवर्त्तते ।
तया व्यवसितं चार्थं पुरुषः प्रतिपद्यते ॥ २९६ ॥
प्रतिबिम्बोदयद्वारा चैवमस्योपभोक्तृता
न जहाति स्वरूपं तु पुरुषोऽयं कदाचन ? ॥ २९७ ॥

---

अपि च—यदि नाम प्रकृतिरस्यार्थमुपनयति, तथापि भोक्तृत्वमस्यायुक्तम् ; अविकारित्वात् ? इति दर्शयति—अर्थोपभोगकाले चेत्यादि । यदि हि सुख-दुःखादिनाऽऽह्लादपरितापादिरूपां विकृतिं नोपनीयते, तदाऽऽकाशवदभोक्तृत्वमेव स्यात्, प्रकृतिश्चोपकारिणी न स्यादिति सम्बन्धः; अविकृतात्मन्युपकारस्य कर्तुमशक्यत्वात् । अथ विकारित्वमस्याभ्युपगम्यते, तदा नित्यत्वहानिप्रसङ्गः; यतोऽतादवस्थ्यमेवानित्यतां ब्रूमः । तच्च विकारित्वे सत्यस्तीति कथमस्य नित्यता स्यात्; तादवस्थ्यरूपत्वान्नित्यत्वस्य ! ॥ २९४–२९५ ॥

[ G. 114 ] स्यान्मतमित्यादिना परमतेनान्यथा भोक्तृत्वमाशङ्कते । न हि विकारापत्त्या भोक्तृत्वमस्येष्टम् किं तर्हि ? 'बुद्ध्यध्यवसितस्यार्थस्य प्रति-बिम्बोदयन्यायेन चेतनात्'[2] । तथा हि—बुद्धिदर्पणारूढमर्थप्रतिबिम्बकं द्वितीय-दर्पणकल्पे पुंसि संक्रामति, तदेवास्य भोक्तृत्वम्; न तु विकारापत्तिः । न च प्रतिबिम्बमात्रसंक्रान्तावपि पुरुषः स्वरूपं जहाति; दर्पणवत्तदवस्थत्वात् । अतो 'यदभोक्त्रवस्थानिर्विशिष्टम्[3]' इत्यत्र प्रयोगेऽनैकान्तिकता हेतोः ॥२९६–२९७॥

---

१. बुद्ध्यवसित०—पा०, गा० ।
२. पा० गा० पुस्तकयोर्नास्ति ।
३. गा०संस्करणसम्पादकोऽत्र 'तदभोक्तृ' इत्यधिकं पाठं वाञ्छति ।
तत्त्व०:,१०

### तस्य भोक्तृत्वप्रतिविधानम्

उच्यते प्रतिबिम्बस्य तादात्म्येन समुद्भवे ।
तदेवोदयव्ययोगित्वं विभेदे तु न भोक्तृता ॥ २९८ ॥
दिदृक्षाद्यानुकूल्येन प्रधानं सम्प्रवर्त्तते ।
विचित्ररचनाभेदे कथं वाऽचेतनात्मकम् ! ॥ २९९ ॥
कर्तुं नाम प्रजानाति प्रधानं व्यञ्जनादिकम् ।
भोक्तुं च न विजानाति किमयुक्तमतः परम् ! ॥ ३०० ॥

---

उच्यत इत्यादिना प्रतिविधत्ते । यत्तद् बुद्धिदर्पणारूढमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंसि संक्रामतीतीष्यते, तद्यदि पुरुषादव्यतिरिक्तम् तदा तदेवानन्तरोक्तमुदयव्ययोगित्वं प्रसज्यते; उदयव्ययोगिप्रतिबिम्बरूपवत्तदव्यतिरेकात् । अथ व्यतिरिक्तमिति पक्षः, तदा भोक्तृता न प्राप्नोति; अभोक्त्रवस्थातो विशेषस्य कस्यचिदभावात् । न चाप्यर्थप्रतिबिम्बेन सह पुंसः सम्बन्धाद् भोक्तृत्वं युक्तम्; परस्परमनुपकारकयोः सम्बन्धासिद्धेः ॥ २९८ ॥

किञ्च—यदि प्रधानं पुरुषस्य दिदृक्षादि जानीयात्, तदा[1] तदानुकूल्येन तस्य पुरुषार्थं[2] प्रति प्रवृत्तिर्युक्ता; यावता जडरूपत्वात् सत्यपि चेतनावता सम्बन्धे पङ्ग्वन्धवत् प्रवृत्तिर्न युक्ता । तथा हि—अन्धो यदि नाम मार्गं नोपलभते, तथाऽप्यसौ पङ्गोर्विवक्षां चेतयत्येव; तस्य चेतनावत्त्वात् । न चैवं प्रधानं पुरुषस्य दिदृक्षादि वेत्ति; तस्याचेतनात्मकत्वेन जडरूपत्वात् । न चापि तयोः परस्परमनुपकारिणोः पङ्ग्वन्धवत् सम्बन्धोऽस्ति ॥ २९९ ॥

[ G. 115 ] अथ 'पुरुषस्य दिदृक्षादि वेत्ति प्रधानम्' इतीष्यते, तथा च सति भोक्तृत्वमप्यस्य प्रसज्येत । यो हि नाम कर्तुं विजानाति स कथं भोक्तुमपि न जानीयात्! तस्मात् 'कर्तुं जानाति न भोक्तुम्' इत्यतः परं किमयुक्तमस्ति ! नैव किञ्चिदित्यर्थः । न हि सूपकारो व्यञ्जनादेः कर्त्ता तद्भोक्तुं न विजानातीति । अत्रेतिशब्दोऽध्याहार्यः ॥ ३०० ॥

---

१. पा०, गा० पुस्तकयोर्नास्ति ।
२. पुरुषस्यार्थं—पा०, गा० ।

परस्योत्तरम्

बुद्धिमत्त्वात् प्रधानस्य सर्वमस्याविरोधि चेत् ।
बुद्धिमत्त्वेन तु प्राप्तं चैतन्यं पुरुषेष्विव ॥ ३०१ ॥
बुद्धिरध्यवसायो हि संवित् संवेदनं तथा ।
संवित्तिश्चेतना चेति सर्वं चैतन्यवाचकम् ॥ ३०२ ॥
अचेतनात्मिका बुद्धिः शब्दगन्धरसादिवत् ।
उत्पत्तिमत्त्वनाशित्वहेतुभ्यामिति चेन्मतम् ? ॥ ३०३ ॥

तत्खण्डनम्

नैतौ हेतू द्वयोः सिद्धौ स्वतन्त्रे साधने मते ।
न विपर्ययबाधाऽस्ति प्रसङ्गोऽप्यभिधित्सिते ॥ ३०४ ॥

---

बुद्धिमत्त्वादित्यादिना परस्योत्तरमाशङ्कते । सर्वमिति । दिदृक्षाद्यानुकूल्येन प्रवर्त्तनम् । अस्येति प्रधानस्य । एतदुक्तं भवति—यदि नाम प्रधानं चिद्रूपं न भवति, तथापि बुद्ध्याऽध्यवसायलक्षणया युक्तत्वात् पुरुषगतं दिदृक्षादि परिज्ञाय प्रवर्त्तिष्यत इत्यतः सर्वमविरोधीति । अत्रोत्तरमाह—बुद्धिमत्त्वेनेत्यादि[1] । यदि हि प्रधानस्य बुद्धिमत्त्वमङ्गीक्रियते, तदास्य पुरुषवच्चैतन्यवत्त्वप्रसङ्गः; बुद्ध्यादीनां चैतन्यपर्यायत्वात् । तथा हि—यत्प्रकाशात्मतया स्वसंविदितरूपं परनिरपेक्षमेव प्रकाशते, तच्चैतन्यमुच्यते, तत्त्वं बुद्धेरप्यस्तीति किमिति सा चिद्रूपा न भवेत् ! न चापि बुद्धिव्यतिरेकेणापरं चिद्रूपमुपलक्षयामः, येन तद्व्यतिरिक्तस्य पुरुषस्य सिद्धिर्भवेत ॥ ३०१-३०२ ॥

अत्र परश्चिद्रूपाद् बुद्धेर्भेदप्रसाधनायाह—अचेतनात्मिका बुद्धिरित्यादि । प्रयोगः—यद्यदुत्पत्तिमत्त्वनाशित्वादिधर्मयोगि, तत्तदचेतनम्; यथा रसादयः । तथा च बुद्धिरिति स्वभावहेतुः ॥ ३०३ ॥

नैतावित्यादिना प्रतिविधत्ते । कदाचिदिदं स्वातन्त्र्येण साधनं स्यात् ? प्रसङ्गसाधनं वा ? यदि स्वातन्त्र्येण, तदाऽन्यतरासिद्धो हेतुः । तथा हि—यथाविधमुत्पत्तिमत्त्वमपूर्वोत्पादलक्षणं नाशित्वं वा अत्यन्तसमुच्छेदात्मकं

---

१. 'बुद्धिमत्त्व' इत्यादि—जै० ।

चैतन्ये चात्मशब्दस्य निवेशेऽपि न नः क्षतिः ।
नित्यत्वं तस्य [1]दुःसाधमक्ष्यादेः सफलत्वतः ॥ ३०५ ॥

[ G 116 ] बौद्धस्य प्रसिद्धम्, न तथाविधं भवतः साङ्ख्यस्य; तयोः परिणामतिरोधानरूपत्वेन भवद्भिरङ्गीकरणात् । यथा च भवतः, तथा न बौद्धस्य सिद्धमित्यन्यतरासिद्धो हेतुः । न च शब्दमात्रस्य सिद्धौ हेतुसिद्धिः, वस्तुनो हि वस्तुसिद्धेर्वस्तुन एव हेतुत्वात् । यथोक्तम्—

"तस्यैव व्यभिचारादौ शब्देऽप्यव्यभिचारिणि ।
दोषवत् साधनं ज्ञेयं वस्तुनो वस्तुसिद्धितः" ॥ (प्र० वा० १.२२) इति ।

अथ प्रसङ्गसाधनमिति पक्षः; तथापि साध्यविपर्यये बाधकप्रमाणानुपदर्शनादैकान्तिकता हेत्वोः । को ह्यत्र प्रतिबन्धो यच्चैतन्यस्योत्पत्तिमत्त्वनाशित्वाभ्यां न भवितव्यमिति !

याऽपीयं कल्पना—

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" ॥ (सां० का० ५७) इति ?

साऽप्यकल्पनैव; न हि क्षीरं स्वातन्त्र्येण वत्सविवृद्धिनिमित्तं प्रवर्त्तते, किं तर्हि ? प्रतिनियतेभ्यः कादाचित्केभ्यः स्वहेतुप्रत्ययेभ्यः समुत्पद्यते । तच्चोत्पन्नं सद् वत्सविवृद्धेर्निमित्ततां यातीत्यज्ञमपि प्रवर्त्तत इति निर्दिश्यते । न चैवं प्रधानस्य प्रवृत्तिर्युक्ता । तथा हि—नित्यत्वात तदन्यहेत्वभावाच्च न तावत् कादाचित्ककारणसन्निधानायत्ता तस्य कादाचित्की शक्तिर्युक्ता । नापि स्वाभाविकी, सदा सन्निहिताविकलकारणत्वेन सर्वस्याभ्युदयनिःश्रेयसलक्षणस्य पुरुषार्थस्य युगपदुत्पत्तिप्रसङ्गात् ॥ ३०४ ॥

अथापि स्याद्—भवतु बुद्धिचैतन्ययोरभेदः, तथाप्यात्मत्वमस्याप्रतिषिद्धमेव ! इत्याह—चैतन्य इत्यादि । न ह्यात्मशब्दनिवेशनमात्रमस्माभिश्चैतन्ये प्रतिषिध्यते, किं तर्हि ? यस्तत्र नित्यत्वलक्षणः समारोपितो धर्मः स निषिध्यते । कस्मात् ? अक्ष्यालोकमनस्कारादेः साफल्यात् । अन्यथा यदि शाश्वतं नित्यं चैतन्यं स्यात्,

[1] दुःसाध्यम्—पा०, गा० ।

अक्ष्यर्थाद्यफलं तु स्याच्चैतन्यं शाश्वतं यदि ।
न भवेदिन्धनेनार्थो यदि स्याच्छाश्वतोऽनलः ॥ ३०६ ॥
पारार्थ्यं चक्षुरादीनां यत् पुनः प्रतिपाद्यते ।
शय्यांशनादिवत् तेन सङ्घातत्वेन हेतुना ॥ ३०७ ॥
आधेयातिशयार्थत्वं यद्येषामुपपाद्यते ।
इष्टसिद्धिर्यं दृष्टास्तेऽस्माभिर्ज्ञानोपकारिणः ॥ ३०८ ॥
अविकार्युपकारित्वसाधने साध्यशून्यता ।
दृष्टान्तस्य चलस्यैव युक्तास्तेऽप्युपकारिणः ॥ ३०९ ॥
सामान्येन तु पारार्थ्यं यद्येषां सम्प्रसाध्यते ।
तथापि साधनं व्यर्थं सिद्धाश्चित्तोपयोगिनः ॥ ३१० ॥

---

तदाऽक्ष्यादि विफलमेव स्यात्; तदुत्पत्त्यर्थत्वात् तेषाम्, नित्यस्य चोत्पत्त्यसम्भवात् ।

अत्रैव दृष्टान्तमाह—न भवेदित्यादि । यदि शाश्वतो वह्निर्भवेत् तदा नैव जनोऽनलार्थमिन्धनमुपाददीत । तस्मान्न नित्यैकरूपं चैतन्यं युक्तम् ॥३०५-३०६॥

यच्चोक्तम्—"यत् सङ्घातरूपं तत् परार्थं दृष्टम्" ( ) इत्यादि, तत्र कोऽसौ परोऽभिप्रेत इति निरूपयन्नाह—पारार्थ्यमित्यादि । [G. 117] आधेयातिशयो वा परोऽभिप्रेतो भवेत्, यद्वा अनाधेयातिशयरूपत्वादविकारी, अथ वा सामान्येन पारार्थ्यमात्रमविचारितरमणीयं साध्यते—इति त्रयो विकल्पाः । तत्र प्रथमपक्षे सिद्धसाध्यता; यतस्ते चक्षुरादयोऽस्माभिर्विज्ञानोपकारिण इष्टाः । "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते तच्चक्षुर्विज्ञानम्, यावत्कायं प्रतीत्य स्प्रष्टव्यानि चोत्पद्यते कायविज्ञानम्" ( ) इति वचनात् ।

अथ द्वितीयः पक्षः; तदा विरुद्धता हेतोरित्यादर्शयन्नाह—अविकार्युप-कारित्वेत्यादि । अविकारिणः = नित्यस्योपकारित्वम् अविकार्युपकारित्वम् । तस्य चक्षुरादीनां साधने सति दृष्टान्ते साध्यविपर्ययेणैव हेतोर्व्याप्तत्वाद्विरुद्धता; यतस्ते शय-नादयश्चलस्यानित्यस्यैवोपकारिणो युक्ताः, अविकारिण्यतिशयस्याधातुमशक्यत्वात्

---

१. त्योत्पद्यते—पा० ।

## ४. दिगम्बरपरिकल्पितात्मपरीक्षा

### दिगम्बरमतोपन्यासः

जैमिनीया इव प्राहुर्जैनाश्चिल्लक्षणं नरम् ।
द्रव्यपर्यायरूपेण व्यावृत्त्यनुगमात्मकम् ॥ ३११ ॥

### तन्मतखण्डनम्

तत्राप्यविकृतं द्रव्यं पर्यायैर्यदि सङ्गतम् ।
न विशेषोऽस्ति तस्येति परिणामि न तद्भवेत् ॥ ३१२ ॥

---

अथ सामान्येनाधेयातिशयादिविकल्पमपास्य पारार्थ्यमात्रं साध्यत इति तृतीयः पक्षः, तदापि सिद्धसाध्यता; चित्तोपकारित्वेन चक्षुरादीनामिष्टत्वात् । अथ चित्तमपि साध्यधर्मित्वेनाभ्युपगम्यते, यथा नैयायिकैरभ्युपगतम् ? एवमपि भवतां नेष्टसिद्धिः; चित्तव्यतिरेकेणाऽऽत्मनोऽनिष्टत्वात् । नापि नैयायिकानामभिमतार्थसिद्धिः; परस्परोपकारित्वेन चक्षुरादीनां परोपकारित्वस्येष्टत्वात्; पारावारवदापेक्षिकत्वात् परत्वस्य । चित्तस्य चानेककारणकृतोपकारोपग्रहेणोत्पत्तेः सङ्घातत्वं कल्पितमस्त्येवेति हेतोरपि न सिद्धिः[1] ॥ ३०७–३१० ॥

इति कापिलकल्पितात्मपरीक्षा

---

[ G. 118 ] दिगम्बरपरिकल्पितात्मप्रतिषेधार्थमाह—जैमिनीया इवेत्यादि । जैना इति दिगम्बराः । त एवं प्राहुः—चिल्लक्षण एवात्मा, स च द्रव्यरूपेण सर्वावस्थास्वभिन्नत्वादनुगमात्मकः, पर्यायरूपेण तु प्रत्यवस्थं भिन्नत्वाद्व्यावृत्त्यात्मकः । एतच्च प्रत्यक्षत एव सिद्धमात्मनो द्वैरूप्यमिति न प्रमाणान्तरतः प्रसाध्यम् । तथा हि—सुखाद्यवस्थाभेदेऽपि यदवस्थातृ सर्वावस्थासु चैतन्यमुपलभ्यते तद् द्रव्यम् । पर्यायास्तु क्रमभाविनः सुखाद्यवस्थाभेदाः; ते च प्रत्यक्षत एव सिद्धा इति परस्य[2] भावः ॥ ३११ ॥

तत्रापीत्यादिना प्रतिविधत्ते । अत्र पक्षद्वयम्—यत्तच्चैतन्यात्मकं द्रव्यं तत्पर्यायैः सम्बध्यमानं कदाचिदविकृतमत्यक्तपौरस्त्यचैतन्यादिरूपं सत् सम्बध्यते,

---

१. नासिद्धिः—पा० । २. दिगम्बरस्येत्यर्थः ।

हेत्वसिद्धिशङ्कनम्

देशकालस्वभावानामभेदादेकतोच्यते ।
सङ्ख्यालक्षणसंज्ञार्थभेदाद् भेदस्तु वर्ण्यते ॥ ३१३ ॥
रूपादयो घटश्चेति सङ्ख्यासंज्ञाविभेदिता ।

---

यद्वा परित्यक्तपूर्वरूपम् । तत्र यद्यनन्तरः पक्षः, तदा नित्यत्वहानिप्रसङ्गः; अवस्थातुः कस्यचिदप्यभावात् । अथाविकृतमिति प्रथमपक्षः, तदा पूर्वोत्तरयोरवस्थयोर्न विशेषः = अन्यथात्वम् अस्तीति परिणामि तच्चैतन्यं न भवेत् = न प्राप्नोति; अन्यथात्वलक्षणत्वात् परिणामस्य । इष्टं च परिणामि । प्रयोगः—यत्पूर्वोत्तरावस्थासु न विशिष्यते तत्परिणामि न भवति, यथा—आकाशम् । न विशिष्यते च चैतन्यं सर्वावस्थास्विति व्यापकानुपलब्धेः ॥ ३१२ ॥

देशकालस्वभावानामित्यादिना हेतोः परमतेनासिद्धिमाशङ्कते । तथा हि—यद्येकान्तेन पर्यायेभ्यो द्रव्यं व्यतिरेकि भवेत्, तदा स्यात्तस्या विशेषः; [G. 119.] यावता देशकालस्वभावाभेदाद् द्रव्यपर्याययोरैक्यमिष्टम् । सङ्ख्यादिभेदात्तु भेदः । तत्र सङ्ख्या, एकत्वबहुत्वादि । तथा हि—द्रव्यमेकसङ्ख्यायुक्तम्, पर्यायास्तु सुखादयोऽनेकसङ्ख्याविष्टाः । लक्षणमपि भिन्नम्; यतोऽनुवृत्तिलक्षणं द्रव्यम्, पर्यायास्तु व्यावृत्तिलक्षणाः, संज्ञा—नाम, अर्थः—कार्यम् । तथा चोक्तम्—"देशकालस्वभावाभेदादभेदो धर्मधर्मिणोः, सङ्ख्यासंज्ञालक्षणकार्यभेदात्तु भेदः । तद्यथा—घटस्य रूपादीनां च" ( ) इति । तथा हि—घटतद्रूपादीनां देशादिभिरभेदः, य एव हि देशकालस्वभावश्च घटस्य स एव रूपादीनाम्, सङ्ख्यादिभिश्च घटाच्चेषां भेदः । तथा हि—एको घटो बहवस्तु रूपादय इति सङ्ख्याभेदः, घटो रूपादय इति च संज्ञाभेदः, अनुवृत्तिलक्षणं घटादिद्रव्यम्, व्यावृत्तिलक्षणास्तु रूपादयः पर्याया इति लक्षणभेदः । घटेनोदकाहरणं कार्यं क्रियते, रूपादिभिस्तु वस्त्ररागादीति कार्यभेदः । एवमात्मद्रव्येऽपि चैतन्यात्मके सुखदुःखादिषु पर्यायेषु चोह्यम् ।

कार्यभेदस्तु तत्रैवं बोद्धव्यः—चैतन्येनार्थानुभवः क्रियते, सुखादिभिस्तु पीडानुग्रहादीति । तदेतद्दर्शयति—रूपादय इत्यादि । सङ्ख्यासंज्ञाविभेदितेति ।

कार्यानुवृत्तिव्यावृत्तो लक्षणार्थविभेदिता ॥ ३१४ ॥
द्रव्यपर्याययोरेवं नैकान्तेनाऽविशेषवत् ।
द्रव्यं पर्यायरूपेण विशेषं याति चेत्[1] स्वयम्[1] ॥ ३१५ ॥

तन्निराकरणम्

स्वभावाभेद एकत्वं तस्मिन् सति च भिन्नता ।
कथञ्चिदपि दुःसाधा[2] पर्यायात्मस्वरूपवत् ॥ ३१६ ॥
अगौणे चैवमेकत्वे द्रव्यपर्याययोः स्थिते ।
व्यावृत्तिमद् भवेद् द्रव्यं पर्यायाणां स्वरूपवत् ॥ ३१७ ॥

---

'द्रव्यपर्याययोः' इति वक्ष्यमाणं सम्बध्यते । कार्यानुवृत्तिव्यावृत्ती लक्षणार्थविभेदितेति । यथायोगं सम्बन्धः । कार्यभेदोऽर्थविभेदिता, अनुवृत्तिव्यावृत्ती लक्षणविभेदितेति सम्बन्धः । द्रव्यपर्याययोरित्यत्र छेदः । एवमित्यादिना हेतोरसिद्धिमुपसंहरति । एवं च कृत्वा द्रव्यमेकान्तेन नाविशिष्टम्; किन्तु पर्यायरूपभेदेन = पर्यायरूपविभागेन[3] विशेषं प्रतिपद्यते । तेन पर्यायेभ्यो द्रव्यस्यैकान्तेन भेदाभावादित्यसिद्धो हेतुः ॥ ३१३–३१५ ॥

स्वभावाभेद इत्यादिना प्रतिविधत्ते । यदि हि द्रव्यपर्याययोरभेदोऽप्यङ्गीक्रियते, तदा सर्वात्मनैवाभेदोऽयं[4] भवेत् । भेदश्च तद्विपरीतः कथं भवेत्, न ह्येकस्यैकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तौ । तथा हि—एकमित्यनेन भेदनिषेधनान्तरीयकः स्वभावाभेद उच्यते, तस्मिंश्च स्वभावाभेदे सति कथं तदानीमेव भेदस्तत्प्रतिषेधात्मा भवेत् । प्रयोगः—यत्राभेदस्तत्र तद्विपरीतो न भेदोऽवकाशं लभते, यथा तेषामेव पर्यायाणां द्रव्यस्य च 'यत्प्रतिनियतमसाधारणमात्मरूपं तस्य न स्वभावाद्भेदः । अभेदश्च द्रव्यपर्याययोरवस्थित इति विरुद्धोपलब्धेः ॥ ३१६ ॥

[ G. 120 ] ततश्च परमार्थेन द्रव्यपर्याययोरभेदे सति लक्षणभेदोऽपि न प्राप्नोतीति दर्शयति—अगौणे चैवमित्यादि ।

---

१–१. चेयम्—पा० । २. दुःसाध्या—पा०, गा० ।
३. पा० गा० पुस्तकयोर्नास्ति । ४. सर्वात्मनैवाभेदो—जै० ।

यदि वा तेऽपि पर्यायाः सर्वेऽप्यनुगतात्मकाः ।
द्रव्यवत् प्राप्नुवन्त्येषां द्रव्येणैकात्मता स्थितेः ॥ ३१८ ॥
ततो नावस्थितं किञ्चिद् द्रव्यमात्मादि विद्यते ।
पर्यायाव्यतिरिक्तत्वात् पर्यायाणां स्वरूपवत् ॥ ३१९ ॥
न चोदयव्ययाक्रान्ताः पर्याया अपि केचन ।
द्रव्यादव्यतिरिक्तत्वात्तद् व्यनियतात्मवत् ॥ ३२० ॥
ततो निरन्वयो ध्वंसः स्थिरं वा सर्वमिष्यताम् ।
एकात्मनि तु नैव स्तो व्यावृत्त्यनुगमाविमौ ॥ ३२१ ॥
न चोपलभ्यरूपस्य पर्यायानुगतात्मनः ।
द्रव्यस्य प्रतिभासोऽस्ति तन्नास्ति गगनाब्जवत् ॥ ३२२ ॥

---

यद्व्यावृत्तिमद्रूपाभिन्नस्वभावं तद्व्यावृत्तिमत्, यथा—पर्यायाणां स्वरूपम् । व्यावृत्तिमद्रूपाव्यतिरिक्तं च द्रव्यमिति स्वभावहेतुः । अथ वा—यदनुगतात्मरूपाव्यतिरिक्तं तदनुगतात्मकमेव, यथा—द्रव्यरूपम् । अनुगतात्मरूपाविभिन्नस्वभावाश्च सुखादयः पर्याया इति स्वभावहेतुरेव; अन्यथा विभिन्नयोगक्षेमत्वाद्भेद एव भवेत् । विरुद्धधर्माध्यासितस्याप्येकत्वे भेदव्यवहारोच्छेद एव स्यादिति विपर्यये बाधकं प्रमाणम् ॥ ३१७-३१८ ॥

तत इत्यादिनोपसंहरति । आत्मादीति । आदिशब्देन घटव्रीह्यादिपरिग्रहः ॥

न चेत्यादिना द्वितीयप्रसङ्गसाधनफलमाह । तस्यापि द्रव्यस्य पर्यायरूपेणोदयव्ययाक्रान्तस्येष्टत्वादतो मा भूत् साध्यवैकल्यप्रसङ्ग इति नियतात्मवदित्युक्तम् । नियतश्चासावात्मा स्वभावो द्रव्यादिरूपेणेति विशेषणसमासः ॥ ३२० ॥

ततो निरन्वय इत्यादिना निगमयति ॥ ३२१ ॥

न केवलं पर्यायादभिन्नस्वभावाद् द्रव्यरूपस्यानुगतात्मनोऽसिद्धिः, इतोऽपि पर्यायव्यतिरेकेणोपलब्धिलक्षणप्राप्तस्यानुपलब्धेरसद् व्यवहारविषयत्वमेवास्य—इति दर्शयन्नाह—न चेत्यादि । [G. 121] तेन यदुक्तम्—"प्रत्यक्षत एवानुगतो द्रव्यात्मा सिद्धः" इति, तदसिद्धम्; न हि पर्यायव्यतिरिच्यमानशरीरः क्वचिदपि विज्ञाने प्रत्यक्षसम्मते प्रतिभासमानोऽनुगतैकरूपो द्रव्यात्मा लक्ष्यते ॥ ३२२ ॥

विविधार्थक्रियायोग्यास्तुल्यादिज्ञानहेतवः ।
तथाविधार्थसंकेतशब्दप्रत्ययगोचराः ॥ ३२३ ॥
उदयव्ययधर्माणः पर्याया एव केवलाः ।
संवेद्यन्ते ततः स्पष्टं नैरात्म्यं चातिनिर्मलम् ॥ ३२४ ॥

---

यद्येवम्, यदि पर्यायव्यतिरेकेण द्रव्यात्मा नास्ति, तदा सङ्ख्यादिभेदः कथं सिध्यति ? इत्याह—विविधार्थेत्यादि । विविधाः = नानाप्रकाराः, अर्थक्रियाः = रूपादीनां पर्यायाणां समानासमानभेदात्, तत्र समाना जलसन्धारणादिलक्षणाः, असमाना वस्त्ररागलोचनादिज्ञानोत्पादलक्षणाः, तत्र योग्याः समर्था इति विग्रहः । तत्र साधारणे कार्ये सर्वेषामेव यौगपद्येनोपयोग इति समस्तानां हेतुत्वज्ञापनार्थमभिन्नद्रव्यरूपाभावेऽपि त एव भेदिनोऽपि 'घटः' इत्यादिना शब्देनैकसङ्ख्याविशिष्टा उच्यन्ते । असाधारणकार्योपयोगित्वविवक्षायां तु नानासङ्ख्यास्त इति सङ्ख्याभेदः, कार्यभेदश्च तेषु व्यवस्थाप्यते ।

लक्षणभेदस्तर्हि कथम् ? इत्याह—तुल्यादिज्ञानहेतव इति । आमपक्वाद्यवस्थासु प्रतिक्षणध्वंसिनोऽपि सदृशसन्निवेशा विशेषा एवोत्पद्यमाना निर्विकल्पानुभवविषया अनुभूयमानाः सर्वावस्थासु घटो घट इत्यादिसदृशप्रत्ययहेतवो भवन्ति । श्यामलोहितादिवर्णवैलक्षण्येन जायमाना अतुल्यप्रत्ययहेतवः—इत्येवमेकरूपानुगममन्तरेणापि तुल्यातुल्यज्ञानहेतवो भवन्तोऽनुवृत्तिव्यावृत्तिरूपेण व्यवस्थाप्यन्त इति लक्षणभेदो व्यवस्थाप्यते । 'तुल्यादि'—इत्यादिग्रहणेनातुल्यं ज्ञानं गृह्यते ।

कस्तर्हि संज्ञाभेदः ? इत्याह—तथाविधेत्यादि । तथाविधः = विविधार्थक्रियायोग्यस्तुल्यादिज्ञानहेतुश्च पदार्थो रूपादिः, अर्थः = विषयो यस्य = 'घटः' इति 'रूपादयः' इति च सङ्केतस्य, स तथोक्तः, तथाविधार्थः सङ्केतो येषां शब्दप्रत्ययानां ते तथोक्ताः, तेषां गोचरा इति विग्रहः ॥ ३२३ ॥

तेन प्रत्यक्षत एव भावानां नैरात्म्यं प्रसिद्धमित्युपसंहारेण दर्शयति—उदयेत्यादि । [G. 122] पर्याया इति । रूपादयः, स्वसंविदितस्वभावाश्च दुःखादयः । केवला इति । अभिन्नैकद्रव्यरूपविरहिणः । नित्यस्य

अथ सन्मूर्छितं रूपं द्रव्यपर्याययोः स्थितम् ।
तद् द्विरूपं हि निर्भागं नरसिंहवदिष्यते ? ॥ ३२५ ॥
ननु [1]द्वैरूप्यमित्येष नानार्थविनिबन्धनः ।
निर्देशो रूपशब्देन स्वभावस्याभिधानतः ॥ ३२६ ॥
नरसिंहोऽपि नैवैको द्वयात्मकश्चोपपद्यते ।
अनेकाणुसमूहात्मा स तथा हि प्रतीयते ॥ ३२७ ॥

---

च क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । अर्थक्रियाकारित्वमेषामुदयव्ययधर्मित्व एव सति युज्यत इत्यनुमानतोऽप्येषामर्थक्रियाकारिणां सत्त्वलिङ्गान्नैरात्म्यं प्रसिद्धम् ॥ ३२४ ॥

यदुक्तम्—"न चोपलभ्यरूपस्य[2]" इत्यादि (तत्त्व० ३२२), तत्राथेत्यादिना परस्योत्तरमाशङ्कते । सम्मूर्छितम् = एकलोलीभूतम्; अतो विवेकेन द्रव्यरूपं न प्रतिभासते विद्यमानमपीति भावः । सम्मूर्छितत्वे कारणमाह—तद् द्विरूपं हीत्यादि । तत् = आत्मादिकं वस्तु । यस्मात्तद् द्विरूपमपि सन्निर्भागमिष्यते, यथा—नरसिंहः; तस्मान्निर्भागत्वात सम्मूर्छितोभयरूपं तदिति न पृथगुपलभ्यते ॥ ३२५ ॥

तदेतत् परस्परपराहतमभिधीयते भवतेति दर्शयन्नाह—नन्वित्यादि । यदि हि निर्भागम्, तदा द्विरूपमित्येतद् व्याहतम्; नानार्थविनिबन्धनत्वादस्य व्यपदेशस्य । कस्मात् ? रूपशब्देन स्वभावस्याभिधानात् । तथा हि—द्वे रूपे = द्वौ स्वभावौ यस्य स द्विरूप उच्यते । न चैकस्य स्वभावद्वयं युक्तम्; एकत्वहानिप्रसङ्गात् । केवलं द्वावेव स्वभावौ भवता प्रतिपादितौ, न पुनरेकं वस्तु द्विरूपम्, परस्परपरिहारस्थितलक्षणत्वादेकत्वानेकत्वयोः ॥ ३२६ ॥

यश्च नरसिंहः सोऽप्येकः सन् द्विरूपो न सिद्ध इति दर्शयति—नरसिंहोऽपीत्यादिना । केवलं विवादास्पदीभूतं नोपपद्यत इत्यपिशब्दः । स इति नरसिंहः । तथेति । अवयववैचित्र्येण, पृथुतरदेशाक्रान्तिरूपेण च; अन्यथैवं न प्रतिभासेत । मक्षिकापदमात्रेणापि च पिधाने तस्य तथाविधस्यावरणप्रसङ्गश्च ।

---

१. द्विरूपमित्येव—पा०, गा० । २. ०स्वभावस्य—जै० ।

## औपनिषदिकात्मपरीक्षा

### औपनिषदिकमतस्थापनम्

नित्यज्ञानविवर्त्तोऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति सङ्गिरन्तेऽपरे पुनः ॥ ३२८ ॥
ग्राह्यलक्षणसंयुक्तं न किञ्चिदिह विद्यते ।
विज्ञानपरिणामोऽयं तस्मात् सर्वः समीक्ष्यते ॥ ३२९ ॥

### तन्मतखण्डनम्

तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः ।
रूपशब्दादिचित्तानां[1] व्यक्तं भेदोपलक्षणात् ॥ ३३० ॥

---

एतेन मेचकमणिकल्पा वर्णादयः प्रत्युक्ताः । एतच्च विस्तरेणावयविनिषेधे प्रतिपादयिष्याम इति भावः ॥ ३२७ ॥

इति दिगम्बरपरिकल्पितात्मपरीक्षा

[ G. 123 ] अपरेऽद्वैतदर्शनावलम्बिनाश्चौपनिषदिकाः क्षित्यादिपरिणामरूपनित्यैकज्ञानस्वभावमात्मानं कल्पयन्ति । अतस्तेषामेव मतमुपदर्शयन्नाह—नित्येत्यादि ।

तदात्मक इति । क्षित्यादिपरिणामरूपनित्यैकज्ञानात्मक इत्यर्थः । अपर इति औपनिषदिकाः ॥ ३२८ ॥

किमत्र प्रमाणम् ? इत्याह—ग्राह्येत्यादि । न हि क्षित्यादयो ज्ञानव्यतिरेकेण ग्राह्यलक्षणापन्नाः सन्ति, येन ते प्रतिभासेरन्नवयविनः; परमाणूनां चासत्त्वात् । तत्सामर्थ्याद्विज्ञानप्रतिभासरूपा एवामी क्षित्यादय इति व्यवसीयन्ते । अयमिति क्षित्यादिः ॥ ३२९ ॥

तेषामित्यादिना प्रतिविधत्ते । अल्पापराधमिति । ज्ञानमात्रस्य युक्त्युपेतस्याभ्युपगमात् । यद्येवम्, स्वल्पोऽपि किमिति तत्रापराध उच्यते ? इत्याह—नित्यतोक्तित इत्यादि । कस्मात् पुनर्नित्यत्वाभ्युपगमो न युक्तः ? इत्याह—

---

1. ०विज्ञानां—पा०, विज्ञाने—गा० ।

एकज्ञानात्मकत्वे तु रूपशब्दरसादयः ।
सकृद्वेद्याः प्रसज्यन्ते नित्येऽवस्थान्तरं न च ॥ ३३१ ॥
रूपादिवित्तितो भिन्नं न ज्ञानमुपलभ्यते ।
तस्याः प्रतिक्षणं भेदे किमभिन्नं व्यवस्थितम् ॥ ३३२ ॥

रूपशब्दादीत्यादि । नित्यता हि नाम तादवस्थ्यमुच्यते, अतादवस्थ्यं त्वनित्यता । न च रूपशब्दादिप्रतिभासिविज्ञानमेकावस्थं सर्वदाऽनुभूयते; किन्तु क्रमेण कदाचिद्रूपप्रतिभासम्, अन्यदा च शब्दादिप्रतिभासम् । तद्यदि नित्यैकज्ञानप्रतिभासात्मका अमी शब्दादयः स्युः, तदा विचित्रास्तरणप्रतिभासवत् सकृदेव प्रतिभासेरन्; तत्प्रतिभासात्मकस्य ज्ञानस्य सर्वदाऽवस्थितत्वात् । अथापि स्याद्—अवस्थान्तरमेतत् क्रमेण शब्दादिप्रतिभासं ज्ञानस्योत्पद्यते, तेन सकृदेव शब्दादिसंवेदनं न भविष्यति ? इत्याह—नित्येऽवस्थान्तरं न चेति । अवस्थानामवस्थातुरनन्यत्वादवस्थावदवस्थातुरपि नाशोत्पादौ स्याताम् । अवस्थातृवद्वाऽवस्थानामपि नित्यत्वप्रसङ्गः । [ G. 124 ] व्यतिरेके चावस्थानां तस्यैता इति सम्बन्धासिद्धिः; उपकाराभावात् । नित्यैकविज्ञानमात्राभ्युपगमविरोधश्च ॥ ३३०–३३१ ॥

किञ्च—नित्यस्य ज्ञानात्मनः प्रत्यक्षतो वा सिद्धिर्भवेद् ? अनुमानतो वा ? न तावत् प्रत्यक्षत इति दर्शयति—रूपेत्यादि । न हि क्रमप्रतिभासिरूपादिसंविद्व्यतिरेकेण नित्यैकरूपमवस्थातृ ज्ञानमनुभूयते, येन प्रत्यक्षतः सिद्धिः स्यात् । तस्याश्च रूपादिसंवित्तेः क्रमेणानुभूयमानायाः प्रतिक्षणं ध्वंसे सिद्धे किमपरमभिन्नमस्तीति वाच्यम् । तस्मादुपलब्धिलक्षणप्राप्तस्य तथाविधज्ञानात्मनोऽनुपलब्धेरसद्व्यवहारविषयतैवेति भावः

न चाप्यनुमानतः सिद्धिरिति मन्यते । तथा ह्यनुमानं भवत् स्वभावलिङ्गं वा भवेत् ? कार्यं वा ? न तावत् स्वभावः, तथाभूतस्य [1]कस्यचिद्धर्मिणोऽसिद्ध्या तत्स्वभावासिद्धेः । ज्ञानमात्रे च धर्मिणि सिद्धेऽपि तस्य नित्यत्वधर्मेण कस्यचित्तद्धर्मस्य व्याप्त्यसिद्धेः । नापि कार्यं लिङ्गम्, नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेः[1];

१–१. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

विपर्यस्ताविपर्यस्तज्ञानभेदो न विद्यते ।
एकज्ञानात्मके पुंसि बन्धमोक्षौ ततः कथम् ! ॥ ३३३ ॥
किं वा निवर्त्तयेद् योगी योगाभ्यासेन साधयेत् ।
किं वा न हातुं शक्यो हि विपर्यासस्तदात्मकः ॥ ३३४ ॥

---

तत्कार्यस्य[1] कस्यचिदभावात् । तद्व्यतिरेकेणापरस्य कार्यस्यानभ्युपगमाच्च । तदेवं न किञ्चित् तथाभूतस्य[1] ज्ञानात्मनः साधकं प्रमाणमस्ति, बाधकं तु प्रत्यक्षादि विद्यत इत्ययुक्तो नित्यज्ञानविवर्त्तः ॥ ३३२ ॥

किञ्च—अस्मिन् पक्षे बन्धमोक्षव्यवस्था न प्राप्नोतीति दर्शयति—विपर्यस्तेत्यादि । यस्य हि प्रतिक्षणध्वंसि प्रतिपुरुषमनेकमेव विज्ञानं सन्तानभेदि प्रवर्त्तत इति पक्षः, तस्य विपर्यस्ताविपर्यस्तज्ञानप्रबन्धोत्पादवशाद् बन्धमोक्षव्यवस्था युक्तिमती । योगाभ्यासक्रमेण च परिशुद्धतरतमज्ञानोत्पादादपरिशुद्धज्ञानसन्ताननिवृत्तेरपवर्गः प्राप्यत इति सफलो मोक्षप्राप्तये प्रयासः ।

यस्य तु पुनर्भवतो नित्यैकज्ञानस्वभाव आत्मेति पक्षः, तस्य कथमेकज्ञानात्मके पुंसि बन्धमोक्षौ भवतः ! तथा हि—यदि विपर्यस्तस्वभावमेकं ज्ञानं सदा, तदाऽपरस्यावस्थान्तरस्याभावान्न मोक्षव्यवस्था स्यात् । अथाविपर्यस्तम्, तदा नित्यं परिशुद्धस्वभावत्वान्न बन्धः स्यात् । अस्माकं तु सन्तानभेदेन विज्ञप्तिः संक्लिष्टा शुद्धा चेष्यत इति युक्ता बन्धनमोक्षव्यवस्था । यथोक्तम्—

"संक्लिष्टा च विशुद्धा च समला निर्मला च सा ।
संक्लिष्टा चेद्भवेन्नासौ मुक्ताः स्युः सर्वदेहिनः ॥
विशुद्धा चेद्भवेन्नासौ व्यायामो निष्फलो भवेत्" । इति ( ) ॥३३३॥

[ G. 125 ] अथापि स्यात्—कल्पितावेव बन्धमोक्षौ न पारमार्थिकाविति ? तदत्र कल्पनाया अपि निबन्धनं वाच्यम् । अनित्यज्ञानपक्षे तु निबन्धनमुपदर्शितमेव । ततश्च योऽयं भवतामपवर्गप्राप्तये संसारसमतिक्रमाय च तत्त्वभावनाप्रयत्नः, स केवलमायासफल एवेति दर्शयति—किं वेत्यादि ! यदि हि तत्त्वभावनया

---

१–१. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति ।

तत्त्वज्ञानं न चोत्पाद्यं तादात्म्यात् सर्वदा स्थितेः ।
योगाभ्यासोऽपि तेनायमफलः सर्व एव च ॥ ३३५ ॥

## ६. वात्सीपुत्रीयपरिकल्पितात्मपरीक्षा

### तन्मतोपन्यासः

केचित्तु सौगतम्मन्या अप्यात्मानं प्रचक्षते ।
पुद्गलव्यपदेशेन तत्त्वान्यत्वादिवर्जितम् ॥ ३३६ ॥

### तन्मतखण्डनम्

स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः ।
नानन्योऽनेकताद्याप्तेः साध्वी तस्मादवाच्यता ॥ ३३७ ॥

---

योगी किञ्चिन्निवर्त्तयेत्, प्रवर्तयेद्वा, तदा स्यादस्य सफलः प्रयासः, यावता न तावदसौ विपर्यासं निवर्त्तयति; यस्मादसौ विपर्यासस्तदात्मकः = नित्यज्ञानात्मकः, तस्मान्न हातुं शक्यः; नित्यस्याविनाशितया त्यागसम्भवात्। नापि तत्त्वज्ञानं भा-न्या साधयति; नित्यज्ञानात्मतया सर्वदा तत्त्वज्ञानस्यावस्थितत्वात्। तस्माद् न युक्तमेतत् ॥ ३३४–३३५ ॥

इत्यौपनिषदिकात्मपरीक्षा

वात्सीपुत्रीयपरिकल्पितपुद्गलप्रतिषेधार्थमाह—केचित्त्वित्यादि ।

केचिदिति वात्सीपुत्रीयाः । ते हि सुगतसुतमात्मानं कल्पयन्ति । ये हि नाम भगवतो नैरात्म्यवादिनस्सुगतस्य सुतत्वमभ्युपगतास्ते कथमिव वितथात्मदृष्टिमभिनिविष्टास्स्युरिति दर्शयन्नुपहासपदमाह—सौगतम्मन्या अपीति । तथा हीदमात्मनो लक्षणम्—यो हि शुभाशुभकर्मभेदानां कर्त्ता, स्वकृतकर्मफलस्य चेष्टानिष्टस्य च भोक्ता, यश्च पूर्वस्कन्धपरित्यागादपरस्कन्धान्तरोपादानात् संसरति भोक्ता च स आत्मेति । एतच्च सर्वं पुद्गलेऽपीष्टमिति केवलं नाम्नि विवादः ॥ ३३६ ॥

अथ पुद्गलस्यावाच्यत्वे का पुनर्युक्तिः ? इत्याह—स्कन्धेभ्य इत्यादि ।

[G. 126] यदि स्कन्धेभ्योऽन्यः पुद्गलः स्यात्, तदानीं तैर्थिकपरिकल्पितात्मदृष्टिर्भवेत्, ततश्च शाश्वतात्मप्रसङ्गः । न च शाश्वतस्यात्मनः कर्तृत्व-

ते वाच्याः—पुद्गलो नैव विद्यते पारमार्थिकः ।
तत्त्वान्यत्वादवाच्यत्वान् नभःकोकनदादिवत् ॥ ३३८ ॥
अन्यत्वं वाऽप्यनन्यत्वं वस्तु नैवातिवर्त्तते ।
वस्तुतो यत्तु नीरूपं तदवाच्यं प्रकल्प्यते ॥ ३३९ ॥
भेदाभेदविकल्पस्य वस्त्वधिष्ठानभावतः ।
तत्त्वान्यत्वाद्यनिर्देशो निःस्वभावेषु युज्यते ॥ ३४० ॥

---

भोक्तृत्वादि युक्तम्; आकाशवत् तस्य सर्वदा निर्विशिष्टत्वात् । प्रतिषिद्धश्च भगवता शाश्वत आत्मा । "निरात्मानः सर्वे धर्माः" ( ) इति च वचनं व्याहन्येत । अनन्यस्तर्हि भवतु ? इति चेदाह—नानन्य इत्यादि । यदि हि स्कन्धा एव रूपादयः पुद्गल स्यात्, तदा बहुभ्यः स्कन्धेभ्योऽनन्यत्वात् तत्स्वरूपवदनेकता प्राप्नोति पुद्गलस्य, एकश्चेष्यते । यथोक्तम्—"एकः पुद्गलो लोक उत्पाद्यमान उत्पद्यते यद्गुत तथागतः" ( ) इति । आदिशब्देनानित्यत्वादिपरिग्रहः । एवं च सति उच्छेदित्वं स्कन्धवत् पुद्गलस्यापि स्यात् । ततश्च कृतकर्मविप्रणाशप्रसङ्गः । प्रतिषिद्धश्च भगवतोच्छेदवाद इत्यतः—अस्त्यवाच्यः पुद्गल इति सिद्धम् ॥ ३३७ ॥

ते वाच्या इत्यादिना "वस्तुवत् पुद्गलो न भवति; अवाच्यत्वात्" इति स्ववचनादेव भवद्भिः प्रतिपादितमिति दर्शयति । प्रयोगः—यद्वस्तुनः सकाशात्तत्त्वान्यत्वाभ्यां वाच्यं न भवति न तद्वस्तु, यथा—गगननलिनम् । न भवति च वाच्यः पुद्गल इति व्यापकानुपलब्धेः । वैधर्म्येण वेदनादि ॥ ३३८ ॥

कथं पुनरत्र व्याप्तिः सिद्धा ? इत्याह—अन्यत्वमित्यादि । वस्तुनो हि सकाशाद्वस्तु नैव तत्त्वान्यत्वे व्यतिक्रामति; गत्यन्तराभावात्, अन्यथा रूपादीनामपि परस्परतोऽवाच्यत्वं स्यात् । तस्मान्नीरूपमस्वभावमेवावाच्यं प्रकल्प्यते, न तु वस्तु ॥ ३३९ ॥

कथम् ? इत्याह—भेदाभेदविकल्पस्येत्यादि । [G. 127] वस्त्वेव हि भेदाभेदविकल्पयोरधिष्ठानम्, नावस्तु । तेन तत्त्वान्यत्वाद्यनिर्देशो निःस्वभावेष्वेव = स्वभावविरहितेष्वेव युज्यते । न वस्तुनि तत्त्वान्यत्वाद्यनिर्देशो युज्यते

न वस्तुनि यदेतद्धि तन्नेति प्रतिषेधनम् ।
तद्वस्त्वन्तरवत् तस्माद् व्यक्तमन्यत्वमुच्यते ॥ ३४१ ॥
अतद्भावनिषेधश्च तत्त्वमेवाभिधीयते ।
नातिक्रामति तद्वस्तु तत्त्वं भेदं च वस्तुनः ॥ ३४२ ॥
स्कन्धेभ्यः पुद्गलो नान्य इत्येषाऽनन्यसूचना ।
स्कन्धो न पुद्गलश्चेति व्यक्ता तस्येयमन्यता ॥ ३४३ ॥

इति सम्बन्धः; तत्र भेदाभेदाभ्यां गत्यन्तराभावात् । कथं पुनर्गत्यन्तराभावः ? इत्याह—यदेतद्धीत्यादि । तथा हि—रूपादिस्वभावः पुद्गलो न भवतीति[1] यदेतन्नेति[2] निषेधनम्, तत्तस्माद्रूपादेः सकाशादन्यत्वमेवाभिधीयते; स्वभावान्तरविधिनान्तरीयकत्वाद्वस्तुनो वस्त्वन्तरभावनिषेधस्य । प्रयोगः—यद्वस्तु यत्स्वभावविरहितं तत्ततोऽन्यत्, यथा—रूपं वेदनातः । रूपादिस्वभावविरहि च पुद्गलाख्यं वस्तु—इति स्वभावहेतुः ।

यश्चायं वस्तुनोऽतद्भावनिषेधः = अतद्रूपनिषेधः, स तत्त्वमव्यतिरेक एवाभिधीयते; तत्त्वविधिनान्तरीयकत्वाद् वस्तुसतोऽर्थान्तरभावनिषेधस्य । अन्यथा हि यदि तस्य न कश्चित् स्वभावो विधीयते, तदा सर्वस्वभावनिषेधादवस्तुत्वमेव स्यात्; सर्वस्वभावनिषेधलक्षणत्वादवस्तुत्वस्येति । प्रयोगः—यद्वस्तु यतोऽर्थान्तरत्वेन प्रतिषिद्धात्मतत्त्वं तत्तदेव, यथा—रूपं स्वस्वभावादर्थान्तरत्वेन प्रतिषिद्धात्मतत्त्वम् । प्रतिषिद्धात्मतत्त्वश्च रूपादिभ्योऽर्थान्तरत्वेन पुद्गल इति स्वभावहेतुः । तत्तस्माद् वस्तुनः सकाशात् तत्त्वान्यत्वे वस्तु नातिक्रामतीति सिद्धा व्याप्तिर्मौलस्य हेतोः ॥ ३४०–३४२ ॥

एवं तावदवाच्यत्वाभ्युपगमे प्रज्ञप्तिसत्त्वं पुद्गलस्य शासनिति प्रतिपादितम् । इदानीं वस्तुत्वाभ्युपगमे वा पुद्गलस्यावाच्यत्वमयुक्तम्; अन्यथा स्ववचनविरोधः प्रतिज्ञायाः स्यात्—इति मन्यमानो निगमयति—स्कन्धेभ्य इत्यादि ॥ ३४३ ॥

१. भवति—जै० ।
२. यदेतत्तन्निषेधनम्—पा०, गा० ।

विरुद्धधर्मसंश्लेषो[1] वस्तूनां भेद उच्यते ।
स्कन्धपुद्गलयोश्चैष[2] विद्यते भिन्नता न किम् ॥ ३४४ ॥
तथा हि वेदनादिभ्यः पुद्गलोऽवाच्य उच्यते ।
तत्त्वान्यत्वेन वाच्यास्तु रूपसंज्ञादयस्ततः ॥ ३४५ ॥
अनित्यत्वेन वाच्याश्च रूपस्कन्धादयो मताः ।
पुद्गलस्तु तथा नेति ततो विस्पष्टमन्यता ॥ ३४६ ॥

प्रकारान्तरेण खण्डनम्

अर्थक्रियासु शक्तिश्च विद्यमानत्वलक्षणम् ।

अपि च—'अवाच्यः पुद्गलः' इति ब्रुवाणैर्भवद्भिः स्फुटतरमेव स्कन्धेभ्यः पुद्गलस्यान्यत्वमुच्चैरुद्घोषितमिति दर्शयति – विरुद्धधर्मसंश्लेष' इत्यादि । प्रयोगः – यौ परस्परपरिहारस्थितधर्माध्यासितौ, तौ परस्परभिन्नौ, यथा–रूपवेदने मूर्त्तत्वामूर्त्तत्वयुक्ते । वाच्यत्वावाच्यत्वादिपरस्परविरुद्धधर्माध्यासितौ च स्कन्धपुद्गलाविति स्वभावहेतुः ॥ ३४४ ॥

[G. 128] न चायमसिद्धो हेतुरिति दर्शयन्नाह—तथा हीत्यादि । तथा हि पुद्गलो वेदानासंज्ञादिभ्यस्तत्त्वान्यत्वाभ्यामवाच्य इष्यते । रूपवेदनादयस्तु ततः = वेदनादिभ्यः, परस्परमन्यत्वेन वाच्याः—इत्यतो नासिद्धता हेतोः ॥ ३४५ ॥

इतोऽपि विरुद्धधर्माध्यासः सिद्ध इत्यादर्शयति - अनित्यत्वेनेत्यादि । "अनित्याः सर्वसंस्काराः" (      ) इति वचनाद् रूपादयो ह्यनित्यत्वेन वाच्याः, पुद्गलस्तु तथा नानित्यत्वेन वाच्य इष्टः; सर्वप्रकारेण तस्यावाच्यत्वात् । न चाप्यनैकान्तिकता हेतोः; एतावन्मात्रनिबन्धनत्वाद् भेदव्यवहारस्य; अन्यथा हि सकलमेव विश्वमेकं वस्तु स्यात्, ततश्च सहोत्पादविनाशप्रसङ्गः ॥ ३४६ ॥

न केवलं तत्त्वान्यत्वाभ्यामवाच्यत्वादवस्तु पुद्गलोऽयमिति प्रतिपादितम्, इतोऽप्यनित्यत्वेनावाच्यत्वादेवावस्त्विति प्रतिपादयन्नाह—अर्थक्रियास्वित्यादि ।

---

१. विरुद्धधर्मसङ्गो हि—पा० गा० । २. ०श्चैव—पा०, गा० ।

क्षणिकेष्वेव नियता तथाऽवाच्ये न वस्तुता ॥ ३४७ ॥

इदमेव हि विद्यमानत्वलक्षणं वस्तुस्वभावो यदुतार्थक्रियासु शक्तिः, सर्वसामर्थ्य-विरहलक्षणत्वादवस्तुत्वस्येति सामर्थ्यादर्थक्रियासामर्थ्यलक्षणमेव वस्तुत्वमवतिष्ठते। सा चार्थक्रिया क्षणिकेष्वेव नियता, क्षणिकत्वेनैव व्याप्तेति यावत्; नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्। अतस्तथा क्षणिकत्वेनावाच्ये पुद्गले वस्तुता नास्ति। तत्र तद्व्यापकस्य क्षणिकत्वस्य निवृत्तेः वृक्षत्वनिवृत्तौ [1]शिंशपात्वादि-निवृत्तिवदिति। यथोक्तम्—"अनित्यत्वेन योऽवाच्यः स हेतुर्न हि कस्य-चित्" (प्र० वा० १. २०५) इति।

स्यादेतद्—यदि पुद्गलो नित्यः स्यात्, तदा तस्य क्रमयौगपद्याभ्यामर्थ-क्रियाविरोधः स्यात्, यावता यथाऽसावनित्यत्वेनावाच्यः तथा नित्यत्वेनापीति अतोऽर्थक्रियासामर्थ्यमस्याविरुद्धमेवेति ? तदसम्यक्; न ह्युभयाकारविनिर्मुक्तं वस्तु स्वलक्षणं युक्तम्, नित्यानित्ययोरन्योन्यवृत्तिपरिहारस्थितलक्षणत्वात्। वस्तुन्येकाकारत्यागपरिग्रहयोस्तदपराकारपरिग्रहत्यागनान्तरीयकत्वात्। न ह्यस्मा-भिरवाच्यशब्दनिवेशनं पुद्गले प्रतिषिध्यते, स्वतन्त्रेच्छामात्राधीनस्य[2] [G. 129] केनचित् प्रतिषेद्धुमशक्यत्वात्; किन्त्विदमिह वस्तुरूपं निरूप्यते। किमसौ पुद्गलाख्यस्य वस्तुनः स्वभावः सर्वदाऽस्ति ? आहोस्विन्नास्तीति ? यद्यस्ति तदा नित्य एवासौ, न हि नित्यो नामान्य एव कश्चित्, अपि तु यः स्वभावः सदाऽवस्थायी, न विनश्यति, स नित्य उच्यते। यथोक्तम्—"नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति" (प्र० वा० १. २०६) इति। अथ नास्तीति पक्षः, तदाऽप्यनित्य एवासौ; अनवस्थायिस्वभावलक्षणत्वादनित्यस्य। अतः क्षणिकाक्षणिकव्यतिरेकेण गत्यन्तराभावाद्; अक्षणिकस्य च क्रमयौगपद्याभ्यामर्थ-क्रियाविरोधात् क्षणिकत्वेनार्थक्रियासामर्थ्यलक्षणं सत्त्वं व्याप्तमिति पुद्गले क्षणिक-त्वनिवृत्तौ सत्त्वनिवृत्तिः सिद्धा ॥ ३४७ ॥

---

१. शिंशपादि०—जै०।

२. ०मात्रानीतस्य—पा० गा०।

आगमार्थविरोधे तु पराक्रान्तं महात्मभिः ।
नास्तिक्यप्रतिषेधाय चित्रा वाचो दयावतः ॥ ३४८ ॥

भारहारादिदेशनौचित्यम्

समुदायादिचित्तेन भारहारादिदेशना ।
विशेषप्रतिषेधश्च तद्दृष्टीन् प्रति राजते ॥ ३४९ ॥

---

यद्येवम्, यदि पुद्गलो नास्त्येव, कस्माद्भगवता "स जीवस्तच्छरीरमन्यो जीवोऽन्यच्छरीरम्" इति पृष्टेनोक्तम्—"अव्याकृतमेतत्" ( ) इति, यावता 'नास्त्येव' इति कस्मान्नोक्तम् ? इत्याह—आगमार्थविरोधे त्वित्यादि । यदि हि पुद्गलो धर्मी सिद्धो भवेत्, तदा तस्य तत्त्वान्यत्वादिधर्मोऽव्याकृतमर्हेत् । यावता स एव धर्मी न सिद्धः, तत्कथमसतस्तस्य धर्मो निर्दिश्येत ! न ह्यसतः खरविषाणादेस्तीक्ष्णतादि सम्भवति येनासौ व्याक्रियते । अतः प्रज्ञप्तिसत्त्वमेव ख्यापयन् पुद्गलस्य "अव्याकृतमेतत्" इति भगवानुवाच । नास्तीत्येवं तु नोक्तम्; परेण धर्मिस्वरूपस्यापृष्टत्वात् । अथ वा—प्रज्ञप्तिसतोऽप्यभावाभिनिवेशपरिहारार्थं शून्यतादेशनायामभव्यविनेयजनाशयापेक्षया नास्तीत्येव नोक्तम् । यथोक्तम्—

"दृष्टिदंष्ट्राववभेदं च भ्रंशं चावेक्ष्य कर्मणाम् ।
देशयन्ति जिना धर्मं व्याघ्रीपोतापहारवत् ॥" ( अभि० को० भा० )

इति । एवमाचार्यवसुबन्धुप्रभृतिभिः कोश-परमार्थसप्ततिकादिष्वभिप्रायप्रकाशनात् पराक्रान्तम्, अतस्तत एवावगन्तव्यम् । इह त्वतिग्रन्थविस्तरभिया न लिख्यत इति भावः ।

यद्येवम्, "अस्ति सत्त्व उपपादकः" (दी० नि० १.१.१) इत्येतत् कथं नीयते ? इत्याह—नास्तिक्येत्यादि । सत्त्वास्तित्वाभिधायिन्यो हि देशनाश्चित्र दयावतः, न विरुध्यन्त इति वाक्यशेषः । यत्र हि चित्तसन्ताने सत्त्वप्रज्ञप्तिः तस्यां सत्यामनुच्छेदमभिसन्धाय "अस्ति सत्त्वः" इत्युक्तं भगवता; अन्यथा ह्यनुपरतकार्यकारणक्षणपरम्पराणामपि संस्काराणामभावावगमात् परलोकिनोऽसत्त्वात् परलोकासिद्धिरिति नास्तिक्यदृष्टयो भवेयुर्विनेयाः ॥ ३४८ ॥

[G. 130] यत्त्विदमुक्तम्—"भारं वो भिक्षवो देशयिष्यामि भारादानं भारनिक्षेपं भारहारं च। तत्र भारः = पञ्चोपादानस्कन्धाः, भारादानम् = तृष्णा[1], भारनिक्षेपः = मोक्षः, भारहारः = पुद्गलः" (सं० नि०, स्क० सं०, २२ सू०) इति, तदेतत् कथं नीयते, न हि भार एव भारहारो युक्तः ? इत्याह—समुदायादीत्यादि। तत्र समानकालाः स्कन्धा एव सामस्त्येन विवक्षिताः समुदायव्यपदेशभाजः, त एव हेतुफलभूताश्च युगपत्कालभाविनः सन्तान इति व्यपदिश्यन्ते, एकाकारपरामर्शहेतवश्च सम्भवन्तः सन्तानि-समुदायिशब्दाभ्यां निर्दिश्यन्त इत्यतः, समुदायादिचित्तेन = समुदायाद्यभिप्रायेण, भारहारादिदेशना, न विरुध्यत इति शेषः। प्रथमेनादिशब्देन सन्तानादिपरिग्रहः, द्वितीयेन भारादेः। तत्र त एव स्कन्धाः समुदायसन्तानादिरूपेण विवक्षिताः, पुद्गलः, भारहार इति च व्यपदिश्यन्ते; तत्रैव लोके पुद्गलाभिधानात्। अत एव भगवता—"भारहारः कतम पुद्गलः ?" (सं० नि०, स्क० सं०, २२ सू०) इत्युक्त्वा, "योऽसावायुष्मन्नेवंनामा, एवंजातिः, एवंगोत्रः, एवमाहारः, एवंसुखदुःखप्रतिसंवेदी, एवंदीर्घायुः" (सं० नि०, स्क० सं०, २२ सू०) इत्यादिना पुद्गलो व्याख्यातः। स एवं स्कन्धसमुदायलक्षणः प्रज्ञप्तिसन् यथा[2] विज्ञायेत, नान्यो नित्यो द्रव्यसन् परपरिकल्पितो विज्ञायेतेति प्रदर्शनार्थम्[3]। अवश्यं चैवं विज्ञेयम्, [illegible] भारादीनामपि स्कन्धेभ्यः पृथग्देशितत्वात् पुद्गलवत् स्कन्धानन्तर्गतं तत् स्यात्। तस्मात्त एव स्कन्धा ये स्कन्धान्तरस्योत्पादाय वर्त्तन्ते पूर्वकाः, ते भार इति कृत्वोक्ताः। ये तूपेष्यन्ते फलभूतास्ते भारहारा इत्युक्ताः—इत्यज्ञापकमेतत्।

उद्द्योतकरस्त्वाह—"आत्मानमनभ्युपगच्छता नेदं तथागतवचनमर्थवत्तायां शक्यं व्यवस्थापयितुम्, यस्मादिदमुक्तम्—'रूपं भदन्त नाहम्, वेदना, संज्ञा, संस्काराः, विज्ञानं भदन्त नाहम्; एवमेतद्भिक्षो रूपं न त्वम्, वेदना, संज्ञा, संस्काराः, विज्ञानं न त्वम्" ( ) इति। एतेन हि रूपादयः स्कन्धा अहङ्कारविषयत्वेन प्रतिषिद्धाः। विशेषप्रतिषेधश्चायं न सामान्यप्रतिषेधः। आत्मानं चानभ्युपगच्छता सामान्येनैव प्रतिषेद्धव्यम्, नैव त्वमसीति।

---

१. तुष्टिः—पा०, गा०। २. सन्नन्यथा—पा०, गा०। ३. प्रदेशनार्थः—गा०।

# स्थिरभावपरीक्षा

## आचार्यस्य प्रतिज्ञा

अथ वाऽस्थान एवायमायासः क्रियते यतः ।
क्षणभङ्गप्रसिद्ध्यैव प्रकृत्यादि निराकृतम् ॥ ३५० ॥
उक्तस्य वक्ष्यमाणस्य जात्यादेश्चाविशेषतः ।
निषेधाय ततः स्पष्टं क्षणभङ्गः प्रसाध्यते ॥ ३५१ ॥

---

विशेषप्रतिषेधस्त्वन्यविधिनान्तरीयको भवति । यथा—'वामेनाक्ष्णा न पश्यामि इत्युक्ते गम्यत एव दक्षिणेन [ G. 131 ] पश्यामीति; तेनाप्यदर्शने वामग्रहणमनर्थकम्; न पश्यामीत्येव वाच्यं स्यात्; तथेहापि 'न रूपमात्मा यावन्न हि विज्ञानमात्मा' इत्युक्ते तद्विलक्षणोऽस्त्यात्मेति सूचितं भवति । स त्ववाच्योऽन्यो वा भवतु, सर्वथाऽस्त्यात्मनेति । अत्राह—विशेषप्रतिषेधश्चेत्यादि । एतदुक्तं भवति—विंशतिशिखरसमुद्गतोऽयं सत्कायदृष्टिशैलः कुमतीनां प्रवर्त्तते—यदुत 'रूपमात्मा, यावद्विज्ञानमात्मा, रूप आत्मा, यावद्विज्ञाने आत्मा, रूपवानात्मा, यावद्विज्ञानवानात्मा, आत्मनि रूपम्, यावद्विज्ञानमात्मनि' इति । तत्राद्यदृष्टिपञ्चकप्रतिषेधाय तद्दृष्टिकान् प्रति विशेषरूपेण प्रतिषेधः शोभते । सा रूपमात्मेत्यादिका दृष्टिर्येषां ते तद्दृष्टिकाः । यदेव हि मूढमतेराशङ्कास्थानं तदेवानूद्य निवर्त्त्यते । न त्वत्र कस्यचिद्विधिरभिप्रेतः; अन्यथा ह्यश्रोतृसंस्कारकं वाक्यं ब्रुवाणोऽप्रेक्षावानेव प्रतिपादकः स्यादिति ॥ ३४९ ॥

इति वात्सीपुत्रीयपरिकल्पितात्मपरीक्षा

---

'चलम्' इत्येतद्विशेषणसमर्थनार्थमाह—अथ वेत्यादि । निरवशेषपदार्थव्यापिनः क्षणभङ्गस्य प्रसाधनादेव प्रकृतीश्वरादेः परपरिकल्पितस्य सकलपदार्थराशेरेकप्रहारेणैव निरस्यमानस्यापि सतो यदिदमस्माकमतिग्रन्थविस्तरसन्दर्भेण प्रतिपदमुच्चार्य दूषणोपक्रमणम्, तत्केवलमायासफलमेव; स्वल्पोपायेनैव तस्य दूषितत्वादिति भावः । तथा हि—सर्वमेव प्रकृत्यादि परैरन्वयानन्तरापवर्गि निरन्वयनिरोधधर्मकं वा कैश्चिन्नेष्यते । ततश्चैतत् समस्तवस्तुव्यापकक्षणभङ्ग-

क्षणभङ्गप्रसाधनम्

कृतकाकृतकत्वेन द्वैराश्यं कैश्चिदिष्यते ।
क्षणिकाक्षणिकत्वेन भावानामपरैर्मतम् ॥ ३५२ ॥
तत्र ये कृतका भावास्ते सर्वे क्षणभङ्गिनः ।
विनाशं प्रति सर्वेषामनपेक्षतया स्थितेः ॥ ३५३ ॥
यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते ।
तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात् ॥ ३५४ ॥

---

प्रसाधनेनैव निरस्तं भवतीति मन्यमानैरस्माभिरुक्तस्य प्रकृत्यादेः पुद्गलपर्यन्तस्य वक्ष्यमाणस्य च जातिगुणद्रव्यादेः शब्दार्थयोः प्रमाणप्रमेययोर्मेचकादिमणिप्रख्य-चित्रस्य वस्तुनस्त्रिकालानुयायिनो भावस्य चार्वाकाद्युपगतस्य च भूतचतुष्टयस्य जैमिनीयेष्टस्य च वैदिकशब्दराशेर्निरासाय विशेषेण क्षणभङ्गः प्रसाध्यते ।

स्पष्टमिति । तत्साधकस्य हेतोस्त्रिरूपस्य प्रदर्शनात् । अतोऽस्यामेव स्थिरभावपरीक्षायां सकलशास्त्रार्थपरिसमाप्तिर्भवतीत्युक्तं भवति॥ ३५०-३५१ ॥

[ G. 132 ] कथमसौ प्रसाध्यते ? इत्याह—कृतकाकृतकत्वेनेत्यादि । इह हि नैयायिकादयः—'क्षणिकमेकमपि वस्तु नास्ति' इति मन्यमानाः कृतकाकृतकत्वेन भावानां द्वैराश्यमवस्थापयन्ति । तत्र केचित् कृतकाः, यथा—घटादयः; केचिदकृतकाः, यथा—परमाण्वाकाशादयः । अपरैस्तु वात्सीपुत्रीया-दिभिः क्षणिकाक्षणिकत्वेनापि भावानां द्वैराश्यमिष्यते । तथा हि—बुद्धिशब्दार्चिः-प्रभृतयस्तन्मतेन क्षणिकाः, क्षितिव्योमादयस्त्वक्षणिका इति ॥ ३५२ ॥

तदेवं दर्शनविभागेऽवस्थिते ये कृतकत्वेनाभीष्टाः, तांस्तावत् पक्षीकृत्य प्रमाणमभिधीयत इति दर्शयन्नाह—तत्रेत्यादि ॥ ३५३ ॥

विनाशं प्रति सर्वेषां हेत्वन्तरानपेक्षतया स्थितत्वादित्यनेन हि त्रिलक्षणो हेतुः सूचितः । तमेव स्पष्टयन्नाह—यद्भावं प्रतीत्यादि । प्रयोगः—ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियताः, यथा—समनन्तरफला सामग्री स्वकार्योत्पादने नियता । विनाशं प्रत्यनपेक्षाश्च सर्वे जन्मिनः कृतका भावा इति स्वभावहेतुः । हेत्वन्तरमिति । जनकाद्व्यतिरिक्तम् । नियतमित्यत्र कारणमाह—स्वहेतुभ्य इति । तथा—

निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा ।
विनाशं प्रति सर्वेऽपि निरपेक्षाश्च जन्मिनः ॥ ३५५ ॥
अनपेक्षोऽपि यद्येष देशकालान्तरे भवेत् ।
तदपेक्षतया नैष निरपेक्षः प्रसज्यते ॥ ३५६ ॥
सर्वत्रैवानपेक्षाश्च विनाशे जन्मिनोऽखिलाः ।
सर्वथा नाशहेतूनां तत्राकिञ्चित्करत्वतः ॥ ३५७ ॥

---

तेन नियतेन रूपेणोत्पन्नत्वादित्यर्थः । ये तु पुनर्यत्र न नियताः, ते तत्रानपेक्षा अपि न भवन्त्येव, यथा घटादयोऽपक्वाः पाकादिष्वितीदमत्र वैधर्म्येणोदाहरणम् ॥ ३५४-३५५ ॥

ननु चानैकान्तिको हेतुः, तथा हि— यदि नाम विनाशं प्रति हेत्वन्तरानपेक्षा भावाः, तथापि स्थित्वा देशान्तरे कालान्तरे च भावस्य विनाशसम्भवादुदयानन्तरापवर्गित्वमभीष्टमेषां साधयितुं न सिध्यतीत्याह—अनपेक्षोऽपीत्यादि । [ G. 133 ] एप इति विनाशः । तदपेक्षयेति देशकालान्तरापेक्षतया । यो हि यत्रानपेक्षः स यदि क्वचिद्भवेत्, कदाचिद्वा, तदा तद्देशकालापेक्षत्वादनपेक्ष एव न स्यादिति कुतो व्यभिचारः ! तथा हि—एकदेकालपरिहारेणान्यत्र देशकालादौ वर्त्तमानः कथमनपेक्षो नाम; यतस्तथावृत्तिरेव तस्यापेक्षा, न तु समीहा; तस्याभिप्रायशून्यत्वात् ॥ ३५६ ॥

यदि तर्हि सर्वथा निरपेक्षत्वादिति हेत्वर्थोऽभिप्रेतः, न तर्हि हेतुः सिद्धः । तथा हि—केचिद्विनाशं प्रति मुद्गरादिकमपेक्षमाणा दृश्यन्ते, यथा— घटादयः येऽपि बुद्धिशब्दादयोऽनपेक्षत्वेन प्रसिद्धाः, तेऽपि यदि नाम मुद्गरादिकं नापेक्षन्ते, तथापि देशकालावपेक्षन्त इत्यतोऽसिद्धता हेतोः ?—इत्याशङ्क्य परिहरन्नाह—सर्वत्रैवेत्यादि ।

सर्वत्रैवेति सर्वस्मिन् देशकालादिके विनाशहेतौ निरपेक्षा जन्मिन इत्यर्थः । नाशहेतुत्वेनाभ्युपेतानामकिञ्चित्करत्वादनुपकारित्वात् । न चानुपकार्यपेक्षो युक्तः; अतिप्रसङ्गात् ॥ ३५७ ॥

तथा हि नाशको हेतुर्न भावाव्यतिरेकिणः ।
नाशस्य कारको युक्तः स्वहेतोर्भावजन्मतः ॥ ३५८ ॥
न चानंशे समुद्भूते भावात्मन्यात्महेतुतः ।
तदात्मैव विनाशोऽन्यैराधातुं पार्यते पुनः ॥ ३५९ ॥
पदार्थव्यतिरिक्ते तु नाशनाम्नि कृते सति ।
भावे हेत्वन्तरैस्तस्य न किञ्चिदुपजायते ॥ ३६० ॥

---

कथमकिञ्चित्करत्वम्? इत्याह—तथा हीत्यादि। विनाशो हि क्रियमाणः कदाचिद्वस्तु वा स्याद्? अवस्तु वा? तत्र यदि वस्तु, तदाऽसौ विनाशहेतुना ततो विनाशहेतोर्भावादनर्थान्तरभूतो वा क्रियेत, अर्थान्तरभूतो वा। वस्तुसतो विकल्पद्वयानतिवृत्तेरुभयानुभयपक्षस्त्वयुक्त एव; वस्तुन्येकाकारत्यागपरिग्रहयोस्तदपराकारपरिग्रहत्यागनान्तरीयकत्वात्। एकस्य विधिप्रतिषेधोभयायोगादित्युक्तम्। तत्र न तावदनर्थान्तरभूत इति पक्षः; भावस्वभावस्य स्वहेतोरेव द्भवत उत्पत्तेः। तस्यापि भाववत् तदव्यतिरेकिणो निष्पन्नत्वात्। न च निष्पन्नस्य कारणं[1] युक्तम्; [2]कारणाविरामप्रसङ्गात् ॥ ३५८ ॥

स्यादेतत्—नासौ भावः स्वहेतोः सर्वात्मना निष्पन्नः, अतः कारणान्तरतो नाशाख्यं स्वभावान्तरं लभते? इत्याह—न चानंश इत्यादि। [G.134] न ह्येकस्य स्वभावद्वयमस्ति, येनांशेन निष्पत्तिः स्यात्, किं तु निरंश एव भावः। स च स्वहेतोरुत्पद्यमानः सर्वात्मनैवोत्पन्न इति कथं तस्योत्तरकालं कारणान्तरैः स्वभावान्तरमाधीयेत। न हि यन्निष्पत्तौ यो न निष्पन्नः स तस्य स्वभावो युक्तः; एकयोगक्षेमलक्षणत्वादभेदस्य। तस्माद्योऽसावुत्तरकालमुत्पद्यते नाशात्मा भावः सोऽपरः स्वभावः, यश्चापरः स कथं तस्य भवेदिति यत्किञ्चिदेतत् ॥ ३५९ ॥

अथार्थान्तरभूत इति पक्षः, तत्राप्यकिञ्चित्कर एव विनाशहेतुर्भावस्येति दर्शयति—पदार्थव्यतिरिक्त इत्यादि। न ह्यन्यस्य करणेऽन्यदुपकृतं नाम; अतिप्रसङ्गात्। नापि तत्सम्बन्धिनो नाशस्य करणाद्भाव उपकृतो भवतीति युक्तं

---

१. करणं—जै०। २. करणावे०—जै०

तेनोपलम्भकार्यादि प्राग्वदेवानुषज्यते ।
तादवस्थ्याच्च नैवास्य युक्तमावरणाद्यपि ॥ ३६१ ॥
नाशनाम्ना पदार्थेन भावो नाश्यत इत्यसत् ।
अन्यत्वादिविकल्पानां तत्राप्यर्थानुवृत्तितः ॥ ३६२ ॥
भावाभावात्मको नाशः प्रध्वंसापरसंज्ञकः ।
क्रियते चेन्न तस्यापि करणं युक्तिसङ्गतम् ॥ ३६३ ॥

---

वक्तुम्; सम्बन्धासिद्धेः । तथा हि—भेदाभ्युपगमान्न तादात्म्यलक्षणः सम्बन्धः, नापि तदुत्पत्तिलक्षणः; विनाशहेतोरेवं तदुत्पत्तेः, न चान्यो वास्तवः सम्बन्धोऽस्ति । सत्यपि वा सम्बन्धे भावस्यावस्थितत्वात् तथैवोपलम्भादिकार्यप्रसङ्गः । उपलम्भ एव कार्यम् । आदिशब्देन जलसन्धारणजन्नाभङ्गादिपरिग्रहः । तेन व्यतिरिक्तेन नाशेनावृतत्वात् प्रतिबद्धत्वाद्वा नोपलम्भादिकार्यं करोतीति चेत् ? आह—तादवस्थ्यादित्यादि । न हि भावस्य स्वभावातिशयमखण्डयन्ननुत्पादयन् वा तस्याऽऽवारकः प्रतिबन्धको वा युक्तः; अतिप्रसङ्गात् । तस्मादत्यक्तानावृताप्रतिबद्धपूर्वस्वभावत्वात् तस्यावरणं प्रतिबन्धश्च न युज्यते ॥ ३६०—३६१ ॥

स्यादेतत्—न प्राग्वदुपलब्ध्यादिप्रसङ्गः, तेन व्यतिरिक्तेन नाशेन भावस्य विनाश्यमानत्वादित्याह— नाशनाम्नेत्यादि । नाशो हि भावं नाशयन्किमन्यम्, अनन्यं वा, यद्वा प्रध्वंसलक्षणं नाशं कुर्वाणो [G. 135] नाशयति मुद्गरादिवदित्यत्रापि तुल्या एव विकल्पाः पुनरावर्तन्ते । तत्र चोक्तो दोषः, वक्ष्यते च—तत्राप्यन्यं (तत्त्व० ४०३) इति[1] । योऽसौ नाशनाम्नाऽपरो नाशः क्रियते, तत्रापि[1] अर्थानुवृत्तित इति । अन्यत्वादिविकल्पानामनुवृत्तेरित्यर्थः । एवं तावद् वस्तुभूतो न क्रियत इति प्रतिपादितम् ॥ ३६२ ॥

नाप्यवस्तुभूत इति दर्शयन्नाह—भावाभावात्मक इत्यादि । भावस्य हि करणं भवति; नाभावस्य, निमित्तीकर्त्तव्यसकलस्वभावविरहलक्षणत्वान्न किञ्चिदुत्पाद्यं रूपमस्ति, अतो भावाभावात्मकः = भावनिषेधात्मको नाशो न केन-

---

१—१. तत्रापीति—पा०, गा० ।

अभावस्य च कार्यत्वे वस्तुतैवांकुरादिवत् ।
प्रसक्ताजन्यरूपस्य हेतुशक्त्या समुद्भवात् ॥ ३६४ ॥
विधिनैवमभावश्च पर्युदासाश्रयात् कृतः ।
यस्तत्र व्यतिरेकादिविकल्पो वर्त्तते पुनः ॥ ३६५ ॥
अथ क्रियानिषेधोऽयं भावं नैव करोति हि ।
तथाप्यहेतुता सिद्धा कर्तुर्हेतुत्वहानितः ॥ ३६६ ॥

---

चित् क्रियते; अवस्तुत्वात्, खरविषाणवत् । अन्यथा हि कार्यत्वादङ्कुरादिवद् वस्तुत्वमेव स्यात् । प्रयोगः—यत्कार्यं तद्वस्तु, यथा—अङ्कुरादयः । कार्यश्च नाश इति स्वभावहेतुः ।

व्याप्तिमस्य साधयन्नाह—हेतुशक्त्या समुद्भवादिति । तदेव हि कार्यमुच्यते, यत् कारणशक्त्या विशिष्टमात्मातिशयमासादयति । समासादितात्मातिशयमेव च वस्तु । अत्र चार्थे नैयायिकादेरप्यविवादः । तथा हि—सत्तासमवायः, स्वकारणसमवायो वा कार्यत्वमुच्यते । न च नाशे सत्तासमवायः स्वकारणसमवायो वा; तस्य द्रव्यादिवदस्तित्वाश्रयत्वप्रसङ्गात् ॥ ३६३-३६४ ॥

यद्येवम्, भवतु वस्तुत्वम्, नाशस्य तत्र को दोषः ? इत्याह—विधिनैवमित्यादि।कथं पुनरभावस्य विधिना करणम् ? इत्याकांक्षायामिदमुक्तम्—पर्युदासाश्रयादिति । पर्युदासस्याश्रयणादित्यर्थः । विवक्षावशाद्धि कुतश्चन भावाद् विलक्षणो भाव एव 'अभावः' इत्याख्यायते, तत्र च व्यतिरेकादिविकल्पे प्राक्तनो दोषः पुनरावर्त्तते ॥ ३६५ ॥

अथैतद्दोषभयान्न पर्युदासात्मकोऽभावो विनाशहेतुभिः क्रियते, किं तर्हि [1]प्रसज्यात्मक इत्यङ्गीक्रियते । तत्रापि विनाशहेतोः स्फुटतरमेवाकिञ्चित्करत्वं भवता[2] प्रतिपादितमिति दर्शयन्नाह—अथेत्यादि । [G. 136] तथा हि—प्रसज्यतिषेधे सति नञः करोतिना सम्बन्धादभावं करोति । भावं न करोतीति

---

१. प्रसज्यत्मक—पा०; प्रसज्यप्रतिषेधात्मक—गा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।

अविद्धकर्णोक्तप्रमाणानुवादः

ननु नैव विनाशोऽयं सत्ताकालेऽस्ति वस्तुनः ।
न पूर्वं न चिरात् पश्चाद् वस्तुनोऽनन्तरं त्वसौ ॥ ३६७ ॥
एवं च हेतुमानेष युक्तो नियतकालतः ।
कादाचित्कत्वयोगो हि निरपेक्षे निराकृतः ॥ ३६८ ॥
वस्त्वनन्तरभावाच्च हेतुमानेव युज्यते ।
अभूत्वाभावतश्चापि यथैवान्यः क्षणो मतः ॥ ३६९ ॥

उद्द्योतकरोक्ता युक्तिः

अहेतुकत्वात् किञ्चायमसन् वंध्यासुतादिवत् ।

---

क्रियाप्रतिषेधादकर्तृत्वं नाशहेतोः प्रतिपादितं भवेत्, यश्चाकर्ता स कथं हेतुः स्यादित्यतो न विनाशहेतुः कश्चित् ॥ ३६६ ॥

अत्राविद्धकर्णोक्तानि विनाशस्य हेतुमत्त्वसाधने प्रमाणानि निर्दिदिक्षुराह—नन्वित्यादि । तथा हि—न वस्तुनः सत्ताकाले विनाशः, क्षणमात्रावस्थाविनोऽप्यभावप्रसङ्गात्; नाप्युत्पादात् पूर्वम्; अजातस्य विनाशायोगात् । न हि वन्ध्यापुत्रादयोऽनुत्पन्ना एव विनश्यन्ति । पश्चादपि भवन्नचिराद् भवति, तृतीयादिषु क्षणेषु विनष्टस्य पुनर्विनाशायोगात्, भस्मीकृतज्वलनवत्; किन्तु वस्त्वनन्तरं द्वितीये क्षणे विनाशः । ततश्च नियतकालत्वाद्धेतुमान् विनाशः, अङ्कुरादिवदिति सिद्धम् ॥ ३६७ ॥

नियतकालत इति । कादाचित्कत्वादित्यर्थः । व्याप्तिमस्य साधयन्नाह—कादाचित्कत्वयोगो हीत्यादि । न ह्यनपेक्षे कादाचित्कत्वं युक्तम्; नित्यं सत्त्वादिप्रसङ्गात् । तस्मात् कादाचित्कत्वात् सिद्धमस्य सहेतुत्वम् ॥ ३६८ ॥

इतोऽपि सिद्धमिति दर्शयति—वस्त्वनन्तरभावाच्चेत्यादि ।

तदेवमेते त्रयो हेतव उक्ताः—सहेतुको विनाशः; कादाचित्कत्वात्, वस्तुत्वत्यनन्तरभावित्वेन बौद्धैरभ्युपगम्यमानत्वात्, प्रागभूत्वाऽऽत्मलाभाच्च; क्षणान्तरवत् । वैधर्म्येण शशविषाणादय इति ॥ ३६९ ॥

उद्द्योतकरोक्तामपि युक्तिमाह—अहेतुकत्वादित्यादि । [G. 137] स ह्येवमाह—"विनाशस्य हेतुर्नास्तीति ब्रुवाणः पर्यनुयोज्यः—किमकारणत्वाद्

अथ वाऽऽकाशवन्नित्यो न प्रकारान्तरं यतः ।: ३७० ॥
असत्त्वे सर्वभावानां नित्यत्वं स्यादनाशतः ।
सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तकः ॥ ३७१ ॥
नित्यत्वेऽपि सह स्थानं विनाशेनाविरोधतः ।
अजातस्य च नाशोक्तिर्नैव युक्त्यनुपातिनी ॥ ३७२ ॥

तदुभयनिरासः

तदत्र कतमं नाशं परे पर्यनुयुञ्जते ।
किं क्षणस्थितिधर्माणं भावमेव तथोदितम् ? ॥ ३७३ ॥
अथ भावस्वरूपस्य निर्वृत्तिं ध्वंससंज्ञिताम् ? ।
पूर्वपर्यनुयोगे[1] हि नैव किञ्चिद् विरुध्यते ॥ ३७४ ॥

---

विनाशो नास्ति व्योमोत्पलादिवत् ? अथाकारणत्वान्नित्यो व्योमादिवदिति ? भवतां हि पक्षे अकारणं द्विधा दृष्टम्—नित्यम्, असच्च, न हि सत्त्वासत्त्वव्यतिरेकेण प्रकारान्तरमस्ति । तत्र यद्यकारणत्वादसत् विनाशः, तदा सर्वभावानां नित्यत्वप्रसङ्गः, विनाशाभावात् । किञ्च—सर्वसंस्कारा विनश्यन्तीत्येष प्रत्ययो निर्निमित्तः प्राप्नोति; न ह्यसत्यां गतौ गच्छतीति भवति । अथ नित्यः ? तदा भावस्य विनाशेन सहावस्थानं प्राप्नोति; सर्वदाऽवस्थानात् । न चैतद्युक्तम्; भावाभावयोः परस्परपरिहारस्थितलक्षणत्वात् । अथ सहावस्थानं नेष्यते, तदा कार्यस्योत्पादो न प्राप्नोति; तत्प्रत्यनीकभूतस्य नाशस्य सदाऽस्थितत्वात् । ततश्चाजातस्य विनाशोऽपि न सङ्गच्छते, न ह्यजाताः शशविषाणादयो विनश्यन्तीति लोके प्रतीतम्, तेनाजातस्य विनाश इति वचनं नैव युक्त्यनुपाति" ॥ ३७०–३७२ ॥

तदत्रेत्यादिना सर्वं प्रतिविधत्ते—द्विविधो हि विनाशो विधिप्रतिषेधलक्षणः । तथा हि—क्षणस्थितिधर्मा भाव एव चलो विनश्यतीति कृत्वा विनाश इत्याख्यायते । यद्वा—भावस्वभावप्रच्युतिलक्षणप्रध्वंसापरनामा विनशनं विनाश इति । तत्र पूर्वस्मिन्नाशे यद्ययं हेतुमत्त्वसाधनपर्यनुयोगः क्रियते यथोक्तैर्हेतुभिः, तदा सिद्धसाध्यता ॥ ३७३–३७४ ॥

---

१. °पर्युनुयोगे—गा० ।

यो हि भावः क्षणस्थायी विनाश इति गीयते ।
तं हेतुमन्तमिच्छामः पराभावात् त्वहेतुकम् ॥ ३७५ ॥
वस्त्वनन्तरभावित्वं न तत्र त्वस्ति तादृशि !
चलभावस्वरूपस्य भावेनैव सहोदयात् ॥ ३७६ ॥
अतो विनाशसद्भावान्न नित्याः सर्वसंस्कृताः ।
न विनाशीति बुद्धिश्च निर्निमित्ता प्रसज्यते ॥ ३७७ ॥
प्रध्वंसस्य तु नैरात्म्यान्नास्त्यनन्तरभाविता ।
नाभूत्वाभावयोगस्य गगनेन्दीवरादिवत् ॥ ३७८ ॥

---

तामेव सिद्धसाध्यतां यो हीत्यादिना दर्शयति । [G. 138] यद्येवम्, कथमहेतुको विनाशो भवतां प्रतीतः ? इत्याह—पराभावात्त्वहेतुकमिति । परस्य स्वकारणव्यतिरिक्तस्योत्तरकालं मुद्गरादेर्नाशकस्याभावादहेतुकमिच्छाम इति प्रकृतेन सम्बन्धः ॥ ३७५ ॥

अत्र चैवम्भूते विनाशे धर्मिणि कादाचित्कत्वात् प्रागभूत्वाऽऽत्मलाभादितीमौ हेतू सिद्धौ । वस्त्वनन्तरभावित्वमपि यदि सामान्येन विवक्षितं तदा सिद्धमेव; कारणभूतवस्त्वनन्तरमस्य भावप्रसिद्धेः । अथात्मभूतविनश्वरवस्त्वनन्तरभावित्वमस्य विवक्षितम्, तदा हेतुरसिद्ध इति दर्शयति—वस्त्वनन्तरभावित्वमित्यादि । तादृशीति चलवस्तुस्वभावाव्यतिरेकिणि । न हि निरंशस्य[1] वस्तुनो[1] भागोऽस्ति येन तदनन्तरभावित्वमस्य भवेत्; तत्स्वभाववत् तदव्यतिरेकिणो नाशस्य तन्निष्पत्तावेव निष्पन्नत्वात्, अन्यथा तत्स्वभावत्वमेव तस्य न स्यादित्युक्तम् ॥ ३७६ ॥

यच्चोक्तम्—"सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तकः" (तत्त्व० ३७१) इति, तदप्यत एव प्रतिक्षिप्तमिति दर्शयति—अत इति । यत एव हि क्षणस्थितिधर्माणः पदार्थास्तथाऽध्यवसीयमानतनवस्तस्या बुद्धेर्निमित्तम्; अतो नानिमित्तत्वप्रसङ्गः ॥ ३७७ ॥

अथ प्रध्वंसलक्षणो विनाशो धर्म्यभिप्रेतः, तदा त्रयोऽपि हेतवोऽसिद्धा इति दर्शयति—प्रध्वंसस्येत्यादि । वस्तुन्येव ह्यनन्तरभावित्वादयो धर्माः समाश्रिता

---

१–१. निरंशवस्तुनो—पा०, गा० ।

प्रध्वंसो भवतीत्येव न भावो भवतीत्ययम् ।
अर्थः प्रत्याय्यते त्वत्र न विधिः कस्यचिन्मतः ॥ ३७९ ॥
न हि वालेय इत्येवं नाममात्रे कृते क्वचित् ।
सर्वो रासभधर्मोऽस्मिन् प्रसक्तिं लभते नरे ॥ ३८० ॥
ध्वंसनाम्नः पदार्थस्य विधाने पुनरस्य न ।
वस्तुनो जायते किञ्चिदित्येतत् किं निवर्त्तते ॥ ३८१ ॥
भावध्वंसात्मनश्चैव नाशस्यासत्त्वमिष्यते ।
वस्तुरूपवियोगेन न भावाभावरूपतः ॥ ३८२ ॥

---

नावस्तुनि, यथा शशविषाणादौ; प्रध्वंसश्च निरात्मा = निःस्वभावः, तत्कथमस्यानन्तरभावित्वादयः सम्भवेयुः । नाभूत्वा भावयोगश्चेति । चकारात् कादाचित्कत्वपरिग्रहः ॥ ३७८ ॥

यद्येवम्—यदि ध्वंसस्यानन्तरभावित्वं नास्ति, तदा भावस्य ध्वंसो भवतीति कथमुच्यते[1], न हि यो न भवत्येव तस्य भवतीति स्यात्? इत्याशङ्क्याह—प्रध्वंस इत्यादि ।

[G. 139] यद्यपि ध्वंसो विधीयमानतया निर्दिश्यते, तथापि भावनिषेध एव प्रतीयते, न परमार्थतः कस्यचिद् वस्तुरूपस्य विधिः ॥ ३७९ ॥

ननु चैत्रस्य पुत्रो भवतीत्यादिवद् भवतिशब्दप्रयोगादत्रापि भवनमेव विधीयते? इत्याह—न हीत्यादि । न हि वस्तूनां शब्दप्रयोगमात्रानुविधायिनी सदसत्त्वे; तस्येच्छामात्रप्रतिबद्धप्रवृत्तित्वात् । अन्यथा हि क्वचित् सि केनचिदिच्छावशाद् 'वालेयः' इति नाम्नि निवेशिते सर्वस्य गर्दभधर्मस्य तत्र प्रसङ्गः स्यात् । वालेय-रासभशब्दौ गर्दभपर्यायौ ॥ ३८० ॥

अवश्यं चैतद् विज्ञेयम्—यदुत वस्तुस्वभावनिषेध एव, न तु किञ्चिद्विधीयत इति; अन्यथा ध्वंसाख्यस्य पदार्थान्तरस्य विधाने सति न किञ्चिद्वस्तुनो जातमिति तद्वस्तु किमिति निवर्तेत ! ॥ ३८१ ॥

---

१. पा०, गा० पुस्तकयोर्नास्ति ।

निवृत्तिरूपताऽप्यस्मिन् विधिना नाभिधीयते ।
वस्तुरूपानुवृत्तिश्च क्षणादूर्ध्वं निषिध्यते ॥ ३८३ ॥
अतो व्यवस्थितं रूपं विहितं नास्य किञ्चन ।
इति नित्यविकल्पोऽस्मिन् क्रियमाणो निरास्पदः ॥ ३८४ ॥

---

यच्चोक्तम् "असत्वे सर्वभावानाम्" ( तत्त्व० ३७१ ) इत्यादि, तत्राह—भावध्वंसात्मनश्चैवमित्यादि । एवमिति । वस्तुस्वभावियोगरूपत्वात्, न तु भावान्तरभावस्य सतः स्वरूपनिवृत्तेरसत्त्वम्, तत्कथं सर्वभावानां नित्यत्वं स्यात्, यदि हि स्वभावनिषेधलक्षणो विनाशस्तेषामसन् स्यात्, तदा नित्यत्वमेषां स्यात्, यावता स्वभावनिषेधलक्षणो नाशः स्वयमसद्रूपस्तेषामस्त्येवेति कथं नित्या भवेयुः । सर्वसंस्कारनास्तित्वप्रत्ययस्य तु निमित्तमभिहितमेव ॥ ३८२ ॥

यच्चोक्तम्—"नित्यत्वेऽपि सहस्थानम्" ( तत्त्व० ३७२ ) इत्यादि, तत्राह— निवृत्तिरूपतेत्यादि । [ G. 140 ] निवृत्तिर्भवतीत्यनेनापि वचनेनास्मिन् प्रध्वंसे विधिरूपेण निवृत्तिरूपता नाभिधीयते; यतो नास्य विधेयं किञ्चिद्रूपमस्ति, किं तर्हि ? वस्तुस्वरूपस्य क्षणादूर्ध्वं स्वभावानुवृत्तिर्निषिध्यते । तस्मादयमेकान्तेनाभावरूप एवेति नित्यविकल्पोऽनास्पद एव; निःस्वभावत्वादेव सदा व्यवस्थितरूपायोगात्, स्वभावप्रतिबद्धत्वात् नित्यानित्यधर्मयोः[1] । यच्चोक्तम्—'अकारणं भवतां द्विधा—नित्यमसच्च' इति, तत्परसिद्धान्तानभिज्ञतया, यतो न्यायवादिनां बौद्धानामकारणमसदेव । यथोक्तं भगवता—"स धर्मेषु धर्मानुदर्शी विहरन् बोधिसत्त्वोऽणुमपि धर्मं न समनुपश्यति यः प्रतीत्यसमुत्पादविनिर्मुक्तः" (     ) इति । ये च वैभाषिकाः आकाशादिवस्तु सत्त्वेन कल्पयन्ति ते युष्मत्पक्ष एव निक्षिप्ता न शाक्यपुत्रीया इति न तन्मतोपन्यासो न्याय्यः[2] । एवं नाशहेतूनां सर्वेषामकिञ्चित्करत्वान्नासिद्धता हेतोः ।

इतश्च नाशहेतूनामकिञ्चित्करत्वं वक्तव्यम् । तथा हि—भावः स्वहेतोरुत्पद्यमानः कदाचित् प्रकृत्या स्वयं नश्वरात्मैवोत्पद्यते, अनश्वरात्मा वा । यदि

---

१. नित्यानित्यस्वभावप्रतिबद्धधर्मयोः—पा०, गा० ।
२. न्यायात्—गा० ।

नश्वरः, तस्य न किञ्चिन्नाशहेतुता; स्वयं तत्स्वभावतयैव नाशात्। यो हि यस्य स्वभावः स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति, न पुनस्तद्भावे हेत्वन्तरमपेक्षते; यथा—प्रकाशद्रवोष्णकठिनादयस्तदात्मान उत्पन्ना न पुनः प्रकाशादिभावहेत्वन्तरमपेक्षन्ते।

स्यादेतत्—यथा बीजादयोऽङ्कुरादिजननस्वभावाः सन्तोऽपि न केवला जनयन्ति, सलिलादिकारणान्तरापेक्षत्वात्; तद्वद्भावो नश्वरस्वभावोऽपि नाशे कारणान्तरापेक्षो भविष्यतीति? तदेतदसम्यक्; अन्त्यावस्थाप्राप्तस्यैव जनकस्वभावत्वाभ्युपगमात्, नान्यस्य। तेन योऽसौ तत्स्वभावः स जनयत्येव, नासौ परमपेक्षते। यस्तु कुशूलादिस्थो न जनयति, नासौ तत्स्वभावः। कारणकारणत्वात्तु तस्यापि कारणव्यपदेशो न मुख्यत इति नास्ति व्यभिचारः।

अथानश्वरात्मेति पक्षः, तदापि नाशहेतुरकिञ्चित्कर एव। तस्य केनचित् स्वभावान्यथाभावस्य कर्तुमशक्यत्वात्। तथा हि—यदि स्वभाव उत्पादानन्तरं न विनश्येत्, तदा पश्चादपि स एव तस्य स्थितिधर्मा स्वभावस्तदवस्थ इति किं नाशहेतुना तस्य कृतम्, येन विनश्येत।

अथापि स्यात्—यथा ताम्रादीनां कठिनरूपाणामपि सतामग्न्यादिसम्पर्कादन्यथात्वं भवति, तथा भावस्याविनश्वरस्वभावस्यापि सतो विनाशहेतुनाऽन्यथात्वं क्रियते, तेन [G. 141] विनाशहेतुं प्राप्य विनश्यतीति? तदेतदसम्यक्; न हि स एवान्यथा भवति; स्वभावान्तरोत्पत्तिलक्षणत्वादन्यथात्वस्य। तथा हि—यत्तदन्यथात्वं नाम तत् किं भावादर्थान्तरम्? आहोस्विद्भाव एव? न तावद्भाव एव; तस्य स्वहेतोरेव पूर्वं निष्पन्नत्वात्। अथार्थान्तरम्? तथा सति भावोऽच्युतिधर्मा तथैवावस्थित इति न तस्यान्यथाभावः। ताम्रादिदृष्टान्तोऽप्यसिद्ध एव। तथा हि—ताम्रादीनां पूर्वकस्य कठिनादिक्षणस्य स्वरसनिरोधित्वाद्विनाशे सत्यग्न्यादेः सहकारिकारणान्तरात् स्वोपादानकारणाच्च सामग्र्यन्तराद् द्रवाख्यमपरमेव स्वभावान्तरमुत्पद्यते। पुनरपि द्रवादिस्वभावस्य स्वरसनिरोधितया विनाशे सति सहकारिकारणान्तरात् स्वोपादानकारणाच्च काठिन्याख्यमपरमेव स्वभावान्तरमुत्पद्यत इति नैकस्यान्यथात्वमस्ति। तस्मात् सर्वथाऽप्यकिञ्चित्कर एव नाशहेतुरिति

अकृतकराशिविषये विचारः

तत्र प्रथमः पक्षः

ये तु व्योमादयो भावा अकृतत्वेन सम्मताः ।
वस्तुवृत्त्या न सन्त्येव ते च शक्तिवियोगतः ॥ ३८५ ॥
क्षणिकाक्षणिकत्वादिविकल्पस्तेष्वनास्पदः ।
तदा वस्त्वेव येन स्यात् क्षणिकं यदि वान्यथा ॥ ३८६ ॥

---

नासिद्धो हेतुः । न चापि विरुद्धः; स्वपक्षे भावात् । नचाप्यनैकान्तिकः; पूर्वं प्रसाधितत्वात् ।

स्यादेतत्—यथाऽऽकाशं मूर्त्तत्वाय न परमपेक्षते, अथ च तत्र नियतं न भवति; तद्वद्भावः कृतकोऽपि सन् कश्चिन्नैव नाशे नियतो भविष्यतीति ? तदेतदसम्यक् ; न हि स कश्चित् कृतकोऽस्ति यः परेणानित्यो नेष्यते; हेतुमतः सर्वस्यानित्यत्वाभ्युपगमात् । त एव चेह पक्षीकृता नान्य इति कुतोऽऽनैकान्तिकता ! ये तु पुनः कृतका अपि सन्तो नित्या एव भविष्यन्तीत्यविनाशितयेति सम्भाव्यन्ते, ते परमार्थतोऽकृतकराश्यन्तर्गता एवेति तन्निराकरणादेव तन्निराक्रिया बोद्धव्येत्यदोषः ।

नाप्याकाशादेर्मूर्त्तत्वादिधर्मं प्रत्यनपेक्षा सिद्धा, यस्य हि यो धर्मो नास्ति स तं प्रति सापेक्ष एव, न हि प्राप्तं धर्मं प्रति काचिदपेक्षा भावानां व्यवस्थाप्यते, किं तर्हि ? अप्राप्तमेव — इत्यसिद्धो दृष्टान्तः ॥ ३८४ ॥

इदानीमकृतकराशिमधिकृत्याह—ये त्वित्यादि । यदि हि व्योमादयो भावाः सिद्धसत्ताकाः स्युः, तदा तेषु क्षणिकत्वादिधर्मचिन्ताऽवतरेत् । न हि धर्मिणां स्वातन्त्र्येण सिद्धिरस्ति; अन्यथा हि धर्मत्वमेव तेषां हीयेत । न चाकाशादयोऽकृतका धर्मिणः; तेषां सर्वसामर्थ्यविरहित्वेन [ G. 142 ] वन्ध्यापुत्रवदसद्व्यवहारविषयत्वात् ।

प्रयोगः—यत्सर्वसामर्थ्यशून्यं तदवस्तु, यथा—वन्ध्यापुत्रः । सर्वसामर्थ्यशून्यं चाकाशादीति स्वभावहेतुः । वस्तुतो व्यापकानुपलब्धिर्वा ! न चानैकान्तिको

क्षणावस्थितरूपं हि वस्तु क्षणिकमुच्यते।
स्थिररूपसमाक्रान्तं वस्त्वेवाक्षणिकं पुनः ॥ ३८७ ॥
उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः।
तदुच्यते क्षणः सोऽस्ति यस्य तत् क्षणिकं मतम् ॥ ३८८ ॥
असत्यप्यर्थभेदे च सोऽस्त्यस्येति न बाध्यते।
इच्छारचितसङ्केतमात्रभावि हि वाचकम् ॥ ३८९ ॥

---

हेतुः; एतावन्मात्रनिबन्धनत्वादसद्व्यवहारस्य। नाप्यसिद्धिरिति पश्चात् प्रतिपादयिष्यामः। सपक्षे भावान्नापि विरुद्धः ॥ ३८५–३८६ ॥

कस्मात् पुनरवस्तुनि क्षणिकाक्षणिकविकल्पो नावतरति ? इत्याह—क्षणावस्थितरूपं हीत्यादि। सुबोधम् ॥ ३८७ ॥

उद्द्योतकरस्त्वाह—"क्षणिक इति मत्वर्थीयानुपपत्तिः, तथा हि—यदि निरुक्तन्यायेन क्षयः क्षणः सोऽस्यास्तीति क्षणिक इति साध्यते[1], तन्न युक्तम्; कालभेदात्। यदा हि क्षयो न तदा क्षयीति भिन्नकालयोर्न मत्वर्थीयो दृष्टः। अथ पुनर्भावान्तरविनाशेन विशिष्यमाणः क्षण इत्युच्यते ? तदापि स तेनैव तद्वान्न भवतीति न युक्तो मत्वर्थीयः। अथ क्षणस्थितिकालाः क्षणिकाः, सर्वान्त्यो हि कालः क्षणः, तं येऽवतिष्ठन्ते ते क्षणिकाः ? एतदपि न युक्तम्; संज्ञामात्रेण कालस्याभ्युपगमात्, न च संज्ञामात्रं वस्तुविशेषणत्वेन युक्तम्" इति। तत्राह—उत्पादानन्तरास्थायीत्यादि। उत्पादनन्तरविनाशस्वभावो वस्तुनः क्षण उच्यते, स यस्यास्ति स क्षणिक इति। तथा चोक्तम्—"आत्मलाभानन्तरविनाशी क्षणः स यस्यास्ति स क्षणिकः" (  ) इति ॥ ३८८ ॥

नन्वेवमपि स्वभावस्यानर्थान्तरत्वात् सोऽस्यास्तीति व्यतिरेकनिबन्धनः प्रत्ययो नोपपद्यते ? इत्याह – असत्यपीत्यादि। यथा स्वस्य स्वभावः, शिलापुत्रकस्य शरीरम् – इत्यादावसत्यपि वास्तवे भेदे बुद्धिपरिकल्पितं भेदमाश्रित्य व्यतिरेकषष्ठीविभक्तिर्भवति, तथेहापि भविष्यति; न हि वस्तुस्वभावानुविधायिन्यो वाचः, किं तर्हि ? वक्तुरिच्छामनुविदधते ॥ ३८९ ॥

---

१. बोध्यते—पा०, गा०।

उदयानन्तरास्थायि वस्त्वेवं तु विवक्षितम् ।
तत्र सप्रत्ययः शब्दोऽप्रत्ययो वा प्रयुज्यताम् ॥ ३९० ॥

द्वितीयः पक्षः

यदि तु व्योमकालाद्याः सन्तः स्युस्ते तथासति ।
नातिक्रामन्ति तेऽप्येनं क्षणभंगं कृता इव ॥ ३९१ ॥
तथा हि सन्तो ये नाम ते सर्वे क्षणभङ्गिनः ।
तद्यथा संस्कृता भावास्तथा सिद्धा अनन्तरम् ॥ ३९२ ॥

---

[G. 143] अपि च—यावत्यर्थे यावानेव वक्तृभिर्वि नियुज्यते ध्वनिः, स तावानेव तमर्थं सङ्केतवशात् प्रत्याययति, न तु परमार्थतः प्रकृतिः प्रत्ययो वास्ति । 'क्षणिकः' इति चायं शब्द उत्पादानन्तरावस्थायिनि वस्तुमात्रे नियुक्तो विद्वद्भिः । तत्र चैवम्भूते वस्तुनि क्षणिकशब्देन विवक्षिते क्षणिकः शब्दः सप्रत्ययो वा प्रयुज्यताम्, प्रत्ययरहितो वा—इति नात्रास्माकमिच्छामात्रानुरोधिनि साङ्केतिके वचस्यत्यादर इत्येतद्दर्शयति— उदयानन्तरास्थायीत्यादि । एवमिति क्षणिकमित्यनेन । सह प्रत्ययेन मत्वर्थीयेन वर्त्तत इति सप्रत्ययः ॥ ३९० ॥

एवं व्योमादीनामकृतकत्वाभ्युपगमे सति नियमेनासद्व्यवहारविषयतैवेति प्रतिपादितम् । इदानीं सत्त्वाभ्युपगमे तु क्षणिकत्वमेवैषां प्रसज्यत इति साधयन्नाह—यदि त्वित्यादि । कृता इवेति । कृतका इवेत्यर्थः । एतेन 'सत्त्वात्' इत्ययं हेतुः सूचितः ॥ ३९१ ॥

तमेव स्पष्टीकुर्वन्नाह—तथा हीत्यादि । प्रयोगः— यत् सत् तत् सर्वं क्षणिकम्, यथा समनन्तरं प्रतिपादिताः क्षणिकाः पदार्थाः । सन्तश्च भवता व्योमादयो भावा इष्यन्ते इति स्वभावहेतुः । तथा सिद्धा इति क्षणिकत्वेन । एतेन न साध्यविकलता दृष्टान्तस्याशङ्कनीया; प्रसाधितत्वादिति दर्शयति । त्वयेष्यन्त इत्यनेन प्रसङ्गसाधनमेतदिति दर्शयति; अन्यथा हेतोरन्यतरासिद्धता स्यात् । कथं पुनरस्य हेतोर्व्याप्तिः सिद्धा ? इत्याह—क्षणिकत्ववियोगे त्वित्यादि ।

[G. 144] अर्थक्रियासामर्थ्यलक्षणमिह सत्त्वं हेतुत्वेनेष्टम्, तच्च क्षणिकत्वनिवृत्तौ निवर्त्तते । तथा हि— भावा अर्थक्रियां कुर्वन्तः क्रमेण वा कुर्वीरन् ?

सन्तश्चामी त्वयेष्यन्ते व्योमकालेश्वरादयः ।
क्षणिकत्ववियोगे तु न सत्तैषां प्रसज्यते ॥ ३९३ ॥
क्रमेण युगपच्चापि यस्मादर्थक्रियाकृतः ।
न भवन्ति स्थिरा भावा निःसत्त्वास्ते ततो मताः ॥ ३९४ ॥

---

यौगपद्येन वा? न हि क्रमयौगपद्याभ्यामन्यः प्रकारः सम्भवति; तयोरन्योऽन्यव्यवच्छेदरूपत्वात्। एतच्च प्रत्यक्षत एव प्रसिद्धम्। तथा हि---घटो मधूदकादींस्तदन्यद्रव्यव्यतिभिन्नान् क्रमेणाहरन् स्वज्ञानोदकाहरणे न च यौगपद्येन कुर्वन् प्रत्यक्षेणैव परिच्छिद्यते। तत्र यान् कार्यभेदान् क्रमेणाहरन् समुपलभ्यते घटः, कुलालो वा शरावोदञ्चनादीन्, न तदैव तान् यौगपद्येन जनयितुं समर्थः। घटो वा स्वविषये ज्ञानादीन् यौगपद्येन जनयन्नुपलभ्यते, न तदैव तान् क्रमेणेति प्रत्यक्षावसितमेतत् सर्वम्। अतः क्रमस्य यौगपद्यव्यवच्छेदेनैव परिच्छेदाद्, यौगपद्यस्य च क्रमव्यवच्छेदेनैव---इत्येकप्रमाणवृत्तिर्द्वयोरन्यतरत्परिच्छिन्दती ततः परं प्रतियोगिनं व्यवच्छिनत्ति, प्रकारान्तराभावं च सूचयतीति प्रत्यक्षप्रमाणावसित एवानयोरन्योन्यवृत्तिपरिहारस्थितलक्षणो विरोधः। तेन [1]तृतीयराश्यभावात् क्रमयौगपद्याभ्यामर्थक्रिया व्याप्ता। सा च स्थिरेषु भावेषु स्वव्यापकनिवृत्तौ निवर्त्तमाना तल्लक्षणं सत्त्वं निवर्त्तयतीति सिद्धा व्याप्तिः।

न चैतच्छक्यं वक्तुम्---'क्रमयौगपद्ये एव भावानां न सिद्धे; व्यतिरिक्तकालपदार्थानभ्युपगमात्' इति[2]। न हि वयं भावानामर्थान्तरभूतकालपदार्थकृतं क्रमयौगपद्यं ब्रूमः। किं तर्हि? तथातथोत्पादकृतम्। तथा हि---यदि चैकः सत्तामनुभवति तदैव यदा परे तद्वदेव तामनुभवन्ति, त एवं सर्वे तथोत्पद्यमाना अक्रमव्यपदेशनिबन्धनं भवन्ति। तद्यथा---समग्रसामग्रीका बहवोऽङ्कुराः समुत्पद्यमानाः विपर्ययात् क्रमव्यपदेशभाजः, यथा---अङ्कुरकाण्डपत्रादयः। एते च प्रत्यक्षत एव सिद्धाः, तथैव च व्यपदिश्यन्ते जनैः। तथाभूतपदार्थविषयोऽपि कारणव्यापारस्तद्विषयक्रमयौगपद्याभ्यां व्यपदिश्यत इत्यचोद्यमेतत्।

---

१. तृतीयस्याभावात्---पा०, गा०।
२. इतः परं जै० पुस्तके 'तदयुक्तम्' इत्यधिकः पाठः।

क्षणिकस्यैवार्थक्रियाया युक्तत्वम्

कार्याणि हि विलम्बन्ते कारणासन्निधानतः ।

---

ननु च यदि स्थिरो भावः सिद्धो भवेत्, तदा तत्र क्रमयौगपद्यनिवृत्तौ सत्यामर्थक्रियायाः सामर्थ्यनिवृत्तिः सिद्ध्येत् । यथा–क्वचित् प्रदेशे धर्मिणि वृक्षनिवृत्तौ शिंशपानिवृत्तिः । अन्यथा ह्यसिद्धे प्रदेशधर्मिणि कुत्र शिंशपाऽभावः प्रतीयेत । न चासौ सिद्धः; तस्यैव प्रतिषेद्धुमिष्टत्वात् । अथापि सिद्धोऽङ्गीक्रियते, न तर्हि तस्य प्रतिक्षेपो युक्तः; तस्य धर्मिणः स्वरूपेण सिद्ध्यभ्युपगमात्, ततश्च [1]सत्त्वादित्ययमप्यनैकान्तिक एव हेतुः, विपक्षे वृत्तेरिति ? नैतदस्ति; न ह्यस्माभिः स्वातन्त्र्येण प्रमाणतया व्यतिरेकसाधिन्या अस्या व्यापकानुपलब्धेः प्रयोगः क्रियते, किं तर्हि ? प्रसङ्गापादनं परं प्रति क्रियते । यदि भवता तेषां स्थिररूपताऽङ्गीक्रियते [G. 145] तदाऽर्थक्रियासामर्थ्यमपि नाङ्गीकर्त्तव्यम्; तत्र क्रमयौगपद्ययोगस्य तद्व्यापकस्याभावात् । न हि व्यापकनिवृत्तौ व्याप्यमवस्थातुमुत्सहते; अन्यथा व्याप्यव्यापकभाव एव तयोर्न स्यात् । ततश्चार्थक्रियासामर्थ्यनिवृत्तौ सत्त्वमपि तेषां नाङ्गीकर्त्तव्यम्; अर्थक्रियासामर्थ्यलक्षणत्वात् सत्त्वस्येति । अनेनोपायेन तेषामभाव एव प्रतिपाद्यते । न चापि वैधर्म्यदृष्टान्तेऽवश्यं वस्तुभूतो धर्म्याश्रयणीयः, तत्र साध्यनिवृत्तौ साधननिवृत्तिमात्रस्य साधयितुमिष्टत्वात् । तच्च व्याप्यव्यापकभूतयोर्धर्मयोर्व्याप्यव्यापकभावसिद्धौ सत्यां धर्मिविशेषपरिग्रहमन्तरेणैव सामान्येन व्यापकाभावे व्याप्यमपि न भवतीति वचनमात्रादेव प्रतीयते, यथा–वृक्षाभावे शिंशपा न भवतीति । यथोक्तम्—

"तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावे च[2] तन्नेति वचनादपि तद्गतिः[3] ॥" (प्र० वा० ३.२५) इति

॥ ३९२–३९४ ॥

न तावत् स्थिरस्य भावस्य क्रमेणार्थक्रिया युक्तेति दर्शयति–कार्याणीत्यादि ।

---

१. सत्त्वादिभ्य यमप्यनै०—पा०; सत्त्वादिभ्य(इत्य)यमप्यनै०—गा० ।

२. 'च' इति सर्वत्र नास्ति; 'तु' इति गा० पुस्तके ।

३. तद्गतेः—सर्वत्र ।

समर्थहेतुसद्भावे क्षेपस्तेषां हि किंकृतः ॥ ३९५ ॥

परस्योत्तरम्

अथापि सन्ति नित्यस्य क्रमिणः सहकारिणः ।
यानपेक्ष्य करोत्येष कार्यग्रामं क्रमाश्रयम् ॥ ३९६ ॥

तत्प्रतिविधानम्

साध्वेतत्, किन्तु ते तस्य भवन्ति सहकारिणः ।
किं योग्यरूपहेतुत्वादेकार्थकरणेन वा ? ॥ ३९७ ॥
योग्यरूपस्य हेतुत्वे स भावस्तैः कृतो भवेत् ।
स चाशक्यक्रियो यस्मात् तत्स्वरूपं तदा स्थितम् ॥ ३९८ ॥
कृतौ वा तत्स्वरूपस्य नित्यताऽस्यावहीयते ।
विभिन्नोऽतिशयस्तस्माद् यद्यसौ कारकः कथम् ॥ ३९९ ॥

---

न हि कार्यस्य स्वेच्छया भवनमभवनं वा; किन्तु कारणसदसत्त्वानुविधायिनी तस्य सदसत्त्वे । तत्र यदसौ स्थिरैकरूपो भावः सर्वदा सर्वकार्याणां हेतुभावेनावस्थितः, तदा किमिति तत्सत्तामात्राकाङ्क्षीणि सकृदेव सर्वाणि कार्याणि[1] नोत्पद्यन्ते, येन क्रमेण भवेयुः । क्षेप इति परिविलम्बः । तेन पाश्चात्त्यमपि तदीयं कार्यं प्रागेव भवेत्; अप्रतिबद्धसामर्थ्यकारणत्वाद्, अभिमतकार्यवदिति भावः ॥ ३९५ ॥

अथापीत्यादिना परस्योत्तरमाशङ्कते । यद्यपि स्थिरः पदार्थः सर्वदा सन्निहितः, तथापि क्रमेण सहकारीणि तस्य सन्निधीयन्ते । अतस्तदपेक्षया क्रमेणासौ कार्याणि जनयिष्यतीति ॥ ३९६ ॥

साध्वित्यादिना प्रतिविधत्ते । [G. 146] न हि तस्य नित्यस्य कश्चित् सहकारी सम्भवति; तथा हि—अतिशयाधानाद्वा सहकारी भवेत्; यथा—बीजस्य क्षित्यादय उच्छूनाद्यवस्थाविशेषमादधानाः सहकारिणः ? एकार्थक्रियया वा, यथा—उन्मिषितमात्रेण रूपदर्शने चक्षुषो रूपादयः ? तत्र न तावदाद्यः पक्षः, तथा हि—असावतिशयस्तस्य सहकारिभिराधीयमानः कचित् तत्स्वभावादभिन्नः, भिन्नो

---

1. पा० गा० पुस्तकयोर्नास्ति ।

तस्मिन् सति हि कार्याणामुत्पादस्तदभावतः ।
अनुत्पादात् स एवैवं हेतुत्वेन व्यवस्थितः ॥ ४०० ॥

परस्योत्तरम्

अथापि तेन सम्बन्धात् तस्याप्यस्त्येव हेतुता ।
कः सम्बन्धस्तयोरिष्टस्तादात्म्यं न विभेदतः ॥ ४०१ ॥
न च तस्य तदुत्पत्तिर्यौगपद्यप्रसङ्गतः ।
ततश्च यौगपद्येन कार्याणामुदयो भवेत् ॥ ४०२ ॥
तत्राप्यन्यव्यपेक्षायामनवस्था प्रसज्यते ।
एकदापि ततः कार्यं नासम्बन्धात् प्रकल्प्यते ॥ ४०३ ॥

---

वा भवेत्, यद्वा उभयानुभयरूपः; यथाऽऽहुराजीवका इति चत्वारः पक्षाः । तत्र न तावदाद्यः पक्षः, तत्स्वरूपवत्तदव्यतिरेकितया तस्यापि सदावस्थितत्वात्, सतश्च करणायोगात्, करणे वा तद्वदेव भावस्यापि करणप्रसङ्गात् । ततश्च नित्यत्वहानिः । अथ द्वितीयः पक्षः, तदाऽतिशयादेव कार्योत्पत्तेर्भावस्याकारकत्वप्रसङ्गः । असाविति नित्यः पदार्थः ॥ ३९७-३९९ ॥

एतदेव स्पष्टयति—तस्मिन्सतीत्यादि । तस्मिन्निति । अतिशये सतीत्यर्थः । एवमिति । तद्गतान्वयव्यतिरेकानुविधानात् ॥ ४०० ॥

अथापीत्यादिनात्रैव परस्योत्तरमाशङ्कते । तेनेति अतिशयेन । तस्यापीति नित्यस्य । कः सम्बन्ध इत्यादिनोत्तरमाह । कः सम्बन्धः, नैव कश्चिदित्यर्थः । द्विविध एव हि सम्बन्धः—तादात्म्यम्, तदुत्पत्तिश्च । तत्र न तावत्तादात्म्यलक्षणः; भेदस्याङ्गीकृतत्वात् । नापि तदुत्पत्तिलक्षणः; सहकारिभ्य एव तस्योत्पत्तेः । अथ[1] ततस्तस्योत्पत्तिरङ्गीक्रियते; तदा तन्मात्रभावित्वादतिशयानां युगपदेवोत्पत्तिः स्यात् । ततश्च सर्वकार्याणां युगपदुत्पत्तिप्रसङ्गः; अतिशयवतः कारणस्य सर्वदाऽवस्थितत्वात् ॥ ४०१-४०२ ॥

[G. 147] अथ तत्राप्यतिशयोत्पत्तौ, सहकारिकारणापेक्षणात् क्रमेणातिशयोत्पत्तेर्न कार्याणां यौगपद्यं भवतीति स्यात्? तदयुक्तम्; एवं ह्यनवस्था

---

१. पा० गा० पुस्तकयोर्नास्ति ।

सम्बन्धः समवायश्चेत् तत्राप्येवं विचिन्त्यते ।
उपकारीभवँस्तस्य समवायीष्यते स किम् ॥ ४०४ ॥
न वा तथेति प्रथमो विकल्पो यदि गृह्यते ।
सैव प्राप्ता तदुत्पत्तिर्व्यपास्ता साऽप्यनन्तरम् ॥ ४०५ ॥
अन्येऽपि सर्वभावाः स्युस्तथैव समवायिनः ।
अविशेषान्न तस्यायमुपकारी मतो यदि ॥ ४०६ ॥
भेदाभेदविकल्पस्य प्रत्येकं प्रतिषेधनात् ।
द्विरूपोऽतिशयस्तस्य व्यस्तो भवति वस्तुनः ॥ ४०७ ॥
पुद्गलादिपरीक्षासु द्वैराश्यप्रतिषेधनात् ।

---

स्यात् । तथा हि — तत्रापि सहकारिणामतिशयान्तरकरणात् सहकारित्वं वक्तव्यम्, तस्य चातिशयस्य व्यतिरेकित्वात् सम्बन्धासिद्धिः, तदुत्पत्तौ सकृदुत्पत्तिप्रसङ्गः, तत्रापि सहकारिव्यपेक्षायां पुनरियमेव चिन्ताऽवतरति । ततश्चानवस्थायां न कदाचिदतिशयेन सह तस्य सम्बन्धः सिद्ध्येत् । तदसिद्धौ न तस्मात् कार्योत्पत्तिः; अतिशयादेव कार्योत्पत्तेः ॥ ४०३ ॥

अथापि स्यात्—न तदुत्पत्तिलक्षणस्तस्यातिशयेन सह सम्बन्धः, किं तर्हि ? तत्समवायलक्षणः, तत्र नित्ये धर्मिणि तस्यातिशयस्य समवेतत्वात् ? तदेतदयुक्तमिति दर्शयन्नाह—तत्रापीत्यादि । न वा तथेति । नोपकारी सँस्तस्य समवायीष्यत इति सम्बन्धः । तत्र प्रथमपक्षे उपकारस्योपक्रियमाणपदार्थाव्यतिरेकात् स एव तदुत्पत्तिलक्षणः सम्बन्धोऽङ्गीकृतः स्यात् । स चानन्तरमेव निरस्तः ॥ ४०४–४०५ ॥

अथ द्वितीयः पक्षः, तदा विशेषाभावात् सर्वः सर्वस्य समवायी स्यात् । तद्दर्शयति—अन्येऽपीत्यादि । तथैवेति । अभिमतपदार्थवदनुपकारित्वेनाविशिष्टत्वात् ॥ ४०६ ॥

उभयानुभयपक्षावधिकृत्याह—भेदाभेदेत्यादि । प्रत्येकपक्षनिराकरणादेवोभयात्मकपक्षस्य निराकरणम्; तद्व्यतिरेकेणोभयात्मकपक्षाभावात् । किञ्च—एकाकारत्यागपरिग्रहयोरपराकारपरिग्रहत्यागानान्तरीयकत्वादयुक्तं वस्तुसत

द्विरूपोऽतिशयो नास्ति न वाऽप्यनुभयात्मकः ॥ ४०८ ॥
अथ नापेक्षते नित्यः प्रत्ययान् सहकारिणः ।
तथाऽपि तद्वियुक्तोऽयं कारको नान्त्यहेतुवत् ॥ ४०९ ॥
निजस्तस्य स्वभावोऽयं तेषामेव हि सन्निधौ ।
कारकत्वमतः कार्यं तद्भावेऽपि न सर्वदा ॥ ४१० ॥

तत्प्रतिविधानम्

अस्त्वेवम्, किन्तु साकल्ये या तस्य प्रकृतिर्मता ।
वैकल्ये सैव चेदिष्टा नित्याः स्युः सहकारिणः ॥ ४११ ॥
तत्सम्बद्धस्वभावस्य भावे तेषामपि स्थितेः ।

---

उभयानुभयरूपत्वम् । न ह्येकस्यैकदा विधिप्रतिषेधौ परस्परविरुद्धौ युक्तौ; एकत्वहानिप्रसङ्गात् ॥ ४०७ ॥

[G. 148] एतच्च पुद्गलादिपरीक्षायां प्रतिपादितम्, तद्दर्शयति—पुद्गलादीत्यादि ॥ ४०८ ॥

अथैकार्थक्रियाकारित्वेन सहकारिणस्तस्येति द्वितीयः पक्ष आश्रीयते, यथाऽऽहुरेके—"नैवासौ सहकारिणोऽपेक्षते, न चापि सहकारिवियुक्तः कार्यस्य कारकः; यत ईदृशस्तस्य निसर्गसिद्धः स्वभावो यत्सन्निहितसकलसहकारिकारण एव कारकः, अन्त्यहेतुवन्न केवलः; तेन तस्य भावेऽपि न कार्यस्य सर्वदोत्पत्तिप्रसङ्गः" इति । तदेतद्दर्शयति—अथेत्यादि । नेति कारक इत्यनेन सम्बन्धनीयम् । अन्त्यहेतुवदिति वैधर्म्यदृष्टान्तः । यद्वा—उत्तरेण कारकत्वमित्यनेन साधर्म्यदृष्टान्ततया सम्बध्यते । षष्ठ्यन्ताच्च वतिः कार्यः । तद्भावेऽपीति तस्य नित्यस्य पदार्थस्य सद्भावेऽपि ॥ ४०९–४१० ॥

अस्त्वेवमित्यादिना प्रतिविधत्ते । भवत्वेवं कल्पना, किन्त्विदमिह निरूप्यते—या तस्य सहकारिसाकल्यावस्थायां प्रकृतिः, किं सैव वैकल्यावस्थायाम्? आहोस्विदन्या? यदि सैव, तदा सहकारिणोऽपि नित्याः प्राप्नुवन्ति ॥ ४११ ॥

कथम्? इत्याह—तत्सम्बद्धस्वभावस्येत्यादि । तैः सहकारिभिः सम्बद्धः स्वभावो यस्येति विग्रहः । तेषामपीति सहकारिणाम्; निगडबद्धपुरुषाकर्षणे

अन्यच्चेद् विकलं रूपमेकत्वमवहीयते ॥ ४१२ ॥
व्यपेक्षयाऽप्यतश्चैवं न कार्याणां क्रमोदयः ।
यौगपद्यं तु[1] नैवेष्टं तत्कार्याणां क्रमेक्षणात् ॥ ४१३ ॥
निःशेषाणि च कार्याणि सकृत् कृत्वा निवर्त्तते ।
सामर्थ्यात्मा स चेदार्थः सिद्धास्य क्षणभङ्गिता ॥ ४१४ ॥

---

निगडाकर्षणवत् तेषामप्यनुवृत्तेः । एवं हि स एव पूर्वस्वभावापरित्यागेनानुवृत्तो [G. 149] भवति । यदि हि सहकारिणा सम्बद्धं स्वभावं न जहाति, तत्सम्बद्धस्वभावापरित्यागेन सामर्थ्यात् सहकारिणामप्यपरित्यागः; प्रतियोगिसव्यपेक्षत्वात सम्बन्धित्वस्य । अन्यथा सैव तस्य प्रकृतिर्न यवेत् । अथान्येति पक्षः, तत्राह—अन्यच्चेदित्यादि । यदि हि सहकारिविकलं रूपमस्यान्यदितीष्यते, तदा नित्यत्वहानिप्रसङ्गः; रूपस्य भावाव्यतिरेकात् । तस्मात् [2]सहकारिकारणापेक्षायामपि न स्थिराणां क्रमेणार्थक्रिया युक्ता ॥ ४१२ ॥=॥

नापि यौगपद्येनेति दर्शयति—यौगपद्यं तु नैवेष्टमित्यादि । [3]परैरपि नित्यपदार्थकार्याणां नैव यौगपद्यमिष्टम् । तथा हि—नित्यानामेतानि कार्याणि वर्ण्यन्ते—आत्मनः सुखदुःखादीनि, नभसः शब्दाः, मनसः क्रमवर्त्तीनि ज्ञानानि[4], अणूनां द्व्यणुकादिक्रमेण स्थूलाः, कालदिगीश्वरादीनां सर्वाण्येवोत्पत्तिमन्तीति । एषां च प्रत्यक्षादेव क्रमोदयः प्रसिद्धः ॥ ४१३ ॥

तदेवं यौगपद्याभ्युपगमे प्रत्यक्षविरोधः, अभ्युपगमविरोधश्चोक्तो भवति । इदानीमनुमानविरोधं प्रतिपादयन्नाह—निःशेषाणीत्यादि । तथा हि—युगपदशेषाणि कार्याणि कृत्वा स किं तस्यार्थक्रियासमर्थः स्वभावो निवर्त्तते ? आहोस्विदनुवर्त्तते ? इति पक्षद्वयम् । तत्र यदि निवर्त्तत इति पक्षः, तदा तस्य क्षणभङ्गित्वं सिद्धम्; प्रतिक्षणमपरापरस्वभावोत्पत्तेः, पूर्वपूर्वस्य च स्वभावस्य स्वरसविनाशात ॥ ४१४ ॥

---

१. च—पा०, गा० । २. सहकारिणोऽपे०—पा०, गा० ।
३. वैशेषिकैरित्यर्थः । ४. विज्ञानानि—पा०, गा० ।

तद्रूपस्यानुवृत्तौ तु कार्यमुत्पादयेत् पुनः ।
अकिञ्चित्कररूपस्य सामर्थ्यं चेष्यते कथम् ॥ ४१५ ॥
सर्वसामर्थ्यशून्यत्वात् तारापथसरोजवत् ।
असन्तोऽक्षणिकाः सर्वे शक्तिर्यद् वस्तुलक्षणम् ॥ ४१६ ॥
अथ नाङ्गीक्रियेतेदं वस्तुत्वं शक्तिलक्षणम् ।
यदेवमन्यन्निर्देश्यं वस्तूनां लक्षणं परैः ॥ ४१७ ॥
सत्तासम्बन्ध इष्टश्चेद् वस्तूनां लक्षणं न तत् ।

---

अथ द्वितीयः पक्ष आश्रीयते, तदा तद्रूपस्य समर्थात्मनोऽनुवृत्तौ सत्यां पुनः कार्यमुत्पादयेत्; अत्यक्तपूर्वरूपत्वात्, प्रागवस्थावत् । ततश्च स एव क्रमो जात इति यौगपद्याभ्युपगमोऽनुमानविरुद्धः । अथापि स्यात्, मा भूत् तस्य क्रमयौगपद्याभ्यामर्थक्रिया, [G. 150] तथापि सामर्थ्यमस्यास्त्येवेत्याह—अकिञ्चित्कररूपस्येत्यादि । कार्योत्पादनिबन्धनं हि भावानां सामर्थ्यं व्यवस्थाप्यते । यश्च न किञ्चत् करोति स कथं समर्थः स्यात्; अन्यथा ह्याकाशकुशेशयादेरपि सामर्थ्यं किं न व्यवस्थाप्येत ।

स्यादेतद् – यदि नाम सामर्थ्यमस्य निवृत्तं तथापि सत्त्वमनिवृत्तमेव, ततश्च सत्त्वादित्यनैकान्तिक एव हेतुः ? इत्याह—असन्त इत्यादि । इदमेव हि वस्तुलक्षणं यदर्थक्रियासामर्थ्यम्, तच्चेन्निवृत्तम्, तत्कथं वस्तुत्वं तल्लक्षणं तेष्ववस्थां लभते । तदेवं क्रमाक्रमाभ्यामर्थक्रियासामर्थ्यशून्यत्वाद् वन्ध्यापुत्रादिवदसद्व्यवहारयोग्या अक्षणिकत्वेनाभिमता आकाशादय इति सिद्धम् ॥ ४१५–४१६ ॥

अथापि स्याद्—यद्यर्थक्रियासामर्थ्यलक्षणमेव वस्तुलक्षणं भवेत्, तदैतत् सर्वं शोभेत ? यद्येवम्, किमन्यद्वस्तुलक्षणमिति वक्तव्यम् । तथा हि—शशविषाणादौ यदवस्तुत्वमिष्टम्, तत्रार्थक्रियासामर्थ्यविरह एव निबन्धनम्; वस्त्ववस्तुनोश्चान्योऽन्यव्यवच्छेदरूपत्वात् । सामर्थ्यादवस्तुलक्षणविपरीतमर्थक्रियासामर्थ्यमेव वस्तुलक्षणमवतिष्ठत इति भावः ॥ ४१७ ॥

अत्र परस्योत्तरमाशङ्कते—सत्तेत्यादि । न ह्यर्थक्रियासामर्थ्यं वस्तुलक्षणम्, किं तर्हि ? सत्तासम्बन्धः, सत्तासमवाय इति यावत् । न तदिति ।

असिद्धेः समवायादेः कथं वाऽन्योऽन्यलक्षणम् ॥ ४१८ ॥
सर्वश्चार्थविचारादिव्यापारोऽर्थक्रियार्थिनः ।
निराकुलधियो युक्तो नोन्मत्तकतया पुनः ॥ ४१९ ॥
तत्र यन्नाम केषाञ्चित् कथञ्चिदुपयुज्यते ।
क्वचित् कदाचित् तत्रैव युक्ता सत्ताव्यवस्थितिः ॥ ४२० ॥

---

वस्तुलक्षणं युक्तमिति शेषः; समवायादेरसिद्धत्वात् । आदिशब्देन सत्तापरिग्रहः । यदि समवायादिः सिद्धो भवेत्, तदा समवायो वस्तुलक्षणं स्यात्; यावता तेषामेव साध्यत्वेन प्रस्तुतत्वात्, वक्ष्यमाणबाधकप्रमाणसद्भावाच्च । यदि वा पूर्वोक्तादेव बाधकात् प्रमाणात् सत्तायाः समवायस्य चासिद्धिः; केनचित् सह सत्तायाः सम्बन्धासिद्धेस्तस्यानुपकार्यत्वात् । न ह्यनुपकारिणोः परस्परं सम्बन्धः; अतिप्रसङ्गादित्युक्तम् । किञ्च — तयोरपि सत्तासमवाययोरन्त्यानां च विशेषाणां वस्तुत्वे किं लक्षणमिति वक्तव्यम् । न हि समवाये विशेषेषु च सत्ता समवैति । नापि सत्तायाम्, किं तर्हि ? द्रव्यगुणकर्मसु त्रिपदार्थसत्करी सत्तेति समयात् । तस्मादव्यापीदं [ G. 151 ] वस्तुलक्षणम् ।

भवतु नाम सत्तादेः सिद्धिः, तथापि न सत्तासमवायो लक्षणं युक्तम्; अर्थान्तरत्वात् । न ह्यर्थान्तरमर्थान्तरस्य स्वरूपम्, येन तस्य तल्लक्षणं भवेत् । तथा हि—वस्तुस्वरूपापरिज्ञानान्मूढधियं प्रति तल्लक्षणे प्रकृते तत्स्वभाव एव कुतश्चिद् व्यावृत्त्या प्रतीतो लक्षणत्वेन वाच्यः, येन तदेव वस्तुस्वरूपत्वेनावधारयति, यथा — पृथिवी खरकटत्वेन । न चान्यः पदार्थोऽन्यपदार्थस्वरूपम्; अन्यत्वहानिप्रसङ्गात् । तत्कथं तल्लक्षणं भवेत्, लक्षणशब्दस्य स्वभाववचनस्य प्रस्तुतत्वात् ! ॥ ४१८ ॥

केचिदाहुः— "यद्वस्त्वन्तशः सर्वज्ञस्यापि न ज्ञानमुत्पादयति तस्य तादृशस्यास्तितायां किं बाधकं प्रमाणम्, यत इयं व्याप्तिः सर्वोपसंहारेण सिद्ध्येत्— 'यत्सत्तत्सर्वं क्षणिकम्' इति । न च तदपरिज्ञाने सर्वज्ञत्वहानिः; तस्य ज्ञेयेष्वेवाधिकारात् । ज्ञानयोग्यस्य हि वस्तुनोऽपरिज्ञाने स्यादसर्वज्ञः, तत्तु न ज्ञेयम्; ज्ञानोत्पादनेऽपि तस्यायोग्यत्वात्" ( ) इति । तान् प्रत्याह—सर्वश्चेत्यादि ।

तद्रूपस्यैव चार्थस्य क्षणिकत्वं प्रसाध्यते ।
व्याप्तिः सर्वोपसंहारा तस्मिन्नेवाभिधीयते ॥ ४२१ ॥

अर्थक्रियासामर्थ्यशून्यस्यावस्तुत्वम्

निःशेषशक्तिशून्यं तु यद् वन्ध्यासुतसन्निभम् ।
सर्वज्ञचेतसोऽप्येति हेतुत्वं न कदाचन ॥ ४२२ ॥
क्रियते तत्र नैवेदं कार्यरूपाद्यदृष्टितः ।
निर्निबन्धनमस्तित्वव्यवस्थानं विचक्षणैः ॥ ४२३ ॥
न तस्मिन् साधितेनार्थः क्षणिकत्वेन कश्चन ।
तत्र पर्यनुयोगश्च क्रियमाणोऽपि निष्फलः ॥ ४२४ ॥

---

अर्थस्य हि वस्तुमात्रस्य योऽयमस्तित्वनास्तित्वेन विचारः, स सर्वोऽर्थक्रियार्थिनः, न व्यसनितया । अन्यथा ह्युन्मत्तः स्यात् । तेन यदेव पदार्थजातं केषाञ्चिदर्थक्रियार्थिनां कथञ्चित् साक्षात् पारम्पर्येण वा क्वचिद्देशे कदाचित् काल उपयुज्यते, तत्रैव वस्तुव्यवस्था युक्ता प्रेक्षावतः, न त्वन्यत्र; निबन्धनाभावात्, निष्प्रयोजनत्वादिति भावः ।

आदिग्रहणेनार्थविशेषाणां दहनसलिलादीनां विचारो गृह्यते । ततश्च प्रेक्षापूर्वकारिणां यदेवार्थक्रियाकारि तदेव वस्त्विति यदेतत्प्रसिद्धम्, तस्यैव तद्रूपस्य = अर्थक्रियाकारिरूपस्यास्माभिः क्षणिकत्वं प्रसाध्यते; यतोऽर्थक्रियासामर्थ्यलक्षणस्य हेतुत्वेनाभीष्टत्वान्नास्ति व्यभिचारः; तस्यैवम्भूतस्य हेतोः सर्वोपसंहारात् साध्येन व्याप्तिसिद्धेः । या हि पक्षसपक्षविभागमकृत्वा सामान्येन हेतोर्व्याप्तिः प्रदर्श्यते, सा सर्वोपसंहारा व्याप्तिः ॥ ४१९–४२१ ॥

[G 152] अथार्थक्रियासामर्थ्यशून्यस्यापि कस्माद् वस्तुत्वं नेष्यते ? इत्याह—निःशेषेत्यादि । सर्वज्ञचेतसोऽपीति । न केवलं समानजातीयस्य क्षणस्य, जलधारणादेश्च कार्यस्येत्यपिशब्दः । कार्यरूपाद्यदृष्टित इति । निबन्धनत्वे [1] हेतोः [1] कार्यम् – तदीयं फलम्, रूपम् – तस्य स्वभावः । आदिशब्देन तस्य देशः, कालः; अवस्थाविशेषश्च गृह्यते । तस्य चैवंरूपस्य शशविषाणादिभ्यो न

---

१–१. पा०, गा० पुस्तकयोर्नास्ति ।

अत्र परमतम्

ननुच्चार्थक्रियाशक्ता नभस्तामरसादयः ।
स्वज्ञानहेतुभावेन न चैते सन्ति भाविकाः ॥ ४२५ ॥

तत्परिहारः

निरालम्बनमेवेदमम्बराम्भोरुहादिषु ।
तज्जल्पवासनामात्रभावि ज्ञानं प्रवर्त्तते ॥ ४२६ ॥
अभावकारणत्वे तु नैरन्तर्येण सम्भवेत् ।
नाभावोऽपेक्षते किञ्चिन्निर्विशेषतया सदा ॥ ४२७ ॥

---

कश्चिद्विशेषोऽस्तीति भावः । नचापि तस्मिंस्तथाभूते वस्तुनि क्षणिकत्वेन साधितेनार्थक्रियार्थिनः किञ्चित् प्रयोजनमस्ति; तस्य दृष्टादृष्टयोर्हिताहितप्राप्तिपरिहारायोग्यत्वात् । यथोक्तम्—

"अर्थक्रियाऽसमर्थस्य विचारैः किं तदर्थिनाम् ।
षण्डस्य रूपे वैरूप्ये कामिन्याः किं परीक्षया ॥"

( प्र० वा० ३.२१०–११ ) इति ।

अत एव कथमिदं गम्यते—तत्क्षणिकमित्यादिपर्यनुयोगः प्रतिवादिना क्रियमाणो विफल एव; तस्य वादिना क्षणिकत्वेन साधयितुमनिष्टत्वात् ॥४२२-४२४॥

इदानीं परः 'अर्थक्रियासामर्थ्यमपि वस्तुलक्षणमयुक्तम् ; अतिव्यापित्वात्' इति दर्शयति—ननु चेत्यादि । तथा हि—नभस्तामरसादयः 'नभस्तामरसं नभस्तामरसम्' इत्यादिज्ञानोत्पादलक्षणायामर्थक्रियायां समर्थाः, न च ते परमार्थतः सन्ति, अतोऽतिव्यापीदं लक्षणम्—शक्तिर्भावलक्षणमिति ॥ ४२५ ॥

अत्र परिहारमाह—निरालम्बनमेवेत्यादि । असिद्धमाकाशाम्भोरुहादीनामर्थक्रियासामर्थ्यम् ; तद्विकल्पानां स्वविकल्पवासनापरिपाकमात्रेणैवोत्पत्तेर्निरालम्बनत्वात् ॥ ४२६ ॥

[ G. 153 ] अथाकाशाम्भोरुहादिभ्य उत्पत्तौ किं बाधकं प्रमाणम् ? इत्याह—अभावकारणत्वे त्वित्यादि । अभावो नभस्तामरसादि कारणं यस्य तत्तथोक्तम् , तद्भावस्तत्त्वम् , तस्मिन् सति तन्नभस्तामरसादिज्ञानं सर्वदैव भवेत् =

भदन्तयोगसेनमतम्

क्षणिकेष्वपि भावेषु ननु चार्थक्रिया कथम् ।
विशेषाधायिनोऽन्योन्यं न ह्याद्याः सहकारिणः ॥ ४२८ ॥
जातौ सर्वात्मना सिद्धेरजातौ वस्त्वभावतः ।
निर्विशेषाद्विशेषस्य भावे कार्यं न किं भवेत् ॥ ४२९ ॥
न चान्यतो विशिष्टास्ते तुल्यपर्यनुयोगतः ।
सहकारिकलापानामनवस्था च ते भवेत् ॥ ४३० ॥
क्रमेण युगपच्चापि यतस्तेऽर्थक्रियाकृतः ।
न भवन्ति ततस्तेषां व्यर्थः क्षणिकताश्रयः ॥ ४३१ ॥
सहकारिकृतश्चैवं यदा नातिशयः क्वचित् ।

---

उत्पद्येत; नित्यसन्निहिताविकलकारणत्वात् । न चापि तस्य परैरनुपकार्यस्य तदपेक्षा युक्ता, येन सहकारिवैकल्यात् कदाचिज्जनयेदिति स्यात् ॥ ४२७ ॥

क्षणिकेष्वपीत्यादिना भदन्तयोगसेनमतमाशङ्कते । स ह्याह—क्षणिकत्वेऽपि भावानां क्रमयौगपद्याभ्यामर्थक्रियाविरोध एव; यतस्ते स्वयं समर्था भवेयुः ? असमर्था वा ? यदि समर्थाः, तदा सहकारिकारणं नापेक्षेरन् ; न हि समर्थस्य काचिदपेक्षा युक्ता । अथासमर्थाः, तथापि तेषां तदपेक्षा सुतरामयुक्तिमती । तथा हि—ये प्रथमकलापान्तश्चरिष्णवस्ते न परस्परतो विशेषमाप्नुवन्ति; उत्पन्नानुत्पन्नावस्थायाः [ G. 154 ] सदसत्त्वेनानुपकार्योपकारकत्वात् । ततश्च प्रथमावस्थायां तेषां निर्विशिष्टत्वात् तेभ्यो विशिष्टक्षणान्तरोत्पादो न स्यात् । निर्विशेषेभ्यश्च तेभ्यः क्षणान्तरस्य विशिष्टस्योत्पत्तौ कार्यमपि किं नोत्पद्येत । न चापि पूर्वकात् कलापाद्विशिष्टात् ते समुत्पन्ना इति युक्तं वक्तुम्; तत्कलापान्तर्गतानामप्यत एव परस्परतो विशेषाभावात् । तेषामप्यन्यतो विशेषोत्पत्तौ सत्यामनवस्था स्यात् । तदेवं विशेषाभावात् कथमविशिष्टात् कारणकलापात् कार्यमुत्पद्येत ! अविशिष्टाच्चोत्पत्तौ सर्वं सर्वस्माद् भवेत् । ततश्च क्रमयौगपद्याभ्यामेवमर्थक्रियाविरोधेऽपि यथैते भवन्त्येवार्थक्रियाकारिणः, तथा नित्या अपि सन्तो भविष्यन्तीति व्यर्थस्तेषां क्षणिकताश्रयः । तेन सत्त्वादिति हेतुरनैकान्तिक इति भावः ।

सर्वदा निर्विशेषैव तदा सन्ततिरिष्यते ॥ ४३२ ॥
विनाशो[1] यद्यहेतुः स्यादादावेव भवेदयम् ।
सम्भवो यदि नास्यादावन्तेऽपि स कथं भवेत् ॥ ४३३ ॥
स्वहेतोर्यदि भावानामिष्यतेऽन्यन्न कारणम् ।
विनाशस्य कथं तेषां क्वचिदेव विरुद्धता ॥ ४३४ ॥

तत्प्रतिविधानम्

उच्यते प्रथमावस्था नैवान्योऽन्योपकारिणः ।
एकार्थक्रियया त्वेते भवन्ति सहकारिणः ॥ ४३५ ॥

---

न चापि सन्ततेरवस्थाविशेषप्राप्तायाः कार्योत्पत्तिर्भविष्यति न सर्वदेति वक्तुं युक्तम्; यथोक्तया नीत्या सहकारिकृतस्य विशेषस्याभावात् सर्वदैव सन्ततेरविशिष्टत्वात् । न चापि स्वोपादानकारणमात्रप्रतिबद्धो विशेषः सन्ततिरिति युक्तं वक्तुम्; दृष्टविरोधात् । तथा हि—सहकारिणामुपायापाययोः कार्यव्यक्तिविरामौ दृष्टौ । यदि च [2]स्वोपादानमात्रप्रतिबद्धो विशेषः स्यात्, तदा सहकारिनिरपेक्षस्यैव जनकत्वं भवेत् । अपि च—यथोक्तया नीत्या सन्ततेः सर्वदा निर्विशिष्टत्वात्, घटादीनां कपालादिविशेषोत्पत्त्यसम्भवात् सजातीयक्षणसन्तानोच्छेदलक्षणो विनाशो यदि निर्हेतुकः स्यात्, तदा निरपेक्षत्वात् प्रागेव भवेत् । अथादौ न भवेत्, पश्चादपि न भवेत्, प्राग्वद्विशेषाभावात् । किञ्च—यदि भावानां विनाशं प्रति स्वहेतुव्यतिरेकेणान्यत् सन्तानान्तरं कारणं नेष्यते, तदाऽनलादयः शीतादीनां कथं विरोधिनो भवेयुः; न ह्यकिञ्चित्करो विरोधी युक्तः; अतिप्रसङ्गापत्तेः । एवं हि सर्वः सर्वस्य विरोधी प्रसज्येत । ततश्च विरोधद्वारेणानुपलब्धिप्रयोगः, प्राणातिपातादिव्यवस्थानं चातिदुर्घटमिति भावः ॥ ४२८-४३४ ॥

उच्यत इत्यादिना प्रतिविधत्ते । समर्थादेव हि कार्योत्पत्तिः, न च सहकारिवैयर्थ्यम् । तथा हि—द्विविधं सहकारित्वम्—एकार्थक्रियाकारितया, परस्परोपकारितया च । तत्र [3]अव्यवहितकार्यापेक्षया [ G. 155 ] एकार्थक्रियाकारित्वमेव, न

---

१. विनाशे—पा०, गा० । २. स्वोपादानकारणमात्र०—पा०, गा० ।
३. व्यवहित०—पा० ।

अन्योऽन्यानुपकारेऽपि नाविशिष्टा इमे यतः ।
स्वोपादानबलोद्भूताः कलापोत्पादकाः पृथक् ॥ ४३६ ॥
ततः प्रभृति ये जाता विशेषास्ते तु तत्कृताः ।
तद्रूपप्रकृतित्वेन तेषां तदुपयोगिनाम् ॥ ४३७ ॥

परस्परोपकारित्वम्; एकस्मिन् क्षणे निर्विभागतया विशेषस्याधातुमशक्यत्वात् । व्यवहितकार्यापेक्षया तु परस्परत उत्तरविशिष्टक्षणोत्पत्तेः, सन्तानापेक्षया परस्परोपकारेण व्यवहितकार्यजनकत्वात् परस्परोपकारित्वलक्षणं सहकारित्वम् । तत्र प्रथमावस्थाभाविनां यद्यपि परस्परतो विशेषो नास्ति, तथापि तेषां सहकारित्वमविरुद्धमेव; एकार्थक्रियाकारित्वात् । नापि ते समनन्तरविशिष्टक्षणोत्पादनं प्रत्यविशिष्टाः; पूर्वकेभ्य एव स्वहेतुप्रत्ययेभ्यस्तथाविधोत्तरकार्यकलापोत्पादनं प्रति प्रत्येकं समर्थानामुत्पन्नत्वात् । तेषामपि हेतुप्रत्ययानामपरेभ्यः स्वहेतुप्रत्ययेभ्यः, तेषामप्यपरेभ्यः—इत्यादेर्हेतुपरम्पराया इष्टत्वाद् अनवस्थाऽप्यदुष्टैव । प्रत्येकं च सामर्थ्येऽपि नापरेषां वैयर्थ्यम्; स्वहेतुबलेन तेषां तथोत्पन्नत्वात् । नापि तेषां पृथग्भावः सम्भवति; तथाविधकारणाभावात् । नापि पश्चात्; क्षणिकत्वात् । कलापोत्पादकाः पृथगिति । प्रत्येकं द्वितीयक्षणभाविकलापोत्पादनसमर्था इत्यर्थः । स्वोपादानग्रहणं प्रथमावस्थाभाविसहकारिकृतोपयोगनिषेधपरं द्रष्टव्यम् । न तु स्वोपादानमात्रभावि किञ्चित् कार्यं सम्भवति; सामग्रीतः सर्वस्य सम्भवात् । यथोक्तम्—"न किञ्चिदेकमेकस्मात् सामग्र्याः सर्वसम्भवः" (प्र० वा० २. ५३६) इति ॥ ४३५-४३६ ॥

ततः प्रभृतीति द्वितीयक्षणोत्तरकालमारभ्येत्यर्थः । तत्कृता इति सहकारिकृतविशेषकारणकृताः । कस्मात्? तद्रूपप्रकृतित्वात्तेषाम्—तद्रूपा = विशिष्टसहकारिकृतविशेषकारणजन्या, प्रकृतिः = स्वभावो येषां ते तथोक्ताः । तेषां तदुपयोगिनामिति । तद्रूपप्रकृतित्वादिति सम्बन्धनीयम् । "[1]तदुपयोगिनाम्" इत्यत्र चकारो लुप्तनिर्दिष्टः, तेनायमर्थो भवति – तत्र तृतीयावस्थाभाविनि कार्ये ये द्वितीयक्षणभाविनो विशेषा उपयुज्यन्ते कारणभावेन, तेषां च तदुपयोगिनां

१. तदुपयोगिनम्—गा० ।

नियताचिन्त्यशक्तीनि वस्तूनीह प्रतिक्षणम् ।
भवन्ति नानुयोज्यानि दहने दाहशक्तिवत् ॥ ४३८ ॥
सन्तानोच्छेदरूपस्तु विनाशो यो न हेतुमान् ।
तस्यान्तेऽपि न भावोऽस्ति तथा जन्म तु वार्यते ॥ ४३९ ॥
विलक्षणकपालादेरुत्पादस्तु सहेतुकः ।
सोऽप्यादौ जायते नैव तदा हेतोरसम्भवात् ॥ ४४० ॥

---

सहकारिकृतविशेपकारणजन्यकार्योत्पादनयोग्यप्रकृतित्वात्, तृतीयादिक्षणभाविनो विशेपास्तत्कृता भवन्तीति ॥ ४३७ ॥

अयमपि नियमः कथमेपां भवति? इत्याह—नियतेत्यादि । [G. 156] न हि भावानां स्वभावाः पर्यनुयोगमर्हन्ति, तेषां स्वहेतुप्रत्ययपरम्परासमायातत्वात् स्वभावभेदस्य, यथा—अग्नेर्दाहकत्वम् । यस्मादेते परापरप्रत्ययोपयोगेन प्रतिक्षणं भिन्नशक्तयः समुत्पद्यन्ते, अतो यद्यप्येते कुतश्चित् समानरूपाः प्रतीयन्ते, तथापि भिन्न एवैपां स्वभावः । तेन किञ्चिदेव कस्यचित् कारणम्, न सर्वः सर्वः सर्वस्येति यत्किञ्चिदेतत् । भवन्तीति । जायन्त इत्यर्थः ॥ ४३८ ॥

यदप्युक्तम् = "विनाशो यद्यहेतुः स्यात्" (तत्त्व० ४३३) इति, तत्राह—सन्तानोच्छेदरूपस्त्वित्यादि । द्विविधो हि विनाशः—सन्तानोच्छेदरूपः, विसदृशसन्तानोत्पादलक्षणश्च । तत्र यदि सन्तानोच्छेदरूपं विनाशमधिकृत्योच्यते, तदयुक्तम्; न हि तस्यान्तेऽपि भावोऽस्तीति, नीरूपत्वात्, तत्किमुच्यते—"अन्तेऽपि स कथं भवेत्" (तत्त्व० ४३३) इति ! तस्मात्तस्य कदाचिदपि भवनानभ्युपगमादावन्ते च यद्भावाभावप्रसञ्जनं तदसङ्गतमेव । केवलम्, तथा = सदृशक्षणान्तरप्रतिसन्धानेन, जन्म = उत्पादः, तत्र प्रतिषिध्यते । घटादेरुच्छेदो भवति[1], स एव न भवतीत्यर्थः । न तु तत्र किञ्चिद्विधीयते । अथ विसदृशक्षणोत्पादलक्षणो द्वितीयो विनाशोऽभिप्रेतः ? तस्याहेतुकत्वमसिद्धम्; वस्तुतया तस्य मुद्गरादिकारणबलेनोत्पादनाभ्युपगमात् । अत एवासावादौ न जायते; स्वहेतोर्मुद्गरादेस्तदानीमभावात् ॥ ४३९-४४० ॥

---

१. इतोऽग्रे गा० सम्पादकः 'इत्यस्य' इति पाठमीप्सति ।

द्विविधाः क्षणिका भावाः केचिद्ध्रासस्य हेतवः ।
शीतादेरेव वह्न्याद्या अपरे न तथाविधाः ।। ४४१ ।।
अदृष्टतत्त्वो लोकस्तु विरोधमभिमन्यते ।
कार्यकारणभावेऽपि प्रथमोक्तेष्वनेकधा ।। ४४२ ।।
बाध्यबाधकभावस्तु [1]वस्तूनां नैव तात्त्विकः ।
विद्यते तत एवोक्तं विरोधगतिरित्यपि ।। ४४३ ।।

क्षणभङ्गे जैमिनीयानामाक्षेपः

ननु च प्रत्यभिज्ञानं स एवेत्युपजायते ।

---

विरोधव्यवस्थासमर्थनार्थमाह—द्विविध इत्यादि । केचिद्धि भावाः केषाञ्चिन्मन्दतरतमक्षणोत्पत्तिक्रमेण यो ह्रासस्तत्र हेतवो [G. 157] भवन्ति, यथा—वह्न्यादयः शीतादीनाम् । अपरे न तथाविधाः = नापकर्षहेतवः, तद्यथा – त एव वह्न्यादयो धूमादीनाम् । तत्र प्रथमोक्तेषु ह्रासहेतुषु कार्यकारणभावेऽपि सत्यज्ञानतिमिरतिरोधीयमानज्ञानालोको लोको विरुद्धत्वमभिमन्यते । अनेकधेति । शीतस्याग्निर्विरुद्धः, प्रदीपस्य वायुः, आलोकोऽन्धकारस्येत्यादिना भेदेन । न तु वस्तूनां परमार्थतः कश्चिद्बाध्यबाधकभावोऽस्ति; सतः सर्वात्मना निष्पत्तेः, स्वभावान्यथात्वस्य कर्तुमशक्यत्वात्, तस्य व्यतिरेकाव्यतिरेकविकल्पे सत्युभयथापि करणासम्भवात् । असतोऽप्यवस्तुत्वादेव न किञ्चित् क्रियते – इत्युभयथाप्यकिञ्चित्करो विरोधी । अत एवाविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधगतिरित्याचार्येणोक्तम् । विरोधगतिः = विरोधव्यवसायः, न तु विरोधस्तात्त्विक इति भावः । अपिशब्दश्चार्थे, भिन्नक्रमश्च, एवेत्यस्यान्तरं द्रष्टव्यः ॥४४१–४४३॥

ननु चेत्यादिना जैमिनीयादिमतेन क्षणभङ्गप्रतिज्ञायाः प्रत्यक्षबाधितत्वमाशङ्कते । तथा हि – स एवायमिति गिरितनुवज्रादिष्वक्षव्यापारानन्तरं प्रत्यभिज्ञानाख्यं प्रत्यक्षं प्रमाणं भावानां क्षणभङ्गं निराकुर्वदुदेति । यद्यपि नूनं पुनर्जातनखकेशतृणादिषु प्रत्यभिज्ञानं दृष्टम्, तथापि न वज्रादिविषययोः प्रत्यभिज्ञानयोर-

---

१. वस्तुनो—पा०, गा० ।

अक्षव्यापारसद्भावे निष्प्रकम्पमबाधितम् ॥ ४४४ ॥
ततः प्रत्यक्षबाधेयं दुर्वारा सर्वहेतुषु ।
क्षणभङ्गप्रसिद्ध्यर्थमुपात्तेषु प्रसज्यते ॥ ४४५ ॥

तत्खण्डनम्

न खलु प्रत्यभिज्ञानं प्रत्यक्षमुपपद्यते ।
वस्तुरूपमनिर्देश्यं साभिलापं च तद्यतः ॥ ४४६ ॥
भ्रान्तं च प्रत्यभिज्ञानं प्रत्यक्षं तद्विलक्षणम् ।
अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ॥ ४४७ ॥
पूर्वं [1]संविदिताकारगोचरं चेदिदं भवेत् ।
जायेत पूर्वमेवेदं तादर्थ्यात् पूर्वबुद्धिवत् ॥ ४४८ ॥

---

प्रामाण्यम्; अबाधितविषयत्वात् । अत एवाह — निष्प्रकम्पमबाधितमिति । न हि तिमिरोपहतलोचनोपजनितं केशविज्ञानमप्रमाणमुपलब्धमित्येतावता स्वच्छनेत्रजनितमपि सत्यकेशविषयं चक्षुर्विज्ञानमप्रमाणमिति युक्तं स्वच्छचेतसोऽभिधातुमिति भावः । तत्र निष्प्रकम्पत्वेनासंशयरूपतामाह; स एवायम्? अथान्यः? — इत्येवंविधस्य संशयस्याभावात् । अबाधितमित्यनेनाविपर्यस्तत्वम् ॥ ४४४–४४५ ॥

न खल्वित्यादिना प्रतिविधत्ते । [G. 158] तत्र प्रत्यक्षत्वं तावदसिद्धमस्याः, तथा हि — वस्तुत्वलक्षणस्यानन्वयित्वेनाशक्यसमयत्वात् तद्ग्राहि ज्ञानं मनसि जल्पमेव; अवगृहीतसम्बन्धस्यार्थस्य शब्देन संयोज्य ग्रहणासम्भवात् । अतोऽवश्यं प्रत्यक्षेण सता स्वलक्षणविषयत्वात् कल्पनापोढेन भवितव्यम्, प्रमाणत्वाच्च भ्रान्तेन ततश्च "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" (न्या० बि० १.४) इति न्यायानुयातमिदं प्रत्यक्षलक्षणमाचक्षते कुशलाः । न च प्रत्यभिज्ञानं कल्पनापोढम्, स एवायमित्येवमभिजल्पाकारतया[2] संवेद्यमानत्वात् । नाप्यभ्रान्तम्; भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेः ॥ ४४६–४४७ ॥

कथम्? इत्याह — पूर्वमित्यादि । यदि हि पूर्वोपलब्धार्थविषयमिदमभविष्यत्,

---

१. संविहिता०—गा० ।    २. ०मन्तर्जल्पा०—पा० गा० ।

न चैवं तेन नैवेदं तदर्थग्राहकं मतम् ।
तज्ज्ञानकाल उत्पादाद् विषयान्तरबुद्धिवत् ॥ ४४९ ॥
अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः ।
मायागोलकविज्ञानमिव भ्रान्तमिदं स्थितम् ॥ ४५० ॥
निष्पादितक्रिये चार्थे प्रवृत्तेः स्मरणादिवत् ।
न प्रमाणमिदं युक्तं करणार्थविहानितः ॥ ४५१ ॥

---

तदा पूर्वमेवोदपत्स्यत[1]; तद्विषयत्वेनाविकलकारणत्वात्, पूर्वज्ञानवत् । तादर्थ्यादिति। स पूर्वसंविदितो भावोऽर्थो विषयोऽस्येति तदर्थम्, तद्भावस्तादर्थ्यम् ॥ ४४८ ॥

न चैवमिति प्रसङ्गविपर्ययमाह । प्रयोगाः—यद्यस्मिन्नविकलेऽपि सति न भवति न तत्तद्विषयम्, यथा रूपेऽविकलेऽपि सति तत्राभवच्छ्रोत्रविज्ञानम्, न[2] भवत्यविकलेऽपि वज्रादौ तद्विज्ञानवेलायां प्रत्यभिज्ञानमिति व्यापकानुपलब्धेः । तदेवं नित्यत्वे सति वज्रादेरनपरापेक्षस्य तद्विषयं प्रत्यभिज्ञानमिति व्यापकानुपलब्धेः । तदेवं नित्यवे सति वज्रादेरनपरापेक्षस्य तद्विषयं प्रत्यभिज्ञानमविकलकारणत्वात् पूर्वमेव भवेत्, न च भवति, तस्मादनित्यत्वमस्य सिद्धम् । ततश्च भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेर्मायागोलकविज्ञानवद् भ्रान्तमिदमित्यविकलमेतत् । अत एवाबाधितविषयत्वमप्यसिद्धम्; यथोक्ताद् भ्रान्तत्वप्रसाधकादेव हेतोर्बाधितविषयत्वात् ॥ ४४९-४५० ॥

इतश्च गृहीतग्रहणान्नास्याः प्रामाण्यम्, यथा स्मृतेरिति दर्शयन्नाह — निष्पादितेत्यादि । [G. 159] यदेव हि प्रमितिक्रियासिद्धौ प्रकृष्टमुपकरणं तदेव साधकतमं कारकं प्रमाणमुच्यते । यदि च प्रत्यभिज्ञा पूर्वप्रमाणगृहीतार्थविषया स्यात्, तदा निष्पन्नप्रमितिक्रियेऽर्थे प्रवृत्त्याऽसाधकतमत्वात् कथमिव प्रमाणतामश्नुवीत; अन्यथा हि स्मृतेरपि प्रामाण्यं स्यात् । न चानधिगतप्रमाणभावा सती बाधकत्वाय कल्पते; अतिप्रसङ्गात् । स्यादेतत्—मा भूदस्याः पृथक् प्रामाण्यम्, तथाप्यनया पूर्वार्थविषयतया क्षणभङ्गित्वं बाध्यत एवेति ? तद-

---

१. ०दशिष्यत—पा०, गा० । २. पा० गा० पुस्तकयोर्नास्ति ।

क्षणभङ्गे कुमारिलमतम्

इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।
तदस्त्यस्य विशेषश्चेत् स्मरणे यो न विद्यते ॥ ४५२ ॥
पूर्वप्रमितमात्रे हि जायते स इति स्मृतिः ।
स एवायमितीयं तु प्रत्यभिज्ञाऽतिरेकिणी ॥ ४५३ ॥
ज्ञाते चाविद्यमानत्वाद् यौ संशयविपर्ययौ ।
बाधित्वा तौ लभेतैव प्रत्यभिज्ञा प्रमाणताम् ॥ ४५४ ॥
विज्ञातोऽपीतरैरर्थः प्रत्यक्षेणान्यथा भवेत् ।

---

सम्यक्; न ह्यस्याः परमार्थविषयत्वमस्ति; [1]साभिजल्पत्वात् । [2]केवलमविषयाऽपि सती विभ्रमबलात् पूर्वदृष्टार्थाध्यवसायिनी समुत्पद्यते—इत्यध्यवसायवशात् पूर्वदृष्टार्थविषयेत्युच्यते, तत् कुतोऽस्मात् प्रत्यभिज्ञानात् प्रकृतिभ्रान्तात् क्षणभङ्गनिराक्रिया सिध्येत् ॥ ४५१ ॥

इदानीन्तनमित्यादिना कुमारिलमतेन गृहीतग्राहित्वस्यासिद्धिमुद्भावयति । स ह्याह—न हि पूर्वप्रत्यक्षेणार्थस्येदानीन्तनमस्तित्वमधिगतम्; तस्य स एवायमित्येवमाकारोपग्राहेणानुत्पत्तेः । तस्मादस्य प्रत्यभिज्ञानस्य स्मरणादस्ति विशेषः । कथम्? इत्याह—पूर्वेत्यादि । स इति हि पूर्वज्ञानाकारोपग्रहेणैव स्मृतिः प्रवर्त्तते । प्रत्यभिज्ञा तु 'अयम्' इत्येवमतिरिक्तमप्यर्थाकारं गृह्णातीति[3] जायते इति[3] स्मृतेः सकाशादतिरेकिणी, विशिष्टेत्यर्थः । तस्माद्यौ संशयविपर्ययौ तौ बाधित्वा प्रत्यभिज्ञा प्रमाणतां [4]लभेत ॥ ४५२-४५३ ॥

कस्माद्यौ बाधते?—इत्यत्र कारणमाह—ज्ञाते चाविद्यमानत्वादिति । ज्ञातेऽर्थे तयोरविद्यमानत्वाद्, बहलवह्निशिखाकलापपरिगत इव देशे शीतस्य ॥ ४५४ ॥

[ G. 160 ] ननु यथानुमानप्रसिद्धस्याप्यर्थस्य पुत्रादिगतश्यामत्वादेः पुनः

---

1. माभिजल्पत्वात्—पा०; साभि ( मति ) जल्पत्वात्—गा० ।
2. केवलम(ति)विषयापि—गा० । 3-3. गृह्णाति—पा०, गा० ।
4. लभते—जै० ।

प्रत्यक्षेणावरुद्धे तु नेतरोत्पत्तिसम्भवः ॥ ४५५ ॥
को हि ज्येष्ठप्रमाणेन दृढेनार्थेऽवधारिते ।
दुर्बलैरितरैः पश्चादध्यवस्येद् विपर्ययम् ॥ ४५६ ॥

कुमारिलमतनिरासः

नन्विदानीन्तनास्तित्वं यदि भिन्नं त्वयेष्यते ।
पूर्वभावात् तदा भेदस्त्वयैव प्रतिपादितः ॥ ४५७ ॥

---

कालान्तरेण प्रत्यक्षेण [1]बाधमानस्यान्यथात्वं भवति, तथाऽत्रापि यदि नाम [2]प्रत्यभिज्ञातो नित्यत्वमर्थस्य सिद्धम्, तथाप्युत्तरकालं तत्कार्येण क्रमिणा क्रमस्यानुमानतः सिद्धेरन्यथात्वं सिद्धमेव, तत् कथं क्षणभङ्गित्वं बाधते[3] ?—इत्याशङ्कयाह—विज्ञातोऽपीत्यादि । इतरैरिति अनुमानादिभिः । यथा किल—स[4] श्यामः; तत्पुत्रत्वाद्, दृश्यमानतत्पुत्रवदित्यादि । प्रत्यक्षेणान्यथा भवेदिति । प्रत्यक्षेण करणभूतेन, अन्यथा = अनुमानादिप्रमिताकारविपरीतो भवेदित्यर्थः । अवरुद्ध इति । विषयीकृत इत्यर्थः । नेतरोत्पत्तिसम्भव इति । [5]प्रत्यक्षादितरस्यानुमानादेर्नैव बाधकत्वेनोत्पत्तिः सम्भवतीत्यर्थः ॥ ४५५ ॥

कस्माद् ? इत्याह—को हीत्यादि । युक्तं हि यदनुमानप्रसिद्धस्यार्थस्य प्रत्यक्षेणान्यथात्वं क्रियत इति; तस्य सर्वप्रमाणज्येष्ठत्वात् । न तु प्रत्यक्षप्रसिद्धस्यान्यथात्वमनुमानादयः कर्तुमीहन्ते; तेषा दुर्बलत्वात् । दृढेनेति संशयविपर्ययाभ्यां रहितेन । विपर्ययमिति अन्यथात्वम् ॥ ४५६ ॥

नन्वित्यादिना प्रतिविधत्ते । यत्तदिदानीन्तनमस्तित्वं प्रत्यभिज्ञानस्य विषयः, किं तत् पूर्वप्रत्यक्षगृहीतादस्तित्वाद्भिन्नम् ? आहोस्वित्तदेव ? यदि भिन्नम्, तदा स्ववचनेनैव भेदस्य प्रतिपादितत्वादभ्युपेतहानिर्भवतो भवेत् । अस्माकं पुनरिष्टसिद्धः ॥ ४५७ ॥

---

१. बाध्यमान०—पा०, गा० । २. प्रत्यभिज्ञानतो—गा० ।
३. बाध्यते—पा०, गा० । ४. पा०, गा० पुस्तकयोनास्ति ।
५. प्रत्यक्षादिरतस्या०—जं० ।

अनन्यत्वेऽपि सत्त्वस्य कथं पूर्वंधियाऽगतम् ।
तस्याऽगतौ हि वस्त्वेव नोपलब्धं प्रसज्यते ॥ ४५८ ॥
प्रत्यक्षेण च बाधायामनुमानादिगोचरे ।
नानुमानादिमानं स्याद् बाधातस्तैमिरादिवत् ॥ ४५९ ॥
अर्थसंवादकत्वे च समाने द्वेष्यताऽस्य का ।
तदभावे तु नैव स्यात् प्रमाणमनुमादिकम् ॥ ४६० ॥

---

अथानन्यदिति पक्षः, तदा कथं पूर्वधिया तद्गतं येनोच्येत—"न हि पूर्वधिया [ G. 161 ] गतम्" ( तत्त्व० ४५२ ) इति ।

स्यादेतत्—यथा क्षणिकत्वं शब्दादेरव्यतिरिक्तमपि सत् तद्ग्रहणे सत्यप्यगृहीतमुच्यते, तद्वदिदमपि भविष्यतीति ? तदयुक्तम्; न हि शब्दे धर्मिणि गृहीतेऽपि तदव्यतिरेकि क्षणिकत्वमगृहीतमिति व्यवस्थाप्यते, किन्तु[1] गृहीतमपि तन्निश्चयोत्पत्तिकारणाभावादनिश्चितमित्यभिधीयते। न ह्यनुभवमात्रादेव निश्चयो भवति; तस्यार्थित्वाभ्याससादगुण्यादिसापेक्षत्वात् । न चैवं भवतः सम्भवति पूर्वप्रत्यक्षस्यापि व्यवसायात्मकत्वात् । तेन च वस्तुरूपे निश्चीयमाने तदव्यतिरिक्तमिदानीन्तनमस्तित्वं निश्चितमेव । तदनिश्चये वस्तुस्वरूपस्यापि तद्वदेवानिश्चितरूपाव्यतिरेकादनिश्चितत्वप्रसङ्गः ।

येऽप्याहुः—"सन्दिग्धवस्तुनिर्णयनिबन्धनं प्रत्यभिज्ञाने प्रामाण्यम्" ( ) इति; तदप्यनेनैव प्रत्युक्तम् । न चाप्यत्र सन्दिग्धवस्तुसद्भावनिर्णयोऽस्ति; सदृशापरापरोत्पत्तावपि केशादिवत् प्रत्यभिज्ञानदर्शनेन सन्देहात् ॥ ४५८ ॥

यच्चोक्तम्—"विज्ञातोऽपीतरैरर्थः" (तत्त्व० ४५५ ) इत्यादि, तत्राह—प्रत्यक्षेण चेत्यादि । यस्य त्वत्पुत्रत्वादित्यादिकस्यानुमानादेर्गोचरे विषये प्रत्यक्षेण बाधा सम्भवेत्, तस्य प्रामाण्यमेव नास्ति; बाध्यमानविषयत्वेनार्थसंवादाभावात्, तैमिरिकादिज्ञानवत् । तेन 'इतरैर्विज्ञातोऽप्यर्थः प्रत्यक्षेणान्यथा भवेत्' इति यदुक्तं तदसङ्गतमेव; असम्भवात् ॥ ४५९ ॥

---

१. किं—पा०; किं तर्हि—गा० ।


1484

भाविविक्तमतम्

नन्वनेनानुमानेन वाध्यते सर्वहेतुषु ।
व्याप्तिः सर्वोपसंहारा प्रतिज्ञार्थस्य वा क्षतिः ॥ ४६१ ॥
विवक्षितार्कचन्द्रादिविषयं यत् प्रवर्त्तते ।
ज्ञानं तत्कालसम्बद्धसूर्यादिविषयं परम् ॥ ४६२ ॥
पार्थिवाविषयत्वे हि तज्ज्ञानत्वाभिधानतः ।
तद्यथा प्रथमं ज्ञानं तत्कालार्कादिगोचरम्[1] ॥ ४६३ ॥

---

यच्च प्रत्यक्षस्य ज्येष्ठत्वमुक्तं तदप्यसद्भूतमेवेति दर्शयन्नाह—अर्थसंवादकत्वे चेत्यादि । इदमेव हि प्रमाणानां प्रमाणत्वम्, यदुतार्थप्रापणसामर्थ्यम्[2] । तच्चेत् सर्वप्रमाणानामभ्युपगम्यते, तत्केनास्य प्रत्यक्षस्य ज्येष्ठता भवेत् ।

अथापि स्यात्—प्रत्यक्षस्यैवार्थसंवादकत्वम्, नानुमानादेः ? इत्याह—तदभाव इत्यादि । तस्य = अर्थादिसंवादकत्वस्य अभावे सति नैव प्रमाणमनुमानादि स्यात्; अर्थाविसंवादकत्वनिबन्धनत्वात् प्रमाणव्यवहारस्य, तस्य चात्र भावात् ॥ ४६० ॥

नन्वनेनेत्यादिना भाविविक्तोक्तानि प्रमाणान्याशङ्कते ॥ ४६१ ॥

[ G. 162 ] किं तदनुमानम् ? इत्याह—विविक्षतेत्यादि । तदुक्तम्—विमत्यधिकरणभावापन्नानि चन्द्रार्कग्रहनक्षत्रादिज्ञानानि विवक्षितचन्द्रार्कग्रहनक्षत्रतारकादिविषयं[3] यद्देवदत्तादिविज्ञानं तत्कालावच्छिन्नचन्द्रार्कग्रहनक्षत्रतारकादिविषयाण्येव; पृथ्वीसम्बन्धित्वेनानुपलभ्यमानत्वे सति चन्द्रार्कग्रहनक्षत्रतारकादिज्ञानशब्दवाच्यत्वात्, प्रथमकालभाविदेवदत्ततारकादिज्ञानवदिति[4] । विवक्षितार्कचन्द्रादिविषयमिति । तैजसद्रव्यविषयम् । पृथिवीसम्बन्धित्वेनानुपलभ्यमानत्वे सतीति विशेषणं चित्रादिगतादित्यादिविषयैर्ज्ञानैर्व्यभिचारपरिहारार्थम् । परमिति । तस्मादन्यत् । अतत्कालमित्यर्थः ॥ ४६२-४६३ ॥

---

१. स्वकाला०—जै० । २. ०र्थप्रमाणसामर्थ्यम्—पा० गा० ।
३. ग्रहतारकादिं०—पा० गा० । ४. विवक्षितार्कादि०—जै० ।

रूपत्वाद्याश्रयाः सर्वे ये च तेषां समाश्रयाः ।
ये च तद्विषयाः केचिज्ज्ञायन्ते प्रत्ययास्तथा ॥ ४६४ ॥
उत्पादानन्तरं ध्वंसभाजो नैव भवन्ति ते ।
प्रमेयत्वाभिधेयत्वहेतुतः खारविन्दवत् ॥ ४६५ ॥

---

इदमपरं तदीयमेव प्रमाणम्—"ये रूपत्वादिसामान्याश्रयाः, ये च तदाश्रयाः, तद्विषयाश्च ये प्रत्यक्षानुमानोपमानशाब्दस्मृतिप्रत्यभिज्ञानार्षसिद्धदर्शनानैकविपर्ययानुव्यवसायस्वप्नस्वप्नान्तिकाः प्रज्ञानविशेषाः, ते सर्वे स्वात्मलाभानन्तरप्रध्वंसिनो न भवन्ति, [1]ज्ञेयत्वप्रमेयत्वाभिधेयत्वसदसदन्यतरत्वसदसद्व्यतिरिक्तज्ञेयविषयज्ञानानवच्छेद्यत्वाग्राह्यविषयग्रहणाग्राह्यत्वानभिधेयाभिधायकानभिधेयत्वसमानासमानजातीयद्रव्यसंयोगविभागजनितशब्दकार्यशब्दाभिधेयत्वेभ्यः, प्रागभावादिवत्" ।

तत्र रूपत्वादिसामान्याश्रया रूपादयः, तेषां च रूपादीनामाश्रयास्तदाश्रयाः, के ते ? घटादयः । सिद्धदर्शनम् = योगिविज्ञानम् । शेषं पूर्वमेव[2] व्याख्यातम् । सदसदन्यतरत्वं सत्त्वमसत्त्वं वा, सदसद्भ्यां व्यतिरिक्तस्य ज्ञेयस्याभावादेव तद्विषयज्ञानं नास्ति, तस्य चासत्त्वादेव तेनापरिच्छेद्यत्वं सिद्धम् । एवमग्राह्यविषयस्य ग्रहणस्याभावादेव तदग्राह्यत्वसिद्धिः । तथा न विद्यतेऽभिधेयं यस्यासावनभिधेयः, योऽभिधायकस्तेनानभिधेयत्वमनर्थकत्वादेव सिद्धम् । समानजातीयानि द्रव्याण्यघरदशनादीनि, कृतकत्वादिसामान्यात्, असमानजातीयान्याकाशादीनि तेषां यौ मिथःसंयोगविभागौ, ताभ्यां जनितो यः प्रथमः शब्दस्तस्य परम्परया यः कार्यभूतः श्रुतिपथमवतीर्णस्तेनाभिधेयत्वम् ।

तथा ह्येषामियं प्रक्रिया—प्रथमः किल शब्दः संयोगविभागयोर्निस्तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन प्रादुर्भवन्ति, तेभ्यः प्रत्येकमेकैकशो मन्दतरतमन्यायेन प्रादुर्भवति । तत्र यः कर्णशष्कुलीमध्यमाकाशदेशमाप्नोति [G. 163] स उपलभ्यते नेतर इति । तदेव प्रमाणकदम्बकं दर्शयति—रूपत्वाद्याश्रयाः सर्वे इत्यादि । प्रमेयत्वाभिधेयत्वग्रहणमुपलक्षणम् । तदन्येऽपि हेतवो द्रष्टव्याः । खे = नभसि, अरविन्दम्, आकाशकमलमिति यावत् ॥ ४६४–४६५ ॥

---

१. ०ज्ञानावच्छेद्यत्व०—पा० गा० । २. पूर्वं १०२ पृष्ठे ।

उद्द्योतकरीया अवघोषणा

विवादविषया ये च प्रत्ययाः क्रमभाविनः ।
एकार्थविषयास्तेऽपि सर्वं इत्यवघोषणा ॥ ४६६ ॥
अबाधैकाश्रयत्वे हि समानोक्तिनिवेशनात् ।
वर्त्तमाने यथैकस्मिन् क्षणे नैकविधा धियः ॥ ४६७ ॥

तत्प्रतिविधानम्

साध्येन विकलं तावदाद्ये हेतौ निदर्शनम् ।
हेतुत्वाद् विषयः सर्वो न हि स्वज्ञानकालिकः ॥ ४६८ ॥

---

उद्द्योतकरस्त्वाह—"विप्रतिपन्ना अयुगपत्कालाः[1] प्रत्यया एकविषयाः, अव्युत्थायितत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात्, [2]वर्त्तमानक्षणानेकपुरुषप्रत्ययवत् । तत्र व्युत्थातुम् = अन्यथाभवितुं बाधकप्रमाणवशात् शीलमस्येति व्युत्थायि, न व्युत्थायि अव्युत्थायि, तेषां घटादिप्रत्ययानां सामानाधिकरण्यं तत्प्रत्ययसामानाधिकरण्यम्, अव्युत्थायि[3] च तत् तत्प्रत्ययसामानाधिकरण्यं चेति तथोक्तम् । अबाधितसामानाधिकरण्ये सतीत्यर्थः । इदं च विशेषणं प्रदीपादिप्रत्ययैर्व्यभिचारपरिहारार्थम् । समानशब्दवाच्यत्वं चैत्रज्ञानं चैत्रज्ञानम्" ( ) इत्यादि । तदेतद् दर्शयति—विवादविषया इत्यादि । अवघोषणेति प्रतिज्ञा । एकाश्रयत्वम् = सामानाधिकरण्यम्, अबाधम् = अविद्यमानबाधं च तदेकाश्रयत्वं चेति विग्रहः ॥ ४६६–४६७ ॥

अत्र प्रतिविधत्ते—साध्येनेत्यादि । आद्ये हेताविति । "तज्ज्ञानत्वाभिधानतः" ( तत्त्व० ४६३ ) इत्यत्र । प्रथममपि हि चन्द्रादिज्ञानं [4]तत्कालावच्छिन्नचन्द्रादिविषयं न भवति; हेतुभूतस्यैव विषयत्वात् । समानकालं [G. 164] च कार्यकारणभावानुपपत्तेः । यथोक्तम्—

"असतः प्रागसामर्थ्यात् पश्चादनुपयोगतः ।
प्राग्भावः सर्वहेतूनां नातोऽर्थः स्वधिया सह ॥"

( प्र० वा० २. २४६ ) इति ॥४६८॥

---

१. अयुपत्काला—पा० । २. वर्तमानलक्षण० पा०, गा० ।
३. न व्युत्थायि—ज० । ४. सत्काला—पा०; स्वकाला०—गा० ।

यदा सूर्यादिशब्दाश्च विवक्षामात्रभाविनः ।
दीपादौ विनिवेश्यन्ते तज्ज्ञानैर्व्यभिचारिता ॥ ४६९ ॥
जात्यादेर्निःस्वभावत्वान्नैवेष्टा क्षणभङ्गिता ।
तदभावप्रसिद्धचर्थं निर्दिष्टं साधनं वृथा ॥ ४७० ॥
समानशब्दवाच्यत्वं दीपादिप्रत्ययेष्वपि ।
वर्त्तते व्यभिचार्येष हेतुस्तेन भवत्यतः ॥ ४७१ ॥

---

यदेत्यादिना पृथिवीसम्बन्धित्वेनानुपलभ्यमानत्वे सतीति सविशेषणेऽपि हेतावनैकान्तिकतेति दर्शयति ॥ ४६९ ॥

द्वितीयेऽपि हेतुकदम्बके जात्यादेर्धर्मिणोऽसत्त्वादेव क्षणभङ्गित्वस्यानिष्टत्वात् तत्र तदभावसाधने सिद्धसाध्यतेति दर्शयति—जात्यादेरित्यादि । आदिशब्देन तदाश्रयाणां रूपघटादीनां तद्विषयाणां च प्रत्ययानां ग्रहणम् । एषामपि हि यथोक्त-विशेषणविशिष्टानामसत्त्वमेव, तस्मात्तेषु तस्याः क्षणभङ्गिताया अभावसिद्धचर्थं यदुक्तं साधनं तद् वृथा, तत्र विवादाभावादिति भावः । अत्रापि सूक्ष्मेक्षिका न कृता । यदि सा क्रियते, तदा बहुतरमत्र दोषजालमवतरति । तथा हि—यदेतत् सदसदन्यतरत्वं साधनमुक्तं तत् साध्यधर्मिणि दृष्टान्तधर्मिणि चासिद्धम्, विकल्पविषयत्वादन्यतर-शब्दस्य, विकल्पश्चानेकपदार्थसम्भवे सति भवति, नैकस्मिन् । न च साध्यधर्मिणि द्वयोः सदसत्त्वयोः सम्भवोऽस्ति; तस्य वस्तुरूपत्वेन सत्त्वस्यैव सम्भवात् । नापि दृष्टान्तधर्मिणि द्वयसम्भवः; तस्यावस्तुत्वेनासत्त्वस्यैव सम्भवात् । हेतुश्च व्यर्थविशेषणः । तथा हि—शब्दाभिधेयत्वादित्येवमपि तावदत्र प्रयोगो न युक्तः; अभिधेयत्ववचनादेव शब्दस्य सिद्धेः । यत् पुनः समानजातीयादिपदैर्विशेषणम्, तदतिपेलवमेव । एवमन्यदपि हेतुविशेषणमनर्थकमेवेति ग्रहीतव्यम् । सर्वे चामी हेतवोऽनैकान्तिकाः; साध्यविपर्ययेऽमीषां बाधकप्रमाणानुपदर्शनात् । एतच्च पश्चादभिधास्यत एव ॥ ४७० ॥

यच्चोक्तम्—"विवादविषया ये च" ( तत्त्व० ४६५ ) इत्यादि, तत्राह—समानेत्यादि । दीपज्ञानमिति दीपादिप्रत्ययेषु भिन्नविषयेष्वपि समानशब्दप्रवृत्ति-

सामानाधिकरण्यं चेद् बाधितं तेषु कल्प्यते ।
विवक्षितेऽपि विस्पष्टा बाधैषा किं न वीक्ष्यते ॥ ४७२ ॥
विवादपदमारूढा नैकार्थविषया धियः ।
क्रमेणोत्पद्यमानत्वाद् विद्युद्दीपादिबुद्धिवत् ॥ ४७३ ॥

---

दर्शनात्, अतस्तेन दीपादिप्रत्ययविषयेण [1]समानशब्दवाच्यत्वेनैष 'समानशब्दवाच्यत्वात्' इति हेतुर्व्यभिचारी । [G. 165] अथ वा काक्वा पाठः । अतस्तेषु वर्त्तमानत्वादेव हेतुस्ते = तव न व्यभिचारी भवति, अपि तु भवत्येवेत्यर्थः ॥ ४७१ ॥

सामानाधिकरण्यं चेदिति परमतमाशङ्कते । अभ्युत्थायितत्प्रत्ययसामानाधिकरण्ये सतीति हेतोर्विशेषणं दीपादिप्रत्ययैर्व्यभिचारपरिहारार्थमेव कृतम्; एषां हि दीपादिप्रत्ययानामेकविषयत्वस्य बाधितत्वात् । तथा हि—तत्क्षणमेव दीपो दीर्घशिखो नम्रशिखश्च दीप्रो दीप्रतरश्चोपलभ्यते । तत्कुतो व्यभिचारिता हेतोरिति परस्य भावः ।

तदेतद्विशेषणमप्यसिद्धमिति दर्शयन्नाह—विवक्षितेऽपीत्यादि । तत्र[2] विवक्षितसाध्यधर्मी[3] तत्रापि बाधा किं न वीक्ष्यते । तथा हि—चैत्रादावपि बालकुमारतरुणादिभेदेन व्यावर्त्तमानाकार एव प्रत्ययो जायते, पर्वतादौ शीतोष्णादिभेदेन, ततः [4]स्फुटतरमेवान्यथात्वमेषां प्रदीपादिवत् प्रसिद्धम् । अन्यथा हि य एव शीतसम्बद्धः स एव यदि पश्चादुष्णसम्बद्धः स्यात्, तदाऽवस्थाद्वयेऽपि शीतोष्णयोरुपलम्भः स्यात्; तत्सम्बद्धस्वभावस्य भावे तयोरपि भावस्य प्रसङ्गापत्तेः, निगडबद्धपुरुषाकर्षणे निगडाकर्षणवदित्युक्तप्रायमेतत् । अतः सविशेषणोऽपि हेतुरसिद्धः ॥ ४७२ ॥

अनुमानबाधामप्याह—विवादपदमित्यादि । प्रयोगः—यत् क्रमभावि तत् सदा सन्निहिताविकलकारणं न भवति, यथा—विद्युद्दीपादिबुद्धयः । क्रम-

---

१.—शब्दवाच्यत्वे—पा०, गा० । २. पा० गा० पुस्तकयोर्नास्ति ।
३. ०साध्यधर्मे—पा०, गा० । ४. स्पष्टतर०—पा०, गा० ।

क्रमभावविरोधो हि ज्ञानेष्वेकार्थभाविषु ।
अन्यैरकार्यभेदस्य तदपेक्षाविरोधतः ॥ ४७४ ॥
सन्दिग्धव्यतिरेकित्वं सर्वेष्वेतेषु हेतुषु ।
विपक्षे वर्त्तमानानां बाधकानुपदर्शनात् ॥ ४७५ ॥

## कर्मफलसम्बन्धपरीक्षा

### चोद्योपक्रमः

क्षणिकानित्यतालीढं चेद् वस्तु तत् कथम् ।
कर्मतत्फलसम्बन्धकार्यकारणतादयः ॥ ४७६ ॥

---

भाविन्यश्च विवादास्पदीभूता बुद्धय इति व्यापकविरुद्धोपलब्धिः । न चानैकान्तिकत्वं हेतोः; एकवस्तुविषयत्वे सत्यविकलकारणस्य क्रमभावानुपपत्तेः । नापि कारणान्तरापेक्षा; नित्यस्य तेनानुपकार्यत्वात् । न चानुपकारिण्यपेक्षा युक्ता; अतिप्रसङ्गात् । उपकारे वा नित्यत्वहानिप्रसङ्ग इति शतशश्चर्चितमेतत् ॥४७३-७४॥

[ G. 166 ] सर्वेष्वेव च प्रयोगेषु हेतूनामनैकान्तिकत्वम्; विपक्षे बाधकप्रमाणाभावादिति दर्शयति— सन्दिग्धेत्यादि । सुबोधम् ॥ ४७५ ॥

### इति स्थिरभावपरीक्षा

इदानीं "कर्मतत्फलसम्बन्धव्यवस्थादिसमाश्रयम्" (तत्त्व० १.१) इत्येतत्समर्थनार्थं चोद्योपक्रमपूर्वकमाह— क्षणिकेत्यादि । क्षणिकानित्यताग्रहणं कालान्तरस्थाय्यनित्यताव्यवच्छेदार्थम् । क्षणिकानां सतामनित्यता क्षणिकानित्यता, तया लीढम् = समाक्रान्तं यदि सर्वमेव वस्तुजातं प्रतिज्ञायते भवद्भिः, तदा येऽमी कर्मफलसम्बन्धादयो लोकशास्त्रयोः प्रतीतास्ते कथं सिद्ध्येयुः ! आदिग्रहणाद्धेतुफलाधिगन्तृ प्रमाणम्, अनुभवे प्रत्यभिज्ञानम्, अन्यस्मिन्नर्थे दृष्टेऽर्थान्तरेऽभिलाषः, बन्धमोक्षौ, स्मरणम्, संशयपूर्वको निर्णयः, स्वयं निहितप्रत्यनुमार्गणम्, दृष्टार्थकुतूहलविरमणम्— इत्येवंप्रकाराः कुमतिपरिकल्पिताश्चोद्यराशयो गृह्यन्ते । न हि लोकशास्त्रप्रतीतार्थविरोधेन प्रतिज्ञायमानोऽर्थः सिद्धिमासादयतीत्य-

यः क्षणः कुशलादीनां कर्तृत्वेनावकल्प्यते ।
फलप्रसवकाले तु नैवासावनुवर्त्तते ।। ४७७ ।।
यः फलस्य प्रसूतौ च भोक्ता संवर्ण्यते क्षणः ।
तेन नैव कृतं कर्म तस्य पूर्वमसम्भवात् ।। ४७८ ।।
कर्मतत्फलयोरेवम् एककर्त्रपरिग्रहात् ।
कृतनाशाकृतप्राप्तिरासक्ताऽतिविरोधिनी ।। ४७९ ।।

कुमारिलमतेन कर्मफलसम्बन्धानुपपत्तिः

नैरात्म्यवादपक्षे तु पूर्वमेवावबुध्यते ।
मद्विनाशात् फलं न स्यान्मत्तोऽन्यस्यापि[1] वा भवेत् ।। ४८० ।।
(श्लो० वा०, आ० ३२)

---

भ्युपेतप्रतीतबाधादोषः प्रतिज्ञाया इति भावः । तथा हि—येनैव कृतं कर्म शुभादिकं तेनैव तत्फलमुपभुज्यते—इति लोके प्रतीतम् । न हि देवदत्तेन कृते कर्मणि शुभादिके यज्ञदत्तस्तत्फलमिष्टनिष्टं चोपभुङ्क्त इति प्रसिद्धम् । नापि शास्त्रे, यथोक्तम् –

"अनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यति !" ( ) इति ।

तच्चैतत् क्षणिकपक्ष विरुध्यते; कर्मफलपरिग्राहकस्यैकस्य कर्तुरभावेन कृतनाशाकृताभ्यागमदोषप्रसङ्गात् ।। ४७६ ।।

कथम् ? इत्याह—य इत्यादि । [G. 167] नैवासावनुवर्त्तत इति । तस्योत्पादानन्तरमेव निरुद्धत्वात् । एककर्त्रपरिग्रहादिति । एकेन कर्त्रा तयोः कर्मफलयोरपरिगृहीतत्वादित्यर्थः । कर्तुः फलेनानभिसम्बन्धात् कृतनाशः, अकर्तुश्च फलेन योगादकृताभ्यागमः । अतिविरोधिनीति । लोकशास्त्रयोरेवमदर्शनादिति भावः ।। ४७७-४७९ ।।

एवं तावत् प्रवृत्तिमभ्युपगम्य कृतनाशाकृताभ्यागमप्रसङ्ग उक्तः । इदानीं प्रवृत्तिरेव न सम्भवतीति कुमारिलमतोपन्यासेन दर्शयति—नैरात्म्येत्यादि ।

---

१. ०स्याथ—तत्रस्थः पाठः ।

इति नैव प्रवर्त्तेत[1] प्रेक्षावान् फललिप्सया[1]।
(श्लो० वा०, आ० ३३)

शुभाशुभक्रियारम्भे दूरतस्तु फलं स्थितम् ॥ ४८१ ॥
नाऽनागतो न वातीतो भावः कार्यक्रियाक्षमः।
वर्त्तमानोऽपि तावन्तं न[2] कालमवतिष्ठते[2] ॥ ४८२ ॥
न ह्यलब्धात्मकं वस्तु पराङ्गत्वाय कल्प्यते[3]।
न विनष्टं न च स्थानं तस्य कार्यकृतिक्षमम् ॥ ४८३ ॥
पूर्वक्षणविनाशे च कल्प्यमाने त्विरन्वये।
पाश्चात्त्यास्यानिमित्तत्वाद्[4] उत्पत्तिर्नोपपद्यते ॥ ४८४ ॥

---

क्षणिकत्वाभ्युपगमे हि सर्वभावानां नैरात्म्यमेवाभ्युपगतं भवेत्, हेतुपरतन्त्रतया सर्वस्यास्वतन्त्रत्वात्। तस्मिन् सति प्रेक्षावान् क्रियाप्रवृत्तेः "प्रागेवावबुध्यते = अवधारयति। किं तत्? इत्याह—मद्विनाशादित्यादि। मम विनाशादूर्ध्वं फलं मम न स्यात्; फलप्रसवकाले ममाभावात्। अथापि फलं भवेत्, तदा मत्तोऽन्यस्य क्षणान्तरस्य स्यादिति ज्ञात्वा प्रवृत्तिरेव प्रेक्षावतो न सम्भवति, किं पुनः प्रवृत्तिपूर्वककर्मजनितं फलं भविष्यति; तस्या दूरत एवासम्भाव्यमानत्वेनावस्थितत्वात्। ॥ ४८०-४८१ ॥

एवं कर्मफलसम्बन्धो नोपपद्यत इति प्रतिपादितम्। इदानीं कार्यकारणभावानुपपत्तिं कुमारिलमतेनैव प्रतिपादयन्नाह—नाऽनागत इत्यादि। तावन्तमिति। उत्पद्य यावता कालेन कार्यं निवर्त्तयति तावन्तं कालं नावतिष्ठते; क्षणिकत्वादिति भावः ॥ ४८२ ॥

[G. 168] "नाऽनागतः" (तत्त्व० ४८२) इत्यादेर्यथाक्रमं समर्थमाह—न ह्यलब्धात्मकमित्यादि। अनागतं हि नामोच्यते यदलब्धात्मतत्त्वम्, यच्चालब्धात्मतत्त्वं तदसत्, यच्चासत्तदशेषसामर्थ्यशून्यम्, यच्चाशेषसामर्थ्यरहितं तत् कथं

---

1–1. 'प्रवृत्तिः स्यात् न च वेदप्रमाणता'—इति तत्रस्थः पाठः।
2–2. कालं नैवाव०—पा०, गा०। 3. कल्पते—पा०, गा०।
4. पश्चात्तस्या०—पा०, गा०। 5. पूर्वमे०—पा०, गा०।

नाशोत्पादसमत्वेऽपि [1]नैरपेक्ष्यात् परस्परम् ।
न कार्यकारणत्वे स्तस्तद्व्यापाराननुग्रहात् ॥ ४८५ ॥
जायमानश्च गन्धादिर्घटरूपे विनश्यति ।
तत्कार्यं नेष्यते यद्वत् तथा रूपान्तराण्यपि ॥ ४८६ ॥

---

पराङ्गत्वाय कल्प्यते, परं प्रति हेतुभावं प्रतिपद्यत इत्यर्थः । समर्थस्यैव हेतुभावसम्प्रतिपत्तेः । एवं विनष्टमपि सर्वसामर्थ्यशून्यत्वान्न पराङ्गत्वाय कल्प्यत इति सम्बन्धः। न चापि वर्त्तमानस्य स्थानमस्ति, यत्कार्यकृतौ = कार्यकरणे क्षमं भवेत्। किञ्च—यदि पूर्वकक्षणो निरन्वयं विनश्यतीति कल्प्यते, तदा पाश्चत्त्यस्य क्षणस्य निमित्ताभावादुत्पत्तिर्न प्राप्नोति ॥ ४८३-४८४ ॥

स्यादेतद्—यथा तुलान्तयोर्नामोन्नामौ समं भवतः, तद्वद्धेतुफलयोर्नाशोत्पादाविष्टौ, अतो वर्त्तमानादविनष्टादेव कार्योत्पत्तेरिष्टत्वान्नानिमित्ता तस्योत्पत्तिर्भविष्यति ? इत्याह—नाशोत्पादसमत्वेऽपीत्यादि । नाशोत्पादयोः समत्वेऽपि कल्प्यमाने न नाशोत्पादयोस्तद्वतोर्वा कार्यकारणत्वे स्तः = सम्भवतः; तयोः परस्परानपेक्षत्वात् । कमथनपेक्षत्वम् ? इत्याह—तद्व्यापाराननुग्रहादिति । तस्य = नाशस्य तद्वतो वा व्यापारेण कार्यस्याननुग्रहात् = अननुगृहीतत्वादित्यर्थः। नाशस्य हि नीरूपत्वाद् व्यापाराभावः । हेत्वभिमतस्यापि वस्तुनः कार्यसत्ताकाले सन्निधानाभावाद् व्यापाराभावः ॥ ४८५ ॥

स्यादेतद्—अन्तरेणापि व्यापारमानन्तर्यमात्रेण हेतुफलभावो भविष्यति ? इत्याह—जायमानश्चेत्यादि । यदि यदनन्तरं यज्जायते तत्तस्य कार्यमिति स्यात्, तदा घटादिसन्निवेशिनो [ G. 169 ] रूपक्षणस्यानन्तरं समानजातीयरूपक्षणवत् तत्कलापान्तर्गत एव गन्धादिर्जायत इति सोऽपि तत्कार्यं स्यात् । न चासौ सत्यप्यानन्तर्ये तत्कार्यमिष्यते । न हि भौतिकानामन्योऽन्यं हेतुफलभावोऽस्ति, यथा—भूतानाम्; भिन्नसन्तानत्वादिति परो मन्यते । तथा रूपान्तराण्यपीति, समानजातीयरूपक्षणान्तराणि नैव रूपस्यानन्तर्यमात्रेण तत्कार्यतया गृहीतव्यानि, मा भूदतिप्रसङ्ग इति भावः ॥ ४८६ ॥

---

१. नैवापेक्षा—पा०, गा० ।

तस्मात् प्राक् कार्यनिष्पत्तेर्व्यापारो यस्य दृश्यते ।
तदेव कारणं तस्य न त्वानन्तर्यमात्रकम् ॥ ४८७ ॥

स्वमतसंक्षेपः

संक्षेपोऽयं विनष्टाच्चेत् कारणात् कार्यसम्भवः ।
प्रध्वस्तस्यानुपाख्यत्वान्निष्कारणमिदं भवेत् ॥ ४८८ ॥
अविनष्टाच्च तज्जातावनेकक्षणसम्भवात् ।
क्षणिकत्वं न भावानां व्याहन्येत तदा कथम् ॥ ४८९ ॥

कार्यकारणभावग्राहकप्रमाणानुपपत्तिः

क्षणस्थायी घटादिश्चेन्नोपलभ्येत चक्षुषा ।
न हि नष्टाः प्रतीयन्ते चिरातीतपदार्थवत् ॥ ४९० ॥
कार्यकारणभावोऽपि प्रत्यक्षानुपलम्भतः ।
नेयर्ति[१] सिद्धिं[१] भावानां स्वभावानुपलम्भनात् ॥ ४९१ ॥

---

तदेवमानन्तर्यमात्रं कारणभावव्यवस्थानिबन्धनं न युक्तमिति प्रतिपाद्य स्वपक्षमुपसंहारेण दर्शयति—तस्मादित्यादि । न त्वानन्तर्यमात्रकमिति । कार्यकारणव्यवस्थानिबन्धनमिति शेषः ॥ ४८७ ॥

यथोक्तमेवार्थं संक्षिप्य दर्शयन्नाह—संक्षेपोऽयमित्यादि । अत्र द्वयी कल्पना—विनष्टाद्वा कारणात् कार्यं भवेद्, अविनष्टाद्वा; नष्टानष्टविनिर्मुक्तस्य वस्तुनोऽभावात् । तत्र न तावदाद्यः पक्षः; नष्टस्यासत्त्वेन तत उत्पादाभ्युपगमे कार्यस्य निर्हेतुकत्वप्रसङ्गात् । ततश्च नित्यं सत्त्वादिर्युज्यते । नापि द्वितीयः; अनेकक्षणावस्थायित्वेन भावानां क्षणिकत्वहानिप्रसङ्गात् । न कथं व्याहन्येतेति । व्याहन्यत एवेत्यर्थः । तथा हि—भावः प्रथमं तावदुत्पद्यते, ततो व्याप्रियते, ततः कार्यमुत्पाद्य पश्चाद्विनश्यति—इत्येवमेकस्यैव वस्तुनोऽनेकस्मिन् क्षणे सन्निधानमिति क्षणिकत्वव्याहतिः स्यात् ॥ ४८८-४८९ ॥

एवं कार्यकारणभावानुपपत्तिं प्रतिपाद्य तदधिगन्तृप्रमाणानुपपत्तिं दर्शयन्नाह—क्षणस्थायीत्यादि [ G.170 ] प्रत्यक्षानुलम्भसाधनो हि कार्यकारणभावः, क्षणि-

---

१-१. ते पूर्तिसिद्धिं—पां०; नैवेति सिद्धिं—गा० ।

को वा व्यवस्थितः कर्त्ता सन्धत्ते क्रमवद्गतिम् ।
अस्य दृष्टाविदं दृष्टं नास्यादृष्टौ तु लक्ष्यते ॥ ४९२ ॥

प्रत्यभिज्ञानानुपपत्तिः

क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटा ।
न ह्यन्यतरदृष्टोऽर्थः प्रत्यभिज्ञायते परैः ॥ ४९३ ॥
सादृश्यात् प्रत्यभिज्ञानं भिन्ने केशादिके भवेत् ।
ज्ञातुरेकस्य सद्भावाद् विभेदे त्वनिबन्धनम् ॥ ४९४ ॥

---

कत्वे च भावानां स्वज्ञानकालेऽनवस्थानादप्रत्यक्षतैव; समानकालं कार्यकारणभावानुपपत्तेः। ततश्च प्रत्यक्षानुपलम्भयोरभाव एव; अनन्यसंसृष्टवस्तूलम्भात्मरूपत्वेनानुपलम्भस्यापि प्रत्यक्षविशेषात्मत्वात्। अतः पदार्थोपलम्भाभावे तस्याप्ययोग एवेति कथं प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः स्यात्। ॥ ४९०-४९१ ॥

भवतु नामोपलम्भो वस्तुनः, तथापि पूर्वोत्तरयोः क्षणयोः प्रतिसन्धातुरेकस्य कस्यचिदभावात् सम्बन्धो न सिद्धयतीति दर्शयन्नाह—को वेत्यादि। गतिः = उपलब्धिः। क्रमवती चासौ गतिश्चेति क्रमवद्गतिः, तां कः प्रतिसन्धत्ते = घटयति, नैव कश्चित्। यदि हि कश्चिद्—'अस्याग्नेरुपलम्भादिदं धूमाद्युपलब्धमस्यानुपलब्धौ नोपलभ्यते'—इत्येवं क्रमवतीं गतिमेककर्तृत्वेन प्रतिसन्दधीत, तदा स्यात् कार्यकारणभावसिद्धिः, स च नास्ति प्रतिसन्धाता त्वन्मतेनेति न कार्यकारणभावः सिद्धयेदित्यर्थः ॥ ४९२ ॥

इदानीं प्रत्यभिज्ञानानुपपत्तिं दर्शयन्नाह—क्षणभङ्गिष्वित्यादि। य एव मया पूर्वं दृष्टोऽर्थः स एवायमेतर्हि दृश्यते—इत्येवं पूर्वोत्तरयोर्दर्शनयोरेकविषयतया च यद्वदनं तत् प्रत्यभिज्ञानम्। तच्च सर्वभावानां क्षणभङ्गित्वे सति नोपपद्यते; ज्ञातुर्ज्ञायमानस्य कस्यचिदेकस्याभावात्। न हि देवदत्तेन दृष्टमर्थं विष्णुमित्रः प्रत्यभिजानीते। अन्यतरग्रहणमुपलक्षणम्। नाप्यन्योऽर्थः प्रत्यभिज्ञायत इत्यपि द्रष्टव्यम् ॥ ४९३ ॥

ननु लूनपुनर्जातकेशनखादिष्विव भेदेऽपि सादृश्यात् प्रत्यभिज्ञानं भविष्यति? इत्येतदाशङ्कयाह—सादृश्यादित्यादि। [G. 171] यदि ह्येको

प्रतिसन्धानकारी च यद्येकोऽर्थो न विद्यते ।
रूपे दृष्टेऽभिलाषादिस्तत् कथं स्याद् रसादिषु ॥ ४९५ ॥

बन्धमोक्षानुपपत्तिः

रागादिनिगडैर्बद्धः क्षणोऽन्यो भववारके ।
अबद्धो मुच्यते चान्य इतीदं नावबुध्यते ॥ ४९६ ॥
मोक्षो नैव हि बद्धस्य कदाचिदपि सम्भवी ।
एकान्तनाशतस्तेन व्यर्थो मुक्त्यर्थिनां क्षणः ॥ ४९७ ॥
मोक्षमासादयन् दृष्टो बद्धः स निगडादिभिः ।
अबद्धो मुक्तिमेतीति दृष्टव्याहतमीदृशम् ॥ ४९८ ॥

---

ज्ञाता भवेत्, तदा स्यात् प्रतिसन्धातृवशाज्ज्ञेयस्य भेदेऽपि सादृश्यकृतं प्रत्यभिज्ञानम् । द्विभेदे तु—द्वयोर्ज्ञातृज्ञेययोर्भेदः = द्विभेदः, तस्मिन् सत्यनिबन्धनमेव प्रत्यभिज्ञानम् । अपि च—यदि न कश्चिदेकः प्रतिसन्धाता पुरुषो भवेत्, तदा यदेतन्मातुलुङ्गफलादिरूपे दृष्टे तद्रूपाविनाभाविषु रसादिषु स्मरणपूर्वमभिलषणम्, परिभोगाय च प्रवृत्तिः, तत् कथं भवेत् ! न ह्यन्येन दृष्टेऽन्यस्याभिलाषादिर्भवेत् ॥ ४९४-४९५ ॥

बन्धमोक्षावपि न प्राप्नुत इति दर्शयन्नाह—रागादीत्यादि । अन्यो हि क्षणो रागादिभिर्बद्धः, अन्यस्तु मुच्यत इत्येतन्नावबुध्यते = न सम्भाव्यत इति यावत् । भववारक इति । भवः = संसारः, स एव वारकम् = बन्धनागारम् ॥ ४९६ ॥

प्रयत्नश्च मोक्षार्थो व्यर्थः; मोक्षाभावादिति दर्शयन्नाह—मोक्षो नैव हीत्यादि ॥ ४९७ ॥

नन्वबद्धस्यैव मोक्षो भविष्यति, तत् कोऽत्र विरोधः ? इत्याह—मोक्षमित्यादि । य एव हि बद्धः स एव मुच्यते—इति लोके प्रतीतम्, दृष्टं च । अबद्धस्य तु मोक्षप्रतिज्ञानं लोकप्रतीत्या, प्रत्यक्षेण च बाध्यत इति प्रत्यक्षप्रतीतिविरोधः प्रतिज्ञाया इति भावः ॥ ४९८ ॥

एकाधिकरणावेतौ बन्धमोक्षौ तथा स्थितेः ।
लौकिकाविव तौ तेन सर्वं चारुतरं स्थितम् ॥ ४९९ ॥

स्मृत्याद्यनुपपत्तिः

एतेनैव प्रकारेण स्मृत्यादीनामसम्भवः ।
एकाधिकरणाभावात् क्षणक्षयिषु वस्तुषु ॥ ५०० ॥

एतच्चोद्यप्रतिविधानारम्भः

अत्राभिधीयते सर्वकार्यकारणतास्थितौ ।
सत्यामव्याहता एते सिध्यन्त्येवं निरात्मसु ॥ ५०१ ॥

कार्यकारणभावसमर्थनम्

यथा हि नियता शक्तिर्बीजादेरंकुरादिषु ।
अन्वय्यात्मवियोगेऽपि तथैवाध्यात्मिके स्थितिः ॥ ५०२ ॥

---

अनुमानबाधामप्याह—एकाधिकारणावित्यादि । प्रयोगः—यौ बन्धमोक्षौ तावेकाधिकरणौ, यथा—लौकिकौ बन्धमोक्षौ । बन्धमोक्षौ च विवादास्पदीभूतावेतावनुशयतद्विसंयोगलक्षणौ बन्धमोक्षाविति स्वभावहेतुः । तथा स्थितिरिति । बन्धमोक्षात्मना स्थितेः, बन्धमोक्षरूपत्वादित्यर्थः । [G. 172] ताविति बन्धमोक्षौ । अतश्चैकस्याधिकरणस्यात्मनः सिद्धेः सर्वकर्मफलसम्बन्धादि चारुतरं स्थितम् = शोभनतरमवस्थितमित्यर्थः । यथोक्तदोषाभावात् ॥ ४९९ ॥

एतेनैवेति । एकस्य कर्तुरभावात् । पूर्वोक्तानां स्मृतिनिश्चयस्वयंनिहितप्रत्यनुमार्गणादीनामसम्भवो बोद्धव्यः; तत्रापि भिन्नाधिकरणत्वे दृष्टादिविरोधप्रसङ्गात् । न हि चैत्रेऽनुभवितरि सन्दिहाने निधातरि वाञ्छावति च सति मैत्रस्य स्मृतिनिश्चयानुमार्गणकुतूहलविरत्यादयः सम्भवन्ति ॥ ५०० ॥

अत्राभिधीयत इत्यादिना प्रतिविधत्ते । सत्यपि हि भावानां नैरात्म्ये कार्यकारणताप्रभावितेयं कर्मफलसम्बन्धादिव्यवस्था । सति च कार्यकारणभावे सर्वमविरुद्धमेवेति न किञ्चित् क्षीयते ॥ ५०१ ॥

स्यादेतत्—स एव कार्यकारणभावप्रतिनियमो नान्तरेणात्मानमुपपद्यते ? इत्याह – यथा हीत्यादि । यथैव हि बीजादेरङ्कुरादिषु नियता शक्तिरन्तरेणाप्या-

पारम्पर्येण साक्षाद्वा क्वचित् किञ्चिद्धि शक्तिमत् ।
ततः कर्मफलादीनां सम्बन्ध उपपद्यते ॥ ५०३ ॥
कर्तृत्वादिव्यवस्था तु सन्तानैक्यविवक्षया ।
कल्पनारोपितैवेष्टा नाङ्गं सा तत्त्वसंस्थितेः ॥ ५०४ ॥

---

त्मानमधिष्ठातारम्, तथाध्यात्मिकेऽपि वस्तुनि भविष्यति। न हि बीजादिः शरीरवदुपभोगायतनत्वेनात्मनाऽधिष्ठितः। अन्यथा हि 'नेदं निरात्मकं जीवच्छरीरम्, अप्राणादिमत्त्वप्रसङ्गात्' इत्येतन्नोपपद्यते। घटादौ किलात्मनिवृत्तौ प्राणादि निवर्त्तमानं दृष्टमिति व्यतिरेकिता हेतोः सिद्ध्येत्। यदि तु घटादेरपि सात्मकत्वं भवेत्, तत् कथमयं हेतुर्व्यतिरेकी भवेत्! अन्वय्यात्मवियोगेऽपीति। अन्वयिनः कस्यचित् स्ववियोगेऽपीत्यर्थः ॥ ५०२ ॥

का पुनरसौ स्थितिः? इत्याह—पारम्पर्येणेत्यादि। [G. 173] यथैव हि बाह्ये नियता हेतुफलव्यवस्था, तथैवाध्यात्मिके संस्कारराशावियम्; कारणशक्तिनियमात्। कुतश्चिदेव हि शुभाशुभकर्मणः क्षणपरम्परया नियतं फलमिष्टमनिष्टं वाऽऽविर्भवति—रूपाद्यनुभवात् स्मरणम्, विमर्शान्निर्णयः, स्थापनादन्वेषणम्, अभिवाञ्छतोऽर्थदर्शनम्, ततः कुतूहलविरतिरिति सर्वमविरुद्धम्। न हि क्वचिदेकपदार्थान्वयित्वेन स्मरणादयो बौद्धस्य प्रसिद्धाः, किं तर्हि? इदं प्रत्ययमात्रम्। यथोक्तम्—"अस्ति कर्मास्ति फलम्, कारकस्तु नोपलभ्यते य इमान् स्कन्धान्निक्षिपति, अन्यांश्च स्कन्धानुपादत्ते, अन्यत्र धर्मसङ्केतात्। तत्रायं धर्मसङ्केतः, यदुतास्मिन् सतीदं भवति, अस्योत्पादादिदमुत्पद्यते" ( , ) इति। कर्मफलादीनामित्यादिशब्देन स्मृत्यादिपरिग्रहः। सम्बन्धस्तु जन्यजनकभावः ॥ ५०३ ॥

यद्येवम्, कथं तर्हि लोके शास्त्रे च तत्तत्पुद्गलमधिकृत्योच्यते—"अनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यति"? इत्याह—कर्तृत्वादीत्यादि। प्रचुरतराज्ञानतिमिरसङ्घातोपहतज्ञानालोको लोक आत्मनि तत्त्वान्यत्वासत्त्वादिविचारमवधूय विशिष्टहेतुफलभावनियतरूपाणां संस्काराणां प्रबन्धमेकत्वेनाध्यवसाय 'स एवाहं करोमि' इति व्यवहरति, मुक्तये च प्रवर्त्तते। तदभिमानानुरोधेन च

अन्वयासम्भवे सैव कार्यकारणता भवेत् ।
विशिष्टा युज्यते यद्वत् सन्तानान्तरभाविभिः ॥ ५०५ ॥
ननु बीजांकुरादीनां कार्यकारणतेक्ष्यते ।
नियता तत्र सूक्ष्मोऽपि नांशोऽस्त्यनुगमात्मकः ॥ ५०६ ॥

भावमात्रस्य क्षणिकत्वेऽपि
कार्यकारणभावसमर्थनम्

क्षित्यादिनामवैशिष्ट्ये बीजांकुरलतादिषु ।
न भेदो युक्त ऐकात्म्याद् भेदसिद्धा[1] निरन्वया ॥ ५०७ ॥
तस्मात् कर्मफलादीनां भावाभावप्रसिद्धये ।
कार्यकारणतासिद्धौ यत्नः कार्यः परैरलम् ॥ ५०८ ॥

---

भगवन्तस्तथागताः समुच्छेददृष्टिप्रपाततो विनेयजनरिरक्षयिषया संन्तानैकतां दर्शयन्तः कर्तृत्वादि व्यवस्थापयन्ति । तथाविधाया एव व्यवस्थातो वस्तुसिद्धिरिति चेदाह—नाङ्ग सेत्यादि । तत्त्वपरीक्षापराङ्मुखमतीनां संवृतिपतितानां बालजनानामभिनिवेशवशेन शक्यं तत्त्वं व्यवस्थापयितुम्; तदभिनिवेशस्य नैरात्म्यक्षणभङ्गविहितप्रमाणबाधितत्वात् ॥ ५०४ ॥

बीजादिषु किलान्वय्यात्मवियोगोऽसिद्ध इति दृष्टान्तासिद्धिं मन्यमानस्य परस्य चोद्यमाशङ्कयन्नाह—अन्वयासम्भवे सैवेत्यादि । अन्वयः = अनुगमः, कस्यचित् स्वभावस्येति शेषः ॥ ५०५-५०६ ॥

[G. 174] स्यादेतत्—बीजादिष्वप्यन्वयोऽस्त्येव । यथोक्तमुद्द्योतकरेण—"तत्रापि ये बीजावयवास्ते पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते, व्यूहान्तरापत्तौ च पृथिवीधातुरब्धातुना संगृहीतमान्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्त्तयति । स रसः पूर्वावयवसहितोऽङ्कुरादिभावमापद्यते" (         ) इति । तत्कथं तत्र सूक्ष्मोऽपि नांशोऽस्तीत्युच्यते ? इत्याह—क्षित्यादीनामित्यादि । एतदुक्तं भवति—यदि पृथिव्यादय उत्तरस्मिन् सन्निवेशे वर्त्तमाना अपरि-

---

१. तदा सिद्धा—पा०, गा० ।

अत्रोच्यते—द्वितीये हि क्षणे कार्यं प्रजायते ।
प्रथमे कारणं जातमविनष्टं तदा च तत् ॥ ५०९ ॥
क्षणिकत्वात्तु तत्कार्यक्षणकाले न वर्त्तते ।
वृत्तौ वा विफलं कार्यं निर्वृत्तं तद्यतस्तदा ॥ ५१० ॥
न च जातं पुरस्तेन शक्यं जनयितुं पुनः ।
अभूतभावरूपत्वाज्जन्मनो नान्यथा स्थितिः ॥ ५११ ॥

---

त्यक्तप्राक्तनस्वभावा एव वर्तन्ते, तदा न तेषां पूर्वव्यूहत्यागो व्यूहान्तरापत्तिश्चोपपद्यते, तादात्म्यात्; पूर्ववत् । ततः बीजाङ्कुरादीनां परस्परं भेदो न प्राप्नोति; एकस्वभावत्वात् । अथ भेदोऽङ्गीक्रियतेऽङ्कुरादीनाम्; तदा नियमेन प्राक्तनस्वभावपरित्यागे सति क्षित्यादीनां पूर्वव्यूहत्यागो व्यूहान्तरापत्तिश्चाङ्गीकर्त्तव्या, अन्यथा भेद एव न स्यादित्युक्तम् । ततश्चापरापरस्वभावानामुत्पत्तेः कुतोऽन्वेतृत्वम् । यतश्चैवं कार्यकारणभावे साधिते सर्वं कर्मफलसम्बन्धादि घटते, दूषिते च विघटते, तस्मात् कर्मफलादीनां भावसिद्धये कार्यकारणतासिद्धौ यत्नो विधातव्यः । परैः = उत्तमदर्शनानुसारितयोत्कृष्टैर्बौद्धैरिति यावत् । तेषां चाभावसिद्धये तस्या एव कार्यकारणताया अभावसिद्धौ यत्नः कार्यः परैः = तीर्थिकैरित्यर्थः । 'कार्यकारणतासिद्धौ' इत्येतद् द्विरावर्त्तनीयम् । एकत्राऽकारप्रश्लेषः कार्यः ॥ ५०७-५०८ ॥

अत्र यौ नष्टानष्टविकल्पौ परेण कृतौ, तदुत्सारणेन कार्यकारणभावं तावत् सर्वव्यवस्थामूलं साधयन्नाह—अत्रोच्यत इत्यादि । अविनष्टादेव कारणात् कार्यं भवतीति नः पक्षः, न चैवं यौगपद्यप्रसङ्गः । [ G. 175 ] तथा हि—[1]प्रथमक्षणभाविकारणमासादितात्मलाभमविनष्टमेव प्रतीत्य द्वितीये क्षणे कार्यं प्रजायते । तच्च तथा जायमानमविनष्टादेव जायते; प्रथमे क्षणे तस्याविनष्टत्वात् । कार्यसत्ताकालं च न कारणमनुवर्त्तते; क्षणिकतयाऽनवस्थानात् । सत्यामपि चानुवृत्तौ न तदानीं तस्य कारणत्वम्; निष्पन्ने कार्ये तस्याकिञ्चित्करत्वात् ॥ ५०९-५१० ॥

---

१. ०कारणतासादित०—पा०, गा० ।

तस्मादनष्टात्तद्धेतोः प्रथमक्षणभाविनः ।
कार्यमुत्पद्यते शक्ताद् द्वितीयक्षण एव तु ॥ ५१२ ॥
विनष्टात्तु भवेत् कार्यं तृतीयादिक्षणे यदि ।
विपाकहेतोः प्रध्वस्ताद् यथा कार्यं प्रचक्षते[1] ॥ ५१३ ॥
यौगपद्यप्रसङ्गोऽपि प्रथमे यदि तद्भवेत् ।
सहभूहेतुवत्तच्च न युक्त्या युज्यते पुनः ॥ ५१४ ॥
असतः प्रागसामर्थ्यात् सामर्थ्ये कार्यसम्भवात् ।
कार्यकारणयो स्पष्टं यौगपद्यं विरुध्यते ॥ ५१५ ॥

---

तदेवाकिञ्चित्करत्वं दर्शयति—न चेत्यादि । नान्यथा स्थितिरिति । अन्यथा स्थितिः = नियमो न भवेदिति यावत् । अनवस्था भवेदिति यावत् । यदि हि जातमपि जन्येत, तदा पुनरप्यविशेषात् तस्य जननप्रसङ्गः । ततश्चानवस्था जन्मनां स्यात् । कारणानां च व्यापारानुपरतिः, कारणस्यापि जन्यत्वप्रसङ्गः; विशेषाभावात् । ततश्च 'इदं कारणमिदं कार्यम्' इति व्यवस्था न स्यात् ॥ ५११ ॥

तस्मादित्यादिनोपसंहृत्य स्थितपक्षस्यादुष्टतां दर्शयति । विनष्टविकल्पस्त्वनभ्युपगमादेवायुक्तः । तथा हि—यदि तृतीयादिषु क्षणेषु कार्यं भवतीत्यभ्युपेतं भवेत्, यथा वैभाषिकैरङ्गीकृतम्—'एकोऽतीतः प्रयच्छति' इति; तदा विनष्टात् कारणात् कार्योत्पादोऽङ्गीकृतः स्यात् । न चायं पक्षोऽस्माकम्; अयुक्त्युपेतत्वात् । यौगपद्यप्रसङ्गोऽपि कदाचिद्भवेत्, यदि प्रथम एव क्षणे कार्यमिष्यते । यथा तैरेव वैभाषिकैः सहभूर्हेतुरिष्यते । तच्चैतदयुक्तम् ॥ ५१२-५१४ ॥

कस्मात् ? इत्याह – असत इत्यादि । [ G. 176 ] सहभूतं हि कार्यं जनयन् – हेतुरनुत्पन्नो वा जनयेत्, उत्पन्नो वा । न तावदनुत्पन्नः; तस्य कार्योत्पत्तेः प्रागसत्त्वात्; असतश्चाशेषसामर्थ्यशून्यत्वात् । यदा तर्ह्युत्पन्नः, तदा समर्थत्वाज्जनयिष्यतीति चेत् ? आह – सामर्थ्ये कार्यसम्भवादिति । यदा हि तस्योत्पन्ना-

---

1. च वक्ष्यते—पा०, गा० ।

न हि तत्कार्यमात्मीयं, सन्दंशेनेव कारणम् ।
गृहीत्वा जनयत्येतद् यौगपद्यं यतो भवेत् ॥ ५१६ ॥
नापि गाढं समालिङ्ग्य प्रकृतिं जायते फलम् ।
कामीव दयिता येन सकृद्भावस्तयोर्भवेत् ॥ ५१७ ॥
नियमादात्महेतूत्थात् प्रथमक्षणभाविनः ।
यद्यतोऽनन्तरं जातं द्वितीयक्षणसन्निधिः ॥ ५१८ ॥
तत्तज्जनयतीत्याहुरव्यापारेऽपि वस्तुनि ।
विवक्षामात्रसम्भूतसंकेतानुविधायिनः ॥ ५१९ ॥
जन्मातिरिक्तकालेन व्यापारेणात्र किं फलम् ।

---

वस्थायां सामर्थ्यम्, तदा कार्यमपि तत्स्वभाववदेवोत्पन्नमिति क्वास्य सामर्थ्यमुपयोगमश्नुवीत । तस्मादनुमानप्रमाणविरुद्धः कार्यकारणयौगपद्याभ्युपगमः ॥ ५१५ ॥

ननु कार्यकारणभावो हि कर्मकर्तृभावः, स च भिन्नकालो विरुद्ध्यते, न हि घटकुलालयोरयौगपद्ये सति कर्मकर्तृभावो दृष्ट इत्याह – न हीत्यादि । यदि हि सन्दंशग्रहणन्यायेन कारणं कार्योत्पत्तौ व्याप्रियेत, कार्यं वा वनितोपगूहनवत् स्वकारणाऽऽश्लेषात् स्वजन्मनि व्यापारं प्रतिपद्येत, तदा सहभाविता नियमेन स्यात्; यावता निर्व्यापारमेवेदं विश्वम्, न हि परमार्थतः कश्चित् कर्त्ता कर्म वास्ति, अन्यत्र धर्मसङ्केतादिति समुदायार्थः । प्रकृतिमिति कारणम् ॥ ५१६-५१७ ॥

यद्येवम्, यदि निर्व्यापारमेव कार्यं कारणं वा, तत्कथं भवन्ति वक्तारः – धूममग्निर्जनयति, धूमोऽग्निमाश्रित्योत्पद्यते ? इत्याह – नियमादित्यादि । स्वहेतुप्रत्ययसमुत्थापितात् कारणस्य शक्तिप्रतिनियमाद्धेतोर्यत् कार्यं यतः [1]प्रथमक्षणभाविनः कारणाज्जातं किञ्चिद्विशिष्टम्, द्वितीये क्षणे सन्निधिः = सद्भावो यस्येति विग्रहः । तत्कारणं तत्कार्यं जनयतीत्युच्यते । जनयतीत्युपलक्षणम्, तत्तदाश्रित्योत्पद्यत इत्यपि विज्ञेयम् । के पुनस्त एवमाहुः ? विवक्षामात्रेत्यादि[2] । बहिरर्थनिरपेक्षविवक्षाभाविसङ्केतानुरूपव्यवहारकारिणो व्यवहर्त्तार एवमाहुरित्यर्थः ॥५१८-५१९॥

---

१. क्षणप्रथम०—पा०, गा० । २. इत्यादि—पा०, गा० ।

सत्तैव व्यापृतिस्तस्यां सत्यां कार्योदयो यतः ॥ ५२० ॥
य आनन्तर्यनियमः सैवापेक्षाभिधीयते ।
कार्योदये सदा भावो व्यापारः[1] कारणस्य[1] च ॥ ५२१ ॥
तद्भावभावितामात्राद् व्यापारोऽप्यवकल्पितः ।
हेतुत्वमेति तद्वान् वा तदेवास्तु ततो वरम् ॥ ५२२ ॥

---

ननु य उत्पद्य व्यापारं नाविशेत् विशेषोत्पादार्थं स कथं हेतुः स्यात्? इत्याह—जन्मातिरेकतेत्यादि । [ G. 177 ] कारणसत्तासमनन्तरमेव कार्यस्य निष्पन्नत्वादकिञ्चित्कर एव कार्यस्य जन्मोत्तरकालभावी व्यापारः कार्ये । तथा हि—व्यापारो नाम कारणस्य क उच्यते? यदनन्तरमेव कार्यम् उदयमासादयति, कारणसत्तानन्तरमेव च कार्यमुद्भवतीति सत्तैव व्यापारशब्दवाच्याऽस्तु, किं जन्मातिरेकिणा व्यापारेण कल्पितेन ॥ ५२० ॥

यद्येवम्, असति भावानां व्यापारे कथमिदमधीयते—कार्यस्य करणेऽपेक्षा, कारणस्य च कार्ये व्यापार इति? आह—य आनन्तर्येत्यादि । इदमेव हि कार्यस्य कारणेऽपेक्षा यत्तदनन्तरभावित्वम् । कारणस्यापि कार्येऽयमेव व्यापारो यत्कार्योदयकाले सदा सन्निहितत्वम् ॥ ५२१ ॥

अपि च—व्यापारस्य व्यापारवतो वा भावस्य कार्यं प्रति हेतुभावस्तद्भावभावित्वादेव भवता ग्रहीतव्यः, न ह्यन्वयव्यतिरेकाभ्यामन्यः कार्यकारणभावाधिगमेऽभ्युपायोऽस्ति; ततश्चैवं सति वस्तुमात्रस्यापि किमिति कारणभावो न गृह्यते । न हि कार्यस्य वस्तुमात्रगतान्वयव्यतिरेकानुविधायित्वं न प्रसिद्धम्, अतस्तदेव वस्तुमात्रं वरं कारणमस्तु यद्गतान्वयव्यतिरेकानुविधायित्वं कार्यस्य सिद्धमित्येतद्दर्शयति—तद्भावेत्यादि । अवकल्पित इति । भवद्भिर्योऽन्य उभयानुभयरूपो वा व्यापारः परिकल्पित इत्यर्थः । तद्वानिति व्यापारवान् । तद्भावभावितामात्राद्धेतुत्वमेतीति प्रकृतेन सम्बन्धः । तदेवेति विलक्षणव्यापाररहितं वस्तुमात्रं हेतुरस्त्वित्यर्थः ॥ ५२२ ॥

---

१–१. व्यापारकारणस्य—जै० ।

भावे सति हि दृश्यते [1]बीजादावंकुरादयः ।
न तु व्यापारसद्भावे भवत् किञ्चित् समीक्ष्यते ॥ ५२३ ॥
अदृष्टशक्तेर्हेतुत्वे कल्प्यमानेऽपि नेष्यते ।
किमन्यस्यापि हेतुत्वं विशेषो नाऽस्य कस्ततः ॥ ५२४ ॥
अन्येन च विना हेतुर्यथा व्यापार इष्यते ।

---

कस्तत्रातिशयो येन वरमित्युच्यते ? इत्याह—भाव इत्यादि । भावे = भावमात्रे, बीजादौ व्यापारान्तरसमावेशशून्ये सतीत्यर्थः । एतेन [ G. 178 ] भावमात्रगतान्वयव्यतिरेकानुविधायित्वमेव कार्याणां सिद्धम्, न तु व्यापारगतान्वयाद्यनुविधायित्वमिति दर्शितं भवति ॥ ५२३ ॥

स्यादेत—यद्यपि व्यापारगतान्वयाद्यनुविधानं कार्यस्य न सिद्धम्, तथापि तस्य कारणभावो भविष्यति ? इत्याह—अदृष्टशक्तेरित्यादि । एवं हि व्यापारमपि हेतुं प्रकल्प्यापरोऽपि कल्पनीयः स्यात्; अदृष्टशक्तित्वेन विशेषाभावात् । ततश्चानवस्था स्यात् । अथान्यो न कल्प्यते निबन्धनाभावात्, तदा व्यापारस्यापि कल्पना मा भूत्; तत्रापि निबन्धनाभावस्य तुल्यत्वात् ।

किञ्च—योऽप्यसौ व्यापारः कार्यं जनयति, स किं व्यापारान्तरसमावेशाद् ? आहोस्वित् सत्तामात्रेण ? यदि व्यापारान्तरसमावेशात्, तदा व्यापारान्तरस्यैव कारणत्वं स्यात्, न व्यापारस्य; तस्यापि व्यापारान्तरस्य कारणत्वे तुल्यः पर्यनुयोगः । तस्यापि हि यदि व्यापारान्तरसमावेशात् कारणभावः कल्प्येत, तदाऽनवस्था स्यात् ॥ ५२४ ॥

अथ सत्तामात्रेणेति पक्षः, तदा पदार्थोऽपि व्यापारवत्सत्तामात्रेणैव कार्यं जनयिष्यतीति व्यर्था व्यापारकल्पनेति दर्शयति—अन्येन चेत्यादि । यथैव हि व्यापारोऽन्येन व्यापारान्तरेण विनाऽपि कार्येऽङ्कुरादिके हेतुरिष्यते, तद्वदन्येऽपि भावा विलक्षणव्यापारशून्या एव हेतवः किं नेष्यन्ते ।

---

1. बीजादेवाङ्कुरोदयाः—पा०, गा० ।

कार्येऽथ[1] भावे वा[1] तद्वत् किमन्येऽपि न हेतवः ॥ ५२५ ॥*

दृश्यत्वाभिमतं नैवं वयं चोपलभामहे ।
तत् कथं तस्य सम्बन्धमङ्गीकुर्मो निबन्धनम् ॥ ५२६ ॥

अथापि स्यात्---न व्यापारः कार्यं साक्षादुपकरोति, किं तर्हि ? भावमेव व्यापारवन्तम् ? इत्याह—अथ वा भाव इत्यादि । 'हेतुरिष्यते' इति प्रकृतेन सम्बन्धः । भावेऽपि[2] हि व्यापारवति हेतुरसौ भवन् व्यापारान्तरसमावेशरहित एव भवतीति स एव दृष्टान्तो भविष्यतीति भावः ॥ ५२५ ॥

न चापि सत्ताव्यतिरेकेण व्यापारः पदार्थस्यास्ति; उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति दर्शयति—दृश्यत्वाभिमतमित्यादि । [ G. 179 ] दृश्यत्वेन हि भवतां व्यापारोऽभिमतः, यथोक्तं कुमारिलेन—

"प्राक्कार्यनिष्पत्तेर्व्यापारो यस्य दृश्यते" ( श्लो० वा०, श० अ० ४३३ ) इत्यादि ।

अपि च—स व्यापारात्मा पदार्थस्तस्माद्व्यापारवतो भावादर्थान्तरभूतो वा स्याद् ? अनर्थान्तरभूतो वा, वस्तुसतः प्रकारान्तराभावात्, उभयानुभयविकल्पस्यासम्भव एव ? तत्र[3] यद्यर्थान्तरभूतः, तदार्थस्य पदार्थस्य कारणत्वं न प्राप्नोति; तद्व्यतिरेकिणो व्यापारस्यैव कारणभावात् । व्यापारेण सम्बन्धात्तस्यापि कारणभावोऽस्तीति चेत् ? न; परस्परानुपकारिणोः सम्बन्धासिद्धेः । अथोपक्रियत एव व्यापारः पदार्थेनेति स्यात् ? तदप्ययुक्तम्; न हि तस्यापरो व्यापारोऽस्ति, येन व्यापारमुपकुर्याद् । अन्यथा ह्यनवस्थायां व्यापाराणामेव परस्परं घटनात् पदार्थेन सह व्यापारस्य न कदापि सम्बन्धः सिद्ध्येत् । अथ व्यापारान्तरमन्तरेणैव पदार्थो व्यापारमुपकरोतीति स्यात्, तदा कार्यमपि व्यापारवद्व्यापाररहित एव

१–१. कार्यस्य वा भवेत्—पा०, गा० ।

*. 'इतोऽग्रेऽस्त्येका ५२६तमा कारिका, सा च त्रुटिता'—इति मन्यमानो गा० संस्करणसम्पादकोऽत्र भ्रान्तः; पा० पुस्तके लेखकप्रमादेन पाठस्य व्यत्यस्तत्वात्, तां स्वीकृत्यैव चाग्रे कारिकाणां क्रमाङ्कमाग्रन्थपरिसमाप्ति परिवर्धितवान् । भोटभाषानुवादेऽपीयं कारिका नोपलभ्यते—इति सुधियो विभावयन्तु ।

२. तवापि—पा०, गा० । ३-३. स च—पा०, गा० ।

बुद्धेर्यथा च जन्मैव प्रमाणत्वं निरुध्यते ।
तथैव सर्वभावेषु तद्धेतुत्वं न किं मतम् ॥ ५२७ ॥
क्षणिका हि यथा बुद्धिस्तथैवान्येऽपि जन्मिनः ।
साधितास्तद्वदेवातो निर्व्यापारमिदं जगत् ॥ ५२८ ॥

---

सत्तामात्रेण किं नोपकुर्वीत, येन व्यापारोऽर्थान्तरभूतः कल्प्यते । न हि तस्य कार्येऽपि सत्तामात्रेणोपयोगं व्रजतः कश्चित् प्रतिरोद्धाऽस्ति । तस्मान्नार्थान्तरभूतो व्यापारो युक्तः । अथानर्थान्तरभूत इति पक्षः, तदा सिद्धम्—सत्तैव व्याप्टतिरिति; पदार्थस्वभावस्यैव सत्ताशब्दवाच्यत्वात् । ततश्च न सिद्ध्यति जन्मातिरेकित्वं व्यापारस्य ॥ ५२६ ॥

अपि च—यथा बुद्धिरर्थप्रतिच्छित्तौ जायमानैव व्यापाररहितापि सत्तामात्रेण व्याप्रियते, तथा सर्वेषामपि भावानां हेतुत्वमुत्तरकालभाविव्यापारमन्तरेण भविष्यतीत्येतद्दर्शयति—बुद्धेरित्यादि । न हि बुद्धेर्जन्मातिरेकी व्यापारोऽस्ति । तथा हि—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" ( मी० सू० १.१.४ ) इत्यत्र सूत्रे जन्मग्रहणस्य प्रयोजनं वर्णयता कुमारिलेनोक्तम्—

"बुद्धिजन्मेति च[1] प्राह[1] जायमानप्रमाणताम् ।
व्यापारः [2]कारणाना हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते" ॥
( श्लो० वा०, चो० ५३-५४ ) इति ।

तद्धेतुत्वमिति । तत् = कारणं जन्म हेतुर्येषां ते तथोक्ताः, तद्भावस्तत्त्वम् ॥ ५२७ ॥

स्यादेतद् – बुद्धेर्व्यापारो भावो युक्तः, न हि सोत्तरकालमवतिष्ठते क्षणिकत्वात् ? इत्याह—क्षणिका हीत्यादि । [ G. 180 ] साधिता इति । स्थिरभावपरीक्षायां सकलवस्तुव्यापिनः क्षणभङ्गस्य साधितत्वात् । तद्वदेवेति बुद्धिवदेव । अत इति क्षणिकत्वात् । प्रयोगः— ये क्षणिकास्ते जन्मातिरिक्त-

---

१-१. चाप्याह—तत्रस्थः पाठः । २. कारकाणां—तत्रस्थः पाठः ।

प्रबन्धवृत्त्या गन्धादेरिष्टैवान्योऽन्यहेतुता ।
तदबाधकमेवेदं तद्धेतुत्वप्रसञ्जनम् ॥ ५२९ ॥
अन्यानन्तरभावेऽपि किञ्चिदेव च कारणम् ।
तथैव नियमादिष्टं तुल्यं चैतत् स्थिरेष्वपि ॥ ५३० ॥
यो तत्र व्यापृतः कार्ये स[1] हेतुस्तस्य चेन्मतः ।
यस्मिन् नियतसद्भावो यः स हेतुरितीष्यताम् ॥ ५३१ ॥

---

व्यापारशून्याः, यथा—बुद्धिः । क्षणिकाश्च बीजादयः पूर्वं प्रसाधिता इति स्वभावहेतुः । पश्चादवस्थित्यभावेन निराधारव्यापारायोगो बाधकं प्रमाणम् । तस्मादानन्तर्यमात्रमेव कार्यकारणभावव्यवस्थानिबन्धनम्, न व्यापार इति स्थितमेतत् ५२८ ॥

यच्चोक्तम् 'जायमानश्च गन्धादिः" ( तत्त्व० ४८६ ) इत्यादि, तत्रापि न व्यभिचार इति दर्शयन्नाह—प्रबन्धेत्यादि । रूपरसादीनां हि परस्परं प्रबन्धापेक्षया सहकारिकारणभावोऽभीष्ट एव । यथोक्तम्—

"शक्तिप्रवृत्त्या न विना रसस्यैवान्यकारणम् ।
इत्यतीतैककालानां गतिस्तत्कार्यलिङ्गजा" ॥ (प्र० वा० ३.९) इति ॥५२९॥

ननु चाग्नेरिव गवाश्वादेरप्यनन्तरं कदाचिद् धूमो भवति तत् कथमानन्तर्यं न व्यभिचारि ? इत्याह—अन्यानन्तरभावेऽपीत्यादि । न हि वयमानन्तर्यमात्रं कार्यकारणभावाधिगतिनिबन्धनं ब्रूमः, किं तर्हि ? यन्नियतम् । तथा हि—यस्यैवानन्तरं यद्भवति तत्तस्य कारणमिष्यते । न च धूमो गवादेरेवानन्तरं भवति, असत्यपि गवादौ तस्य भावात् । किञ्च—भवतोऽप्यत्र स्थिरवादिनश्चोद्यमेतदवतरति – कस्माद् गवादेरनन्तरं धूमो भवन्नपि तत्कार्यं न भवतीति ? ॥ ५३० ॥

अत्र पर आह—यो यत्रेत्यादि । यस्मिन्नित्यादिना स्वपक्षेऽपि परिहारमाह ॥ ५३१ ॥

---

१. न—पा०, गा० ।

कार्यकारणभावग्राहकसमर्थनम्

भावाभावादिमौ सिद्धौ प्रत्यक्षानुपलम्भतः ।
यदि साकारविज्ञानविज्ञेयं वस्तु [1]वो मतम् ॥ ५३२ ॥
अथाऽनाकारधीवेद्यं[2] वस्तु युष्माभिरिष्यते ।
तत् क्षणक्षयिपक्षेऽपि[3] समानमुपलभ्यते ॥ ५३३ ॥
पूर्वकेभ्यः स्वहेतुभ्यो विज्ञानं सर्वमेव हि ।
समानकालरूपादि बोधरूपं प्रजायते ॥ ५३४ ॥

(शङ्का)

साकारे ननु विज्ञाने वैचित्र्यं चेतसो भवेत् ।
नाकारानङ्कितत्वेऽस्ति प्रत्यासत्तिनिबन्धनम् ॥ ५३५ ॥

---

एवं तावत् क्षणिकत्वेऽपि भावानां कार्यकारणभाव उपपादितः । इदानीं तदधिगन्तृप्रमाणोपपादनार्थमाह—भावाभावावित्यादि । [G. 181] यथैव हि भवतः स्थिरपदार्थोपलम्भः सिद्ध्येत्, तथाऽस्माकं क्षणिकस्यापि सेत्स्यति । तथा हि – पदार्थस्योपलम्भो भवन् साकारेणैव विज्ञानेन भवेद्, अनाकारेण वा ? तत्र यदि साकारेण, तदा स्वाकारानुभव एव ज्ञानस्यार्थानुभव इति स्थिरास्थिरपक्षयोर्न कश्चिद् विशेषः ।

अथानाकारेण ? तदाप्यविशेष एव । तथा हि—पूर्वकेभ्य स्वहेतुभ्यस्तथा तज्ज्ञानमुपजायते, येन स समानकालभाविरूपाद्येवावबुध्यते, नान्यत्; तद्बोधात्मकस्यैव तस्योत्पन्नत्वात् । अतः समानकालभाविरूपादिबोधस्वभावे ज्ञानेऽङ्गीक्रियमाणे न कश्चिदर्थस्य स्थिरास्थिरत्वे विशेषः ।

अवश्यं च भवता पूर्वहेतुकृत एव समानकालभाविप्रतिनियतरूपादिग्रहणे ज्ञानस्य स्वभावोऽङ्गीकर्त्तव्यः, येन तुल्येऽपि समानकालभावित्वे रूपाद्येव ज्ञानं परिच्छिनत्ति, नेन्द्रियमिति स्यात्, तच्च क्षणिकत्वेऽपि भावानां तुल्यमेवेति यत्किञ्चिदेतत् ॥ ५३२–५३४ ॥

---

१. चेन्—पा०, गा० । २. यदा०—पा०, गा० ।
३. क्षणत्वादिपक्षे—पा०, गा० ।

(उत्तरम्)

भवद्भिरपि वक्तव्यं[1] तदस्मिन् किञ्चिदुत्तरम्[2] ।
यच्चात्र वः समाधानमस्माकमपि तद् भवेत् ॥ ५३६ ॥

कृतनाशाकृताभ्यागमदोषपरीहारः

कृतनाशो भवेदेवं कार्यं न जनयेद् यदि ।
हेतुरिष्टं न चैवं यत् प्रबन्धे नास्ति हेतुता ॥ ५३७ ॥

---

साकार इत्यादिना परो द्वयोश्चोदयति । यदि साकारं ज्ञानम्, तदा चित्रास्तरणादिषु ज्ञानस्य चित्रत्वं भवेत् । न चैकस्य चित्रत्वं युक्तम्; अतिप्रसङ्गात् । अथानाकारम्, तदा 'नीलस्पदं संवेदनं न पीतस्य' इति व्यवस्थानं न सिद्धयेत्; सर्वत्र बोधरूपतया विशेषाभावेन प्रत्यासत्तिनिबन्धनाभावात् ॥ ५३५ ॥

भवद्भिरपीत्यादिना प्रतिविधत्ते । समानमेतद् द्वयोरपि चोद्यम्; यतो भवताऽपि साकारानाकारपक्षाभ्यामवश्यमन्यतरः [G 182] पक्षोऽङ्गीकर्त्तव्यः; अन्यथाऽर्थग्राहिज्ञानं न सिद्धयेत् । न चाप्येतत्पक्षद्वयव्यतिरेकेणान्यः प्रकारोऽस्ति, येन ज्ञानमर्थं ग्रहीष्यति । यच्चोभयोर्दोषो न तत्रैकश्चोद्यो युक्तः । तेन यदत्रोत्तरं भवतस्तदस्माकमपि भविष्यति । तथा हि— साकारपक्षे भवताऽवश्यम् 'आकाराणामलीकत्वं सहोपलम्भनियमाद्वैकज्ञानाव्यतिरेकित्वं सत्यपि भेदे' इत्युत्तरमुपवर्णनीयम्; तदेवास्माकं भविष्यति । निराकारपक्षेऽपि 'पूर्वहेतुकृत एव प्रतिनियतार्थावबोधकः स्वभावो ज्ञानस्य' इति वर्णनीयम्, तदैतदस्माकमपि निराकारविज्ञानवादिनां बौद्धानामुत्तरं भविष्यतीत्यचोद्यमेतत् समाधानमिति परिहारः ॥ ५३६ ॥

तदेवं कार्यकारणभावाधिगन्तृ प्रमाणं प्रतिपाद्य, कृतनाशाकृताभ्यागमदोषं परिहरन्नाह — कृतनाश इत्यादि । यदि हि परमार्थतः कश्चित् कर्त्ता भोक्ता वाऽभीष्टः स्यात्, तदा क्षणभङ्गित्वाङ्गीकरणे कृतनाशादिप्रसङ्गः स्यात्, यावतेदं प्रत्ययतामात्रमेव विश्वं न केनचित् कर्त्रा किञ्चित् कृतम्, [3]नापि [3]भुज्यते, तत् कथं कृतनाशादिप्रसङ्गापादानं स्यात् ।

---

१. वक्तव्ये—जै० । २. दुत्तरे०—जै० ।
३-३. नाभिभुज्यते—पा० ।

अकृताभ्यागमोऽपि स्याद्यदि येन विना क्वचित् ।
जायेत हेतुना कार्यं नैतन्नियतशक्तितः ॥ ५३८ ॥
क्षणभेदविकल्पेन [1]कृतनाशादि चोद्यते ।
यत्[2] तेन[2] नैवानिष्टं तु किञ्चिदापादितं परैः ॥ ५३९ ॥

---

अथ पूर्वकुशलादिचेतनाहितेष्टानिष्टफलोत्पादनसामर्थ्यविप्रणाशात् पूर्वकर्मानाहितसामर्थ्यविशेषाच्च कारणतः फलोत्पत्तेर्यथाक्रमं कृतनाशाकृताभ्यागमदोषप्रसङ्गो विधीयते ? तदयुक्तम्; न हि पूर्वकर्माहितसामर्थ्यानुबन्धनस्य नैरात्म्येन सह कश्चिद् विरोधः । तथा हि—लाक्षादिरसावसिक्तानामिव बीजानां सन्तानमनुवर्त्तन्त एव पूर्वकर्माहिताः सामर्थ्यविशेषाः; यत उत्तरकालं लब्धपरिपाकेभ्य इष्टमनिष्टं वा फलमुदेति, नापि पूर्वकर्मानाहितसंस्कारात् सन्तानाद् फलोत्पत्तिरिष्यत इति कुतोऽकृताभ्यागमो दोषः ।

उद्द्योतकरस्त्वाह—"अस्थिरत्वाच्चित्तस्य न कर्मभिर्वासनं सम्भवति" (                ) इति, तदयुक्तम्; न हि स्थिरस्यापरित्यक्तप्राक्तनस्वरूपस्य वासनमस्ति । अस्थिरस्य तु विशिष्टस्वभावान्तरोत्पादनमेव वासना । यत् पुनः "स्थिरमव्याकृतं वास्यम्" (                ) इत्युक्तं शास्त्रे, तत् प्रबन्धस्थिरतामभिप्रेत्य । यो ह्युच्छेदी सन्तानः, तस्य चिरतरकालभाविफलप्रसवकाले सन्निधानाभावान्न कारणत्वमस्ति, तेन तस्य तथाविधफलोत्पादं प्रति वासनाधारत्वमयुक्तमित्यभिप्रायः । [ G. 183 ] तस्मात् परसिद्धान्तानभिज्ञतया यत् किञ्चिदभिहितमनेनेत्युपेक्षामर्हति ॥ ५३७–५३८ ॥

कुमारिलस्त्वाह—"न वयं केनचित्कर्त्रा कृतस्य कर्मणो विप्रणाशात् कृतनाशाकृताभ्यागमौ ब्रूमः, न हि भवतां मते कश्चित् कर्त्तास्ति, किं तर्हि ? निरन्वयकर्मतत्फलयोर्विनाशोत्पादाभ्युपगमात् कृतनाशाकृताभ्यागमौ प्रसज्येते" (                ) इति । तदत्रैवंविधस्य कृतनाशस्याकृताभ्यागमस्य चेष्टत्वान्नानिष्टापादनं युक्तमिति दर्शयन्नाह—क्षणभेदविकल्पेनेति । पूर्वकस्य कर्मक्षणस्य निरन्वयं

---

1. क्षणनाशादि—पा०, गा० । 2-2. यच्चैव—पा०, गा० ।

प्रेक्षावतां प्रवृत्तिसम्भवत्वम्

अहीनसत्त्वदृष्टीनां क्षणभेदविकल्पना ।
सन्तानैक्याभिमानेन न कथञ्चित् प्रवर्त्तते ॥ ५४० ॥
अभिसम्बुद्धतत्त्वास्तु प्रतिक्षणविनाशिषु[1] ।
हेतूनां नियमं बुद्ध्वा प्रारभन्ते शुभाः क्रियाः ॥ ५४१ ॥

---

विनाशात् कृतनाशः, फलक्षणस्य वाऽपूर्वस्यैवोत्पादादकृताभ्यागम इत्येवं यत् क्षणभेदविकल्पेन कृतनाशादि चोद्यते, तदिष्टमेव । न हि स्वल्पीयसोऽपि वस्त्वंशस्य कस्यचिदन्वयोऽस्तीति प्रतिपादयिष्यामः ॥ ५३९ ॥

यच्चोक्तम्—"नैव प्रवर्त्तेत प्रेक्षावान्" (तत्त्व० ४८१) इति, तत्राह—अहीनसत्त्वेत्यादि । ये तावदप्रहीणसहजेतरसत्कायदर्शनादयः, तेषामयं क्षणभेदविकल्पो नास्त्येव । तथा हि—ते 'सन्ततिमेकत्वेनाध्यवसाय सुखिता वयं भविष्यामः' इत्याहितपरितोषाः कर्मसु प्रवर्त्तन्ते । येऽपि पृथग्जनकल्याणा एवं युक्त्यागमाभ्यां यथावत् क्षणिकात्मतयोरवबोधाभिसम्बुद्धतत्त्वाः, तेऽप्येवं प्रतीत्यसमुत्पादधर्मतां प्रतिपद्यन्ते । करुणादिपूर्वकेभ्यो दानादिभ्यः स्वपरहितोदयशालिनः संस्कारा क्षणिका एवापरापरे परम्परया समुत्पद्यन्ते, न तु हिंसादिभ्य इत्यतस्ते हेतुफलप्रतिनियममवधार्य शुभादिक्रियासु प्रवर्त्तन्ते । यथोक्तम्—

"यावच्चात्मनि न प्रेम्णो हानिः स[2] परितस्यति[2] ॥
तावद् दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते ।
मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि भोक्तरि ॥"
(प्र० वा० १. १९३-९४) इति ।

कार्यकारणभावः, तदधिगन्तृ च प्रमाणं यथा सिध्यति तथा प्रतिपादितमेव ॥ ५४०–५४१ ॥

---

१. ०विनाशिनाम्—गा० गा० ।
२–२. गा० संस्करणसम्पादकस्त्वत्र प्रमादात् 'स्वपदि नश्यति' इति पाठं स्वीचिकीर्षति । परितस्यतीत्यस्य 'दुःखमास्ते' इत्यर्थः ।

प्रत्यभिज्ञादुर्घटत्वपरिहरणम्

केषाञ्चिदेव चित्तानां विशिष्टा कार्यकार्यिता ।
नियता तेन निर्बाधाः सर्वत्र स्मरणादयः ॥ ५४२ ॥

बन्धमोक्षव्यवस्थानम्

कार्यकारणभूताश्च तत्राविद्यादयो मताः ।
बन्धस्तद्विगमादिष्टा[1] मुक्तिर्निर्मलता धियः ॥ ५४३ ॥

---

[ G. 184 ] यच्चोक्तम्—"क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटा" ( तत्त्व० ४९३ ) इति । तत्राह—केषाञ्चिदेवेत्यादि । कार्यकार्यितेति । कार्यमस्यास्तीति कार्यि, कारणमित्यर्थः । कार्यकार्यिणोर्भावः कार्यकार्यिता । कार्यकारणभाव इत्यर्थः । न हि कश्चित् परमार्थतः स्मर्ताऽनुभविता वाऽस्ति; यतो येनैवानुभूतं स एव स्मरतीति स्यात्, किं तर्हि ? यत्र सन्ताने पटीयसाऽनुभवेनोत्तरोत्तरविशिष्टतरतमक्षणोत्पादात् स्मृत्यादिवीजमाहितं तत्रैव स्मरणादयः समुत्पद्यन्ते, नान्यत्र; प्रतिनियतत्वात् कार्यकारणभावस्येति समासार्थः । यथोक्तम्—

"अन्यस्मरणभोगादिप्रसङ्गश्च न बाधकः ॥
अस्मृतेः कस्यचित् तेन ह्यनुभूते स्मृतोद्भवः" ।

( प्र० वा० १.२७१-७२ ) इति ।

स्मरणादिपूर्वकाश्च प्रत्यभिज्ञानादयः प्रसूयन्त इत्यविरुद्धम् । न चापि क्वचिदेकज्ञातृनिबन्धनाः प्रत्यभिज्ञानादयः सिद्धाः, येनोच्यते—"द्विभेदे त्वनिबन्धनम्" (तत्त्व० ४९४) इति; कार्यकारणभावमात्रतया सर्वत्रैव भेदाभ्युपगमात् ॥५४२॥

यच्चोक्तम्—"रागादिनिगडैर्बद्धः" ( तत्त्व० ४९६ ) इत्यादिना बन्धमोक्षव्यवस्थानमनुपपन्नमिति, तत्राह—कार्यकारणभूताश्चेत्यादि । न हि क्वचिदस्माकमेकपुरुषाधिकरणौ बन्धमोक्षौ प्रसिद्धौ; कस्यचिद् बध्यमानस्य मुच्यमानस्य चासिद्धेः । केवलमविद्यादयः संस्कारा जरामरणपर्यन्ता दुःखोत्पादहेतुतया 'बन्धः' इति व्यवह्रियन्ते । तथा चोक्तम्—"एवमस्य केवलस्य हेतोर्दुःखस्कन्धस्य

---

1. ०दिष्टो—पा०, गा० ।

एकाधिकरणौ सिद्धौ 'नैव तौ'[1] लौकिकावपि ।
बन्धमोक्षौ प्रसिद्धं हि क्षणिकं सर्वमेव सत्[2] ॥ ५४४ ॥

परपक्षप्रतिषेधः

सर्वथाऽतिशयासत्त्वाद् व्याहता त्वात्मनीदृशी ।
कर्तृभोक्तृत्वबन्धादिव्यवस्थाऽनित्यताऽन्यथा ॥ ५४५ ॥

---

समुदयो[3] भवति" ( म० व० १.१ ) इति । तेषां चाविद्यादीनां तत्त्वज्ञानाद् विगतौ सत्यां या निर्मलता धियः सा निर्मुक्तिरित्युच्यते । यथोक्तम्—

"चित्तमेव हि संसारो रागादिक्लेशवासितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥"
( ) इति ॥ ५४३ ॥

यच्चोक्तम्—"एकाधिकरणावेतौ" ( तत्त्व० ४९९ ) इत्यादि, तत्रापि दृष्टान्तस्य साध्यविकलतेति दर्शयन्नाह—एकाधिकरणौ सिद्धावित्यादि । सर्वमेव हि वस्तूदयानन्तरापवर्गीति प्रसाधितं यदा, तदा न क्वचिदेकाधिकरणत्वं बन्धमोक्षयोः प्रसिद्धमस्तीत्यप्रसिद्धो दृष्टान्तः ॥ ५४४ ॥

[ G. 185 ] तदेवं स्वपक्षं व्यवस्थाप्य सर्वथेत्यादिना परपक्षं प्रतिषेधयति । यदि हि रागादिभिः क्लेशैर्बन्धो भावनादिभिश्चातिशयः कश्चिदात्मनः क्रियेत, तदा तस्य बन्धमोक्षादिव्यवस्था भवेत्; यावता नित्यतया न तस्यातिशयाधानमस्तीति नेयमीदृशी नियतकार्यकारणमर्यादालक्षणा बन्धमोक्षादिव्यवस्था घटते, यथाऽऽकाशस्येति भावः । अन्यथेति । यद्यतिशयोत्पादो भवेदात्मनः, तदाऽतिशयस्यात्मभूतत्वादात्मनोऽपि तद्व्यतिरेकेणातिशयवदनित्यता स्यात् । परभूतस्त्वतिशयो न युक्तः; सम्बन्धासिद्धेरिति शतधा चर्चितमेतत् ॥ ५४५ ॥

इति कर्मफलसम्बन्धपरीक्षा

---

१–१. नैवैतौ—पा०, गा० ।
२. तत्—पा०, गा० ।
३. समुदायो– गा० ।

# द्रव्यपदार्थपरीक्षा

षट्पदार्थपरीक्षोपक्षेपः

जात्यादेर्निःस्वभावत्वमयुक्तं प्राक् प्रकाशितम् ।
द्रव्यादयः षडर्था ये विद्यन्ते पारमार्थिकाः ॥ ५४६ ॥
इत्याक्षपादकाणादाः प्राहुरागममात्रकाः[1] ।
द्रव्यादिप्रतिषेधोऽयं संक्षेपेण तदुच्यते ॥ ५४७ ॥

क्षित्यादिचतुष्टयस्य नित्यानित्यतया विभागः

क्षित्यादिभेदतो भिन्नं नवधा द्रव्यमिष्यते ।
चतुःसङ्ख्यं पृथिव्यादि नित्यानित्यतया द्विधा[2] ॥ ५४८ ॥
पृथिव्याद्यात्मकास्तावद् य इष्टाः परमाणवः ।
[3]तेऽनित्या ये तदाद्यैस्तु आरब्धास्ते विनाशिनः ॥ ५४९ ॥

---

इदानीम् "गुणद्रव्यक्रियाजातिसमवायाद्युपाधिभिः, शून्यम्" ( तत्त्व० २ ) इत्येतत्समर्थनार्थं षट्पदार्थपरीक्षोपक्षेपं कुर्वन्नाह—जात्यादेरित्यादि । प्राक् स्थिरभावपरीक्षायाम् "जात्यादेर्निःस्वभावत्वान्नैवेष्टा क्षणभङ्गिता" (तत्त्व० ४७०) इत्यनेन यज्जात्यादेः निःस्वभावत्वं प्राक् प्रकाशितम्, तदयुक्तम्; यतो द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षट् पदार्थाः पारमार्थिकाः [4]द्रव्यसन्तः सन्तीत्याहुराक्षपादादयः । अक्षपादशिष्यत्वादाक्षपादा नैयायिकाः। कणादशिष्यास्तु वैशेषिकाः काणादा उच्यन्ते । आगममात्रका इति । आगममात्रमपेतयुक्तिकमेषामस्तीत्यागममात्रकाः ॥ ५४६–५४७ ॥

तत्र क्षित्यादीत्यादिना द्रव्यपदार्थप्रतिषेधार्थं तावत्तद्विभागमाह । विभक्तस्य हि भेदेन सुखं दूषणस्य वक्तुं शक्यत्वादिति भावः । नवधेति । "पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मनः" ( वै० द० १.१.४ ) इति सूत्रात् । तत्र पृथिव्यापस्तेजोवायुरित्येतच्चतुःसङ्ख्यं द्रव्यं नित्यानित्यभेदेन द्विप्रकारम् ॥५४८॥

[G. 186] तदेव द्वैविध्यमस्य दर्शयन्नाह—पृथिव्याद्यात्मकास्ताव-

---

१. ०गममात्रिका—जै० । २. द्विविधा—जै० ।
३. अनित्या—पा०, गा० । ४. पा०, गा० पुस्तकयोर्नास्ति ।

नित्याणुरूपाणां तेषां निषेधः

तत्र नित्याणुरूपाणामसत्त्वमुपपादितम् ।
निःशेषवस्तुविषयक्षणभङ्गप्रसाधनात् ॥ ५५० ॥
नित्यत्वे सकलाः स्थूला जायेरन् सकृदेव हि ।
संयोगादि न चापेक्ष्यं तेषामस्त्यविशेषतः ॥ ५५१ ॥

---

दित्यादि । परमाण्वात्मका हि पृथिव्यादयो नित्याः; परमाणूनां नित्यत्वात् । तदाद्यैस्तु प्रारब्धा अनित्याः; 'हेतुमदनित्यम्' इति न्यायात् । तदाद्यैरिति । ते परमाणव आद्या येषां ते तदाद्याः । आकाशादयस्तु नित्या एवेति भावः ॥५४९॥

तत्रैतच्चतुःसङ्ख्यं तावद् द्रव्यं निषेद्धुमाह—तत्रेत्यादि । तत्र य एते नित्याणुरूपाः पृथिव्यादयो वर्णिताः, तेषामशेषवस्तुव्यापिनः क्षणभङ्गस्य प्रसाधनान्नित्यत्वरूपेणासत्त्वं प्रसाधितमेव; 'यत्सत्तत् सर्वं क्षणिकमक्षणिकस्य [1]क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्तल्लक्षणं सत्त्वं हीयते' इति व्याप्तेः प्रसाधितत्वात् ॥ ५५० ॥

अत्रापि बाधकं प्रमाणमाह—नित्यत्व इत्यादि । यदि पर्वतादीनां स्थूलानां कारणभूताः परमाणवो नित्याः सन्तीत्यभ्युपगम्यते, तदा तत्कार्याणां स्थूलानामविकलकारणत्वात् सकृदेवोत्पत्तिप्रसङ्गः । प्रयोगः—ये समग्राप्रतिबद्धकारणास्ते सकृदेव भवन्ति, यथा—बहवोऽङ्कुरास्तुल्योत्पादाः समग्राप्रतिबद्धकारणाश्च । नित्याणुकार्यत्वेनाभिमताः स्थूला भावा इति स्वभावहेतुः । समग्रकारणस्याप्यनुत्पादे सर्वदैवानुत्पादप्रसङ्गः; विशेषाभावादिति बाधकं प्रमाणम् । स्यादेतत्—त्रिविधं कारणमिष्टम्—समवायिकारणम्, असमवायिकारणम्; निमित्तकारणं च । [2]यत्र हि यत्समवैति कार्यं तत् तस्य समवायिकारणम् । असमवेतं तु यद्यस्य कारणभावं प्रतिपद्यते तदसमवायिकारणम्, यथा—अवयविद्रव्यारम्भेऽवयवसंयोगः । परिशेषं तु कारणं निमित्तकारणम्, तद्यथा धर्मादयः—इत्ययमेषां विभागः । तत्रापेक्षणीयस्य संयोगादेरसन्निहितत्वात् समग्रकारणत्वमसिद्धम्, अतोऽसिद्धो हेतुः ? इत्याशङ्क्याह—संयोगादीति । यदि हि संयोगादिना कश्चिद्विशेषोऽणूनामाधीयेत, तदा ते तमपेक्षेरन्; यावता परैरनाधेयविशेषा एवाणवः; नित्यत्वात् ।

---

१. यौगपद्याभ्याम०—पा०, गा० । २. तत्र—पा०, गा० ।

अविद्धकर्णाभिमतनित्याणुसाधकप्रमाणनिरसनम्

सद्धर्मोपगतं नो चेदणूत्पादकमिष्यते ।
विद्यमानोपलम्भार्थप्रमाणाविषयत्वतः ॥ ५५२ ॥
नासिद्धेर्दृश्यते येन कुविन्दाद्यणुकारणम् ।
परमाण्वात्मका एव येन सर्वे पटादयः ॥ ५५३ ॥
सद्ग्राहकप्रमाभावान्न वा सत्ता प्रसिध्यति ।
प्रमाणविनिवृत्तौ हि नार्थाभावेऽस्ति निश्चयः ॥ ५५४ ॥

---

तत् कथं संयोगादि तेषामपेक्ष्यं स्यात् । न च सकृदेव [G. 187] स्थूलानां तनुभवनादीनामुदयोऽस्ति; क्रमेण तन्वादीनामुत्पत्तिदर्शनात् । तस्माद्विपर्ययः । प्रयोगः--ये क्रमवत्कार्यहेतवस्ते नित्याः, यथा—क्रमवदङ्कुरादिकार्यनिर्वर्त्तका बीजादयः । तथा च परमाणव इति स्वभावहेतुः ॥ ५५१ ॥

अविद्धकर्णस्त्वणूनां नित्यत्वप्रसाधनाय प्रमाणमाह—"परमाणूनामुत्पादकाभिमतं सद्धर्मोपगतं न भवति; सत्त्वप्रतिपादकप्रमाणविषयत्वात्, खरविषाणवत्" (   ) इति । सतो विद्यमानस्य धर्मः सद्धर्मः = अस्तित्वम्, तेनोपगतं प्राप्तमस्तीत्यर्थः । तस्य प्रतिषेधोऽयम् । अणूत्पादकं कारणं नास्तीत्यर्थः । तदेतत् प्रमाणमाशङ्कापूर्वमुपदर्शयन्नाह—सद्धर्मोपगतमित्यादि । अणूत्पादकं सद्धर्मोपगतं नो चेदिष्यत इति सम्बन्धः । विद्यमानस्योपलम्भः = अधिगमः, सोऽर्थः = प्रयोजनं यस्य प्रमाणस्य तत्तथोक्तम् । शेषं सुबोधम् । एतेनाणूनामनित्यत्वप्रतिज्ञाया अनुमानबाधितत्वमुद्भावितम्; "सदकारणवन्नित्यम्" (   ) इति वचनात् । अकारणवत्त्वेनाणूनां नित्यत्वस्य सिद्धत्वात् ॥ ५५२ ॥

नासिद्धेरित्यादिना हेतोरसिद्धतामाह । ननु कुविन्दादयः पटादीनामेव कारणत्वेन सिद्धाः, नाणूनाम्, तत्कथमणुकारणं कुविन्दादि दृश्यते ? इत्याह—परमाण्वात्मका इत्यादि । एतच्च पश्चात् प्रतिपादयिष्याम इति भावः ॥ ५५३ ॥

अपि च—देशकालस्वभावविप्रकृष्टानामर्थानामुपलम्भकप्रमाणनिवृत्तावपि सद्भावाविरोधात्, ततोऽनैकान्तिकता च हेतोरिति दर्शयति—सद्ग्राहकेत्यादि । नार्थाभावेऽस्ति निश्चय इति । पिशाचादिवदिति भावः ॥ ५५४ ॥

अवयविवादनिरासः

तदारब्धस्त्ववयवी गुणावयवभेदवान् ।
नैवोपलभ्यते तेन न सिध्यत्यप्रमाणकः ॥ ५५५ ॥

उद्द्योतकर-भाविविक्तादिमतोपन्यासः

ननूपधानसम्पर्के दृश्यते स्फटिकोपलः ।
तद्रूपाग्रहणेऽप्येवं बलाकादिश्च दृश्यते ॥ ५५६ ॥
कञ्चुकान्तर्गते[1] पुंसि तद्रूपाद्यगतावपि ।
पुरुषप्रत्ययो दृष्टो रक्ते वाससि वस्त्रधीः ॥ ५५७ ॥

---

एवं तावत् कारणद्रव्यं निषिद्धय कार्यद्रव्यनिषेधार्थमाह—तदारब्ध इत्यादि। [G. 188] गुणा रूपादयः, अवयवास्तन्त्वादयः, तेषां भेदः = व्यतिरेकः, सोऽस्यास्तीति तथोक्तः। स तथाभूतो गुणावयवव्यतिरिक्तोऽवयवी नोपलभ्यते। न हि पटादिलक्षणमवयवि द्रव्यमविकलं शुक्लादिगुणेभ्योऽवयवेभ्यश्च तन्त्वादिभ्योऽर्थान्तरभूतं क्वचिच्चक्षुरादिज्ञाने च भासते। तदत्र गुणेभ्योऽर्थान्तरभूतद्रव्यानुपलम्भेन गुणगुणिवादो निरस्तः, अवयवव्यतिरिक्तावयव्यनुपलम्भेन त्ववयवावयविवादः। प्रयोगः—यदुपलब्धिलक्षणप्राप्तं सद्यत्र नोपलभ्यते तत्तत्र नास्ति, यथा—क्वचित् प्रदेशविशेषे घटादिरनुपलभ्यमानः। नोपलभ्यते च गुणावयवेभ्योऽर्थान्तरभूतस्तत्रैव देशे गुणी दृश्यत्वेनाभिमतोऽवयवी चेति स्वभावानुपलब्धेः। न चासिद्धो हेतुः; "महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः" (वै० द० ४.१.६) इति वचनात्तयोर्दृश्यत्वेनाभिमतत्वात् ॥ ५५५ ॥

नन्वित्यादिना उद्योतकर-भाविविक्तादयो हेतोरसिद्धतामुद्भावयन्ति।

त एवमाहुः—गुणव्यतिरिक्तो गुणी समुपलभ्यत एव; तद्रूपादिगुणाग्रहणेऽपि तस्य ग्रहणात्। तथा हि—स्फटिकोपलः सन्निहितोपधानावस्थायां स्वगतशुक्लगुणानुपलम्भेऽपि दृश्यत एव। बलाकादिश्च रात्रौ मन्दमन्दप्रकाशायां तद्गतसितादिरूपादर्शनेऽपि गृह्यत एव। तथाऽऽप्रपदीनकञ्चुकावच्छिन्नशरीरे

---

१. कञ्चुकान्तरिते—पा०, गा०।

रूपादीन्दीवरादिभ्य एकान्तेन विभिद्यते।
तेन तस्य व्यवच्छेदाच्चैत्रादिव तुरङ्गमः ॥ ५५८ ॥
क्षित्यादिरूपगन्धादेरत्यन्तं वा विभिद्यते।
एकानेकवचोभेदाच्चन्द्रनक्षत्रभेदवत् ॥ ५५९ ॥
विभिन्नकर्तृशक्त्यादेर्भिन्नौ तन्तुपटौ तथा।
विरुद्धधर्मयोगेन स्तम्भकुम्भादिभेदवत् ॥ ५६० ॥

---

पुंसि [1]तदीयश्यामादिरूपाद्यग्रहणेऽपि 'पुमान् पुमान्' इति प्रत्ययः प्रसूयत एव। कषायकुङ्कुमादिरक्ते वाससि तद्रूपस्य संसर्गिरूपेणाभिभूतस्यानुपलम्भेऽपि वस्त्र-धीर्भवत्येव ॥ ५५६–५५७ ॥

तदेवं तावत् प्रत्यक्षत एव गुणगुणिनोर्भेदः सिद्ध इति प्रतिपादितम्। इदानीमनुमानतोऽपि सिद्ध इति प्रतिपादयन्नाह—रूपादीत्यादि। इन्दीवरा-दिभ्यो गुणो भिन्नः, 'इन्दीवरस्य रूपादयः'—इत्येवं तेनेन्दीवरादिना तस्य रूपादेर्व्यवच्छेदात्। यथा 'चैत्रस्य तुरङ्गमः'—इति चैत्रेण स्वाम्यन्तरेभ्यो [G. 189] व्यवच्छिद्यमानस्तुरङ्गमस्ततो भिद्यते। तथाऽपरः प्रयोगः—प्रत्येकं पृथिव्यप्तेजोवायवो द्रव्याणि रूपरसगन्धस्पर्शेभ्यो भिन्नानि; एकवचनबहुवचन-विषयत्वात्, यथा—चन्द्रो नक्षत्राणीति। यथैव हि चन्द्र इत्येकवचनम्, नक्षत्राणीति बहुवचनं चन्द्रनक्षत्राणां भेदनिबन्धनमुपलभ्यते, तथात्रापि 'पृथिवी' इत्येकवचनम्, 'रूपरसगन्धस्पर्शाः' इति बहुवचनम्। एवं जलादिष्वपि योज्यम्। नक्षत्रभेदास्तु पुष्यादयः ॥ ५५८–५५९ ॥

एवं गुणगुणिनोर्भेदं प्रसाध्य, अवयवावयविनोर्भेदप्रसाधनायाह—विभिन्ने-त्यादि। प्रयोगः—ये भिन्नकर्तृकार्यकालपरिमाणास्ते विभिन्नाः, यथा—स्तम्भ-कुम्भादयः। विभिन्नकर्तृकार्यकालपरिमाणाश्च विचारविषयाः। नासिद्धो हेतुः, नाप्यनैकान्तिकः। विरुद्धधर्माध्यासमात्रनिबन्धनो हि भावानां परस्परतो भेदः, यथा स्तम्भादीनाम्। स चावयवावयविनोरप्यस्ति। तथा हि—तन्तूनां योषित् कर्त्री, पटस्य

---

1. तदा—पा०, गा०।

स्थूलार्थासम्भवे तु स्यान्नैव वृक्षादिदर्शनम् ।
अतीन्द्रियतयाऽणूनां न चाणुवचनं भवेत् ॥ ५६१ ॥
स्थूलवस्तुव्यपेक्षो हि सुसूक्ष्मोऽर्थस्तथोच्यते ।
स्थूलैकवस्त्वभावे तु किमपेक्षास्य सूक्ष्मता ? ॥ ५६२ ॥

तन्मतखण्डनम्

ननु रक्तादिरूपेण गृह्यन्ते स्फटिकादयः ।
न च तद्रूपता तेषां स्वपक्षक्षयसङ्गतेः ॥ ५६३ ॥
तद्रूपव्यतिरिक्तश्च नापरात्मोपलभ्यते ।
न चान्याकारधीवेद्या युक्तास्तेऽतिप्रसङ्गतः ॥ ५६४ ॥

---

कुविन्दः; शीतापनोदादिकार्यसमर्थः पटः, न तन्तवः । प्रागपि तन्तूनामुपलब्धेः पूर्वकालभावित्वम्, पटस्य तु पश्चात् कुविन्दादिव्यापारोत्तरकालभावित्वम् । पटस्यायामविस्तराभ्यां यावत् प्रमाणं न तावत् प्रत्येकं तन्तूनामस्तीति भिन्नपरिमाणत्वम्, अतो नानैकान्तिकता हेतूनामिति भावः ॥ ५६० ॥

एवं तावदनुमानतोऽवयवावयविनोर्भेदं प्रसाध्य, प्रत्यक्षतोऽपि साधयन्नाह— स्थूलार्थेत्यादि । यदि ह्यवयवी न स्यात्, सर्वाग्रहणप्रसङ्गः; परमाणूनामतीन्द्रियत्वात् । स्थूलाभावे 'अणुः' इति व्यपदेश एव न स्यात् । कस्मात् ? इत्याह— स्थूलवस्तुव्यपेक्षो हीत्यादि । सुबोधम् ॥ ५६१–५६२ ॥

[G. 190] नन्वित्यादिना प्रतिविधत्ते—यदुक्तं स्फटिकादयः स्वगतगुणानुपलम्भेऽपि केवला समुपलभ्यन्त इति तदसिद्धम्; तज्ज्ञानस्यायथार्थतया भ्रान्तत्वेनाविषयत्वात् । तथा हि—जपाकुसुमाद्युपधाने रक्तादिरूपेणासन्नेव न [1]स्फटिकोपलभ्यते । [2]बलाकाबकुलादयोऽपि धवलाः सन्तः श्यामरूपा वीक्ष्यन्ते । न च तेषां तात्त्विकी तद्रूपता = रक्तादिरूपताऽस्ति । कस्मात् ? स्वपक्षक्षयसङ्गतेः । यदि हि तेषां तद्रूपता तात्त्विकी स्यात्, तदा तद्रूपाग्रहणेऽपि तेषां ग्रहणमस्तीति योऽयं भवतामनन्तरोदितः पक्षस्तस्य क्षतिः स्यात् ॥ ५६३ ॥

---

१. स्फटिक उप०—पा०, गा० । २. बलाकादयो—पा०, गा० ।

शुक्लादयस्तथा वेद्या इत्येवं चापि सम्भवेत् ।
तस्माद् भ्रान्तमिदं ज्ञानं कम्बुपीतादिबुद्धिवत् ॥ ५६५ ॥
कञ्चुकान्तर्गते पुंसि 'तज्ज्ञानं त्वानुमानिकम् ।
तद्धेतुसन्निवेशस्य कञ्चुकस्योपलम्भनात् ॥ ५६६ ॥
कषायकुंकुमादिभ्यो वस्त्रे रूपान्तरोदयः ।
पूर्वरूपविनाशे हि वाससः क्षणिकत्वतः ॥ ५६७ ॥

---

स्यादेतत्—लोहितादिरूपव्यतिरिक्तः स्फटिकादिरप्युपलभ्यत एव ? इत्याह—तद्रूपेत्यादि । न हि तस्माल्लोहितादिरूपाद् व्यतिरिक्तोऽपरात्मा = स्वभावः स्फटिकादिलक्षणो दृश्यते; रक्तादिरूपस्यैवोपलम्भात् । अतद्रूपा अपि स्फटिकादयो रक्तादिरूपेणोपलभ्यन्ते इति चेद् ? आह—न चेत्यादि । आकारवशेन हि प्रतिनियतार्थविषयता ज्ञानस्यावस्थाप्यते । यदि चान्याकारस्यापि ज्ञानस्यान्यो विषयः स्यात्, एवं सति रूपज्ञानमपि शब्दादिविषयं स्यात्; विशेषाभावात् ॥ ५६४ ॥

किञ्च—भवतु नामान्याकारस्यापि ज्ञानस्यान्यो विषयः, तथापि नेष्टसिद्धिर्भवत इति दर्शयन्नाह—शुक्लादयस्तथेति । तथा हि—शुक्लादय एव तद्व्यतिरिक्तगुणिपदार्थरहितास्तथा रक्तादिरूपेण विद्यन्त इत्येवमपि सम्भाव्यते, ततश्च न गुणसिद्धिः । चकारोऽवधारणे, भिन्नक्रमश्च 'शुक्लादयः' इत्यस्यानन्तरं द्रष्टव्यः । भ्रान्तमिदमिति । अयथार्थत्वादिति शेषः ॥ ५६५ ॥

यच्चोक्तम्—"कञ्चुकान्तर्गते पुंसि" ( तत्त्व० ५५७ ) इत्यादि, तदपि न प्रत्यक्षम्; साभिजल्पत्वाद्, अस्फुटाकारत्वाच्च । किं तर्हि ? आनुमानिकमेतज्ज्ञानं रूपादिसंहतिमात्रलक्षणपुरुषविषयमित्यतो नावयविसिद्धिरिति दर्शयति—कञ्चुकेत्यादि । [ G. 191 ] स पुरुषो रूपादिप्रचयमात्रात्मको हेतुर्यस्य सन्निवेशस्य स तथोक्तः = तद्धेतुः, सन्निवेशः = संस्थानविशेषो यस्य कञ्चुकस्य तत्तथोक्तम् । एतेन कार्याख्यलिङ्गविशेषजनितत्वमनुमानप्रत्ययस्योपदर्शितं भवति ॥ ५६६ ॥

---

१. न ज्ञानं—पा०, गा० ।

पुनर्जलादिसापेक्षात् तस्मादेवोपजायते ।
रूपाद् रूपान्तरं शुक्लं लोहादेः श्यामतादिवत् ॥ ५६८ ॥
तादवस्थ्ये तु रूपस्य नान्येनाभिभवो भवेत् ।
प्राक्तनानभिभूतस्य स्वरूपस्यानुवर्त्तनात् ॥ ५६९ ॥
षष्ठीवचनभेदादि विवक्षामात्रसम्भवि ।
ततो न युक्ता वस्तूनां [1]तत्त्वरूपव्यवस्थितिः ॥ ५७० ॥

---

यच्चोक्तम्—"रक्ते वाससि वस्त्रधीः" ( तत्त्व० ५५७ ) इति, तत्राह—कषायेत्यादि । तत्र हि क्षणिकत्वाद् वाससः पूर्वशुक्लादिरूपविनाशे सत्यपूर्वमेव रूपादि सामग्र्यन्तरबलादुपजायते, तस्मिंश्च प्रत्यक्षेण गृहीते पश्चाद्यथा [2]समयाहितभेदं समुदायविषयं वासो वास इति प्रत्यक्षपृष्ठभावि सांवृतं[3] परमार्थतो निर्विषयमेव प्रत्यवमर्शज्ञानमुत्पद्यत इत्यसिद्धमस्य प्रत्यक्षत्वम् । नाप्येतदनुमानम्; पूर्वप्रत्यक्षगृहीतविषयत्वाद्, अलैङ्गिकत्वाच्च । तस्मान्नात्र किञ्चिदभिभूतं रूपमस्ति ॥५६७॥

स्यादेतत्—यद्यदृष्टं शुक्लादिरूपं वाससो नास्त्येव, तत्कथं धौताद्यवस्थायां पुनरुपलभ्यते ? इत्याह—पुनरित्यादि । यथाग्निसम्पर्कात् समुपजातभास्वरादिरूपस्य लोहादेः पुनः श्यामादिरूपोत्पत्तिः, तद्वद्रूपान्तरमेवोपजायते शुक्लादीत्यविरोधः ॥ ५६८ ॥

स्यादेतत्, कथमिदमवगम्यते—रूपान्तरमेवोपजायते, न पुनः प्राक्तनं रूपम्, अभिभूतत्वात् प्रागनुपलब्धं सत् पश्चादभिभवाभावादुपलभ्येत ? इत्याह—तादवस्थ्य इत्यादि । प्रयोगः—यदपरित्यक्तानभिभूतस्वभावम्, न तस्य परेणाभिभवोऽस्ति, यथा—तस्यैव प्राक्तनावस्थायाम् । अपरित्यक्तानभिभूतस्वभावं च रूपमभिभवास्थायामिति व्यापकविरुद्धोपलब्धिः । परित्यक्तानभिभूतस्वभावत्वेऽङ्गीक्रियमाणे सिद्धमस्यान्यत्वम् ॥ ५६९ ॥

"रूपादीन्दीवरादिभ्यः" ( तत्त्व० ५५८ ) इत्यादावाह—षष्ठीत्यादि । [ G. 192 ] यदि हि यथावस्तु षष्ठ्यादीनां प्रवृत्तिः सिद्धा स्यात्, तदा भवेत्ततो

---

१. तत्स्वरूप०—पा०, गा० । २. सङ्केताहितभेदमित्यर्थः ।
३. काल्पनिकमित्यर्थः ।

अनैकान्तिकत्वसमर्थनम्

तथा हि भिन्नं नैवान्यैः षण्णामस्तित्वमिष्यते ।
तेषां वर्गश्च नैवैकः कश्चिदर्थोऽभ्युपेयते ॥ ५७१ ॥
संज्ञापकप्रमाणस्य विषये तत्त्वमिष्यते ।
षण्णामस्तित्वमिति चेत् षड्भ्योऽन्यस्ते प्रसज्यते ॥ ५७२ ॥
षडेते धर्मिणः प्रोक्ता धर्मास्तेभ्योऽतिरेकिणः ।
इष्टा एवेति चेत् कोऽयं सम्बन्धस्तस्य तैर्मतः ॥ ५७३ ॥
द्रव्येषु नियमाद्युक्ता न संयोगो न चापरः ।
समवायोऽस्ति नान्यश्च सम्बन्धोऽङ्गीकृतः परैः ॥ ५७४ ॥

---

वस्तुसिद्धिः; यावता स्वतन्त्रेच्छामात्रभाविन एते, न बाह्यवस्तुगतभेदाद्यपेक्षिणः, तत् कथमेतेभ्यो वस्तुसिद्धिः ? तत्र षष्ठी पटस्य रूपादय इति, पटो रूपादय इति वचनभेदः । आदिग्रहणादिह पटे रूपादय इति सप्तमी; पटस्य भावः पटत्वमिति तद्धितोत्पत्तिरित्यादिपरिग्रहः ॥ ५७० ॥

तथा हीत्यादिनाऽनैकान्तिकत्वमेव समर्थयते । तथा हि—षण्णां पदार्थानामस्तित्वं तेषां च षण्णां वर्ग इत्यादावसत्यपि वास्तवे भेदे षष्ठ्यादि भवत्येव । न हि भवद्भिः षट्पदार्थव्यतिरिक्तमस्तित्वादीष्यते । उपलक्षणमेतत् । तथा—दाराः, सिकता इत्यादौ सत्यपि बहुवचने नार्थभेदं पश्यामः । स्वस्य भावः स्वत्वमिति न भावोऽन्य इष्यते ॥ ५७१ ॥

संज्ञापकेत्यादिना परस्योत्तरमाशङ्कते । संज्ञापकप्रमाणविषयस्य भावस्तत्त्वं सदुपलम्भकप्रमाणविषयत्वं[1] नाम धर्मान्तरं षण्णामस्तित्वमिष्यत इत्यर्थः । अतो नास्ति व्यभिचार इति भावः ।

अत्रोत्तरमाह—षड्भ्योऽन्यस्ते प्रसज्यते । पदार्थ इति शेषः । सप्तमः पदार्थः प्राप्नोति, ततश्च षट्पदार्थाभ्युपगमो हीयत इति भावः ॥ ५७२ ॥

इष्टत्वाददोष इति चेत् ? यद्येवम्, कथम् 'षट् पदार्थाः' इति प्रोक्तम् ? इत्याह—षडेत इति ।

---

१. ०विषयं—जै० ।

सम्बन्धानुपपत्तौ च तेषां धर्मो भवेत् कथम् ।
तदुत्पादनमात्राच्चेदन्येऽपि स्युस्तथाविधाः ॥ ५७५ ॥
तस्याप्यस्तित्वमित्येवं वर्तते व्यतिरेकिणी ।
विभक्तिस्तस्य चान्यस्य भावेऽनिष्ठा प्रसज्यते ॥ ५७६ ॥
अन्यधर्मसमावेशे प्राप्ता तत्र च धर्मिता ।
द्रव्यादेरपि धर्मित्वमस्मादेव च सम्मतम् ॥ ५७७ ॥

---

धर्मिरूपा एव ये भावास्ते षट्पदार्था इति प्रोक्ताः, धर्मरूपास्तु षट्पदार्था व्यतिरिक्ता इष्टा एव। तथा हि पदार्थप्रवेशके ग्रन्थः—"एवं धर्मैर्विना धर्मिणामेष निर्देशः कृतः" ( ) इति। कोऽयमित्यादिनोत्तरमाह—तस्य = अस्तित्वादेर्धर्मस्य। तैरिति [G. 193] षड्भिः पदार्थैः। कः सम्बन्धो येन तेषामसौ धर्मो भवति। न हि सम्बन्धमन्तरेण धर्मिधर्मभावो युक्तः; अतिप्रसङ्गात्। एवं हि सर्वस्य सर्वधर्मत्वं स्यात्; न हि कश्चित्तैः सह सम्बन्धोऽस्ति। तथा हि द्विविध एव सम्बन्धः—संयोगलक्षणः, समवायलक्षणश्च। तत्र न तावत्संयोगलक्षणः; तस्य गुणत्वेन द्रव्येष्वेव नियतत्वात्। न च समवायात्मकः; तस्य भाववदेकत्वेनेष्टत्वात्। समवायेन च समवायात्मके सम्बन्धे सति द्वितीयः समवायोऽङ्गीकृतः स्यात् ॥ ५७३—५७४ ॥

विनैव सम्बन्धं धर्मधर्मिभावो भविष्यतीति चेत्? प्राह—सम्बन्धानुपपत्तावित्यादि। एवं ह्यतिप्रसङ्गः स्यादित्युक्तम्। अथ तैः षड्भिः पदार्थैर्धर्मस्योत्पादनात् तेषामयं धर्मः सम्बन्धीत्युच्यते? यद्येवम्, अन्येऽपि तर्हि जलादयस्तदुत्पत्तिलक्षणसम्बन्धमात्रादेव तथाविधाः = कुण्डादिसम्बन्धिनः, स्युः = भवेयुः; ततश्च संयोगसमवायाख्यसम्बन्धान्तरकल्पना तेषु व्यर्था स्यात् ॥ ५७५ ॥

किञ्च—भवतु नाम षण्णामस्तित्वं नाम धर्मान्तरम्, तथापि व्यभिचार एव, तथा हि—तस्याप्यस्तित्वमस्त्येव; वस्तुत्वात्, ततश्च तत्र व्यतिरेकनिबन्धना विभक्तिः कथं भवेत्। अथ तत्राप्यपरमस्तित्वमङ्गीक्रियते? तदाऽनवस्था स्यात् ॥ ५७६ ॥

प्रथमेभ्यश्च तन्तुभ्यः पटस्य यदि साध्यते ।
भेदः साधनवैफल्यं दुर्निवारं तदा भवेत् ॥ ५७८ ॥
प्राप्तावस्थाविशेषा हि ये जातास्तन्तवोऽपरे ।
विशिष्टार्थक्रियासक्ताः प्रथमेभ्योऽविलक्षणाः ॥ ५७९ ॥

---

इष्टत्वान्नानवस्था बाधिकेति चेत्, आह—अन्येत्यादि । सर्वेषामेव ह्युत्तरोत्तरधर्मसमावेशाद्धर्मित्वं स्यात्, ततश्च "षडेते धर्मिण एव प्रोक्ताः" (तत्त्व० ५७३) इत्येतन्नोपपद्यते; षट्पदार्थव्यतिरेकेणान्येषामपि धर्मिणां विद्यमानत्वादिति भावः ।

अथापि स्यात्—'ये धर्मिरूपा एव त एव षट्त्वेनावधारिताः' इति ? एतदप्यसारम्; एवं हि गुणकर्मसामान्यविशेषसमवायानामनिर्देशः स्यात् । न ह्येषां धर्मिरूपत्वमेव, किं तर्हि ? धर्मरूपत्वमपि; द्रव्याश्रितत्वादेषाम् । अस्मादेवेति अन्यधर्मसमावेशात् ।

अन्यः पुनराह—"षण्णामस्तित्वं हि सदुपलम्भकप्रमाणगम्यत्वम्, गम्यत्वं च षट्पदार्थविषयं [G. 194] विज्ञानम्; तस्मिन् सति सद्व्यवहारप्रवर्त्तनात् । तथा ज्ञानजनितं ज्ञेयत्वम्, अभिधानजनितमभिधेयत्वमिति । अतो व्यतिरेकनिबन्धना षष्ठी भवत्येव । न चाप्यनवस्था, नापि षट्पदार्थान्तरप्रसङ्गः" इति । [1]तस्यापीदं कल्पनामात्रमेव । यदि ह्यर्थक्रियासमर्थपदार्थात्मकमात्मतत्त्वं [2]षण्णां पदार्थानां न स्यात्, तदा तेषां गगनाम्भोरुहतैव स्यात्; अर्थक्रियास्वशक्तत्वात् । ततश्च सदुपलम्भकप्रमाणगम्या न स्युः ।

अथ [3]तथाभूतकमात्मतत्त्वमेषामस्त्येव, यदा तेऽर्थक्रियासमर्थाः पदार्था एव भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तेषामस्तित्वमित्येवं यदि व्यतिरेकविभक्त्या व्यपदिश्येरँस्तदा को विरोधः ? तदव्यतिरिक्तमपि हि स्वरूपं बुद्ध्या ततोऽपकृष्य व्यतिरिक्तमिवाभिधीयमानमविरोध्येव, वाचामिच्छामात्रवृत्तित्वादुत्पाद्यकथोपरचितेषु बाहुल्यसौन्दर्यादिधर्मपरिकल्पनवदिति यत्किञ्चिदेतत् ॥ ५७७ ॥

"विभिन्नकर्तृशक्त्यादेः" (तत्त्व० ५६०) इत्यादावाह—प्रथमेभ्यश्चेत्यादि । यदि प्रथमावस्थाभाविभ्योऽसमधिगतपटाख्यानेभ्यस्तन्तुभ्यः पटस्य

---

१. अन्यवादिनोऽपीत्यर्थः । २—२. पा० गा० पुस्तकयोर्नास्ति ।

एककार्योपयोगित्वज्ञापनाय पृथक्श्रुतौ ।
गौरवाशक्तिवैफल्यदोषत्यागाभिवाञ्छया ॥ ५८० ॥
साकल्येनाभिधानेन व्यवहारस्य लाघवम् ।
मन्यमानैः कृता येषु वागेका व्यवहर्तृभिः ॥ ५८१ ॥
तेभ्यः समानकालस्तु पटो नैव प्रसिद्ध्यति ।
विभिन्नकर्तृसामर्थ्यपरिमाणादिधर्मवान् ॥ ५८२ ॥

---

भेदः साध्यते, तदा सिद्धं साध्यते; सर्वभावानां क्षणिकत्वेन पूर्वकेभ्यस्तन्तुभ्यः पटशब्दवाच्यानां तन्तूनां [1]तद्विलक्षणपदार्थसम्भवेऽप्युत्पादस्याङ्गीकरणात् ॥ ५७८-५७९ ॥

अथ पटसमानकालभाविनो ये तन्तवस्तेभ्यः पटस्यानन्यत्वं प्रसाध्यते, तदा हेतूनामसिद्धतेति दर्शयन्नाह—एकेत्यादि । यदि तदानीं तन्तुव्यतिरिक्तस्तत्समानकालभावी पटः प्रसिद्धो भवेत्, तदा तस्य तन्तुव्यपेक्षया विभिन्नकर्तृत्वादयो धर्माः सिद्ध्येयुः, यावता स एवायं तन्तुव्यतिरेकी [ G. 195 ] पटो न सिद्धः; तद्भेदस्यैव प्रासाधयितुं प्रस्तुतत्वात् । न च 'पटः', 'तन्तवः' इति संज्ञामात्राद्वस्तूनां भेदः; प्रयोजनान्तरवशेनापि संज्ञान्तरस्य निवेशात् । तथा हि—केचित् तन्तवो विशिष्टावस्थाप्राप्ताः शीतापनोदनाद्येकार्थक्रियासमर्था भवन्ति, नापरे ये योषित्कर्तृकाः । तत्रैकार्थक्रियोपयोगिनस्तन्तून् विशिष्टान् प्रतिपादयितुम् 'पटः' इत्येका श्रुतिर्विनिवेश्यते व्यवहर्तृभिरसाङ्कर्येण व्यवहारायासत्यप्यर्थान्तरत्वे ।

कस्मात् पुनरेका श्रुतिर्विनिवेश्यते ? इत्याह—पृथक्श्रुतावित्यादि । पृथक् पृथक् = प्रत्येकं श्रुतौ = अभिधाने सति गौरवदोषः । तथा हि—तत्र यावन्तः पदार्था विवक्षितैककार्यसाधनयोग्यास्तावन्त एव शब्दाः प्रयोक्तव्या इति गौरवदोषः । न चाप्येषामसाधारणं रूपं शक्यं निर्देष्टुमित्यशक्तिदोषः । उत्प्रेक्षितसामान्याकारेण तु निर्देशे वरमेकयैव श्रुत्या प्रतिपादनम्, न चास्य पृथक्पृथक्प्रतिपादनप्रयासस्य किञ्चित् फलमुपलभ्यत इति वैफल्यदोषः । सामस्त्येन त्वभिधाने

---

१. ०पदार्थार्थत्वासम्भवे०—गा० ।

अवयवावयविभेदसमर्थननिरासः

अन्योऽन्याभिसराश्चैवं ये जाताः परमाणवः ।
नैवातीन्द्रियता तेषामक्षाणां गोचरत्वतः ॥ ५८३ ॥
नीलादिः परमाणूनामाकारः कल्पितो निजः ।
नीलादिप्रतिभासा च वेद्यते चक्षुरादिधीः ॥ ५८४ ॥
पौर्वापर्यविवेकेन यद्यप्येषामलक्षणम् ।
तथाऽप्यध्यक्षताऽबाधा पानकादाविव स्थिता ॥ ५८५ ॥

---

कृते सति व्यवहारलाघवं गुणः । समस्तवस्तुविवक्षायां जगत्त्रिभुवनविश्वादि-शब्दवदेका वागिति । पट इत्येवं वचनमित्यर्थः । कर्ता च सामर्थ्यपरिमाणादि धर्मश्चेति तौ तथोक्तौ, ततो विभिन्नशब्देन विशेषणसमासं कृत्वा मतुप् कार्यः ॥ ५८०–५८२ ॥

यच्चोक्तम्—"स्थूलार्थासम्भवे" ( तत्त्व० ५६१ ) इत्यादि, तत्राह—अन्योन्याभिसरा इति । असिद्धमणूनामतीन्द्रियत्वम्; विशिष्टावस्थाप्राप्तानामिन्द्रिय-ग्राह्यत्वात् । यस्य हि 'नित्याः परमाणवः' इति पक्षः, तं प्रत्यणूनां विशेषाभावात् सर्वदैवातीन्द्रियत्वं स्यात्, नास्मान् प्रति । अन्योन्याभिसरा इति अन्योन्य-सहाया इत्यर्थः ॥ ५८३ ॥

नीलादिरित्यादिना तदेवाक्षगोचरत्वं दर्शयति ॥ ५८४ ॥

ननु च पौर्वापर्यादिदिग्भेदेन परमाणवोऽवस्थिता इष्यन्ते, न च तेन रूपेणोपलक्ष्यन्ते, तत्कथमेषां प्रत्यक्षता ? इत्याह—पौर्वापर्यविवेकेनेत्यादि । [G. 196] अध्यक्षताया अबाधा अध्यक्षताऽबाधेति समासः । असमस्तं वैतत्—अविद्यमानबाधत्वादबाधा । पानकादिष्विवाध्यक्षताऽवस्थितेत्यर्थः । तथा हि—पानके तप्तोपले सूतहेमादौ च मिश्रे परमाणव एव तथोपलभ्यन्ते । न हि तत्रावयवि द्रव्यमस्ति; विजातीयानां द्रव्यारम्भकत्वात् । न चापि [1]परमाणु-भ्योऽवयवविभेदे संयोगो ह्यस्य उपपद्यते; अदृष्टाश्रयत्वात् । यत्र ह्येकोऽपि

---

१. परमाणुभ्योप्यति—पा० गा० ।

सर्वेषामेव वस्तूनां सर्वव्यावृत्तिरूपिणाम् ।
दृष्टावपि तथैवेति न सर्वाकारनिश्चयः ॥ ५८६ ॥
अकल्पनाक्षगम्येऽपि [1]निरंशेऽर्थस्वलक्षणे ।
यद्भेदव्यवसायेऽस्ति कारणं स प्रतीयते ॥ ५८७ ॥

संयोगी न दृश्यः; तत्र संयोगो न दृश्यते । यथा—पिशाचघटसंयोगः, सूर्यमण्डलाकाशदिग्देशसंयोगश्च । यत्र पुनः सर्व एव संयोगी परमाण्वात्मको न दृश्यते, तत्र कथं संयोगस्तदाश्रितो दृश्यः स्यात् । ॥ ५८५ ॥

यद्येवम्, सर्वप्रकारेण निश्चये सति कथं नाम प्रत्यक्षता तेषां युक्तिमती ? इत्याह—सर्वेषामित्यादि । न ह्यपरदर्शनानां क्वचिदपि वस्तुनि प्रत्यक्षेण गृहीतेऽपि सर्वाकारनिश्चयोऽस्ति । यावता तु रूपेणार्थान्तरव्यावृत्तिकृतेन न निश्चीयते, तावता तत् प्रत्यक्षमिति व्यवस्थाप्यते । न सर्वाकारेण; गृहीतस्यापि प्रकारान्तरस्य निश्चयानुत्पत्तेर्व्यवहारायोग्यत्वेनागृहीतकल्पत्वात् । तथैवेति यथा तद्वस्त्वनुभूतम् ॥ ५८६ ॥

ननु च निरंशतया सर्वात्मनैव प्रत्यक्षेणानुभूतत्वाद्वस्तुनः कस्मात् सर्वात्मना निश्चयो न भवति ? इत्याह – अकल्पनाक्षगम्येऽपीत्यादि । अक्षे भवमाक्षम्, इन्द्रियज्ञानमित्यर्थः । अकल्पनमविद्यमानकल्पनं च तदाक्षं चेति विग्रहः । तेन गम्येऽपि, निर्विकल्पेन्द्रियज्ञानगम्येऽपीत्यर्थः । यद्भेदव्यवसाय इति । यस्माद् भेदः = व्यावृत्तिर्यद्भेदः, तत्र व्यवसायः = निश्चयः, तस्य कारणमभ्यासः = प्रत्यासत्तिः, तारतम्यबुद्धिपाटवं चेत्यादि । न ह्यनुभवमात्रमेव निश्चयकारणम्, किन्त्वभ्यासादयोऽपि । तेन यत्र ते सन्ति तत्र निश्चयः प्रसूयत इत्यर्थः । एतच्च सर्वं परमाणूनां सिद्धिं बाह्यस्य चार्थस्य प्रत्यक्षत्वसिद्धिमभ्युपगम्योक्तम् ।

यस्य तु विज्ञानवादिनो न बाह्योऽर्थो नीलादिरूपतया प्रत्यक्षसिद्धः, स्वप्नादौ विनापि बाह्यमर्थं तथाविधनीलादिप्रतिभासोपलम्भेन [ G. 197 ] संशयात्, तस्य च नीलादिरूपस्यैकानेकस्वभावशून्यत्वेन भ्रान्तज्ञानप्रतिभासात्मक-

1. ०ऽर्थस्य लक्षणे—पा०, गा०।

समानज्वालासम्भूतेर्यथा दीपैकविभ्रमः[1] ।
नैरन्तर्यस्थितानेकसूक्ष्मवित्तौ तथैकधा ॥ ५८८ ॥
विवेकालक्षणात् तेषां नो चेत् प्रत्यक्षतेष्यते ।
दीपादौ सा कथं दृष्टा किं वेष्टोऽवयवी तथा ॥ ५८९ ॥

परं चोदयितुं शिक्षयत्याचार्यः

एतावत्तु भवेदत्र कथमेषामनिश्चये[2] ।
नीलादिपरमाणूनामाकार इति गम्यते ॥ ५९० ॥
तदप्यकारणं यस्मान्नैव ज्ञानमगोचरम् ।
नैकस्थूलविषयं स्थौल्यैकत्वविरोधतः ॥ ५९१ ॥

---

त्वात्, नापि परमाणवः सिद्धाः, तेषां पौर्वापर्यावस्थायितया दिग्भागभेदिनामेकत्वासिद्धेः, तं प्रति कथं नीलादिरूपतया परमाणूनां प्रत्यक्षत्वं पौर्वापर्यस्य वानुपलक्षणम्, भ्रान्तिनिमित्तेनार्थान्तरसमारोपादिति शक्यं वक्तुम् ॥ ५८७ ॥

स्यादेतद्—यद्यवयवी न स्यात्, तदा कथं बहुषु परमाणुष्वेकः पर्वतः—इति व्यवसायो व्यापृताक्षस्य भवति ? इत्याह—समानेत्यादि । यथा हि—दीपादौ नैरन्तर्येण सदृशापरापरज्वालापदार्थसम्भवात् सत्यपि भेद एकत्वविभ्रमो भवति, तथा नैरन्तर्येणानेकसूक्ष्मतरपदार्थसंवेदनतोऽयमेकत्वविभ्रम इत्यदोषः ॥ ५८८ ॥

यद्येवम्, भेदेनानुपलक्ष्यमाणाः कथमणवः प्रत्यक्षाः सिध्यन्ति ? इत्याह—विवेकेत्यादि । यदि हि विवेकेनानवधार्यमाणं न प्रत्यक्षमिष्यते, तदा दीपादौ पूर्वापरविभागेनानुपलक्ष्यमाणे सा प्रत्यक्षता कथं दृष्टा ! अवयवी वाऽवयवविवेकेनागृह्यमाणोऽपि किं तथा प्रत्यक्षत्वेनेष्ट इत्यनैकान्तिकमेतत् ॥ ५८९ ॥

एतावदित्यादिना परं चोदयितुं शिक्षयति । एषामिति परमाणूनाम् । तदप्यादि । परमाणूनां विवेकेनालक्षणं यत्, तदकारणम्; परमाणुगतनीलाद्यग्रहणस्यान्ततोऽपि निश्चयोत्पत्तेः । तथा हि – इदं ज्ञानमविषयं तावद् बहिरर्थवादिना सता

---

१. दीपेन विभ्रमः—पा०, गा० ।
२. कथमेषां न निश्चये—पा०, गा० ।

स्थूलस्यैकस्वभावत्वे मक्षिकापदमात्रतः ।
पिधाने पिहितं सर्वमासज्येताविभागतः ॥ ५९२ ॥
रक्ते च भाग एकस्मिन् सर्वं रज्येत रक्तवत् ।
विरुद्धधर्मभावे वा नानात्वमनुषज्यते ॥ ५९३ ॥

उद्द्योतकरमतम्

ननु चैकस्वभावत्वात् सर्वशब्दोऽत्र किंकृतः ।
स ह्यनेकार्थविषयो नानात्मावयवी न च ॥ ५९४ ॥

तन्मतखण्डनम्

ननु ये लोकतः सिद्धा वासोदेहनगादयः ।

---

नैवेष्टव्यम्, अन्यथा हि विज्ञानमात्रतादर्शनमेव स्यात् । स चायं रूपादिविषयः स्थूलरूपतयावभासमान एको वा स्याद्, अनेको वा; एकोऽपि भवन्नारब्धो वा । तत्र न तावदुभयात्माऽप्ययमेको युक्तः; प्रत्यक्षादिविरोधात् ॥५९०-५९१॥

[ G. 198 ] कोऽसौ विरोध इत्याह—स्थूलस्यैकस्वभावत्व इत्यादि । यदि हि स्थूलमेकं स्यात्, तदैकदेशपिधाने सर्वस्य पिधानम्, एकदेशरागे च सर्वस्य रागः प्रसज्येत; पिहितापिहितयो रक्तारक्तयोश्च भवन्मतेनाभेदात् । न चैकस्य परस्परविरुद्धधर्माध्यासो युक्तः; अतिप्रसङ्गात् । एवं हि विश्वमेकं द्रव्यं स्यात्, ततश्च सहोत्पादादिप्रसङ्गः । न [1]त्वेकदेशपिधाने सर्वं पिहितमीक्ष्यत इति प्रत्यक्षविरोधः । तथानुमानविरोधोऽपि । तथा हि—यत् परस्परविरुद्धधर्माध्यासितं न तदेकं भवति, यथा—गोमहिषम् । उपलभ्यमानानुपलभ्यमानरूपं पिहितादिरूपेण च विरुद्धधर्माध्यासितं स्थूलमिति व्यापकविरुद्धोपलब्धिः । सर्वस्यैकत्वप्रसङ्गो बाधकं प्रमाणम् ॥ ५९२-५९३ ॥

उद्द्योतकरस्त्वाह—"एकस्मिन् भेदाभावात् सर्वशब्दप्रयोगानुपपत्तिः" ( ) इति, तदेतत् ननु चेत्यादिना शङ्कते । तथा हि—सर्वशब्दोऽनेकार्थविषयः, न चावयवी नानात्मेति, तत् कथं सर्वशब्दप्रयोगो येनोच्यते सर्वं पिहितमासज्यत इति ॥ ५९४ ॥

---

१. चैक०—पा०, गा० ।

त एवावयवित्वेन भवद्भिरुपवर्णिताः ॥ ५९५ ॥
रक्तं वासोऽखिलं सर्वं निःशेषं निखिलं तथा ।
तत्रेच्छामात्रसम्भूतमिति सर्वे प्रयुञ्जते ॥ ५९६ ॥
तथाविधविवक्षायामस्माभिरपि वर्ण्यते ।
सर्वं स्याद् रक्तमित्यादि निर्निबन्धा हि वाचकाः ॥ ५९७ ॥
भाक्तं तदभिधानं चेद् वचोभेदः प्रसज्यते ।
न च बुद्धेर्विभेदोऽस्ति गौणमुख्यतयेष्टयोः ॥ ५९८ ॥

---

नन्वित्यादिना प्रतिविधत्ते । य एव हि लोके वासोदेहप्रभृतयः प्रसिद्धा त एव भवद्भिरवयवित्वेनावकल्पिताः । [ G. 199 ] तत्र च लोके सर्वैकदेश-शब्दयोः प्रवृत्तिः प्रसिद्धैव । तथा च वक्तारो भवन्ति—सर्वं वासो रक्तमित्यादेः । तथाविधायां च विवक्षायां येयं लोके पृथुतरदेशावक्रान्तिव्यवस्थितशाटकादिपदार्थ-गतरक्तादिप्रतिपादनेच्छा, तस्यां सत्यामस्माभिरपि प्रतीतिमनुसृत्य भवतो विरो-प्रतिपादनाय सर्वादिशब्दप्रयोगः क्रियते । अपि च भवत एवायं स्थूलस्यैक-त्वमभ्युपगच्छतो दोषः, नास्माकम्; न ह्यस्माभिः स्थूलस्यैकत्वमिष्यते । स्यादेतत्—ममाप्यदोष एव; यस्माद्भाक्तमुपचरितमेतत्तन्त्वादिष्ववयवेषु तत्कारण-तया पटाद्यभिधानम्, तेन सर्वादिशब्दप्रयोगो भविष्यतीति ? ॥ ५९५-५९७ ॥

यद्येवम्, वचोभेदः = बहुवचनम्, सर्वदैव प्रसज्यते—सर्वाणि वासांसि रक्तानीति । न च भवन्तो बहुष्वेकवचनमिच्छन्ति ।

अथापि स्याद्—अवयविगतां संख्यामादायावयवेषु वस्त्रादिशब्दोऽपरित्य-क्तात्माभिधेयगतलिङ्गसंख्य एव वर्तत इति ? तदप्ययुक्तमिति दर्शयन्नाह—न चेत्यादि । यदि हि भाक्तोऽयं व्यपदेशः स्यात्, तदा गौणमुख्यार्थविषयाया बुद्धेर्विभेदो वैलक्षण्यं स्खलद्गतित्वेन प्राप्नोति, न च भेदोऽस्ति । तथा हि—'सर्वं वासो रक्तम्' इत्यत्र नैवं बुद्धिः प्रवर्त्तते—'न च वस्त्रं रक्तं किन्तु तत्कार-णभूतास्तन्तवो रक्ताः' इति । चकारान्न च सर्वशब्दवाच्यं वासो युष्माभिरि-ष्यते, तस्यैकत्वात्; तत् कथं तत्संख्यामादाय सर्वशब्दो वस्त्रादिशब्दरहितोऽ-वयवेषु वर्त्तते ।

### शङ्करस्वामिमतम्

ननु चाव्याप्यवृत्तित्वात् संयोगस्य न रक्तता ।
सर्वस्यासज्यते नापि सर्वमावृतमीक्ष्यते ॥ ५९९ ॥

### तन्मतखण्डनम्

ननु चानंशके द्रव्ये किमव्याप्तं व्यवस्थितम् ।
स्वरूपं तदवस्थाने भेदः सिद्धोऽत एव वा ॥ ६०० ॥

---

अथ वा--बुद्धेर्भेदः = नानात्वम्, सोऽस्मिन् गौणमुख्यत्वेनेष्टयोर्न विद्यते । न हि तन्तुवस्त्रयोर्भिन्नं रूपं समुपलभ्यते रूपरसादिवत्, न चानुपलब्धभिन्नरूपयोर्गौणमुख्यभावः सम्भवति ॥ ५९८ ॥

ननु चेत्यादिना शङ्करस्वामिनः परिहारमाशङ्कते । स ह्याह—"राग उच्यते वाससः कषायकुङ्कुमादिद्रव्येण संयोगः । संयोगश्चाव्याप्यवृत्तिः, ततो न रक्त एकस्मिन् सर्वस्य रागो भवति । न च वस्त्रादिभिः शरीरैकदेशस्यावरणे सर्वस्यावरणम्" ( ) इति ॥ ५९९ ॥

तदेतदयुक्तमित्यादर्शयति—ननु चानंशक इत्यादि । [ G. 200 ] यदि हि पटादिरेकमेव द्रव्यम्, तदा किं तत्र निरंशके द्रव्ये कषायादिभिरव्याप्तम्, येनाव्याप्यवृत्तिः संयोगः स्यात् ? अथाव्याप्तस्वरूपस्यावस्थानमङ्गीक्रियते, तदा तदवस्थाने भेदोऽतएव सिद्धः; व्याप्ताव्याप्तयोर्विरोधेनैकस्वभावत्वायोगात् । न चैकस्य पृथुतरदेशावस्थानं युक्तम्, अनंशत्वात्; अन्यथा हि सर्वेषामेवोदकजन्तुहस्त्यादीनामेकत्वेनाविशेषात् स्थूलसूक्ष्मादिभेदो न प्राप्नोति । अल्पबहुतरावयवारम्भानारम्भादिकृतो विशेष इति चेत् ? अवयवा एवं तर्ह्यल्पबहुतरास्तथातथोत्पद्यमानाः स्थूलसूक्ष्मादिव्यवस्थानिबन्धनं सन्तु, किं तदारब्धेनावयविना; तस्यादृष्टसामर्थ्यात् । न च सत्यप्यवयवाल्पबहुत्वेऽवयविनां निरंशतया परस्परं कश्चिद्विशेषोऽस्ति, येन स्थूलसूक्ष्मादिभेदो भवेत्, तेषामवयवाल्पबहुत्वग्रहणकृते विशेषेऽवयवमात्रमेवाभ्युपगतं स्यात्, तत्रैव स्थूलादिव्यहारात्, ततश्चाणुमात्रमेव दृश्यत्वेनाभ्युपेतं स्यात्; स्थूल-सूक्ष्मव्यतिरेकेणान्यस्यादृश्यमानत्वात् ।

बहुदेशस्थितिस्तेन नैवैकस्मिन् कृतास्पदा ।
ततः सिद्धा पटादीनामणुभ्योऽनेकरूपता ॥ ६०१ ॥
अविज्ञातार्थतत्त्वस्तु पिण्डमेकं च मन्यते ।
लोकस्तत्कल्पितापेक्षः परमाणुरिहोच्यते ॥ ६०२ ॥

---

अपि चाव्याप्यवृत्तिः संयोग इति कोऽर्थः ? यदि सर्वं द्रव्यं न व्याप्नोतीत्यर्थः ? तदयुक्तम्; द्रव्यस्य सर्वशब्दाविषयत्वाभ्युपगमात् । अथाश्रयस्यैकदेशे वर्त्तत इति ? तदप्ययुक्तम्; तस्यैकदेशासम्भवात् । तदारम्भकेऽवयवे वर्त्तत इति चेत् ? यद्येवम्, अवयवानामेव रक्तत्वादवयविरूपमरक्तमिति रक्तारक्तं समं दृश्येत ।

किञ्च—योऽप्यसौ तदारम्भकोऽवयवः स यद्यवयविरूपः, तदा तत्राप्येकदेशवृत्तित्वं संयोगस्येति तुल्यः पर्यनुयोगः । अथाणुरूपः ? तदाऽतीन्द्रियत्वादणूनां तदाश्रितोऽपि संयोगोऽतीन्द्रिय एवेति रक्तोपलम्भो न स्यात् ।

स्यान्मतम्—यथा व्याप्तिरङ्गुलिरूपस्याश्रयोपलब्धावेवोपलब्धिरुच्यते, नैवं संयोगस्याश्रयोपलब्धावेवोपलब्धिरिति, ततोऽसावव्याप्यवृत्तिरुच्यत इति ? तदेतदसम्यक्; न हि संयोगस्याश्रयानुपलब्धावुपलब्धिरस्ति, यथा—घटपिशाचसंयोगस्य, ततश्च रागस्याप्यदृष्टाश्रयस्यानुपलब्धेराश्रयोपलब्धावेवोपलब्धिरिति सोऽप्येवं व्याप्यवृत्तिर्भवेत् ।

स्यादेतत्—अवयवान्तरेष्वरक्तेषु समवेतस्य द्रव्यस्योपलब्धावपि न संयोगात्मकस्य रागस्योपलब्धिः, तेन नास्याश्रयोपलब्धावुपलब्धिरिति ? तदप्ययुक्तम्; एवं हि रक्तारक्तसमवेतस्यावयविन एकत्वाद्रक्तेऽप्यवयवे रागस्य तद्द्वारेणानुपलब्धिप्रसङ्गः; आश्रयोपलम्भेऽपि तस्यानुपलम्भात् । न चाश्रयोपलम्भादन्यसंयोगग्रहणाभ्युपायोऽस्ति । तस्मान्नैकरूपो [ G. 201 ] विषयो युक्तः । अनेकरूपोऽपि भवन्नसामर्थ्यादणुसञ्चयात्मक एवावतिष्ठते[1]; सम्भवदयवस्यैकत्वायोगात् । अतः सिद्धा घटादीनामणुरूपता । तेन नीलादि परमाणूनामाकार इति सिद्धम्; अन्यस्यैकरूपस्य विषयस्यासम्भवात् ॥ ६००-६०१ ॥

---

1. ०वभिद्यते—पा०, मा० ।

परिहारान्तरम्

निमित्तनिरपेक्षा वा संज्ञेयं तादृशि स्थिता।
संकेतान्वयिनी यद्वन्निर्वित्तेऽपीश्वरश्रुतिः ॥ ६०३ ॥

अवयविवादिनो विशेषेण दूषणम्

एकावयव्यनुगता नैव तन्तुकरादय
अनेकत्वाद् यथा सिद्धाः कटकुड्यकुटादयः ॥ ६०४ ॥
यदि वाभिमतं द्रव्यं नानेकावयवाश्रितम्।
एकत्वादणुवद् वृत्तेरयुक्तिर्बाधिका प्रमा ॥ ६०५ ॥
तद्धचेकवृत्तिभाजैव रूपेणावयवान्तरे।
वर्त्तेत यदि वाऽन्येन न प्रकारान्तरं यतः ॥ ६०६ ॥

---

यच्चोक्तम्—"न चाणुवचनं भवेत्" ( तत्त्व० ५६१ ) इति, तत्राह—अविज्ञातार्थतत्त्व इत्यादि। तत्कल्पितापेक्ष इति। तस्मिन् कल्पिते सूत्रे अपेक्षा यस्येति विग्रहः ॥ ६०२ ॥

परिहारान्तरमाह—निमित्तेत्यादि। तादृशीति। अनंशे, अप्रतिघे। यथा दरिद्रेऽपीश्वरश्रुतिः सङ्केतवशादैश्वर्याख्यं निमित्तमन्तरेणैव प्रवर्तते, तद्वदिय-मप्यणुश्रुतिरित्यदोषः ॥ ६०३ ॥

एवं तावत् सामान्येनैव 'अवयवैरारब्धमनारब्धं वा स्थूलमेकं द्रव्यं न युज्यत' इति प्रतिपादितम्। इदानीं येनावयवी प्रारब्ध इष्यते, तस्य विशेषेण दूषणमाह—एकेत्यादि। प्रयोगः—यदनेकं न तदेकद्रव्यानुगतम्, यथा—कट-कुड्यादयो बहवो नैकद्रव्यानुगताः। अनेके चामी तन्तुकरादय इति व्यापकविरुद्धो-पलब्धेः। अथ वा—यदेकं तदेकद्रव्याश्रितम्, यथैकः परमाणुः। एकं चावयवि-संज्ञितं द्रव्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः। प्रसङ्गसाधनं चैतत्।

प्रयोगद्वयेऽपि विपर्यये बाधकं प्रमाणमाह—वृत्तेरयुक्तिर्बाधिका प्रमेति। अवयवेषु याऽवयविनो वृत्तिः, तस्या अयोगः = प्रमाणैरघटनम्, तदत्र बाधकं प्रमाणम् ॥ ६०४–६०५ ॥

कथं पुनरयोगः ? इत्याह—तद्धीत्यादि। [ G. 202 ] तदेकं द्रव्यमेका-वयवक्रोडीकृतं यत्तस्य रूपं तेनैवावयवान्तरेषु वर्त्तते, यद्वा अन्येन—इति पक्षद्वयम्,

तत्र तेनैव नान्यत्र वृत्तिरस्यावकल्पते ।
तेन क्रोडीकृततत्वेन नान्यथा तत्र वृत्तिमत् ॥ ६०७ ॥
नैव धात्र्यन्तरक्रोडमध्यास्ते हि यथा शिशुः ।
एकक्रोडीकृतं द्रव्यं नाश्रयेत तथाऽपरम् ॥ ६०८ ॥
तत्सम्बद्धस्वभावस्य ह्यतद्देशेऽपि वृत्तितः ।
प्राप्तं तदेकदेशत्वमैकात्म्यं चाविभागतः ॥ ६०९ ॥
अनेनैवात्मना[1] वृत्तौ नैकोऽनेकव्यवस्थितः ।
सिद्धयेत् स्वभावभेदस्य वस्तुभेदात्मकत्वतः ॥ ६१० ॥

---

न हि वस्तुतस्तत्त्वान्यत्वाभ्यामन्यत् प्रकारान्तरमस्ति । तत्र न तावदाद्यः पक्षः, तेनैवावयवेन तस्य क्रोडीकृतत्वात् कुतोऽवयवान्तरे वर्त्तितुमस्यावसरस्तदानीमेव स्यात् । अन्यथा हि यद्यन्यत्रापि वर्त्तेत; तदाऽत्राभिमते द्रव्ये तस्य वृत्तिः सर्वात्मना न भवेत् । न हि तस्यापरः स्वभावोऽस्ति, येनान्यत्रापि वर्त्तेत; एकत्वहानिप्रसङ्गात् ॥ ६०६–६०७ ॥

प्रमाणं रचयन्नाह— नैवेत्यादि । प्रयोगः—यदेकवस्तुक्रोडीकृतं वस्तु न तत् तदानीमेवान्यत्र वर्त्तते, यथा—एकधात्रीक्रोडीकृतः शिशुर्न धात्र्यन्तरक्रोड-मध्यास्ते । एकावयवक्रोडीकृतं च द्रव्यमिति व्यापकविरुद्धोपलब्धिः । द्रव्यं नाश्रयेत तथापरमिति प्रमाणफलकथनम् ॥ ६०८ ॥

साध्यविपर्ययेऽस्य बाधकं प्रमाणमाह—तत्सम्बद्धस्वभावस्येति । आभि-मतावयवसम्बद्धस्वभावस्य हि द्रव्यस्यातद्देशेऽप्यवयवान्तरे यदि वृत्तिः स्यात्, तदा तेषामवयवानामेकदेशता स्यात्, ततश्चैकात्म्यम् = एकस्वभावताऽवयवानां प्राप्ता । कस्मात् ? अविभागतः = अविभक्तरूपतयाऽवस्थितत्वात् । अन्यथा हि विभक्त-रूपावस्थितौ सत्यां नैकदेशत्वं भवेत् । अथान्येन स्वभावेनेति द्वितीयः पक्षः, तदैकोऽनेकव्यवस्थित इति न सिद्धयेत्; स्वभावान्तरस्यान्यत्र वृत्तेः, स्वभावभेदा-त्मकत्वाच्च वस्तुभेदस्य ॥ ६०९-६१० ॥

---

1. अन्येनैवा०—पा०, गा० ।

उद्द्योतकरमतम्

समवायात्मिका वृत्तिस्तस्य तेष्विति चेन्ननु।
तस्यामपि विचारोऽयं कोपेनैव प्रधावति॥ ६११ ॥
यद्वा सर्वात्मना वृत्तावनेकत्वं प्रसज्यते।
एकदेशेन चानिष्ठा नैको वा न क्वचिच्च सः॥ ६१२ ॥

---

उद्द्योतकरस्त्वाह—"आश्रयाश्रितधर्मनिर्देशमात्रमेतत्, अवयव्यवयवेषु प्रवर्त्तत इति आश्रितभावलक्षणा हि समवायरूपा प्राप्तिरुच्यते" ( ) इति, तत्राह—समवायात्मिकेत्यादि। [G. 203] तस्यामप्येवंरूपायां वृत्तावयमनन्तरोदितः—किमेकावयवसमवेतेनैव स्वभावेनावयवान्तरेषु वर्त्तते, अथान्येन—इति विचारः कुमतिरचितदोषजालमसहमानकोपादिवाभिधावति ॥६११॥

एवं तावत् कृत्स्नैकदेशविकल्पमकृत्वा वृत्तिरपास्ता। सम्प्रत्युपादाय प्रश्नविहितेन प्रकारेण वृत्तिनिषेधमाह—यद्वेत्यादि। कदाचित्तद् द्रव्यं प्रत्येकमवयवेषु सर्वात्मना वर्त्तते ? एकदेशेन वा ? यदि सर्वात्मना, तदा यावन्तोऽवयवास्तावन्तस्तस्यात्मानः प्राप्नुवन्ति, न हि प्रत्यवयवं तस्य स्वभावाभेदेऽसति सर्वात्मना वृत्तिरस्ति; असंविद्यमानेनात्मना वृत्त्यसम्भवात्। ततश्च सर्वात्मना वृत्तेर्युगपदनेककुण्डादिव्यवस्थितकुवलादिवद्[1] अनेकत्वमवयविनः प्राप्नोति। अथैकदेशेनेति पक्षः, तदाऽनवस्था स्यादेकदेशानाम्। तथा हि—यैरेकदेशैस्तद् द्रव्यमवयवेषु वर्त्तते तेऽपि तस्यैकदेशा इति तेष्वप्यनेन वर्त्तितव्यम्, तथैवापरेष्वित्यनिष्ठा। अथापि स्याद्—यैरसावेकदेशैरवयवेषु वर्त्तते, ते तस्य स्वात्मभूता एव, नार्थान्तरभूताः; तद्व्यतिरेकेण [2]वापरेषामेकदेशानामभावादतो नानिष्ठा भविष्यति ? इत्याशङ्क्याह—नैको वेति। एवं हि सत्येकोऽवयवी न स्यात्; अवयवप्रचयमात्ररूपत्वात्तस्य। तथा च सति दृष्टपाण्यादिसमुदायमात्रात्मक एवास्तां वस्तु, किमपरैस्तस्य स्वात्मभूतैरवयवैः परिकल्पितैः। दोषान्तरमप्याह—न क्वचिच्च स इति। वृत्तः स्यादिति शेषः। एतदुक्तं भवति—यद्येकदेशाः प्रत्येकावयविनः स्युः, तदाऽवयवे ह्यवयवी वृत्तः

---

१. कुवलयादि—पा०, गा०।
२. चा०—पा०, गा०।

शङ्करस्वामिमतम्

स्वातन्त्र्येण प्रसंगेन साधनं यत् प्रवर्त्तते।
स्वयं तदुपलब्धौ हि सत्यं सङ्गच्छते न तु ॥ ६१३ ॥
न तु[1] कार्त्स्न्यैकदेशाभ्यां वृत्तिः क्वचन लक्षिता।
यस्या असम्भवाद् द्रव्यमसत् स्यादपरोऽपि वा[2] ॥ ६१४ ॥
दृष्टौ वा क्वचिदेतस्या द्रव्यादावनिवारणम्।
यथा[3] तस्मिन्नदृष्टौ तु [4]भेदप्रश्नो न युज्यते ॥ ६१५ ॥
एतावत्तु भवेद्वाच्यं वृत्तिर्नास्तीति तच्च न।
युक्तं प्रत्यक्षतः सिद्धेरिहेदमिति बुद्धितः ॥ ६१६ ॥

---

स्यात्; यावता नैकदेशाः प्रत्येकमवयविनः, तेषामेकदेशत्वहानिप्रसङ्गात्। न चापरोऽवयवी स्वरूपेणास्ति, तत् कथमवयवेष्वसौ वृत्तो नाम ॥ ६१२ ॥

स्वातन्त्र्येणेत्यादिना शङ्करस्वामिनः परिहारमाशङ्कते—[G. 204] स ह्याह – "स्वातन्त्र्येण प्रसङ्गमुखेन वा यत् साधनं क्रियते तत् स्वयमुपलब्धौ सत्यां सङ्गच्छते, अन्यथा ह्यसिद्धता दोषः स्यात्; न च भवता क्वचिदप्येकस्यानेकस्मिन् कार्त्स्न्यैकदेशाभ्यां वृत्तिरुपलब्धा, यस्या वृत्तेरसम्भवादवयविद्रव्यमसत् स्यात्। सति सम्भवेऽपरोऽपि वा भवेदवयवोऽवयवी च[5]"। क्वचित्तु 'यस्यामसम्भवात्' इति पाठः, तत्रायमभिसम्बन्धः—'यस्यां वृत्तौ असम्भवाच्च यस्या वृत्तेर्यथायोगं द्रव्यमसत् स्यात्; अपरोऽपि वा भवेदवयवः, अवयवी[5] च' इति। अथ क्वचिदेवम्भूता वृत्तिरुपलक्षिता भवेत्, तदा तद्वदेव द्रव्यादावपि सा भविष्यतीत्यप्रतिषेधः। अथ न दृष्टा सा वृत्तिः, तदा किमकदेशेन ? आहोस्वित् सर्वात्मना ? इत्येवं भेदप्रश्नो न युज्यते। सिद्धे हि धर्मिणि विशेषप्रतिषेधो युक्तः; यदा तु धर्म्येवासिद्धः, तदा तस्यैव प्रतिषेधो ज्यायान्। तेनैतावदेव वक्तव्यम्—वृत्तिरेव नास्तीति, न तु विशेषप्रतिषेधः। तच्च न युक्तम्; प्रत्यक्षत एवावयवेष्ववयविनो

---

१. च—पा०, गा०। २. च—पा० गा०।
३. अथ—पा०, गा०। ४. भेदे प्रश्नो०, पा०, गा०।
५–५. पाठोऽयं पा०, गा० पुस्तकयोर्नास्ति।

प्रत्यक्षं न तदिष्टं चेद् बाधकं किञ्चिदुच्यताम् ।
रूपादिचेतसोऽपि स्यान्नैव प्रत्यक्षताऽन्यथा ॥ ६१७ ॥

शङ्करस्वामिमतखण्डनम्

तदत्र वृत्तिर्नास्तीति प्रागभेदेन साधितम् ।
इहेत्यस्ति न च ज्ञानं तद्रूपाप्रतिभासनात् ॥ ६१८ ॥
कृत्स्नैकदेशशब्दाभ्यामयं चार्थः प्रकाश्यते ।
नैरंश्येनास्य किं वृत्तिः किं वा तस्यान्यथैव सा ॥ ६१९ ॥

---

वृत्तिसिद्धेः । किम्भूतात् प्रत्यक्षात् ? इत्याह—इहेदमिति बुद्धित इति । इह तन्तुष्विदं वस्त्रादीत्येवम्भूतात् प्रत्यक्षादित्यर्थः ।

अथापि स्यात्—प्रत्यक्षत्वमस्या बुद्धेरसिद्धमिति ? यद्येवम्, किञ्चिदत्र बाधकं प्रमाणं वक्तव्यम्; यतोऽप्रत्यक्षता स्यात् । अथासत्यपि बाधके प्रमाणे प्रत्यक्षत्वमस्या न भवेद् ? एवं तर्हि रूपादिविज्ञानस्यापि भवदीयस्य प्रत्यक्षत्वं न भवेद्; विशेषाभावात् ॥ ६१३–६१७ ॥

तदत्रेत्यादिना प्रतिविधत्ते । "तद्ध्येकवृत्तिभाजैव" ( तत्त्व० ६०६ ) इत्यादिना प्राक् सामान्येनैवानेकस्मिन्नेकस्य वृत्तिरपास्ता । यच्चेदमुच्यते—प्रत्यक्षत एव वृत्तिः सिद्धा—'इहेदमिति बुद्धितः' ( तत्त्व० ६१६ ) इति, तदप्यलौकिकम्; न हि 'इह शृङ्गे गौरः', 'इह तन्तुषु पटः' इत्येव लोके विकल्पिकापि धीः प्रवर्त्तते, किं तर्हि ? [ G. 205 ] 'इह गवि शृङ्गम्', 'इह[1] पटे तन्तवः' इति । नाप्यध्यक्षचेतसि तन्त्वादिसमवेतं तद्व्यतिरेकि वस्त्रादिरूपमाभासते । न च विवेकेनाप्रतिभासमाने[2] सतीदमिह वर्त्तत इति धीर्भवेत् । न हि कुण्डादौ [3]विवेकेनाप्रतिभासमाने पयसि भवति सलिलमिहेति प्रत्ययः ॥ ६१८ ॥

यच्चोक्तम्—"न तु[4] कार्त्स्न्यैकदेशाभ्यां वृत्तिः क्वचन लक्षिता" ( तत्त्व० ६१४ ) इति तत्राह—कृत्स्नैकदेशशब्दाभ्यामित्यादि । कृत्स्नशब्देन हि यादृशं स्वरूपमनंशम्, किं तथैव नैरंश्येन सर्वावयवेषु तस्य वृत्तिः, यथा

---

१. पा० गा० पुस्तकयोर्नास्ति । २. ०प्रतिभासिते—पा०, गा० ।
३. विवेकिनामप्रति०—पा०, गा० । ४. च—पा०, गा० ।

यथा पात्रादिसंस्थस्य श्रीफलादेर्यथाऽथ वा।
अनेकासनसंस्थस्य चैत्रादेरुपलक्षिता ॥ ६२० ॥

आकाशप्रसाधनम्

समाश्रिताः क्वचिच्छब्दा विनाशित्वादिहेतुतः।
घटदीपादिवद् तच्च किल व्योम भविष्यति ॥ ६२१ ॥

---

कांचेद्भाजनावस्थितस्य श्रीफलादेरुपलक्षितेत्ययमर्थः प्रकाश्यते ? आहोस्विदन्यथा; यथाऽनेकपीठाधिशयितस्य चैत्रादेरुपलक्षितेत्ययमेकदेशशब्देन प्रकाश्यत इति ? यत् किञ्चिदेतत्।

यदप्युद्द्योतकरेणोक्तम्—"एकस्मिन्नवयविनि कृत्स्नैकदेशशब्दप्रवृत्त्यसम्भवादयुक्तोऽयं प्रश्नः—किमेकदेशेन वर्त्तेत, अथ कृत्स्नो वर्त्तेत इति। कृत्स्नमिति खल्वशेषाभिधानम्, एकदेश इति चानेकत्वे सति कस्यचिदभिधानम्, ताविमौ कृत्स्नैकदेशशब्दावेकस्मिन्नवयविन्यनुपपन्नौ" ( द्र०—न्या० वा० ४.२. १०–११ ) इति, तदप्यनेनैव प्रत्युक्तम्। तथा च लोके कृत्स्नः पदं[1] कुण्डे वर्त्तते, एकदेशेन वा—इत्येवं पदादिषु कृत्स्नैकदेशशब्दप्रवृत्तिर्दृश्यत एव। न चेयमुपचरितेति युक्तम्; अस्खलद्गतित्वादिति प्रागभिहितमेतत् ॥६१९-६२०॥

एवं वायुपर्यन्तं चतुर्विधं द्रव्यमपास्तम्। आत्माख्यं तु प्रागेवात्मपरीक्षायां निरस्तम्।

इदानीमाकाशकालदिङ्मनसां प्रतिषेधार्थमाह—समाश्रिता इत्यादि।

तत्राकाशाख्यं तावद् द्रव्यं परेण साध्यते—'अस्याकाशाख्यं द्रव्यं नित्यमेकं भुवि शब्दलिङ्गम्, शब्दोऽस्य गुणत्वाल्लिङ्गम्। प्रयोगः—ये ये विनाशित्वोत्पत्तिमत्त्वादिधर्मोपेतास्ते क्वचिदाश्रिताः, यथा—घटदीपादयः, तथा चामी शब्दाः। तस्मात् क्वचिदाश्रितैरेभिर्भवितव्यम्, योऽसावाश्रयोऽमीषां स सामर्थ्याद् व्योम = आकाशं भविष्यति। [ G. 206 ] तथा ह्ययंशब्दो न पृथिव्यादीनां चतुर्णां गुणो युक्तः; प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्, आश्रयादन्यत्रोपलब्धेश्च। यथोक्तधर्मविपरीता हि स्पर्शवतां गुणा दृष्टाः।

---

१. पदः—पा०, गा०।

### कालसाधनम्

आदित्यादिक्रियाद्रव्यव्यतिरेकनिबन्धनम् ।
परापरादिविज्ञानं घटादिप्रत्ययो यथा ॥ ६२२ ॥
वलीपलितकार्कश्यगत्यादिप्रत्ययादिदम् ।
यतो विलक्षणं हेतुः स च कालः किलेष्यते ॥ ६२३ ॥

### दिक्प्रसाधनम्

पूर्वापरादिबुद्धिभ्यो दिगेवमनुमीयते ।

---

प्रत्यक्षत्वे सतीति विशेषणं पाकजैः परमाणुगतैरनेकान्तत्वपरिहारार्थम् । बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादहङ्कारेण विभक्तग्रहणाच्च नात्मनो गुणः; आत्मगुणानां हि सुखादीनामेतद्वैपरीत्यदर्शनात् । श्रोत्रग्राह्यत्वाच्च न दिक्कालमनसाम् । अतः पारिशेष्याद् गुणो भूत्वाऽऽकाशस्य लिङ्गम् । तच्चाकाशं शब्दलिङ्गाविशेषाद् विशेषलिङ्गाभावादेकं सर्वत्रोपलभ्यमानगुणत्वात् = विभुगुणवत्त्वात्, अनाश्रितत्वाच्च द्रव्यम् । अकृतकत्वान्नित्यमित्येषा प्रक्रिया परेषाम् ॥ ६२१ ॥

आदित्यादीत्यादिना कालसाधनमाह । द्रव्यशब्देन [1]वलीपलितादयो ग्रहीतव्याः । परः पिता, अपरः पुत्रः, युगपत्, चिरम्, क्षिप्रम्, क्रियते, कृतम्, करिष्यते चेति यदेतत् परापरादिज्ञानं तदादित्यादिक्रियाद्रव्यव्यतिरिक्तपदार्थनिबन्धनम्; वलीपलितादिप्रत्ययविलक्षणत्वात्, घटादिप्रत्ययवत् । यो हेतुरस्य स सामर्थ्यात् कालः । तथा हि—न तावद्देशकृतोऽयं परापरादिप्रत्ययः; परदिग्भागावस्थितेऽपि स्थविरे पर इति ज्ञानोत्पत्तेः । तथाऽपरदिग्भागावस्थायिन्यपि पुत्रे—अपर इति । नापि वलीपलितादिकृतः; तत्प्रत्ययविलक्षणत्वात् । नापि क्रियाकृतः, तज्ज्ञानविलक्षणत्वात् । नापि क्रियाकृतः, तज्ज्ञानविलक्षणत्वादेव । तथा च सूत्रम्—"अपरस्मिन्[2] परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि" ( वै० द० २.२.६ ) इति । नित्यत्वैकत्वादयो धर्मा आकाशवदेवास्य बोद्धव्याः ॥ ६२२–६२३ ॥

दिक्प्रसाधनार्थमाह—पूर्वापरादिबुद्धिभ्य इति । [G. 207] मूर्त्तं द्रव्यमवधिं कृत्वा मूर्त्तेष्वेव द्रव्येषु तस्मादिदं पूर्वेण, दक्षिणेन, पश्चिमेन, उत्तरेण,

---

1. वलि०—जै० । 2. अपरं—पा०, गा० ।

मनसः साधनम्

क्रमेण ज्ञानजात्या च मनसोऽनुमितिर्मता ॥ ६२४ ॥
चक्षुरादिविभिन्नं च कारणं समपेक्षते ।
क्रमेण जाता रूपादिप्रतिपत्ती रथादिवत् ॥ ६२५ ॥

आकाशसाधननिरसनम

उपात्तादिमहाभूतहेतुत्वाङ्गीकृतेर्ध्वनेः ।
सिद्धा एवाश्रिताः शब्दास्तेष्वित्याद्यमसाधनम् ॥ ६२६ ॥

---

पूर्वदक्षिणेन, दक्षिणापरेण, अपरोत्तरेण, उत्तरपूर्वेण, अधस्ताद्, उपरिष्टाद्—इति दश प्रत्यया अमी यतो भवन्ति सा दिगिति। तथा च सूत्रम्—"इत इदमिति यतस्तद्दिशो लिङ्गम्" ( वै० द० २.२.१२ ) इति। यत एते विशेषप्रत्ययाः। न च विशेपप्रत्यया आकस्मिका युक्ताः, न च परस्परं मूर्त्तद्रव्यन्यपेक्षाः, इतरेतराश्रयत्वेनोभयाभावप्रसङ्गात्। तस्मादन्यनिमित्तासम्भवाद्दिश एतानि लिङ्गानि। तस्याश्च दिशः कालवदेकत्वविभुत्वादयो गुणा बोद्धव्याः। एकत्वेऽपि दिशः कार्यविशेपात् प्राच्यादिभेदेन नानात्वम्। प्रयोगः—यदेतत् पूर्वापरादिज्ञानं [1]तन्मूर्त्त-द्रव्यव्यतिरिक्तद्रव्यपदार्थनिबन्धनम्, तत्प्रत्ययविलक्षणत्वात्, सुखादिज्ञानवदिति।

मनसो लिङ्गमाह—क्रमेणेत्यादि। युगपदनेकेन्द्रियार्थसन्निकर्षसान्निध्येऽपि क्रमेण ज्ञानोत्पत्तिदर्शनादस्तीन्द्रियार्थव्यतिरिक्तं कारणान्तरम्, यस्य सन्निधानासन्नि-धानाभ्यां ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति। तस्मात् क्रमेण ज्ञानजात्या = ज्ञानोत्पत्त्या, मनसोऽनुमितिः क्रियते। तथा च सूत्रम्—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (न्या० द० १.१.१६) इति। प्रयोगः—येयं रूपादिप्रतिपत्तिः सा चक्षुरा-दिव्यतिरिक्तकारणापेक्षिणी, क्रमेण जायमानत्वात्, रथादिवदिति ॥६२४—६२५॥

उपात्तादीत्यादिना प्रतिविधत्ते। यदि सामान्येनाश्रितत्वमात्रमेषां साध्यते शब्दानाम्, तदा सिद्धसाध्यता हेतोः। तथा हि—शब्दा उपात्तानुपात्तमहाभूत-हेतुका इष्यन्ते। तेषु च भूतेषु तत्कार्यतया समाश्रिता एव; तत्प्रतिबद्धात्म-लाभतया कार्याणां कारणाश्रितत्वात्। उपात्तानि = चित्तचैत्तैः स्वीकृतानि। आदि-

---

१. तन्मूर्तद्रव्यपदार्थ०—पा०; तन्मूर्तद्रव्य( भिन्न )पदार्थ०—गा०।

एकव्यापिध्रुवव्योमसमवायस्तु सिद्ध्यति ।
नैषामन्वयवैकल्याद् अक्रमाद्याप्तितस्तथा ॥ ६२७ ॥

---

शब्देनानुपात्तमहाभूतहेतुकत्वपरिग्रहः । तेष्विति उपात्तादिमहाभूतेषु । इतीति तस्मादित्यर्थः । आद्यमिति । 'समाश्रिताः क्वचिच्छब्दाः' ( तत्त्व० ६२१ ) इत्यादिना यदुक्तम्; तदसाधनम्; सिद्धसाध्यतादोषादिति भावः ॥ ६२६ ॥

अथामूर्तनित्यैकविभुद्रव्यसमवेतत्वेनामीषामाश्रितत्वं विशिष्टमेव साधयितुमिष्टम्, तदा साध्यान्वितस्य दृष्टान्तस्याभावादनैकान्तिकता हेतोरित्येतद्दर्शयति—एकेत्यादि । [ G. 208 ] नैषामिति । सिध्यतीति पूर्वेण सम्बन्धः । प्रतिज्ञायाश्चानुमानविरोधित्वमिति दर्शयति—अक्रमाद्याप्तितस्तथेति । यथोक्तं नभःसमवायित्वमेषां न सिद्ध्यतीति सम्बन्धः । यदि हि नित्यैकनभोद्रव्यसमवेता अमी स्युः, तदा सकृदुत्पन्नानेकशब्दवदतत्काला अपि शब्दा अभिमत एव काले स्युः; अविकलकारणत्वात्, एकाश्रयत्वाच्च । न च नित्यस्य परापेक्षास्तीति प्रतिपादितमेतत् । न चाप्यनुपकारिणः समवायित्वं युक्तम्; अतिप्रसङ्गात् । तदेवमक्रमत्वप्रसङ्गः । आदिशब्देन सर्वपुरुषैर्ग्रहणादिदोषप्रसङ्गश्च । तथा हि—आकाशात्मकमेव श्रोत्रम्, नभश्चैकमेव, ततश्च तत्प्राप्तानां सर्वेषामपि शब्दानां श्रवणं भवेत्, न हि निर्विभागत्वेन तस्यायं प्रतिनियमो युक्तः—इदमात्मीयं श्रोत्रम्, इदं परकीयमिति ।

स्यान्मतम्—'तदाथादृष्टाभिसंस्कृता या कर्णशष्कुली तत्परिच्छिन्नस्यैवाकाशस्य श्रोत्रत्वम्, अत एव न मुखनासिकादिविवरान्तरेण शब्दोपलम्भो जायते, तस्या एव च कर्णशष्कुल्या उपघाताद् बाधिर्यादिर्व्यवस्थाप्यते' इति ? एतदयुक्तमेव; निरंशतयाऽऽकाशस्यैवंविधविभागस्यायोगात् । न च परिकल्पिता अवयवविभागा भाविकवस्तुविभागसंसाध्यामर्थक्रियामारोपवशात् सम्पादयितुमीशते । न हि जलमनल इत्युपचर्यमाणं ज्वलति, दहति वा ।

अथ मतम्—आकाशस्य[1] देश[1] इति संयोगस्याऽव्याप्यवृत्तित्वमुच्यत[2] इति ? एतदपि प्रत्युक्तमेव ।

---

१–१. आकाशस्यैक०—गा० । २. ०वृत्तित्वादुच्यते—गा० ।

काल-दिक्प्रतिविधानम्

विशिष्टसमयोद्भूतमनस्कारनिबन्धनम्
परापरादिविज्ञानं न कालान्न दिशश्च तत् ॥ ६२८ ॥
निरंशैकस्वभावत्वात् पौर्वापर्याद्यसम्भवः ।
तयोः सम्बन्धिभेदाच्चेदेवं तौ निष्फलौ ननु ॥ ६२९ ॥

---

किञ्च — घटकर्णशष्कुल्यादयोऽप्यभिन्नैकव्योमसंसर्गितया समानदेशा भवेयुः । येनैव हि व्योमस्वभावेनैकः संयुज्यते, तेनैवापरेऽपीति, ततश्चाभिमत-देशभाविन एवापरेऽपि घटादयः स्युः; तत्संयुक्तस्वभावाकाशसंयोगित्वात्, तद्देशा-वस्थितघटादिवत् । अत एव शब्दानामप्येकदेशत्वं भवेत्, ततश्च दूरासन्नतरदेश-भेदावस्थाऽतिप्रतीता येयं पदार्थानां केषाञ्चित्, सा विरोधिनी स्यादित्येवमादयो दोषा बहवः प्रसर्पन्ति ॥ ६२७ ॥

कालदिक्साधनयोरपि सामान्येन सिद्धसाध्यता, विशेषेणान्वयासिद्धिर्हेतोः, प्रतिज्ञायाश्चानुमानबाधेति दर्शयति — विशिष्टेत्यादि । विशिष्टसमयः = पौर्वा-पर्यादिनोत्पन्नेष्वेवार्थेषु पूर्वापरादिसङ्केतः, तदुद्भूतो मनस्कारः = आभोगः, [ G. 209 ] स निबन्धनमस्येति तथोक्तम् । अत एव नेतरेतराश्रयदोषः; विशिष्टपदार्थसङ्केतनिबन्धनत्वादस्य ज्ञानस्येति । अतः कारणमात्रे साध्ये सिद्ध-साध्यता, विशेषेण साधनेऽनुमानबाधा, अनन्वयदोषश्च पूर्ववदिति सूचयन् हेतोश्चेष्टविपरीतसाधनाद्विरुद्धतेति दर्शयति — निरंशेत्यादि । तयोरिति दिक्कालयोः। परापरादिज्ञानस्य निरंशैकदिक्कालाख्यपदार्थनिबन्धनत्वं साधयितुमिष्टम्, तच्च न सिध्यति। तथा हि — स्वाकारानुरूपं प्रत्ययमुत्पादयन् विषयो भवति । न च निरंशस्य पौर्वापर्यादिविभागः सम्भवति, येन तत्कृतं पौर्वापर्यादिज्ञानं भवेत् । अत इष्टविपरीतसाधनाद् विरुद्धो हेतुः । सम्बन्धिभेदाच्चेदित्यनेन परस्योत्तरमाशङ्कते ।

अथ मतम्—दिक्कालसम्बन्धिनो भावा बाह्याध्यात्मिकाः प्रदीपशरीरादयः, तेषां पौर्वापर्यादि विद्यते, ततस्तयोरपि दिक्कालयोः सम्बन्धिगतमेतत् पौर्वापर्यादि निर्दिश्यते, तस्मान्न विरुद्धता हेतोरिति भावः ? अत्रोत्तरमाह—एवं तौ

मनसोऽनित्यत्वनिरूपणम्

चक्षुराद्यतिरिक्तं तु मनोऽस्माभिरपीष्यते ।
षण्णामनन्तरोद्भूतप्रत्ययो यो हि तन्मनः ॥ ६३० ॥
नित्ये तु मनसि प्राप्ताः प्रत्यया यौगपद्यतः ।
तेन हेतुरिह प्रोक्तो भवतीष्टविघातकृत् ॥ ६३१ ॥
सौगतापरनिर्दिष्टमनःसंसिद्ध्यसिद्धये ।
साकारमन्यथाऽऽवृत्तं मन्ये सूत्रमिदं कृतम् ! ॥ ६३२ ।

---

निष्फलौ नन्विति । एवं हि कल्प्यमाने तौ दिक्कालौ निष्फलौ स्याताम्; तत्साध्याभिमतस्य कार्यस्य तैरेव सम्बन्धिभिर्निष्पादितत्वात् । तथा हि— कालः पूर्वापरक्षणलवनिमेषकाष्ठाकलामुहूर्ताहोरात्रार्धमासादिप्रत्ययप्रसवहेतुः । दिक् च पूर्वोत्तरादिव्यवस्थाहेतुरिष्यते । अयं च भेदः सकलस्तयोर्न स्वात्मनि विद्यते, भेदेषु पुनरस्तीति व्यर्थैव तत्परिकल्पना ॥ ६२८-६२९ ॥

मनःसाधनहेतोरपि सामान्येन कारणमात्रे साध्ये सिद्धसाध्यतेति दर्शयति— चक्षुरादीत्यादि । विशेषेण तु नित्यैकमनस्साधनेऽनन्वयः प्रतिज्ञायाः, अनुमानबाधा, विरुद्धता च हेतोरिति दर्शयति— नित्ये त्वित्यादि । इष्टविघातकृदिति । चक्षुरादिव्यतिरिक्तानित्यकारणसापेक्षत्वस्य[1] साधनात्[1], अन्यथा नित्यकारणत्वे सत्यविकलकारणत्वात् क्रमोत्पत्तिर्विरुध्येत चेतसाम् ॥ ६३०-६३१ ॥

तामेव च विरुद्धतां हेतोरुपहासपूर्वकं दृढीकुर्वन्नाह— सौगतेत्यादि । [G. 210] एतदेवं मन्ये— सौगततीर्थिकयोरभीष्टस्य मनसः सिद्ध्यसिद्ध्यर्थमिदम् "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (न्या० द० १.१.१६) इति सूत्रम् । एकस्मिन् पक्षेऽकारप्रश्लेषादिति समुदायार्थः ।

अवयवार्थस्तूच्यते — सौगताश्चापरे च तीर्थिकास्तैर्निर्दिष्टे च ते मनसी चेति विग्रहः । तयोर्यथाक्रमं सिद्ध्यसिद्धी[2], संसिद्धिसहिता वाऽसिद्धिः, तदर्थं तन्निमित्तम् । कथं पुनरेकं सूत्रं विरुद्धमर्थद्वयं गमयति ? इत्याह— साकारमित्यादि ।

---

१-१. ०सापेक्षत्वसाधनात्—पा०, गा० ।
२. संसिद्ध्यस्ति—पा०, गा० ।

# गुणपदार्थपरीक्षा

## गुणादीनां निषेधः

द्रव्याणां प्रतिषेधेन सर्व एव तदाश्रिताः
गुणकर्मादयोऽपास्ता भवन्त्येव तथा मताः ॥ ६३३ ।
क्व कस्य समवायश्च सम्बन्धिन्यपहस्तिते ।

---

सह अकारेण वर्त्तत इति । परकीयमनोऽसिद्ध्यर्थम् 'अलिङ्गम्' इति प्रश्लिष्टाकारो निर्देशः । सौगतमनस्सिद्धयेऽन्यथा भवति अनकारमित्यर्थः । साकारत्वानकारत्वे कथमेकस्य सिद्ध्यतः ? इत्याह—आवृत्तमिति । आवृत्तिः = तन्त्रम्[1], न्याय्येति यावत् ॥ ६३२ ॥

इति द्रव्यपदार्थपरीक्षा

गुणादीना निषेधमाह—द्रव्याणामित्यादि ।

गुणकर्मादयो विशेषपर्यन्ता द्रव्याणां प्रतिषेधादेवापास्ताः, तदाश्रितत्वादेषाम् । आश्रयाभावे चाश्रितानां परतन्त्रतयाऽवस्थानुपपत्तेः । तथा मता इति । तथा साक्षात्, पारम्पर्येण वा द्रव्याश्रितत्वेनेष्टाः । तथा हि—गुणकर्मणि साक्षादेव द्रव्याश्रितत्वेनाभीष्टे । तथा च सूत्रम्—"द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्" (वै० द० १.१.१५)। "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणमिति कर्मलक्षणम्" (वै० द० १.१.१६)। एकद्रव्यमिति । एकद्रव्याश्रितमित्यर्थः । गुणास्तु केचिदनेकद्रव्यवर्त्तिनो भवन्ति, यथा—संयोगविभागादयः । सामान्यविशेषाश्च केचिद् द्रव्यवृत्तय एव, यथा—पृथिवीत्वादयः । गुणत्वकर्मत्वादयश्च द्रव्यसम्बद्धगुणकर्मपदार्थवृत्तयः । महासामान्यं तु सत्तारूयं द्रव्यादिपदार्थत्रयवृत्ति । तस्माद् द्रव्ये प्रतिषिद्धे सत्ययत्नेनैव गुणादयोऽपि निषिद्धा भवन्तीति । परिशिष्टपदार्थपरीक्षाफलं द्रव्यपरीक्षायामेव समाप्तमिति दर्शितं भवति ॥ ६३३ ॥

समवायप्रतिषेधस्तर्हि पृथगारब्धव्य इति चेद् ? आह—क्व कस्येत्यादि ।

---

१. तन्त्र—पा०, गा० ।

विशेषप्रतिषेधोऽयं तथापि पुनरुच्यते ॥ ६३४ ॥

परा‍भिमतरूपादिप्रतिषेधः

द्रव्ये महति नीलादिरेक एव यदीष्यते ।
रन्ध्रालोकेन तद्व्यक्तौ व्यक्तिर्दृष्टिश्च नास्य किम् ॥ ६३५ ॥
न च देशविभागेन स्थितो [1]नीलादिरीक्ष्यते ।

---

[G. 211] पञ्चपदार्थवृत्तिरूपो हि समवायो वर्ण्यते। द्रव्यादौ च सम्बन्धिनि पञ्चप्रकारेऽपहस्तिते क कस्य समवायः ! नैव कस्यचित् कचिदित्यर्थः । सर्वेषामाश्रयाश्रितानां प्रतिषिद्धत्वात् तत्र गुणानां तावद् विशेषप्रतिषेधः उच्यते ॥ ६३४ ॥

तत्र "रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुणाः" (वै० द० १.१.५) इति सूत्रम् । [2]च-शब्दाद् गुरुत्वद्रवत्वस्नेहसंस्कारधर्मशब्दाश्च परिगृह्यन्ते[2] । तत्र रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलनवृत्ति । रसो रसनेन्द्रियग्राह्यः पृथव्युदकवृत्तिः । गन्धो घ्राणग्राह्यः पृथिवीवृत्तिः । स्पर्शस्त्वगिन्द्रियग्राह्यः क्षित्युदकज्वलनवायुवृत्तिः । एषां चतुर्णामाद्यानां रूपादीनां प्रतिषेधमाह—द्रव्ये महतीत्यादि । महत्येव हि द्रव्ये समवेतानामुपलब्धिलक्षणप्राप्तत्वम्, अतो महतीत्याह ।

तत्र च द्रव्ये यद्येकमेवानवयवं नीलादि चतुर्विधमिष्यते, तदा सूक्ष्मेणापि कुञ्चिकादिविवरवर्त्तिना प्रदीपाद्यालोकेन त्वपवरकादिस्थितपृथुतरघटादिद्रव्यसमवेतस्य नीलादिरूपस्याभिव्यक्तौ सत्यां सकलस्यैव यावद्द्रव्यवर्त्तिनो रूपादेरभिव्यक्तिरुपलब्धिश्च प्राप्नोति; निरवयवत्वात्। न ह्येकस्यावयवाः सन्ति, येनैकदेशाभिव्यक्तिर्भवेत् । रन्ध्रालोकेनेत्युपलक्षणम् । भुव एकदेशो जलेन गन्धस्याभिव्यक्तौ प्रदेशान्तरेऽप्यभिव्यक्त्युपलब्ध्योः प्रसङ्गः। ज्वालादेराम्रफलादेश्चैकदेशस्य स्पृष्टावास्वादने च तद्द्रव्यसमवायिनस्तावतः स्पर्शस्य रसस्य चोपलब्धिः स्यात् ॥६३५॥

स्यादेतद्—भवत एव सकलस्य नीलादेरुपलब्ध्यभिव्यक्ती ? इत्याह—न

---

१. नीलादिरिष्यते—पा०, गा० ।
२–२. अत्रैव सूत्रे चन्द्रानन्दविरचितवृत्तिरियम् ।

व्यज्यते ... तदा तेन तस्य भेदोऽणुशस्ततः ॥ ६३६ ॥

परामिमतसङ्ख्याप्रतिषेधः

अतद्रूपपरावृत्तगजादिव्यतिरेकिणी ।
न सङ्ख्या भासते ज्ञाने दृश्येष्टा नैव सास्ति तव् ॥ ६३७ ॥
इच्छारचितसंकेतमनस्कारान्वयं त्विदम् ।

---

चेत्यादि । तदेति तस्मिन्काले । तेनेति रूपालोकेन । तस्येति नीलादेः । अणुशः स्वभेदेऽङ्गीक्रियमाणे पृथिव्यादिपरमाणुद्रव्यवदणुपरिमाणयोगित्वेन गुणवत्त्वाद् द्रव्यरूपतैव स्यात्, न गुणत्वम् । एवम्भूतानां चाणुशो भिन्नानाम् 'गुणः' इति संज्ञाकरणेन [ G. 212 ] नाम्नि विवादः । न चाणुत्वेऽप्याश्रितत्वाद् गुणत्वं युक्तम्; सदसतोराश्रयानुपपत्तेरतिप्रसङ्गाच्च । तथा हि—अवयविद्रव्यमवयवद्रव्याश्रितमिति तदपि गुणः स्यादिति भावः ॥ ६३६ ॥

तत्रैकादिव्यवहारहेतुरेकत्वादिलक्षणा सङ्ख्या, सा पुनरेकद्रव्या च, अनेकद्रव्या च । तत्रैकसङ्ख्यैकद्रव्या, अनेकद्रव्या तु द्वित्वादिसङ्ख्या । तत्रैकद्रव्यायाः—सलिलादिपरमाण्वादिगतरूपादीनामिव नित्यत्वनिष्पत्तयो बोद्धव्याः । अनेकद्रव्यायास्तु—एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः, अपेक्षाबुद्धिविनाशाद् विनाशः; क्वचिदाश्रयविनाशादिति । इयं च द्विविधाऽपि सङ्ख्या किल प्रत्यक्षत एव सिद्धा । विशेषबुद्धेश्च निमित्तान्तरापेक्षत्वादनुमानतोऽपीति परो मन्यते । तत्रास्याः प्रतिषेधमाह—अतद्रूपेत्यादि । येषु हि समुच्चयादिव्यावृत्तेषु गजादिषु संज्ञा निवेशिता, न तद्व्यतिरेकेणोपलब्धिलक्षणप्राप्ता[2] सङ्ख्या ख्यातास्तीति सा शशविषाणवदसद्व्यवहारविषया । तथा ह्यसौ दृश्यत्वेनेष्टा । तथा च सूत्रम्—"सङ्ख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणि" ( वै० द० ४.१.१२ ) इति ॥ ६३७ ॥

न चापि विशेषबुद्धितः सङ्ख्यासिद्धिरिति दर्शयन्नाह—इच्छारचितेत्यादि । यथा ह्येकं ज्ञानम्, द्वे ज्ञाने—इत्यादौ सङ्ख्यामन्तरेणाप्येकादिबुद्धिर्भवति, एवं घटा-

---

१. यः—पा०, गा० । २. ०र्लक्षण०—पा०, गा० ।

घटाद्येकादिविज्ञानं[1] ज्ञानादाविव वर्तते ॥ ६३८ ॥
अद्रव्यत्वान्न सङ्ख्यास्ति तेषु काचिद् विभेदिनी ।
तज्ज्ञानं नैव युक्तं[2] च भाक्तमस्खलितत्वतः ॥ ६३९ ॥
तद्द्रव्यसमवेताच्चेदेकत्वात् परिकल्प्यते ।
गुणादिष्वेकविज्ञानमेकार्थसमवायतः ॥ ६४० ॥
अस्तु नामैवमेकत्र ज्ञाने [3]द्व्यादिमतिस्तु कुम् ।
एतेष्वपेक्षते हेतुं षट्पदार्थादिकेषु वा ॥ ६४१ ॥

---

दिष्वप्यसहायादिषु पदार्थेष्वेक इत्यादिः स्वेच्छया यः सङ्केतो विहितः, तत्र यो मनस्कारः = आभोगः, तदन्वयमेकादिज्ञानं भविष्यतीत्यनैकान्तिकमेतत् । न हि तेषु ज्ञानादिषु सङ्ख्याऽस्ति; एषामद्रव्यत्वात्, सङ्ख्यायाश्च गुणत्वेन द्रव्याश्रितत्वात् । अथ मतम्---गौणमिदं तेषु, ज्ञानमेकमिवैकम्, साधर्म्यं चात्रासहायत्वादि । तत्राह--[4]तज्ज्ञानमिति । नैव ह्येतज्ज्ञानं भाक्तं युक्तम्; अस्खलद्गतित्वादस्य प्रत्ययस्य । न हि यथा वाहीको गौरिति [ G. 213 ] स्खलति प्रत्ययः—गौरिव गौर्न तु गौरेव, सास्नाद्यभावादिति; न तथायं स्खलतिः—एकमिवैकं ज्ञानादि न त्वेकमेवेति, किं तर्हि ? यादृशी घटादिष्वस्खलिता बुद्धिर्भवति तादृशी ज्ञानादिष्वपि ॥ ६३८–६३९ ॥

स्यादेतत्—न सादृश्यापेक्षमेतज्ज्ञानमुपवर्ण्यते, किन्तु यत्तेषामाश्रयभूतं द्रव्यं तद्गतैकत्वादिकादेकार्थसमवायित्वादेतद्गुणकर्मसमवायादिष्वेकादिज्ञानं भवतीति ? तदेतदाशङ्कयन्नाह—तद्द्रव्येत्यादि ॥ ६४० ॥

अत्रोत्तरमाह— अस्तु नामेत्यादि । यदि हि तद्द्रव्यसमवेतादेकत्वादेरेतज्ज्ञानम्, तदाऽस्तु नामैकत्र ज्ञाने सुखादौ चैकात्मद्रव्यसमवायिन्येकमेकमिति ज्ञानम्, द्वे त्रीणि चत्वारि ज्ञानानीत्यादिज्ञानस्य तु को हेतुः, न हि तत्रैकात्मगतं द्वित्वाद्यस्ति ! यच्चैतदुच्यते—षट्पदार्थाः, सुखदुःखे, इच्छाद्वेषौ, पञ्चविधं कर्म, सामान्यं द्विविधम्—परमपरं च, एको भावः, एकः समवायः इति, तत्र को

---

१. घटेष्वेका०—पा०, गा० । २. तु—पा०, गा० ।
३. व्याप्तिमति—पा० । ४. जै०, पा० पुस्तकयोर्नास्ति ।

एकार्थसमवायादेर्गौणोऽयं प्रत्ययो भवेत्[1] ।
तथा च स्खलितो यस्मान्माणवेऽनलबुद्धिवत् ॥ ६४२ ॥

अविद्धकर्णोक्तसंख्यासाधकप्रमाणम्

गजादिप्रत्ययेभ्यश्च वैलक्षण्यात् प्रसाध्यते ।
सेनाबुद्धिस्तदन्योत्था[2] नीलवस्त्रादिबुद्धिवत् ॥ ६४३ ॥

तत्प्रतिविधानम्

इच्छारचितसंकेतमनस्काराद्युपायतः
तत्रेष्टसिद्धिर्बुद्ध्यादौ संख्यैतेनैव वा भवेत् ॥ ६४४ ॥

---

हेतुः, न हि तत्रैकार्थसमवायिनी सङ्ख्यास्ति । तस्मादव्यापिनीत्वादियमपि कल्पना न युक्ता । किञ्च—एकार्थसमवायोऽन्यो वा स्वमतिपरिकल्पतो हेतुरुच्यते, तथाऽप्येकार्थसमवायादेरयं भवन् प्रत्ययो गौणः स्याद्;. वस्त्वन्तराभावात् । ततस्तु स्खलतिः स्याद्, यथा—माणवकेऽनलप्रत्ययः; तत्प्रवृत्तिनिमित्ताभावात् । न चैवं भवति, तस्मात् पूर्वोक्तदोषावृत्तिरेव[3] ॥ ६४१–६४२ ॥

गजादीत्यादिनाऽविद्धकर्णोक्तं सङ्ख्यासिद्धये प्रमाणमाशङ्कते । स ह्याह—सङ्ख्याप्रत्ययो गजतुरङ्गस्यन्दनादिव्यतिरिक्तनिबन्धनः; गजादिप्रत्ययविलक्षणत्वात्, नीलपटप्रत्ययवदिति । तदन्योत्थेति । तस्माद् गजतुरगस्यन्दनादेरन्यस्तदन्यः, तत उत्थानं यस्या इति विग्रहः ॥ ६४३ ॥

[ G. 214 ] इच्छेत्यादिना प्रतिविधत्ते । गजादिव्यतिरिक्तस्य सङ्केतमनस्कारादेरान्तरस्य निमित्तत्वेनेष्टत्वात्, सिद्धसाध्यतैवं । आदिशब्देन सङ्केतस्मरणादिपरिग्रहः । अथ सङ्केताभोगादिव्यतिरिक्तपदार्थनिबन्धनं साधयितुमभिप्रेतम्, तदानैकान्तिकतेति प्रसङ्गोद्भावनव्याजेन दर्शयति—बुद्ध्यादौ संख्यैतेनैव वा भवेदिति । एतेनैव = 'तत्प्रत्ययविलक्षणत्वात्' इत्यनेन । एका बुद्धिः, द्वे बुद्धी, पञ्च कर्माणीत्यादावपि सङ्ख्या भवेत् = प्राप्नोति । तत्राप्येकादिबुद्धेस्तत्प्रत्ययविलक्षणत्वात् । न च भवति, तस्मादनैकान्तिक इति भावः ॥ ६४४ ॥

---

१. भवन्—पा०, गा० । २. संख्याबुद्धि०—पा०, गा० ।
३. ०दोषानिवृत्तिरेव—पा०, गा० ।

बुद्ध्यपेक्षा च सङ्ख्याया निष्पत्तिर्यदि वर्ण्यते ।
संकेताभोगमात्रेण तद्बुद्धिः किं न सम्मता ॥ ६४५ ॥

परामिमतपरिमाणाख्यगुणनिषेधः

महद्दीर्घादिभेदेन परिमाणं यदुच्यते ।
तदप्यर्थे तथा रूपभेदादेव न किं मतम् ॥ ६४६ ॥

---

किञ्च—याऽनेकद्रव्या द्वित्वादिसङ्ख्या, तस्या येयमेकत्वेभ्योऽनेकबुद्धिसहितेभ्यो निष्पत्तिर्वर्ण्यते भवद्भिः सा, निर्निबन्धनेति दर्शयति—बुद्ध्यपेक्षा चेत्यादि । मात्रग्रहणमेकत्वद्वित्वादितत्सामान्यतत्सम्बन्धज्ञानव्यवच्छेदार्थम् । तद्बुद्धिरिति । सङ्ख्येयेषु द्वे त्रीणि चत्वारीत्यादिका बुद्धिः संकेताभोगमात्रेण किं न सम्मता । एवं ह्यदृष्टसामर्थ्यस्य हेतुत्वं न कल्पितं स्याद्, अन्यथा हि हेतूनामनवस्था भवेत् । तथा हि—अपेक्षया बुद्धिसद्भावे भावात्[1] तद्गतान्वयव्यतिरेकानुविधानात् सैव कल्पयितुं युक्ता; अन्यथा हि हरीतकीं प्राप्य देवता विरेचयन्तीत्यपि कल्पनीयं भवेत् । नापि समुच्चयादिव्यावृत्तपदार्थव्यतिरेकेणोपलब्धिलक्षणप्राप्ताऽभिमता द्वित्वादयो दृश्यन्ते सञ्चच्छन्ते वा; एकस्यानेकस्मिन् वृत्तेः प्रतिषिद्धत्वात् । सामान्यसमवाययोश्च निषेत्स्यमानत्वादिति भावः ॥ ६४५ ॥

महदित्यादिना परिमाणप्रतिषेधमाह—महदित्यादि[2] । परिमाणव्यवहारकारणं परिमाणम् । तच्चतुर्विधम्—महद्, अणु, दीर्घम्, ह्रस्वमिति । तत्र महद् द्विविधम्—नित्यम्, अनित्यं च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम् । अनित्यं त्र्यणुकादिद्रव्येषु । तथाऽण्वपि द्विविधम्—नित्यमनित्यं च । नित्यं परमाणु मनःसुपरिमण्डललक्षणम् । [G. 215] अनित्यं द्व्यणुक एव । कुवलामलबिल्वादिषु च महत्त्वपि तत्प्रकर्षाभावमपेक्ष्य भाक्तोऽयं व्यवहारः । यादृशं ह्यामलके महत्परिमाणम्, न तादृशं कुवल[3] इति । एवमन्यत्रापि योज्यम् ।

अत्र त्र्यणुकादिषु वर्त्तमानयोर्महत्त्वदीर्घत्वयोर्द्व्यणुके चाणुत्वह्रस्वत्वयोः को विशेषः ? उच्यते; तत्रास्ति महत्त्वदीर्घत्वयोः परस्परतो विशेषः, महत्सु

---

१. पा०, गा० पुस्तकयोर्नास्ति ।  २. पा०, गा० पुस्तकयोर्नास्ति ।
३. बदर इत्यर्थः ।

दीर्घा प्रासादमालेति महती वेद्यते यथा।
न हि तत्र तथारूपं परिमाणं प्रकल्पितम् ॥ ६४७ ॥
एकार्थसमवायेन तथा चेद् व्यपदिश्यते।

---

'दीर्घमानीयताम्', दीर्घेषु च 'महदानीयताम्' इति व्यवहारभेददर्शनात्। अणुत्वह्रस्वत्वयोस्तु विशेषस्तद्दर्शिनां योगिनां प्रत्यक्ष इत्येषा परेषां प्रक्रिया। एतच्च महदादि रूपादिभ्योऽर्थान्तरत्वेन सिद्धम्; तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वात्, सुखादिवदिति परो मन्यते। तत्र यदि तावद्रूपादिविषयेन्द्रियबुद्धिविलक्षणप्रत्यक्षप्रत्ययग्राह्यत्वादिति हेत्वर्थोऽभिप्रेतः, तदा हेतोरसिद्धता। न हि तथातथाऽवस्थितरूपादिपदार्थव्यतिरेकेण महदादिपरिमाणमिन्द्रियबुद्धौ प्रतिभासमानमुपलक्ष्यते।

अथ अणु, महदादीत्येवं या विकल्पिका बुद्धिः सा तत्प्रत्ययविलक्षणा बुद्धिरभिप्रेता ? एवमप्यनैकान्तिकता हेतोः, विपक्षे बाधकप्रमाणाभावाद्। न ह्यस्याः परमार्थतः किञ्चिदपि ग्राह्यमस्ति; साभिजल्पत्वात्। केवलं तेष्वेव रूपादिष्वेकदिङ्मुखादिप्रवृत्तेषु दृष्टेषु तद्विलक्षणेभ्यो रूपादिभ्यो भेदप्रतिपादनाय कृतसमयानुरोधान्महदित्यध्यवस्यन्ती जायत इति नातो वस्त्वन्तरसिद्धिः। अत एव चाऽस्या न रूपादिव्यतिरिक्तमवसेयमस्तीत्यसिद्धतापि हेतोः। प्रतिज्ञायाश्च प्रत्यक्षबाधा; प्रत्यक्षत्वेनेष्टस्य महदादे रूपत्वादिव्यतिरेकेणानुपलम्भात्। तस्मात्तदपि परिमाणमर्थे रूपादावेकदिङ्मुखादिप्रवृत्ते तस्यार्थस्यातथोद्भूताद् भेदमाश्रित्य किं न तादात्म्येनेष्टम्! एवं ह्यदृष्टायुक्तपदार्थकल्पना न कृता स्यादित्येवकारेण दर्शयति। तथा हि—एकदिङ्मुखप्रवृत्ते भूयसि रूपादिके दृष्टे स्पृष्टे वा दीर्घमिति व्यवहरन्ति। तदपेक्षया चाल्पीयसि समुत्पन्ने ह्रस्वमिति। एवं महदादिष्वपि योज्यम्। रूपादिनिषेधवच्चैकानेकविकल्पाभ्यां महदादिनिषेधो वाच्यः॥ ६४६ ॥

अपि च साध्याभावेऽपि हेतोर्वृत्तिदर्शनादनैकान्तिकता स्फुटतरेति दर्शयन्नाह—दीर्घेत्यादि। [G. 216] तथा हि—असत्यपि भवत्परिकल्पिते महत्त्वादौ प्रासादमालादिषु महदादिप्रत्ययप्रसूतिरनुभूयते। न चेत्थं शक्यं वक्तुम्—यत्रैव प्रासादादिषु मालाख्यो गुणः समवेतस्तत्र महत्त्वादिकमपि, तेनैकार्थसमवाय-

न महत्त्वं न दैर्घ्यं च धामस्वस्ति विवक्षितम् ॥ ६४८ ॥
प्रासादश्चेष्यते योगो गुणः सोऽपरिमाणवान् ।
न तस्यास्त्यपरा माला नोपचाराश्रयोऽप्यतः[1] ॥ ६४९ ॥

---

बलात्, तथा महतीत्येवं तन्मालादि व्यपदिश्यत इति । तदेतदपि स्वसमयविरुद्धमिति दर्शयन्नाह—न महत्त्वमित्यादि । धामस्विति प्रासादेषु । विवक्षितमिति क्रोशार्धक्रोशादि परिमाणम् ॥ ६४७–६४८ ॥

कस्मान्नास्ति ? इत्याह- प्रासादश्चेष्यत इति । तथा हि—भवद्भिः प्रासादः संयोगात्मको गुण इष्यते, नावयविद्रव्यम्; विजातीयद्रव्यानारम्भात् । स च गुणः परिमाणवान्न भवति; 'निर्गुणा गुणाः' इति समयात् । ततश्च गुणानां प्रासादादीनां मालाख्यस्यापरस्य गुणस्याभावात् प्रासादमालेत्येतदेव न स्यात्, कुतो महती, ह्रस्वेत्यादि भविष्यति । तथा हि—माला सङ्ख्यास्वभावेष्टा, सङ्ख्या च गुणत्वाद् द्रव्यमेवाश्रिता, न गुणम् । [2]अथाऽप्यवयविस्वभावा मालेष्यते, [3]तदापि द्रव्यस्य द्रव्यमेवाश्रयः, न गुण इति न मालायाः प्रासादाश्रयत्वं युक्तम् । अथ जातिस्वभावा मालाऽङ्गीक्रियते ? एवमपि जातेस्सर्वात्मना प्रत्याश्रयपरिसमाप्तत्वादेकोऽपि प्रासादः 'माला' इत्युच्येत, वृक्षवत् । यथोक्तम्—

"गेहो यद्यपि संयोगस्तन्माला किन्नु तद्भवेत् ।
जातिश्चेद् गेह एकोऽपि मालेत्युच्येत वृक्षवत् ॥"

( प्र० वा० २.१५५–५६ ) इति ।

एका, दीर्घा, महतीत्यादिव्यपदेशानुपपत्तिश्च तदवस्थैव मालायाम्, तदाश्रये च प्रासादादौ; एकत्वादिगुणाभावात् । काष्ठादिषु च विवक्षितदैर्घ्याद्यसद्भावात् । बह्वीषु च प्रासादमालासु माला मालेत्यनुगामी व्यपदेशो न स्यात्; जातेरजातितः । यदाह—

"मालाबहुत्वे तच्छब्दः कथं जातेरजातितः" (प्र० वा० २.१५६) इति ।

---

1. नोपचारस्य चाश्रयः—पा०, गा० । 2. यदा—पा०, गा० ।
3. तथापि—पा०, गा० ।

अपोद्धारव्यवहृतः पृथक्त्वाद्या तु कल्प्यते ।
कारणात् सा विभिन्नात्मभावनिष्ठा न किं मता ॥ ६५० ॥

पृथक्त्वाख्यगुणप्रतिषेधः

परस्परविभिन्ना हि यथा बुद्धिसुखादयः ।

---

अत उपचारस्याश्रयः = परिग्रहः, यद्वाऽऽश्रयः = अधिष्ठानं न युक्तमित्यर्थः । न चाप्ययं स्खलद्गतिर्मालादिषु महत्त्वादिप्रत्ययः । तस्मान्नौपचारिको युक्तः, न हि मुख्यप्रत्ययाविशिष्टो गौणो युक्तः; अतिप्रसङ्गात् । यदाह—

"मालादौ च महत्त्वादिरिष्टो यश्चौपचारिकः ।
मुख्यविशिष्टविज्ञानग्राह्यत्वान्नौपचारिकः ॥"

( प्र० वा० २.१५७ ) इति ॥ ६४९ ॥

तत्र 'इदमस्मात् पृथक्' इति यद्वशात् संयुक्तमपि द्रव्यमपोद्ध्रियते, तदपोद्धारकारणं पृथक्त्वं नाम । तच्च घटादिभ्योऽर्थान्तरं तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वादिति पूर्ववत् [ G. 217 ] परस्याभिप्रायः । तदत्रापि परिमाणवदसिद्धत्वमनैकान्तिकत्वं च हेतोरिति हृदि कृत्वाह—अपोद्धारेत्यादि । तथा हि—अत्रापि रूपादिभ्यो विवेकेन नापरमर्थान्तरं पृथक्त्वं नाम प्रत्यक्षबुद्धौ प्रतिभासत इति न सिद्धमस्य तत्प्रत्ययविलक्षणबुद्धिग्राह्यत्वम् । अत एव च तस्योपलब्धिलक्षणप्राप्तत्वेनाभिमतस्यानुपलम्भादसत्त्वमेव । न चापि पृथगिति विकल्पप्रत्ययवशात् तस्य सिद्धिः । त एव हि रूपादयो भावाः स्वस्वभावस्थितेः सर्वभावानां सजातीयविजातीयव्यावृत्तात्मतयाऽपेक्ष्यमाणाः पृथगिति व्यवहारनिबन्धनं भविष्यन्तीति नातो वस्त्वन्तरसिद्धिः । तस्माद्येयमपोद्धारव्यवहृतिः = व्यवहारः, पृथक्त्वात् कारणाद् वर्ण्यते, सा किमिति समानासमानजातीयविभिन्नस्वभावभावनिष्ठा न मता । तन्निष्ठैव युक्तेति भावः । एतेनानैकान्तिकत्वं हेतोर्दर्शितम् । विभिन्न आत्मा स्वभावो येषां ते तथोक्ताः । ते च ते भावाश्च, तेषु निष्ठा = परिसमाप्तिर्यस्या इति विग्रहः ॥ ६५० ॥

साध्यविपक्षेऽपि हेतोर्वृत्तिर्दृश्यतेति दर्शयन्नाह—परस्परविभिन्ना हीत्यादि । न हि सुखादिषु गुणेषु पृथक्त्वं गुणोऽस्ति, निर्गुणत्वाद् गुणानाम् ।

पृथग्वाच्यास्तदङ्गं च विनाऽन्येन तथाऽपरे ॥ ६५१ ॥

संयोगविभागयोः प्रतिषेधः

यौ संयोगविभागौ च द्रव्येषु नियतौ परैः ।
संयुक्तादिधियो हेतू कल्पितौ तावनर्थकौ ॥ ६५२ ॥

अत्र उद्द्योतकरमतम्

बीजोदकपृथिव्यादि सर्वदा कार्यकारकम् ।
प्रसक्तं निर्विशेषत्वात् संयोगासम्भवेन तु ॥ ६५३ ॥

---

अथ च परस्परव्यावृत्तात्मतया ते पृथगिति वाच्या भवन्ति । तस्याश्चापोद्धारव्यवहृतेरङ्गं निमित्ततां प्रतिपद्यन्ते । तथाऽपरेऽपि घटादयो द्रव्याभिमता विनाऽन्येन = स्वव्यतिरिक्तेन पृथक्त्वनाम्ना गुणेन भविष्यन्तीति । न चापि तेषु भाक्तोऽयं प्रत्ययः; मुख्यप्रत्ययाविशिष्टत्वादिति भावः । यद्वा—अपोद्धारव्यवहृतिं विभिन्नात्मपदार्थनिबन्धनां दर्शयन् प्रतिज्ञाया अनुमानबाधामाह—परस्परेत्यादि । प्रयोगः—ये परस्परव्यावृत्तात्मानः, ते न स्वव्यतिरिक्तपृथक्त्वसमाश्रयाः, यथा—सुखादयः । परस्परव्यावृत्तात्मानश्च घटादय इति स्वभावहेतुः । एकस्यानेकवृत्त्यसम्भवः, समवायस्य निषेत्स्यमानत्वात् सम्बन्धानुपपत्तिः, सुखादिषु तद्व्यवहाराभावप्रसङ्गश्च बाधकं प्रमाणम् ॥ ६५१ ॥

तत्र संयोगविभागयोर्दूषणार्थमाह—यावित्यादि । [ G. 218 ] यथाक्रमं द्रव्येषु संयुक्तविभक्तप्रत्ययहेतू अप्राप्तप्राप्तानां प्राप्त्यप्राप्तिस्वभावावन्यतरोभयकर्मजौ च संयोगविभागजौ च संयोगविभागाविति परप्रक्रिया । एतच्च प्रक्रियामात्रमेव, न त्वनयोर्वस्तुसत्त्वसिद्धौ किञ्चन प्रमाणमस्तीत्यतोऽनर्थकावेतौ कल्पितौ परैः । प्रयोगः—यस्य न किञ्चित् साधकं प्रमाणमस्ति न तत् प्रेक्षावतां सद्व्यवहारविषयः, यथा—वन्ध्यासुतादि, नास्ति च संयोगविभागयोः साधकं प्रमाणं परेषामिति व्यापकानुपलब्धेः ॥ ६५२ ॥

[1]बीजोदकेत्यादिनोद्द्योतकरमतोपदर्शनाद्धेतोरसिद्धतामाशङ्कते । स ह्याह—यदि संयोगो नार्थान्तरं भवेत्तदा क्षेत्रबीजादयो निर्विशिष्टत्वात् सर्वदैवाङ्कुरादि कुर्युः,

---

१. बीजोदकेनेत्यादि०—जै० ।

क्षेत्रबीजजलादीनि सापेक्षाण्यात गम्यते ।
स्वकार्यंकरणान्नित्यं दण्डचक्रोदकादिवत् ॥ ६५४ ॥
यस्तैरपेक्ष्यते भावः स संयोगो भविष्यति ।
सविशेषणभावाच्च भिन्न एवेति गम्यते ॥ ६५५ ॥
संयुक्ते आहरेत्युक्ते संयोगं प्रेक्षते ययोः ।
तदन्यपरिहारेण ते एवाहरति ह्ययम् ॥ ६५६ ॥
निरन्तरमिदं वस्तु सान्तरं चेदमित्ययम् ।
बुद्धिभेदश्च केनैष विद्यते तौ [1]न चेदिह ॥ ६५७ ॥
या चेयं सान्तरे बुद्धिर्नैरन्तर्यावसायिनी ।
निरन्तरेऽपि या चान्या मिथ्याबुद्धिरियं द्विधा ॥ ६५८ ॥

---

न चैवम् । तस्मात् सर्वदा कार्यानारम्भात् क्षेत्रादीन्यङ्कुरादिकार्योत्पत्तौ [2]कारणान्तर-सापेक्षाणि, यथा मृत्पिण्डदण्डसलिलसूत्रादयो घटादिकरणे कुम्भकारादिसापेक्षाः । योऽसावपेक्ष्यः स संयोग इति सिद्धम् । किञ्च—योऽसौ संयोगो द्रव्ययोः स विशेषणभावेन प्रतीयमानत्वात्ततोऽर्थान्तरत्वेन प्रत्यक्षत एव सिद्धः । तथा हि—कश्चित् केनचित् संयुक्ते द्रव्ये आहरेत्युक्ते ययोरेव द्रव्ययोः संयोगमुपलभते ते एवाहरति, न द्रव्यमात्रम्; अन्यथा यत्किञ्चिदाहरेत् । एतच्च सर्वं विपर्ययाद् विभागसाधनेऽपि योज्यम् ॥ ६५३—६५६ ॥

[ G. 219 ] अपि चाविशिष्टेऽपि निरन्तरमिदं वस्तु सान्तरमिदमिति बुद्धिभेदः कथं युज्यते, यद्येतौ संयोगविभागाविह वस्तुन्यर्थान्तरभूतौ न स्याताम् । न हि विशेषप्रत्ययो वस्तुविशेषमन्तरेण सम्भवी भवितुमर्हति; सर्वदा सर्वत्र भाव-प्रसङ्गात् ॥ ६५७ ॥

किञ्च येयं दूरतरावस्थितेऽपि धवखदिरादौ विदूरदेशवर्त्तिनः पुंसो निरन्तरा-वसायिनी बुद्धिरुदयमासादयति, या चेयमीषच्चरुशिखरावलग्ने बलाकादौ निरन्तरे-ऽपि सान्तरत्वमिवावस्यन्ती जायतेऽन्या, सेयं द्विविधाऽप्यतस्मिंस्तथारूपेण प्रवृत्तत्वान्मिथ्याबुद्धिः । न च मिथ्याधीर्मुख्यपदार्थानुभवमन्तरेण क्वचिदुपजायते ।

---

1. च—पा०, गा० । 2. कार्यान्तर०—पा०, गा० ।

मिथ्याबुद्धिश्च सर्वैव प्रधानार्थानुकारिणी ।
प्रधानं चेह वक्तव्यं तदुक्तौ तौ च सिद्ध्यतः ॥ ६५९ ॥
कुण्डलीति मतिश्चेयं किन्निमित्तोपजायते ।
नरकुण्डलभावान्नो सर्वदा तत्प्रसङ्गतः ॥ ६६० ॥
अन्यत्र दृष्टभावस्य निषेधोऽन्यत्र युज्यते ।
संयोगश्च न[1] चेद्[1]दृष्टः स कथं प्रतिषिध्यते ॥ ६६१ ॥
चैत्रोऽकुण्डल इत्येवं तस्मादस्त्येव वास्तवः ।
यन्निषेधविधानादि विभागेन प्रवर्त्तते ॥ ६६२ ॥

---

न ह्यननुभूतगोदर्शनस्य गवयपदार्थदर्शनात् गौरयमिति विभ्रमो भवति। तस्मादवश्यं कश्चिन्मुख्यः पदार्थोऽस्या विभ्रमधियो निबन्धनमभिधानीयः, तस्याभिधाने च तौ संयोगविभागौ सिध्यतः । न हि तद्व्यतिरेकेणान्यदस्या बुद्धेर्निबन्धनमुपपादयितुं शक्यते ॥ ६५८-६५९ ॥

अपि च—'कुण्डली देवदत्तः' इति मतिरियमुपजायमाना किन्निबन्धनोपजायत इति वचनीयम्। न च [2]पुरुषकुण्डलमात्रभाविनी भवितुमर्हति; सर्वदा तत्र देवदत्त-कुण्डलयोस्तस्याः सद्भावप्रसङ्गात् । किञ्च—यदेव केनचित् क्वचिदुपलब्धसत्त्वं तस्यैवान्यत्र विधिप्रतिषेधमुखेन [3]लोके [3]व्यवहारप्रवृत्तिर्दृष्टा । यदि भवता संयोगो न कदाचिदुपलब्धः, तत्कथमस्य 'चैत्रोऽकुण्डलः, कुण्डली च' इत्येवं विभागेन व्यवहारो भवेत् । तथा हि—अत्र 'चैत्रोऽकुण्डली' इत्यनेन न कुण्डलं प्रतिषिध्यते; तस्य देशकालभेदेन सत्त्वाध्यासितमूर्त्तेः [ G. 220 ] प्रतिषेद्धुमशक्यत्वात् । नापि चैत्रस्य; तत्तुल्ययोगक्षेमत्वात् । तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिषिध्यते । तथा 'चैत्रः कुण्डली' इत्यनेनापि विधिवाक्येन चैत्रकुण्डलयोर्नान्यतरस्य विधानम्; तयोः सिद्धत्वात् । पारिशेष्यात् संयोगस्यैवाप्रतीतस्य विधेर्ज्ञायते । तस्मादस्त्येव संयोगादिर्वास्तवः, यद्वशाच्चैत्रः कुण्डली न भवतीत्यादिनिषेधविधानादि प्रविभक्तमेव प्रतीयते। आदिशब्देन विशेषणत्वेनोपादानमित्यादि पूर्वोक्तपरिग्रहः ॥ ६६०-६६२ ॥

---

१-१. भवेद्—पा०, गा० । २. पुरुषकुण्डलभावमात्र०—पा०, गा० ।
३-३. लोकव्यवहार—पा०, गा० ।

उद्द्योतकरखण्डनम्

उच्यते क्षणिकत्वेन नाविशेषा जलादयः ।
सत्त्वेऽप्यव्यवधानादि तेऽपेक्षन्ते दशान्तरम् ॥ ६६३ ॥
संयोगमात्रसापेक्षा यदि तु स्युर्जलादयः ।
योगानन्तरमेव स्यात् कार्यमन्तेन[1] वा भवेत् ॥ ६६४ ॥

---

उच्यत इत्यादिना प्रतिविधत्ते । यदुक्तम्—'अविशेषाद्बीजादयः सदैव कार्यं कुर्युः' ( तत्त्व० ६५३ ) इति, तस्याविशिष्टत्वं बीजादीनामसिद्धम्, क्षणभङ्गितया सर्वभावानां विशिष्टावस्थानामेव जनकत्वात् । यच्चोक्तम्—"क्षेत्रबीजादि" ( तत्त्व० ६५४ ) इत्यादि, तत्रापि सामान्येन सापेक्षत्वमात्रे साध्ये सिद्धसाध्यतेति दर्शयति—सत्त्वेऽपीत्यादि । इष्यन्त एवास्माभिरव्यवधानाद्यवस्थान्तरसापेक्षा बीजादयोऽङ्कुरादिकार्यनिर्वर्तनसमर्था विद्यमानत्वेऽपीति सिद्धसाध्यता । तत्राविद्यमाना व्यवधानादयो यत्र देशान्तरेऽवस्थाविशेषे तत्तथोक्तम् । आदिशब्देन विरोधिप्रत्ययप्रतिघातादिकार्योत्पत्तिबन्धकं नास्तीत्यर्थः । यत्रावस्थान्तरे व्यवधानम्, दूरदेशावस्थानम्, विरोधिना प्रतिहतिः—इत्यादिकार्योत्पत्तिप्रतिबन्धकं नास्तीत्यर्थः । अवस्थायाश्च स्वभावाव्यतिरेकान्नार्थन्तरभूतसंयोगसिद्धिः । अथ भवदभिमतसंयोगाख्यपदार्थान्तरसापेक्षत्वं साधयितुमिष्टम्, तदा तथाविधेन धर्मेण हेतोरन्वयासिद्धेरनैकान्तिकता, दृष्टान्तस्य च साध्यविकलतेति भावः ॥६६३॥

स्यादेतत्, कथमिदमवगम्यते—अवस्थान्तरविशेषसापेक्षाः क्षित्यादयोऽङ्कुरादिकार्यप्रसवहेतवः, न पुनरर्थान्तरभूतसंयोगसापेक्षाः, येन सामान्येन सापेक्षत्वमात्रे साध्ये सिद्धसाध्यता भवेद्भवतः ? इत्याशङ्क्याह—संयोगमात्रेत्यादि ।

यदि हि संयोगमात्रसापेक्षाः स्युः, तदा प्रथमोपनिपात एव क्षित्यादिभ्योऽङ्कुरादिकार्योदयप्रसङ्गः; पश्चाद्वदविकलकारणत्वात् । अथ प्रथमोपनिपाते न भवति पश्चादप्यनुत्पत्तिप्रसङ्गः । [ G. 121 ] पूर्ववदजनकावस्थायां विकलकारणतया[2] निर्विशिष्टत्वात् । न च क्षित्यादीनामनुपकारिणि संयोगेऽपेक्षा युक्तिमती; अतिप्रसङ्गात् । न चापि संयोगानां कादाचित्कत्वं युक्तम् ; तत्कारणानां क्षित्यादीनां नित्यं सन्निहितत्वात् । अथ तत्रापि संयोगे जन्ये क्षित्यादीनां कर्मादिसापेक्षत्व-

---

१. कार्यमेतेन—पा०; गा० । २. विकलकारणताया—पा०, गा० ।

प्राप्तावस्थाविशेषे हि नैरन्तर्येण जातितः ।
ये पश्यत्याहरत्येष वस्तुनी ते तथाविधे ॥ ६६५ ॥
विच्छिन्नमन्यथा चैव जातमेति निमित्तताम् ।
सान्तरानन्तरज्ञाने गेहविन्ध्यहिमाद्रिवत् ॥ ६६६ ॥

---

क्षिप्यते ? न; तत्रापि तुल्यपर्यनुयोगत्वात् । तथा हि—तदपि कर्म कस्मान्न जनयतीति पर्यनुयोगे किं वक्तव्यं स्यात् ? तत्कारणनोदनाभावादिति चेत् ? तस्यापि कस्मादभाव इति नित्यकारणाभ्युपगमे सर्वत्र तुल्यः पर्यनुयोगः । यस्य तु सर्वमेवानित्यं वस्तु, तस्यानादित्वाद्धेतुपरम्परायाः सर्वभावानां सकृदुत्पत्तिप्रसङ्गो न भवति; पूर्वपूर्वकारणप्रतिबद्धत्वादुत्तरेषाम् । तेषां च सर्वेषां युगपत् कारणवैकल्येनासन्निधानात् । तस्माद्भवत एव दर्शनेऽङ्कुरादिकार्यप्रसवहेतुत्वं क्षित्यादीनां सर्वदा प्रसज्यत इति न संयोगार्थान्तरसापेक्षाः क्षित्यादय इति सिद्धम् ॥ ६६४ ॥

यच्चोक्तम्—"सविशेषणभावाच्च" ( तत्त्व० ६५५ ) इत्यादि, तत्राह—प्राप्तावस्थेत्यादि । न हि संयुक्तपदार्थान्तरभूतः संयोगः प्रतिपत्तुर्दर्शनपथमवतरति, येन तद्दर्शनाद् विशिष्टे[1] द्रव्ये आहरति, किं तर्हि ? प्राग्भाविनी या[2] सान्तरजातावस्था[2] ततो विशिष्टे ये निरन्तरोत्पन्ने वस्तुनी ते एव संयुक्तशब्दवाच्ये, अवस्थाविशेषे प्रसाधितत्वात् संयोगशब्दस्य । तेन यत्र तथाविधे वस्तुनी संयोगशब्दविषयभावापन्ने पश्यति, ते एवाहरति नान्ये, न हि शब्देनाबोधितेऽर्थे शब्दात् प्रवर्त्तते प्रेक्षावान् ॥ ६६५ ॥

यच्चोक्तम् "निरन्तरमिदम्" (तत्त्व० ६५७) इत्यादि, तत्राह—विच्छिन्नमित्यादि । वस्त्वन्तरमेव तथोत्पद्यमानं बुद्धिभेदनिबन्धनम्, अतोऽनैकान्तिकमेतदिति समुदायार्थः । तत्र विच्छिन्नं यज्जातं वस्तु तत् सान्तरबुद्धेर्निमित्ततामेतीति सम्बन्धः । अन्यथा चेति अविच्छिन्नम्, यज्जातमिति सम्बन्धः । गेहविन्ध्यहिमाद्रिवदिति । अनयोरेव यथायोगमुदाहरणम् । न ह्यविच्छेदेनोत्पन्नयोः स्वयं संयोगात्मनोर्गेहयोरपरः संयोगो निरन्तरबुद्धेर्निबन्धनमस्ति परमतेऽपि, नापि विच्छेदेनो-

---

1. गा० सम्पादकस्तु 'तद्विशिष्टे' इति पाठं स्वीचिकीर्षति ।
2–2. ये सान्तरजातावस्थे—पा०, गा० ।

मिथ्याबुद्धिर्न सर्वैव प्रधानार्थानुसारिणी ।
साधर्म्यनिरपेक्षापि काचिदन्तरुपप्लवात् ॥ ६६७ ॥
अन्यत्रगतचित्तस्य द्विचन्द्रादिमतिर्यथा ।
अविच्छिन्नादिजातं वा प्रधानमिह विद्यते ॥ ६६८ ॥
कुण्डलीति मतिश्चेयं जातावस्थाविशेषयोः ।
चैत्रकुण्डलयोरेव संयोग इव जायते ॥ ६६९ ॥

त्पन्नयोस्तयोरेव [G. 222] विभागः सान्तरप्रत्ययनिमित्तमस्ति; निर्गुणत्वाद् गुणानामित्युक्तमेतत् । न हि हिमविन्ध्ययोरपि विभागः सान्तरबुद्धेर्हेतुरस्ति; 'प्राप्तिपूर्विका ह्यप्राप्तिर्विभागः' इति समयात् ॥ ६६६ ॥

यच्चोक्तम्—"या चेयं सान्तरे बुद्धिः" (तत्त्व० ६५८) इत्यादि, तत्राह—मिथ्येत्यादि । 'सर्वा मिथ्याबुद्धिः साधर्म्यग्रहणादुपजायते' इत्यसिद्धमेतत्; कस्याश्चित् साधर्म्यमनपेक्ष्यापीन्द्रियवैगुण्यमात्रेणोत्पत्तिदर्शनात् । यथाऽन्यत्रगतविकल्पचेतसोऽपि पुरोऽवस्थितैकचन्द्रादिप्रत्ययमात्रेण[1] तिमिरोपपादितेन्द्रियवैगुण्याच्चन्द्रद्वयाकारानुस्यूता विशदतरप्रविभासिनी कल्पनाकलङ्कानङ्कितैव धीरुपजायते । अन्यत्रगतचित्तस्य इत्यनेन निर्विकल्पत्वं द्विचन्द्रधियो दर्शयति । न हि निर्विकल्पचेतसि साधर्म्यग्रहणमस्ति; तस्य[2] पूर्वापरदृष्टपदार्थैकत्वाध्यवसायात्मकत्वेन पूर्वानुभूतार्थाभिजल्पात्मकत्वात् ।

अथ वा—भवतु नाम पूर्वस्या मिथ्याबुद्धेः प्रधानार्थानुसारित्वम्, तथापि नेष्टसिद्धिर्भवत इति दर्शयति—अविच्छिन्नादिजातं वेत्यादि । आदिग्रहणेन विच्छिन्नजातं वस्तु गृह्यते । तदेव हि वस्तु विच्छिन्नमविच्छिन्नं चोपजायमानमतज्जातीयपरिहारेण प्रवृत्त्यर्थं प्रथमतरं विनिवेशितविभक्ताद्यभिधानतया मुख्यमस्तीति नेष्टसिद्धिर्भवतः ॥ ६६७-६६८ ॥

यदुक्तम्—"कुण्डलीति मतिश्चेयम्" (तत्त्व० ६६० ) इत्यादि, तत्राह—कुण्डलीत्यादि । यथैव हि संयोगश्चैत्रकुण्डलयोर्विशिष्टावस्थाप्राप्तौ सत्यामुपजायते, न हि सर्वदा, तद्वदियमपि कुण्डलीति मतिरवस्थाविशेषनिबन्धना

1. ०चन्द्राविपत्य०—जै० पा० । 2. सविकल्पस्येत्यर्थः ।

सोऽवस्थातिशयस्तादृग्दृष्टोऽन्यत्र निषिध्यते ।
चैत्रे कुण्डल इत्यादौ न संयोगस्त्वदृष्टितः ॥ ६७० ॥

संयोगविभागयोर्बाधकं प्रमाणम्

न पराभिमताद् योगाज्जायते युक्तवस्तुधीः ।
युक्तबुद्धितया यद्वत् प्रासादादिषु युक्तिधीः ॥ ६७१ ॥
अनेकवस्तुसद्भावे जायमानतयाऽथ वा ।
विभक्तानेकतन्त्वादिविषया इव बुद्धयः ॥ ६७२ ॥

---

भवन्ती किमिति सर्वदा भवेद् । जातोऽवस्थाविशेषो ययोश्चैत्रकुण्डलयोस्ते तथोक्ते ॥ ६६९ ॥

यच्चोक्तम्—"अन्यत्र दृष्टभावस्य" ( तत्त्व० ६६१ ) इत्यादि, तत्राह—सोऽवस्थातिशय इत्यादि । [ G. 223 ] यदवस्थाविशेषनिबन्धनेयं मतिरुपवर्णिता, तस्योपलब्धिलक्षणप्राप्तस्यान्यस्यामवस्थायामनुपलम्भे सति प्रतिषेधो विधीयते, न तु भवत्परिकल्पितस्य संयोगस्य; तस्य संयोगिपदार्थविवेकेन क्वचिदपि बुद्धावप्रतिभासनात् । तस्मान्नासिद्धता हेतोः ॥ ६७० ॥

स्यादेतत्—यदि नाम साधकं प्रमाणं संयोगं प्रति न जातमस्माकम्, भवतां तु किं बाधकं प्रमाणम् ? इत्याह— न पराभिमतादित्यादि । प्रयोगः—या संयुक्तबुद्धिः सा भवत्परिकल्पितसंयोगानास्पदवस्तुविशेषमात्रभाविनी, यथा 'संयुक्तौ प्रासादौ' इत्यादौ । संयुक्तबुद्धिश्चेयम् 'चैत्रः कुण्डली' इत्यादाविति स्वभावहेतुः । अथ वा—याऽनेकवस्तुसन्निपाते सत्युपजायते, सा भवत्परिकल्पितसंयोगरहितानेकवस्तुविषयमात्रभाविनी, यथा—प्रविरलावस्थितानेकतन्तुविषयाः प्रत्ययाः । तथा चेयं संयुक्तधीरिति स्वभावहेतुः । युक्तधीरिति । संयुक्तबुद्धिरित्यर्थः । एतदेव प्रमाणद्वयं विभागप्रतिषेधे वाच्यम् । विभक्तबुद्धित्वादनेकपदार्थसन्निधानायत्तोदयत्वाद्वा पराभिमतविभागरहितपदार्थविशेषमात्रनिबन्धना मेषादिषु विभागबुद्धिः, यथा दूरतरावस्थितमेषद्वयविषया विन्ध्यहिमवद्विषया वा धीरिति यथायोगार्थः[1] । अथ किमत्र साध्यविपर्यये हेतोर्बाधकं प्रमाणम्, येन हेतो-

---

१. पा०, गा० पुस्तकयोर्नास्ति ।

विभागेऽपि यथायोगं वाच्यमेतत् प्रमाद्वयम् ।
एकस्यानेकवृत्तिश्च न युक्तेति प्रबाधकम् ॥ ६७३ ॥

परत्वापरत्वयोर्दूषणम्

परापराभिधानादिनिमित्तं यच्च कल्प्यते ।
परत्वमपरत्वं च दिक्कालावधिकं न तत् ॥ ६७४ ॥

---

विपक्षे प्रचाराशङ्का निवर्त्तते ? इत्याह—एकस्येत्यादि । यथैकस्यानेकत्र वृत्तिर्न युक्ता, तथा "तद्धयेकवृत्तिभाजैव रूपेण" ( तत्त्व० ६०६ ) इत्यादिनाऽवयविनिषेधे प्रतानितमिति नेह पुनः प्रतायते ॥ ६७१-६७३ ॥

परत्वापरत्वयोर्दूषणमाह—परापरेत्यादि । [ G. 224 ] 'इदं परम्', 'इदमपरम्' इति यतोऽभिधानप्रत्ययौ भवतः, तत्परत्वमपरत्वं च यथाक्रमं परापराभिध्याननिमित्तं सिद्धम् । आदिशब्देन प्रत्ययो गृह्यते । प्रयोगः—येयं परमपरमिति संवित् सा घटादिव्यतिरिक्तार्थान्तरनिबन्धना; तत्प्रत्ययविलक्षणत्वात्, सुखादिबुद्धिवदिति । तथा हि—एकस्यां दिशिं स्थितयोः पिण्डयोः परमपरमिति बुद्धिप्रवृत्तिर्न तावदियं दिङ्निबन्धना । नापि कालनिबन्धना; एकस्मिन्नपि वर्त्तमाने[1] काले वर्त्तमानयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोर्विभागेन परापरबुद्धिप्रवृत्तेस्तदविशेषेऽपि विशेषादिति भावः । न चान्यदस्या बुद्धेर्निबन्धनमभिधातुं पार्यते । तस्मादन्यनिबन्धनेयं तत् परत्वमपरत्वमिति सिद्धम् । दिक्कालावधिकं न तदिति । दिक्कालप्रदेशसंयुक्तसन्निकृष्टविप्रकृष्टपदार्थावधिकं न भवतीत्यर्थः । दिक्कालशब्दाभ्यां ह्युपचाराद्दिक्कालप्रदेशसंयुक्तयोर्निर्देशः । तथा ह्येतत् परत्वमपरत्वं च द्विविधमपि दिक्कृतं कालकृतं चेति वर्णितं परेण ।

तत्र दिक्कृतस्यैवमुत्पत्तिः—एकस्यां दिश्यवस्थितयोः पिण्डयोरेकस्य प्रष्टुः सन्निकृष्टमवधिं कृत्वा 'एतस्माद्विप्रकृष्टोऽयम्' इति परत्वाधारे बुद्धिरुत्पद्यते, ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वमुपजायते । विप्रकृष्टं चावधिं कृत्वा

---

1. प्रवर्तमाने—पा०, गा० ।

यथा नीलादिरूपाणि क्रमभावव्यवस्थितेः ।
अन्योपाधिविवेकेऽपि तथोच्यन्ते तथाऽपरे ॥ ६७५ ॥

---

'एतस्मात् सन्निकृष्टोऽयम्' इत्यपरत्वाधारे बुद्धिरुत्पद्यते, तामपेक्ष्यापरेण दिक्प्रदेशेन संयोगादपरत्वस्योत्पत्तिः ।

कालकृतयोस्त्वयमुत्पत्तिक्रमः । तथा हि—वर्त्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोर्मध्ये यस्य वलीपलितरूढश्मश्रुतादिनाऽनुमितमादित्योदयास्तमयानां बहुत्वं तत्रैकस्य द्रष्टुर्युवानमवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते, तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः । स्थविरं चावधिं कृत्वा यस्यारूढश्मश्रुतादिनाऽनुमितमादित्योदयास्तमयानामल्पत्वम्, तत्र यूनि सन्निकृष्टबुद्धिरुत्पद्यते, तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरस्योत्पत्तिरिति ।

तदेतत् परत्वापरत्वसाधनमनैकान्तिकम्; साध्यविपक्षेऽपि हेतोर्वृत्तेरिति दर्शयति—यथा नीलादिरूपाणीत्यादि । भावः = उत्पादः, तत्सहिता व्यवस्थितिः, क्रमेण भावव्यवस्थितिरिति विग्रहः । एतदुक्तं भवति—यथा नीलादिषु क्रमेणोत्पादात् कालोपाधेः क्रमेण व्यवस्था, न गुणोपाधेः, परं नीलमपरं नीलमिति परापरव्यपदेशो भवति, असत्यपि परत्वापरत्वलक्षणे गुणे; निर्गुणत्वाद् गुणानाम्, तथा घटादिष्वपि किं नेष्यते । एतेनैतद्दर्शयति—यद्यर्थान्तरनिमित्तत्वमात्रमिह साधयितुमिष्टम्, तदाऽनैकान्तिकता हेतोः; साध्यविपर्ययेऽपि तस्य वृत्तेः ।

अथ नित्यभूतदिक्कालपदार्थहेतुको यो गुणविशेषस्तन्निबन्धनत्वमस्या बुद्धेः साधयितुमिष्टम्, तदा दृष्टान्ताभावः । प्रतिज्ञायाश्चानुमानबाधा । तथा हि—शक्यमिदं कर्तुम्—या परापरबुद्धिः [ G. 225 ] सा परपरिकल्पितगुणरहितार्थमात्रकृतक्रमोत्पादव्यवस्थानिबन्धना; परापरबुद्धित्वात्, यथा रूपादिषु परापरबुद्धिः । परापरबुद्धिश्चेयं घटादिष्विति स्वभावहेतुः । नीलादिष्वेकार्थसमवायादुपचरितेयं परत्वादिबुद्धिः, अतोऽनैकान्तिकता हेतोः, पारम्पर्येण नीलादिष्वपि परत्वादेर्निमित्तभावोपगमात् साध्यविकलता च दृष्टान्तस्येति चेत् ? न; प्रतिविहितमेतदस्खलद्गतित्वान्नौपचारिकत्वं युक्तमिति । स्वाश्रयेऽपि तयोरुपलब्ध्यभावाच्च न तद्बलेन प्रत्ययो युक्तः; तत् कुतो रूपादिषु तन्निबन्धनो भविष्यति ! सुखादिषु वा पूर्वो-

संख्यादिगुणपदार्थसाधने परकीयमाशङ्कनम्

सङ्ख्यायोगादयः सर्वे न द्रव्याव्यतिरेकिणः ।
तद्व्यवच्छेदकत्वेन दण्डादिरिव चेन्मतम् ॥ ६७६ ॥
तेषां संवृतिसत्त्वेन वर्णनादिष्टसाधनम् ।
तत्त्वान्यत्वेन निर्वाच्यं नैव संवृतिसद् यतः ॥ ६७७ ॥

अविद्धकर्णस्याभिमतम्

अथानिर्वचनीयत्वं समूहादेर्निषिध्यते ।
यस्मान्नियतधर्मत्वं रूपशब्दरसादिवत् ॥ ६७८ ॥

---

त्तरकालभाविषु किं कल्प्येत, न हि तत्रैकार्थसमवायोऽस्ति । अपि च—दिक्कालयोः पूर्वं प्रतिषिद्धत्वेनाभावात् तद्धेतुकयोरपि परत्वापरत्वयोरभाव इति कुतस्तन्निमित्तत्वाशङ्का, येन हेतोरनैकान्तिकता भवेत् । न चापि दिक्काल्योर्भक्तः प्रदेशाः सन्ति, येन[1] यत्संयोगादपेक्षाबुद्धिसहितात् परत्वादेरुत्पत्तिः स्यात्, तयोरेकात्मतया निरवयत्वात् । न चोपचरितोऽवयवभेदोऽर्थक्रियानुरोधी युक्तः; वस्तुस्वभावप्रतिबद्धत्वात् तस्याः, उपचरितस्य चालीकत्वादिति नानैकान्तिकता । परकीयस्य च हेतोः पूर्ववदसिद्धत्वं वाच्यम् ॥ ६७४-६७५ ॥

सङ्ख्येत्यादिना परकीयं प्रस्तुतसङ्ख्यादिगुणपदार्थसाधनमाशङ्कते । सर्व एवामी यथोक्ताः सङ्ख्यादयो गुणा न द्रव्यादव्यतिरेकिणः; तस्य द्रव्यस्य तेषां व्यवच्छेदहेतुत्वात् । यो हि यद्व्यवच्छेदकः, नासौ तदव्यतिरेकी, यथा—दण्डादिर्देवदत्तस्येति । तदत्र द्रव्यादव्यतिरेकित्वनिषेधमात्रे साध्ये सिद्धसाध्यता दोषः प्रतिज्ञायाः; संवृतिसतां सर्वेषामवस्तुतया तत्त्वान्यत्वाभ्यामवाच्यतयाऽभीष्टत्वात् ॥ ६७६-६७७ ॥

अथेत्यादिनात्राविद्धकर्णस्योत्तरमाशङ्कते । स ह्याह—"समूहसन्तानावस्थाविशेषांस्तत्त्वान्यत्वाभ्यामवचनीया न भवन्ति; प्रतिनियतधर्मयोगित्वाद्, रूपरसादिवत्" (        ) इति ॥ ६७८ ॥

---

1. पा०, गा० पुस्तकयोर्नास्ति ।

### तत्प्रतिविधानम्

निःस्वभावतया तस्य तत्त्वतोऽम्बरपद्मवत् ।
न सिद्धा नियता धर्माः कल्पनारोपितास्तु ते ॥ ६७९ ॥
तथैवोक्तावनेकान्तो वियत्पद्मादिभिर्यतः ।
अभेदो व्यतिरेकश्च वस्तुन्येव व्यवस्थितः ॥ ६८० ॥
सङ्ख्यादेर्द्रव्यतोऽन्यत्वमेवं चेत् प्रतिपाद्यते ।
आश्रयासिद्धता हेतोः संख्यादीनामसिद्धितः ॥ ६८१ ॥
समुच्चयादिभिन्नं तु द्रव्यमेव तथोच्यते ।

---

[G 226] तदेतन्निःस्वभावतयेत्यादिना प्रतिविधत्ते । यदि हि पारमार्थिकनियतधर्मत्वं हेतुरिष्टः, तदा हेतोरसिद्धता । नहि बौद्धं प्रति सन्तानादीनां संवृतिसतां पारमार्थिकनियतधर्मयोगित्वं सिद्धम् । अथ सामान्येन हेतुः, तदा वियत्पद्मादीनामप्यभावत्वामूर्त्तत्वादयः कल्पिता [1]नियता धर्माः[1] सन्त्येवेत्यनैकान्तिकता हेतोः । तथैवोक्ताविति । सामान्येन [2]विकल्पितानुपाख्यवर्त्तिधर्मापरित्यागेनोक्तौ सत्यामित्यर्थः ।

इतश्चानैकान्तिकत्वमस्य हेतोः, यस्मादभेदोऽनन्यत्वम्, व्यतिरेकोऽन्यत्वम्, एतौ वस्तुन्येव व्यवस्थितौ, नान्यत्र । सन्तानादयश्च प्रज्ञप्तिसत्त्वेनावस्तुसन्तः, तत् कथमेषां वस्तुनः सकाशाद्भेदाभेदौ सिद्ध्यतः । तदेवं प्रथमे प्रयोगे सङ्ख्यादीनां द्रव्यादव्यतिरेकप्रतिषेधमात्रे साध्ये सिद्धसाध्यतेति प्रतिपादितम् ॥६७९-६८०॥

अथापि स्यात्—न व्यतिरेकप्रतिषेधमात्रं साध्यते, किं तर्हि ? 'द्वौ प्रतिषेधौ विधिमेव गमयतः' इति प्रतिषेधद्वयेन द्रव्याद्व्यतिरेकित्वमेव साध्यत इति ? तदेतत् संख्यादेरित्यादिनाऽऽशङ्क्याश्रयासिद्धतेत्यादिना प्रतिषेधयति । एवमिति । न द्रव्याव्यतिरेकिणः, किं तर्हि ? व्यतिरेकिण इत्यर्थः ॥ ६८१ ॥

तदेव सङ्ख्यादेराश्रयस्यासिद्धत्वं दर्शयति—समुच्चयादीत्यादिना । तथोच्यत इति । एको द्वौ बहवः—इत्येवमादिः । स्यादेतत्—द्रव्यात्मकस्यापि सतः सङ्ख्या-

---

१-१. नियतधर्माः—पा०, गा० ।
२. ०नुपाख्यवृत्तिधर्मपरि०—पा०, गा० ।

स्वरूपादेव भेदश्च व्याहतः साधितो भवेत् ॥ ६८२ ॥

देर्भेदः प्रसाध्यते ? इत्याह—स्वरूपादेवेत्यादि । न हि वस्तुनः स्वरूपाद्भेदोऽस्ति; तस्य निःस्वभावत्वप्रसङ्गात् । व्याहत इति परस्परविरुद्धः । भेदाभेदयोः परस्पर-परिहारस्थितलक्षणतया युगपदेकत्र विरुद्धत्वात् ।

एवं तावत् परत्वान्ता गुणाः [ G. 227 ] प्रतिषिद्धाः । बुद्ध्यादयस्तु प्रयत्नान्ता आत्माश्रितत्वेन तद्गुणा इष्टाः । ते चात्मनिषेधादेव निषिद्धा द्रष्टव्याः ।

न चैषामात्माऽऽश्रयो युक्तः, तथा हि—उत्पत्तिहेतुतया चामीषामात्माऽऽश्रयो भवेत् ? स्थितिहेतुतया वा ? न तावदुत्पत्तिहेतुतया; सर्वदैवाविकलकारणतया सुखादीनामुत्पत्तिप्रसङ्गात् । न च परैरनाधेयातिशयस्य सहकारिव्यपेक्षा काचिद-स्तीति शतशश्चर्चितमेतत् । न चापि नित्यस्य कार्योत्पादनसामर्थ्यमस्ति; तस्य क्रमयौगपद्याभ्यां व्याप्तत्वात् । नित्यस्य च क्रमयौगपद्याभ्यामर्थक्रियाविरोधस्य प्रतिपादितत्वात् । नापि स्थितिहेतुतया युक्तः; स्थितेः स्थातुरव्यतिरिच्यमानरूप-त्वात् । तद्धेतुत्वे स्थातृहेतुत्वमेवोक्तं स्यात् । तच्चानन्तरमेव निषिद्धम् । तस्य च स्थातुः [1]अपरिनिष्ठितात्मस्वरूपत्वान्न कश्चिद्धेतुः सम्भवति; तस्य तत्राकिञ्चित्कर-त्वात् । व्यतिरेकेऽपि स्थितेः स्थातुस्तेन न किञ्चित् कृतम्; अर्थान्तरभूतायाः स्थितेः करणात् । ततश्चाकिञ्चित्करः कथं तस्याश्रयो भवेत् । नापि तत्सम्ब-न्धिन्याः स्थितेः करणात् तस्यायमुपकारको युक्तः, तत्सम्बन्धित्वासिद्धेः । न चापि स्थितिं प्रति हेतुत्वं युक्तम्; नित्यस्य क्वचिदपि सामर्थ्यानुपपत्तेरित्युक्तम् ।

किञ्च—असौ स्थाप्यमानो भावः स्वयमस्थिरस्वभावो वा भवेत् ? स्थिरस्वभावो वा ? यद्यस्थिररूपः, तत् कथं परेण स्थापयितुं शक्येत; तत्स्वभाव-हानिप्रसङ्गात् । अथ स्थिरस्वभावः, तथापि स्थापकोऽकिञ्चित्कर एव; स्वयमेव तत्स्वभावतया तस्य स्थितिसिद्धेः ।

किञ्च—ये तावन्मूर्त्ता भावाः, तेषामधोगमनप्रतिबन्धकत्वेन भवेन्नामाश्रय-कल्पना, ये पुनरमी सुखादयस्तेषाममूर्त्ततया नाधोगमनमस्तीति किं कुर्वाणस्तेषा-

1. परिनिष्ठिता०—पा०, गा० ।

संस्काराणां प्रतिषेधः

वेगाख्यो भावनासंज्ञः स्थितस्थापकलक्षणः ।
संस्कारस्त्रिविधः प्रोक्तो नासौ सङ्गच्छतेऽखिलः ॥ ६८३ ॥

---

माश्रयो भवेत् । सदसतोश्च [1]निराशंसतयानुपाख्यत्वेन चाश्रयणानुपपत्तिरिति ; एवं सुखादीनामन्येषां च यथायोगमाश्रितत्वासिद्धेर्न गुणो नामास्तीति भावः । किञ्च–बुद्धिर्ज्ञानस्वभावाऽङ्गीकृता परैः । यथोक्तम्—"बुद्धिरुपलब्धि-र्ज्ञानमित्यनर्थान्तरम्" ( न्या० द० १.१.१५ ) इति । तस्याश्चैवंरूपाया अपि न स्वसंविदितरूपमिष्टं परैः; किन्तु बुद्ध्यन्तरगम्यत्वमेव । तथाभूतायाश्च रूपादिवत् स्वतोऽसिद्धेर्बुद्धित्वमेवायुक्तमिति प्रतिपादयिष्यति ॥ ६८२ ॥

सुखदुःखेच्छाद्वेषप्रयत्नानामप्यज्ञानरूपत्वमिष्टम् । तदपि प्रमाणलक्षण-परीक्षायां निषेत्स्यते । गुरुत्वद्रवत्वस्नेहानां तु रूपादिवत् प्रतिषेधो विधेयः— इत्येवमालोच्यैषां प्रतिषेधमकृत्वा, संस्कारप्रतिषेधमाह— वेगाख्य इत्यादि । [ G. 228 ] त्रिविधः संस्कारः—वेगः, भावना, स्थितस्थापकश्चेति । तत्र वेगाख्यः पृथिव्यप्तेजोवायुमनस्सु पञ्चसु मूर्तिमत्सु द्रव्येषु प्रयत्नाभिघातविशेषापेक्षात् कर्मणो जायते । स च नियतदिक्क्रियाप्रबन्धहेतुः, स्पर्शवद्द्रव्यसंयोगविरोधी । तथा हि—शरादिषु प्रयत्नविशेषजनितकर्मविशेषहेतुक एव, यद्वशादन्तराल-शिरस्यापतनं भवति । अत एवासौ नियतादिक्क्रियाकार्योन्नीयमानसद्भावतया सिद्धः । शाखादौ तु लोष्टाभिघातजनितकर्मजः । भावनासंज्ञस्त्वात्मगुणः । योऽसौ ज्ञानजो ज्ञानहेतुश्चोच्यते, स च दृष्टश्रुतानुभूतेषु स्मृतिप्रत्यभिज्ञानकार्योन्नीतसत्त्व-तया सिद्धः । स्थितिस्थापकस्तु मूर्तिमद्द्रव्यगुणः, यो हि घनावयवसन्निवेश-विशिष्टं कालान्तरावस्थायिनं स्वमाश्रयं प्रयत्नेनान्यथाकृतं पूर्ववद् यथावस्थितं स्थापयति, यथा—चिरकालसंवेष्टितस्य तालपत्रादेः प्रसार्याविमुक्तस्य पुनस्तथै-वावस्थानम् । धनुःशाखाशृङ्गदन्तादिषु वस्त्रादिषु च भुग्नावर्तितेषु तस्य कार्यं लक्ष्यत एव । अखिल इति त्रिविधोऽपि । तत्र वेगाख्यस्य कर्मसम्बन्धाख्यं कार्यमसिद्धम्; अशेषपदार्थजातव्यापिनः क्षणभङ्गस्य प्रसाधितत्वात् । ततश्च स्वभाव-

---

१. 'निरंशतया—इति पाठान्तरम्'—इति जै०पुस्तकस्य पृष्ठप्रान्ते दृश्यते ।

१. क्षणिकत्वात् पदार्थानां न काचिद् विद्यते क्रिया ।
यत्प्रबन्धस्य हेतुः स्याद् संस्कारो [1]वेगसंज्ञितः ॥ ६८४ ॥

प्रतिलम्भादूर्ध्वं सर्वभावानाममत्त्वान्न काचित् क्रियाऽस्ति, यस्याः क्रियायाः प्रबन्धस्य हेतुरसौ भवेत् ।

अथ स्वापादानदेशपरिहारेण प्रतीयमानो भावानामुत्पाद एव क्रियाप्रबन्धोऽभिप्रेतः, तथाऽप्यनैकान्तिकत्वम्; यतः पूर्वका एव हेतुप्रत्यया भावानं तथा तथोत्पद्यमानानां तथाविधात्मभूतक्रियाप्रबन्धतोऽनुमीयन्ते, न यथोक्तः संस्कारः, तेन सह क्वचिदप्यन्वयासिद्धेः ।

किञ्च—यदि तथाविधसंस्कारबलादपतनमिष्वादीनां स्यात्, तदा न कदाचिदपि ते पतेयुः, सर्वत्र पातप्रतिबन्धहेतोर्वेगस्यावस्थितत्वात् । ततश्चाविशिष्टकाशदेशप्रसर्पिणो विशिखस्याकस्माद्यदेतत् पतनमुपलभ्यते तत्कथमुपपद्यते ! न च मूर्तिमतां सतां वाय्वादीनां संयोगादुपहतशक्तित्वाद् वेगस्य विनाशात् पतनमिति शक्यं वक्तुम्; अर्वागेव पतनप्रसङ्गात् । सर्वत्रैव हि[2] वायुसंयोगस्तद्विरोधी विद्यत एव ।

अथापि स्याद्—अर्वागेकान्तबलीयस्त्वाद्वेगस्य विरोधिनमपि वायुसंयोगं प्रतिविध्यासौ वेगो नयति देशान्तरमिषुमिति ? यद्येवम्, परस्मात् केन तस्याबलीयस्त्वं येन सुदूरमपि देशं तं न नयेत् । दृश्यते हि सर्वत्राविशिष्टवायुसंयोगवत्याकाशतले प्रसर्पतोऽपि शरस्यान्तराले पतनम् । न च वेगस्य पश्चादन्यत्वं [ G. 229 ] शक्यं वक्तुम्, अन्यथोत्पत्तिकारणाभावात् । सर्वत्रैव हि तत्समवायिकारणमिष्वादि निर्विशिष्टमेव । न च कर्माख्यं कारणं पश्चाद् विशिष्यत इति युक्तमभिधातुम्; तस्यापि तुल्यपर्यनुयोगत्वात् । अन्यत्वेऽपि वा पश्चाद्वेगस्य पूर्वकस्य विनाशकारणाभावात् तावदवस्थ्यमेवेत्यपात एव स्याच्छरस्य । न च वायुसंयोगस्तस्य विनाशकारणम्; अर्वागेव पतनप्रसङ्गादित्युक्तमेतत् । सर्वत्र वायोरविशेषेण तत्संयोगस्याप्यविशिष्टत्वादिति यत्किञ्चिदेतत् ॥ ६८३–६८४ ॥

१. वेगसंज्ञकः गा गा० । २. पा० गा० पुस्तकयोर्नास्ति ।

२. भावनाख्यस्तु संस्कारश्चेतसो वासनात्मकः।
युक्तो नात्मगुणश्चैष[1] युज्यते तन्निराकृतेः ॥ ६८५ ॥
३. स्थितस्थापकरूपस्तु न युक्तः क्षणभङ्गतः।
स्थितार्थासम्भवाद् भावे ताद्रूप्यादेव संस्थितिः ॥ ६८६ ॥
क्षणं त्वेकमवस्थानं स्वहेतोरेव जातितः।

---

भावनाख्यस्य दूषणमाह—भावनाख्यस्त्वित्यादि। यदि हि स्मृत्यादिकार्यतः सामान्येन भावनामात्रं साध्यते[2], तदा सिद्धसाध्यता। तथा हि—पूर्वानुभवाहितसामर्थ्यलक्षणा चेतसः स्वात्मभूता भावना स्मृत्यादिहेतुरिष्यत एव। यस्या वासनेति प्रसिद्धिः। अथात्मगुणस्वभावा भावना साधयितुमिष्टा, तदा क्वचिदपि तथाविधया[3] सह स्मृत्यादीनामन्वयासिद्धेरनैकान्तिकता हेतोः। प्रतिज्ञायाश्चानुमानबाधा। आत्मनस्तदाधारस्य पूर्वं निराकृतत्वेनासत्त्वात् तस्या[4] अप्यसत्त्वसिद्धिः। प्रयोगः—ये यदाश्रितास्ते तस्याभावे सति नावस्थितिमनुभवन्ते, यथा—चित्रं कुड्याद्यभावे। आश्रितश्चात्मानं संस्कारः परमतेनेति व्यापकविरुद्धोपलब्धेः। न चेष्टासिद्धिः; तस्यात्मनः पूर्वं निराकृतत्वात्। तस्माच्चेतसो वासनात्मक एव युक्तः संस्कारः, नात्मगुण इति प्रमाणफलमेतत्। [5]एकस्य प्रमाणसिद्धत्वाद्, अपरस्य[6] विपर्ययादिति भावः॥ ६८५ ॥

तृतीयस्यापि दूषणमाह—स्थितेत्यादि। तथा हि—यमसौ पदार्थं स्थितं स्थापयति कदाचिदसौ स्वयमस्थिरस्वभाव एव, यद्वा—स्थिरस्वभाव एवेति पक्षद्वयम्। यद्यस्थिरस्वभावः, तदा तस्य क्षणादूर्ध्वमभावात् कस्यासौ स्थापको भवेत्। अथ द्वितीयः पक्षः, तदा भावे = सत्त्वे, स्थितानामर्थानां ताद्रूप्यादेव = अप्रच्युतस्थितरूपत्वात्, स्थितिरिति किमकिञ्चित्करेण स्थापकेन परिकल्पितेनेति पूर्ववद् दूषणं वाच्यम्॥ ६८६ ॥

[G. 230] अथापि स्यात्—क्षणिकत्वेऽपि सर्वभावानामेकक्षणावस्थितौ प्रबन्धेन चानुवृत्तौ तस्य सामर्थ्यमुच्यते? इत्यत्राप्याह—क्षणं त्वेकमित्यादि।

---

१. श्चेदं—पा०, गा०। २. पा०, गा० पुस्तकयोर्नास्ति। ३. भावनयेति शेषः। ४. भावनाया इत्यर्थः। ५. चैतचित्तस्येत्यर्थः। ६. आत्मनः।

पूर्वपूर्वप्रभावाच्च प्रबन्धेनानुवर्त्तनम् ॥ ६८७ ॥
नान्यथोदयवानेष कस्यासौ स्थापकस्ततः ।
न चास्य दृष्टं हेतुत्वं संस्कारोऽन्योऽपि वा भवेत् ॥ ६८८ ॥
उत्पन्नस्यैव चेष्टोऽयं वस्त्रादेः स्थापको गुणः ।
गुणसंस्कारनामैवं सर्वथापि न सम्भवी ॥ ६८९ ॥

स्वहेतोरेव हि[1] निष्पद्यमाना एकक्षणस्थायिनः सिध्यन्ति । तथा हि—आत्मप्रतिलम्भलक्षणैवामीषां स्थितिरुच्यते, न तु प्रतिलब्धात्मसत्ताकानामुत्तरकालमात्मरूपसन्धारणलक्षणा; स्वयं चलात्मन उत्तरकालमवस्थानाभावात् । अवस्थाने वा कदाचिदप्यनिवृत्तिप्रसङ्गः पूर्ववत्; पश्चादप्यविशिष्टत्वात्, अतत्स्वभावप्रसङ्गाच्च । पूर्वपूर्वकारणसामर्थ्यकृतश्चोत्तरोत्तरकार्यप्रसव इति प्रबन्धेऽपि न संस्कारस्य सामर्थ्यं सिध्यति ॥ ६८७ ॥

अक्षणिकस्य तर्हि स्थापकोऽसौ भवतु ? इत्याह – नान्यथेत्यादि । यो ह्यक्षणिकस्तस्यान्यथात्वासम्भवात् स्वत एव स्थितिरिति किं कुर्वाणस्तस्यासौ स्थापको भवतीत्युक्तमेतत् ।

अथापि स्यात् – मा भूदसौ स्थापकः, किन्तु क्षणस्यैवोत्पादको भवति ? इत्याह – न चास्येत्यादि । प्रमाणाधीना हि प्रमेयस्य तत्त्वव्यवस्थितिः, न चास्य प्रसिद्धकारणव्यतिरेकेण वस्त्रादिषु प्रत्यक्षानुपलम्भाभ्यां चक्षुरादिवद्वा कार्यव्यतिरेकतो दृष्टम् = निश्चितं हेतुत्वम्, येन तद्व्यवहारः स्यात् । अथादृष्टसामर्थ्यस्यापि हेतुत्वं कल्प्यते, तदा संस्कारः, अन्योऽपि वा = शुकबकादिरुत्पत्तेर्हेतुर्भवेत् । कल्पनाय इति शेषः । न ह्यदृष्टशक्तित्वेन कश्चिद्विशेषोऽस्ति; येनैकस्मिन्नेव संस्कारात्मन्यपरिनिश्चितसामर्थ्ये कल्पनापरितोषो भवतां स्यात् । न चाप्ययमुत्पादहेतुरिष्टो भवद्भिः, अपि तूत्पन्नस्य सतो वस्त्रादेरुत्तरकालं स्थापको गुण इष्यते । तत्र चाकिञ्चित्करत्वमस्येति पूर्वमुपवर्णितम् । अभ्युपगम्य तूत्पत्तिहेतुत्वं दूषणमिदमभिहितम्; कदाचित् कश्चित् स्वसमयसीमानमभ्यतिः-

१. पा०, गा० पुस्तकयोर्नास्ति ।

धर्माधर्मयोर्दूषणम्

मनोयोगात्मनां पूर्वं विस्तरेण निषेधनात्[1]।
परोक्तलक्षणोपेतं नादृष्टमुपपद्यते ॥ ६९० ॥

## कर्मपदार्थपरीक्षा

क्षणिकत्वेऽप्युत्क्षेपणादिकर्मणामसम्भवत्वम्

क्षणक्षयिषु भावेषु कर्मोत्क्षेपाद्यसम्भवि।
जातदेशे च्युतेरेव तदन्यप्राप्त्यसम्भवात् ॥ ६९१ ॥

---

पत्यैवं कल्प्येदिति भावः। गुणसंस्कारनामेत्यादिना [2]सर्वमुपसंहरति ॥ ६८८–६८९ ॥

[G. 231] धर्माधर्मलक्षणगुणदूषणमाह—मन इत्यादि। कर्तृफल-दाय्यात्मगुण आत्ममनःसंयोगजः स्वकार्यविरोध्यदृष्टम्। तच्च द्विविधम्, धर्माधर्मभेदात्। तत्र धर्मः—कर्तुः प्रियहितमोक्षहेतुः। अधर्मस्तु—अप्रियाहितप्रत्यवायहेतुरिति परोक्तादृष्टलक्षणम्। तदेतदात्मनो मनसस्तद्योगस्य च तत्कारणत्वेनाभिमतस्य पूर्वं निषिद्धत्वात् कारणाभावादेवासदिति सिद्धम्। शब्दस्त्वाकाशगुणतयाऽभीष्टः, स प्रागेव निरस्तः—"अक्रमाद्यापत्तितः" (तत्त्व० ६२७) इत्यादिनेति, न पुनरस्य दूषणमुच्यते ॥ ६९० ॥

इति गुणपदार्थपरीक्षा

कर्मपदार्थदूषणार्थमाह—क्षणेत्यादि। "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि" (वै० द० १.१.६) इति सूत्रम्। तत्रोत्क्षेपणमूर्ध्वाधःप्रदेशाभ्यां संयोगविभागकारणं यत्कर्मोत्पद्यते। यथा—शरीरावयवे तत्सम्बद्धे वा मूर्त्तिमति द्रव्ये [3]लोष्टादावूर्ध्वतिर्यग्भागोपाधिभिराकाशप्रदेशाद्यैः संयोगकारणमधोदिग्भागावच्छिन्नैश्च विभागकारणं प्रयत्नादिवशाद् यत् कर्मोपजायते तदुत्क्षेपणमुच्यते। एतद्विपरीतं संयोगविभागकारणं कर्मावक्षेपणम्। ऋजुद्रव्यस्य कुटिलत्वहेतुरा-

---

1. निबन्धनात्—पा०, गा०।
2. पूर्वं—पा०, गा०।
3. ०वूर्ध्वदिग्भागो०—पा०, गा०।

कुञ्चनम् । यथोक्तम्—"ऋजुनो बाह्वादिद्रव्यस्य येऽवयवा अङ्गुल्यादयस्तेषां [1]स्वसंयोगिभिराकाशाद्यैर्विभागे सति मूलप्रदेशैश्चांशादिभिः संयोगे सति येन कर्मणाऽवयवी बाह्वादिलक्षणः कुटिलः समुत्पद्यते तदाकुञ्चनम्" ( वै० द० भा० १.१.६ ) इति । एतद्विपर्ययेण तु संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः सम्पद्यते तत्प्रसारणम् । यदनियतदिक्प्रदेशैर्घटादिभिः संयोगविभागकारणं तद् गमनम् । उत्क्षेपणादिकं चतुःप्रकारं कर्म नियतदिग्देशैराशादिभिः संयोगविभागकारणम् । गमनं तु—अनियतदिग्भिः सर्वतोदिक्कैः प्रदेशैः संयोगविभागौ करोति । अत एव पञ्चैव कर्माणि सम्भवन्ति; भ्रमणस्यन्दनरेचनादीनां गमन एवान्तर्भावात् ।

एतच्च पञ्चविधमपि कर्म मूर्त्तिमद्द्रव्यवृत्तिसंयोगविभागकार्योन्नीतसत्त्वतया सिद्धम् । सर्वस्यैव संयोगविभागविशेषः [G. 232] साधरणं कार्यम्, अतः कार्यतः सिद्धिरस्य । तथा प्रत्यक्षतोऽपि । यथोक्तम्—"सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिसमवायाच्चाक्षुषाणि" ( वै० द० ४.१.१२ ) इति । तदेषा संक्षेपात् परप्रक्रियोक्ता ।

तदत्र संयोगविभागयोः पूर्वं निषिद्धत्वात् [2]तत् कार्यमसिद्धम् । अथ नैरन्तर्येणोत्पादादिमात्रलक्षणौ संयोगविभागौ तत्कार्यतया हेतुत्वेनोच्येत ? एवमप्यनैकान्तिकता हेतोः; तथाविधेन कर्मणा तयोः क्वचिदप्यन्वयासिद्धेः । साध्यविपर्ययेण च हेतोर्व्याप्तेर्विरुद्धताऽपि । कारणमात्रास्तित्वे च साध्ये सिद्धसाध्यता; वाय्वादीनां तथाविधसंयोगविभागकारणत्वेनाभीष्टत्वात् । विशेषे च साध्ये प्रतिज्ञाया अप्यनुमानबाधा । तथा हि—क्रियासमावेशो भवन् पदार्थस्य ? क्षणिकस्य वा[3] ? न तावत् क्षणिकस्य, तस्य जन्मदेश एव च्युतेः=नाशाद् देशान्तरप्राप्त्यसम्भवात् । प्रयोगः—यो यत्र देशे च्यवते, न स तदुत्तरकालं तदन्यदेशमाप्नोति, यथा—प्रदीपादिः । जन्मदेश एव च्यवन्ते च सर्वे भावा विवक्षिता इति व्यापकविरुद्धोपलब्धिः ॥ ६९१ ॥

---

१. स्वयं संयोगाद्भिराकाशा०—जै० ।

२. पा०, गा० पुस्तकयोर्नास्ति ।

३. 'अक्षणिकस्य वा'—इत्यधिकं पाठं स्वीचिकीर्षति गा०सम्पादकः ।

जन्मातिरिक्तकालं हि क्रियाकालं परे जगुः ।
इष्टाशुतरनाशेषु दीपादिष्वपि वस्तुषु ॥ ६९२ ॥
तथा हि कारणाश्लेषः, सामान्यस्याभिव्यञ्जनम् ।
स्वावयवे ततः कर्म, विभागस्तदनन्तरम् ॥ ६९३ ॥
संयोगस्य विनाशश्च, ततो द्रव्यस्य संक्षयः ।
षट्क्षणस्थायितैवेष्टा दीपादावपि वस्तुनि ॥ ६९४ ॥
पश्चिमाग्रिमदेशाभ्यां विश्लेषाऽऽश्लेषसम्भवे ।
गन्ताऽपरो वा सर्वश्च कर्माधारः प्रकल्पितः ॥ ६९५ ॥
यो जनः क्षणमध्यास्ते नैव जातु चलात्मकः ।
तस्याण्वन्तरमात्रेऽपि देशसंक्रान्त्यसम्भवः ॥ ६९६ ॥

---

नानैकान्तिकता हेतोरिति दर्शयन्नाह—जन्मेत्यादि । इष्ट आशुतरो विनाशो येषां ते तथा । प्रदीपादेरपि हि शीघ्रतरकालविनाशितयाऽभीष्टस्यापि जन्मोत्तरकालभाविन्येव क्रिया; षट्क्षणस्थायित्वेनास्याक्षणिकत्वात् ॥ ६९२ ॥

कथम् ? इत्याह—तथा हीत्यादि । तथा हि—स्वकारणसम्बन्धकालस्तावत् प्रथमं भवति, ततः पश्चात् स्वसामान्याभिव्यक्तिकालः, ततोऽवयवकर्मकालः, तदनन्तरमवयवविभागकालः, ततः स्वारम्भकावयवसंयोगविनाशः, ततो द्रव्यविनाशः—इति षट्क्षणस्थायितैव दीपादेरपि वस्तुनोऽभीष्टा । अतः क्षणिकस्य कस्यचिद् गतिमतः पदार्थस्याभावात् सर्वेषामेव क्रियावतां जन्मोत्तरकालभाविन्येव क्रिया । नाप्यसिद्धता हेतोः; अन्यस्य क्षणिकत्वायोगात् ॥ ६९३–६९४ ॥

[G. 233] अथापि स्याद्—यदि नाम क्षणिकता भावानामस्माभिरिष्यते; तथाप्यमीषां जन्मकालभाविन्येव क्रिया कस्मान्न भवति ? इत्याह—पश्चिमेत्यादि । यस्य हि पाश्चात्त्यदेशविश्लेषः सम्भवति, पुरोवर्त्तिना देशेन चाऽऽश्लेषः, स गन्ता भवति, अपरो वा प्रसारणाद्याधारः; न त्वन्यः, यथा—आकाशादि । न चैकक्षणमात्रभाविन इयान् परिलम्बोऽस्ति, येन पूर्वदेशपरिहारपूर्वकमपरदेशमाक्रामेत् । सचाकाल एवास्तमयवशीकृतत्वादपर्याप्तो देशान्तरमाक्रमितुम् । तस्माज्जन्मकालभाविन्यपि क्रिया न युक्ता । नापि पूर्वोत्तरयोः कोट्योः; तदानीं

भावानां स्थिरत्वेऽपि तेषु कर्मणामसम्भवत्वम्

स्थैर्ये तु वस्तुनः सर्वे दुर्घटा गमनादयः ।
सुतरामेव सर्वासु दशास्वस्याविशेषतः ॥ ६९७ ॥
यदि गन्त्रादिरूपं हि[1] तत्प्रकृत्या गमनादयः ।
सदा स्युः क्षणमप्येवं नावतिष्ठेत निश्चलम् ॥ ६९८ ॥
यस्माद् गत्याद्यसत्त्वेऽपि प्राप्नुवन्त्यस्य ते ध्रुवम् ।
अत्यक्तपूर्वरूपत्वाद् गत्याद्युदयकालवत् ॥ ६९९ ॥
अथागन्त्रादिरूपं तत्प्रकृत्याऽगमनादयः ।

---

तस्यानुपाल्यत्वात् । अतो यः क्षणमपि नास्ते तस्याऽऽस्तां तावद् विदूरतरदेशान्तरावक्रमणसम्भवः[2], अपि तु परमाणुमात्रप्रदेशसंक्रमणमपि नास्तीति कुतः क्षणिकस्य क्रिया । ॥ ६९५–६९६ ॥

नाप्यक्षणिकस्येति दर्शयति—स्थैर्ये त्वित्यादि । एकरूपं हि सदा वस्त्वक्षणिकमुच्यते, तस्य सुतरामेव क्रियासमावेशो न सम्भवति; आकाशवत् सर्वदा निर्विशिष्टत्वात् । प्रयोगः—यत् सर्वदा निर्विशिष्टं न तस्य क्रिया सम्भवति, यथा—आकाशस्य । निर्विशिष्टं चाक्षणिकाभिमतं सर्वदा वस्त्विति व्यापकविरुद्धोपलब्धिः ॥ ६९७ ॥

स्यादेतद्—यदि नामाविशिष्टमक्षणिकं वस्तु, तथापि प्रकृत्यैव तस्य गन्त्रादिरूपत्वात् क्रियावत्त्वं भविष्यतीत्यतोऽनैकान्तिकता हेतोरित्याशङ्क्याह—यदीत्यादि । यदि ह्यमी देवदत्तादयोऽक्षणिकत्वेन[3] नाभिमताः[3] प्रकृत्या गमनोत्क्षेपणादियोगिनः, तदा [G. 234] न कदाचिदपि निश्चलमवतिष्ठेरन्; सर्वदा गन्त्रादिरूपत्वात् । ततश्चास्य देवदत्तादेर्गत्यादिमतो गत्याद्यसत्त्वेऽपि—निश्चलावस्थायामपि, ते = गमनादयः, प्राप्नुवन्ति; गत्याद्युत्पत्तिकाल इवात्यक्तपूर्वरूपत्वात् ॥ ६९८-६९९ ॥

---

१. तत्—पा०, गा० । २. ०क्रमणा०—गा० ।
३–३. देवदत्तादयः क्षणिकत्वेनाभिमताः—पा०, गा० ।

सदा स्युः क्षणमप्येकं नैव प्रस्पन्दवद् भवेत् ॥ ७०० ॥
यस्माद् गत्यादिभावेऽपि निश्चलात्मकमेव तत् ।
अत्यक्तपूर्वरूपत्वात्[1] निश्चलात्मककालवत् ॥ ७०१ ॥
यदि तु स्यादगन्ताऽयमेकदा चान्यथा पुनः ।
परस्परविभिन्नात्मसंगतेर्भिन्नता भवेत् ॥ ७०२ ॥
अत्यन्तभिन्नावात्मानौ ताविति व्यवसीयते ।
विरुद्धधर्मवृत्तित्वाच्चलनिश्चलवस्तुवत् ॥ ७०३ ॥

कर्माभ्युपगमे प्रत्यक्षबाधा

दृश्यत्वाभिमतं कर्म न वस्तुव्यतिरेकि च ।
दृश्यतेऽतोऽपि[2] नैवास्य सत्ता युक्त्यनुपातिनी ॥ ७०४ ॥

---

अथैतद्दोषभयादगन्त्रादिरूपत्वमस्याङ्गीक्रियेत, तथा सत्यगमनादयः सर्वदा स्युः; एकरूपत्वाद्, आकाशवत् । आदिशब्दादुत्क्षेपणादिपरिग्रहः । ततश्च गत्यादिभावेऽपि तस्य निश्चलत्वमेव प्राप्नोति; अपरित्यक्तागत्यादिरूपत्वाद्, यथा निश्चलावस्थायाम् । प्रस्पन्दः = कर्म सोऽस्यास्तीति प्रस्पन्दवत् । निश्चलात्मककालवदिति सप्तम्यन्ताद्वतिः ॥ ७००–७०१ ॥

अथापि स्यात् – नैवाऽस्यैकरूपता, किं तर्हि ? [3]गन्त्रगन्तृरूपतयोभयरूपत्वाद्, अतो यथोक्तदोषप्रसङ्गः, हेतोश्चासिद्धतेत्याशङ्क्याह–यदि त्वित्यादि । [4]एकदा चेति चकारो विभिन्नक्रमः 'पुनः' इत्यस्यानन्तरं द्रष्टव्यः । पुनश्च, अन्यथेत्यर्थः । एवं हि गन्तृत्वागन्तृत्वादिविरुद्धधर्माध्यासादेकत्वहानिप्रसङ्गः ॥७०२॥

अत एव तस्य क्षणिकत्वं सिद्धमिति दर्शयन्नाह—अत्यन्तभिन्नावित्यादि । ताविति चलाचलावस्थाभाविनौ । चलनिश्चलवस्तुवदिति । लतापर्वतादिवदित्यर्थः ॥ ७०३ ॥

एवं तावदनुमानबाधां प्रतिज्ञायाः प्रतिपाद्य प्रत्यक्षबाधामपि प्रतिपादयन्नाह— दृश्यत्वेत्यादि । [G. 235] यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्प्रेक्षावताम-

---

१. अव्यक्त०—जै० । २. दृश्यते सोऽपि—पा०, गा० ।
३. गन्त्राद्यगन्त्र०—जै० । ४. कदा—जै० ।

उक्तोपसंहारः

अस्थिरे वा स्थिरे वैवं गत्यादीनामसम्भवः ।
प्राक्तनापरदेशाभ्यां विभागप्राप्त्ययोगतः ॥ ७०५ ॥

गतिव्यवहारो भ्रान्तिमूलकः

देशान्तरोपलब्धेस्तु नैरन्तर्येण जन्मनः ।
समानापरवस्तूनां गतिभ्रान्तिः प्रदीपवत् ॥ ७०६ ॥

---

सद्व्यवहारमवतरति, यथा—क्वचित्[1] प्रदेशे पटोऽनुपलभ्यमानः । नोपलभ्यते च रूपादिवस्तुव्यतिरेकेण कर्मेति स्वभावानुपलब्धिः । न हि रूपादेस्तथा देशान्तरावष्टम्भेनोत्पद्यमानस्य व्यतिरेकेण क्वचिदिन्द्रियज्ञाने प्रतिभासमानमालक्ष्यते कर्म । या चेयम्---'उत्क्षेपणम्', 'अवक्षेपणम्' इति जल्पानुषङ्गिणी धीरुपजायते, सा साभिजल्पत्वान्न प्रत्यक्षम् । न चाप्येषा कर्मपदार्थानुभवभाविनी युक्ता; रूपादेरेव तथातथोत्पद्यमानस्य दर्शनात् । यथासङ्केतं तेष्वेवाध्यवसायेन वृत्तेः । एतच्चानन्तरमेव प्रतिपादितम्—"नित्यानित्ययोर्गत्याद्यभावात्" (तत्त्व० ६९७–७००) इति । अतोऽसिद्धमेतद्यदुक्तम्—प्रत्यक्षत एव कर्म सिद्धमिति ॥ ७०४ ॥

यथोक्तमेवार्थमुपसंहरन्नाह अस्थिरे वेत्यादि । एवमिति अनन्तरोक्ताभ्यां प्रत्यक्षानुमानाभ्यां निराकृतत्वात् । विभागप्राप्त्ययोगत इति । प्राक्तनेन विभागायोगात्, अपरदेशेन प्राप्त्ययोगादिति यथाक्रमं सम्बन्धः ॥७०५॥

यद्येवम्, कथं तर्हि गतिव्यवहारो लोके भवति ? इत्याह—देशान्तरेत्यादि । समानापरवस्तूनामिति । समानानि च तान्यपराणि चेति समस्य, तानि च वस्तूनि चेति विग्रहः कार्यः । तेषां समानापरवस्तूनां यन्नैरन्तर्येण = स्वोपादानकारणदेशपरिहारेण, जन्म = सद्भावः, तस्य जन्मन उपलब्धेः कारणात् स एवायं गच्छतीति [2]भ्रान्तिर्भवति । यथा प्रदीपस्य केनचिन्नीयमानस्य 'देशान्तरं गच्छति' इति बुद्धिहेतुत्वं भवति । न हि प्रदीपः स एव देशान्तरमाक्रामति; तस्य षट्क्षणस्थायित्वेनाभिमतत्वात् । भावस्वभाव एव हि पूर्वापरकोटिशून्यो जन्मेत्य-

---

१. कस्मिंश्चित्—पा०, गा० ।

२. पा० गा० पुस्तकयोर्नास्ति ।

# सामान्य( पदार्थ )परीक्षा

## सामान्य-विशेषदूषणम्

द्रव्यादिषु निषिद्धेषु जातयोऽपि निराकृताः ।
पदार्थत्रयवृत्ता हि सर्वास्ताः परिकल्पिताः ॥ ७०७ ॥

## सामान्यविशेषयोः स्वरूपम्

तत्रेयं द्विविधा जातिः परैरभ्युपगम्यते ।
सामान्यमेव सत्ताख्यं समस्तेष्वनुवृत्तितः ॥ ७०८ ॥
द्रव्यत्वादि तु सामान्यं सद्विशेषोऽभिधीयते ।
स्वाश्रयेष्वनुवृत्तस्य चेतसो हेतुभावतः ॥ ७०९ ॥
विजातिभ्यश्च सर्वेभ्यः स्वाश्रयस्य विशेषणात् ।
व्यावृत्तिबुद्धिहेतुत्वं तेषामेव ततः स्थितम् ॥ ७१० ॥

---

भिधीयते । तेन तस्योपलब्धिर्युज्यत एव । अथ वा — जन्मन इति पञ्चम्यन्तमेतत् । नैरन्तर्येणोत्पादात् समानापरवस्तूनां देशान्तरोपलब्धेरिति सम्बन्धः ॥ ७०६ ॥

इति कर्मपदार्थपरीक्षा

---

[ G. 236 ] द्रव्यादिष्वित्यादिना सामान्यविशेषदूषणमारभते । जातय इति सामान्यानि । ताश्च द्रव्यगुणकर्मात्मकपदार्थत्रयाश्रितत्वात् तन्निराकरणादेवापास्ताः । न ह्याश्रयमन्तरेणाश्रितानां क्वचिदवस्थितिरस्ति; अनाश्रितत्वप्रसङ्गात् । जातिग्रहणमुपलक्षणम्, विशेषा अप्यन्त्यद्रव्यवृत्तित्वादाश्रिता एवेष्टाः, अतस्तेऽप्याश्रयनिराकरणादेवापास्ताः ॥ ७०७ ॥

तथापि पुनर्विशेषेण दूषणं वक्तुकामोऽनिर्ज्ञातस्वरूपस्य [1]अशक्यदूषणत्वात् सामान्यविशेषयोस्तावत् स्वरूपं दर्शयन्नाह—तत्रेत्यादि । तत्र सामान्यं द्विविधम्—परमपरं च । परं सत्ताख्यम् । तच्च समस्तेषु त्रिषु द्रव्यगुणकर्मस्वनुवृत्तिप्रत्ययस्यैव कारणत्वात् सामान्यमेव, न विशेषः । अपरं तु [2]द्रव्यत्वगुणत्वकर्मत्वादिलक्षणम् ।

---

१. शक्य०—जै० । २. द्रव्यत्वकर्मत्वादि०—पा०, गा० ।

परामिमतविशेषाणां लक्षणम्

विशेषा एव केचित्तु व्यावृत्तेरेव हेतवः।
नित्यद्रव्यस्थिता येऽन्त्या विशेषा इति वर्णिताः ॥ ७११ ॥
यद्बलात् परमाण्वादौ जायन्ते योगिनां धियः।
विलक्षणोऽयमेतस्मादिति प्रत्येकमाश्रिताः ॥ ७१२ ॥

---

तच्च स्वाश्रयेषु द्रव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात 'सामान्यम्' इत्युच्यते, स्वाश्रयस्य च विजातीयेभ्यो व्यावृत्तिप्रत्ययहेतुतया विशेषणात् सामान्यमपि सद् 'विशेषः' इत्यभिधीयते। तथा हि—गुणादिषु 'अद्रव्यमगुणः' इत्यादिका येयं व्यावृत्तबुद्धिरुदयमासादयति, तां प्रति हेतुत्वमेषामेव गुणत्वद्रव्यत्वादीनां व्यवस्थितम्, नान्यस्य; न ह्यद्रव्यत्वादिकमपरमस्ति। अपेक्षाभेदाच्चैकस्य सामान्यविशेषभावो न विरुध्यत एवेति भावः ॥ ७०८–७१० ॥

परेषां विशेषाणां लक्षणमाह—विशेषा एवेत्यादि। केचिद्विशेषा एवेष्यन्ते, न सामान्यानि। व्यावृत्तेरेव = व्यावृत्तिप्रत्ययस्यैव [G. 237] हेतुत्वादित्यर्थः। के पुनस्ते ? इत्याह—नित्येत्यादि। तथा चोक्तम्—"नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः" (वै० द० भा० १.१.४) इति। नित्यद्रव्यवृत्तय इति परमाण्वाकाशकालदिगात्ममनःसु वृत्तेः। परमाणूनां जगद्विनाशारम्भकोटिभूतत्वात्, मुक्तात्मनां मुक्तमनसां च संसारपर्यन्तरूपत्वादन्तत्वम्, अतस्तेषु भवा अन्त्या इत्युच्यन्ते; तेषु स्फुटतरमालक्ष्यमाणत्वात्। वृत्तिस्तु पुनरेषां सर्वस्मिन्नेव परमाण्वादौ नित्ये द्रव्ये। अत एव नित्यद्रव्यवृत्तयः, अन्त्याः—इत्युभयोरुपादानम्। तेन[1] परस्परमत्यन्तव्यावृत्तबुद्धिहेतुत्वात् स्वाश्रयमन्यतो विशेषयन्तीति विशेषा उच्यन्ते ॥ ७११ ॥

कुतः पुनरमी सिद्धाः ? इत्याह—यद्बलादित्यादि। यथा ह्यस्मदादीनां गवादिष्वाकृतिगुणक्रियावयवसंयोगनिमित्तोऽश्वादिबुद्धिव्यावृत्तः प्रत्ययो दृष्टः, तद्यथा—गौः शुक्लः शीघ्रगतिः पीनककुदो महाघण्ट इति यथाक्रमम्, तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु

---

१. तत्र—पा०. गा०।

जातिसाधनम्

प्रत्यक्षतः प्रसिद्धास्तु सत्त्वगोत्वादिजातयः ।
अक्षव्यापारसद्भावे सदादिप्रत्ययोदयात् ॥ ७१३ ॥
अनुमानबलेनापि सत्त्वमासां प्रतीयते ।
विशेषप्रत्ययो येन निमित्तान्तरभाविकः ॥ ७१४ ॥

अत्र भाविविक्तरचितप्रमाणोपन्यासः

गवादिशब्दप्रज्ञानविशेषा गोगजादिषु ।
समयाकृतिपिण्डादिव्यतिरिक्तार्थहेतवः ॥ ७१५ ॥

---

चान्यनिमित्तासम्भवाद्[1] यद्बलात् प्रत्येकं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिर्देशकालविप्रकर्षदृष्टे च 'स एवायम्' इति प्रत्यभिज्ञानं यतो भवति, ते योगिनां विशेषप्रत्ययोन्नीतसत्त्वा अन्त्या विशेषाः सिद्धाः । ते च यथास्वं प्रत्येकमाश्रयमाश्रिताः योगिनां प्रत्यक्षत एव सिद्धाः ॥ ७१२ ॥

अथ जातयः कथं सिद्धाः ? इत्याह—प्रत्यक्षत इत्यादि । यद्गतान्वयव्यतिरेकानुविधायि यद्भवति तत्तो भवतीति व्यवस्थाप्यते । द्रव्यादिषु च सदादिप्रत्ययप्रसूतिरक्षगतान्वयव्यतिरेकावनुविदधती किमितीन्द्रियजन्यताव्यपदेशं नाश्नुवीत, तदन्येन्द्रियज्ञानवत्, अन्यथाऽतिप्रसङ्गः स्यात् ! ॥ ७१३ ॥

अनुमानतोऽपि सत्त्वमासां प्रतिपादयन्नाह—अनुमानेत्यादि । विशेषप्रत्यय इति द्रव्यादिवस्तुविलक्षणाकारः प्रत्ययः । निमित्तान्तरभाविकः = [ G. 238 ] निमित्तान्तराद् भाव उत्पादः सोऽस्यास्तीति कृत्वा । प्रयोगः—यद्वस्त्वाकारविलक्षणो यः स तद्व्यतिरिक्तनिमित्तान्तरभावी, यथा—वस्त्रचर्मकम्बलेषु रक्तादिप्रत्ययः । तथा चायं द्रव्यादिषु सदादिप्रत्यय इति स्वभावहेतुं मन्यते परः ॥ ७१४ ॥

एनमेव प्रमाणार्थं गवादीत्यादिना भाविविक्तादिरचितप्रमाणोपन्यासेन दर्शयति । तत्र भाविविक्तः प्राह—गवाश्वमहिषवराहमातङ्गादिषु गवाद्यभिधानप्रज्ञानविशेषाः समयाकृतिपिण्डादिव्यतिरिक्तस्वरूपानुरूपसंसर्गिनिमित्तान्तर-

---

१. असम्भावत—जै० ।

गवादिविषयत्वे हि सति तच्छब्दबुद्धितः ।
अन्यत्वात् तद्यथैष्वेव सवत्सांकुशधीध्वनौ ॥ ७१६ ॥
शशशृङ्गादिविज्ञानैर्व्यभिचाराद् विशेषणम् ।
तत्स्वरूपाभिधानं च वैधर्म्येण निदर्शनम् ॥ ७१७ ॥

उद्द्योतकररचितप्रमाणोपन्यासः

गवादिष्वनुवृत्तं च विज्ञानं पिण्डतोऽन्यतः ।
विशेषकत्वान्नीलादिविज्ञानमिव जायते ॥ ७१८ ॥
गोतत्त्वार्थान्तरं गोत्वं भिन्नधीविषयत्वतः ।

---

निबन्धना इत्यवघोषणा; गवादिविषयत्वे सति पिण्डादिस्वरूपाभिधानप्रज्ञान-व्यतिरिक्ताभिधानज्ञानत्वात्, तेष्वेव गवादिषु—सवत्सा गौः, भाराक्रान्तो महिषः, सशल्यो वराहः, साङ्कुशो मातङ्गः—इत्याद्यभिधानप्रज्ञानविशेषवत् । वैधर्म्येण पिण्डादिस्वरूपाभिधानप्रज्ञानविशेषाः । यानि च तानि निमित्तान्तराणि तानि गोत्वादीनीति सिद्धम् । तत्राभिधानम् = शब्दः, प्रज्ञानम् = प्रत्ययः, ज्ञान-मित्यर्थः । अभिधानप्रज्ञानान्येव विशेषा इति विशेषणसमासः । समयः = सङ्केतः, आकृतिः = संस्थानम्, पिण्डः = द्रव्यम्, आदिशब्देन रूपादिपरिग्रहः, एभ्यो व्यतिरिक्तं स्वरूपं येषाम्—स्वाभिधानप्रत्ययं प्रत्यनुरूपाणामुपाधित्वात् संसर्गिणां निमित्तान्तराणां तानि निबन्धनं येषामिति विग्रहः । अथ वा—समयादिव्यति-रिक्तानि च तानि सदादिप्रत्ययाभिधानं प्रति स्वरूपानुरूपसंसर्गीणि चेति विग्रहः कार्यः । शेषं पूर्ववत् । अवघोषणेति प्रतिज्ञा । शशविषाणादि प्रत्ययैर्व्यभिचार-शङ्कया [ G. 239 ] तत्परिहारार्थं गवादिविषयत्वे सतीति विशेषणम् । पिण्डादि-स्वरूपाभिधानप्रज्ञानव्यतिरिक्ते अभिधानप्रज्ञाने येषां तद्भावस्तत्त्वमिति विग्रहः । वैधर्म्येण पिण्डादिस्वरूपाभिधानप्रज्ञानविशेषा इति । तत्र हि पिण्डादिव्यतिरिक्त-निमित्तान्तरनिबन्धनत्वाभावे हेतोरपि यथोक्तस्याभावात् ॥ ७१५–७१७ ॥

उद्द्योतकरस्त्वाह—"गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तान्निमित्ताद् भवति; विशेषकत्वात्, नीलादिप्रत्ययवत् । तथा गोतोऽर्थान्तरं गोत्वम्; भिन्नप्रत्यय-विषयत्वाद्, रूपस्पर्शादिवत्, तस्येति च व्यपदेशविषयत्वाद्, यथा—चैत्रस्याश्व

रूपस्पर्शादिवत् तस्येत्युक्तेश्चैत्रतुरङ्गवत्[1] ॥ ७१९ ॥

तत्प्रतिविधानम्

असारं तदिदं कार्यं[2] प्रक्रियामात्रवर्णनम् ।
न तु तज्ज्ञापकं किञ्चित् प्रमाणमिह विद्यते ॥ ७२० ॥
अक्षव्यापारसद्भावान्न ह्यनन्तरभाविनः ।
सदादिप्रत्ययास्सिद्धाः संकेताभोगतस्तु ते ॥ ७२१ ॥
यथा धात्र्यभयादीनां नानारोगनिवर्तने ।
प्रत्येकं सह वा शक्तिर्नानात्वेऽप्युपलभ्यते ॥ ७२२ ॥
न तेषु विद्यते किञ्चित् सामान्यं तत्र शक्तिमत् ।
चिरक्षिप्रादिभेदेन रोगशान्त्युपलम्भतः ॥ ७२३ ॥
सामान्येऽतिशयः कश्चिन्नहि क्षेत्रादिभेदतः ।
एकरूपतया नित्यं धात्र्यादेस्तु स विद्यते ॥ ७२४ ॥

---

इति चैत्राद् व्यतिरेकेण व्यपदिश्यमानः" इति ( ) । तदेतद्दर्शयति—गवादिष्वित्यादि । सुबोधम् ॥ ७१८–७१९ ॥

असारमित्यादिना प्रतिविधत्ते । यदुक्तम्—"अक्षव्यापारसद्भावात् सदादिप्रत्ययानामक्षाश्रितत्वम्" ( तत्त्व० ७१३ ) इति, तत्र यदि साक्षादक्षव्यापारान्तरभावित्वादिति हेत्वर्थोऽभिप्रेतः, तदा हेतुरसिद्धः; सविकल्पकत्वेन सङ्केताभोगस्मरणादिव्यवहितत्वात् ॥ ७२०–७२१ ॥

न चैतच्छक्यं वक्तुम्—एकमनुगामिनमन्तरेण कथं परस्परव्यावृत्तात्मनो भावाः पारम्पर्येणाप्यभिन्नाकारप्रत्ययनिबन्धनं युज्यन्ते ? इत्याशङ्क्याह—यथेत्यादि । यथा ह्यामलक्यादयः परस्परमत्यन्तविभिन्नमूर्त्तयोऽपि प्रत्येकं समुदिता वा [ G. 240 ] नानाविधव्याधिव्यावर्त्तनसामर्थ्याध्यासिता भवन्त्यन्तरेणाप्यनुगामिनम् । न हि तत्र सामान्यमेव तथाविधामर्थक्रियां सम्पादयतीति युक्तं वक्तुम्; यतस्तेषु विविधार्थक्रियासम्पादनयोग्यं न सामान्यमस्ति । यदि स्यात्, तदा येयं

---

1. ०श्चैव तुरङ्गवत्—पा०, गा० । २. सार्यं—जै० ।

एवमत्यन्तभेदेऽपि केचिन्नियतशक्तितः ।
तुल्यप्रत्यवमर्शादेर्हेतुत्वं यान्ति नापरे ॥ ७२५ ॥
कार्यमात्रोपयोगित्वविवक्षायां च सच्छ्रुतेः ।
समयः क्रियते येषु[1] यद्वान्यस्या यथारुचि ॥ ७२६ ॥
वाहदोहादिरूपेण कार्यभेदोपयोगिनि ।
गवादिश्रुतिसंकेतः क्रियते व्यवहर्तृभिः ॥ ७२७ ॥
तत्संकेतमनस्काराद् सदादिप्रत्यया इमे ।
जायमानास्तु लक्ष्यन्ते [2]नाक्षाद् व्यापृत्यनन्तरम्[2] ॥ ७२८ ॥

---

क्वचित् कदाचित् कासाञ्चिद्धात्र्यादीनां चिरक्षिप्ररोगाद्युपशमनसामर्थ्योपलब्धिः, सा न स्यात्; सामान्यस्यैकरूपत्वात् । न च क्षेत्रक्षीरावसेकादिसंस्कारविशेषवशादासादितातिशयं सामान्यमेवैतामर्थक्रियां विचित्रां सम्पादयतीति युक्तम् । तस्य नित्यतया परैरनाधेयविकारस्य क्षेत्रादिभेदतोऽपि नातिशयः कश्चिद्; एकरूपत्वात् । धात्र्यादीनां त्वनित्यानां सोऽतिशयः क्षेत्रादिभेदतो भिद्यत इत्यतस्त एव रोगाद्युपशमनसामर्थ्योपेताः । ततश्च तद्वदेवान्येऽपि घटादयो भावाः स्वहेतुप्रत्ययेभ्यस्तथोत्पत्तेः प्रकृत्यैवैकाकारप्रत्यवमर्शादिहेतवो भविष्यन्तीत्यदोषः । तुल्यप्रत्यवमर्शादेरिति । आदिशब्देन सलिलसन्धारणाद्यर्थक्रियासामर्थ्यपरिग्रहः ॥७२२–७२५॥

कथं पुनः सङ्केताभोगादिव्यवहितत्वमेषां सिध्यति ? इत्याह— कार्येत्यादि । न ह्यगृहीतसमयानां सदादिप्रत्ययप्रसूतिः, अन्यथा सङ्केतकरणवैयर्थ्यं स्यात् । तस्माद् यस्मिन्नेकाकारपरामर्शव्यवस्थितार्थक्रियासामर्थ्यमात्रप्रतिपादनस्यैवाभेदं[3] परामृश्य सदिति श्रुतिं विनिवेशयन्ति समयकृतः[4] । यद्वाऽन्यस्या इति । वस्त्वित्यस्याः श्रुतेः । एवं गवादिविशेषश्रुतेरपि वाहादिसामर्थ्यविशेषजिज्ञासायां समयः क्रियत इति योज्यम् । ततश्च संकेतोत्तरकालं व्यवहारकाले गवादिषु दृष्टेष्वपि पूर्वकृतसङ्केताभोगः, ततस्तन्नामंस्मरणम्, ततः पश्चात् सदादिप्रत्ययोदय इति

---

१. तेषु—पा०, गा० । २–२. नाक्षव्यापृत्य०—पा० गा० ।
३. ०प्रतिपादितमेवाभेदं—पा०, गा० ।
४. अत्र 'तस्मिन्सदादिप्रत्ययः' इत्यधिकं पाठमिच्छति गा०सम्पादकः ।

रूपस्पर्शादिवत् तस्येत्युक्तेश्चैत्रतुरङ्गवत्[1] ॥ ७१९ ॥

तत्प्रतिविधानम्

असारं तदिदं कार्यं[2] प्रक्रियामात्रवर्णनम् ।
न तु तज्ज्ञापकं किञ्चित् प्रमाणमिह विद्यते ॥ ७२० ॥
अक्षव्यापारसद्भावान्न ह्यनन्तरभाविनः ।
सदादिप्रत्ययास्सिद्धाः संकेताभोगतस्तु ते ॥ ७२१ ॥
यथा धात्र्यभयादीनां नानारोगनिवर्तने ।
प्रत्येकं सह वा शक्तिर्नानात्वेऽप्युपलभ्यते ॥ ७२२ ॥
न तेषु विद्यते किञ्चित् सामान्यं तत्र शक्तिमत् ।
क्षिरक्षिप्रादिभेदेन रोगशान्त्युपलम्भतः ॥ ७२३ ॥
सामान्येऽतिशयः कश्चिन्नहि क्षेत्रादिभेदतः ।
एकरूपतया नित्यं धात्र्यादेस्तु स विद्यते ॥ ७२४ ॥

---

इति चैत्राद् व्यतिरेकेण व्यपदिश्यमानः" इति ( )। तदेतद्दर्शयति—गवादिष्वित्यादि । सुबोधम् ॥ ७१८–७१९ ॥

असारमित्यादिना प्रतिविधत्ते । यदुक्तम्—"अक्षव्यापारसद्भावात् सदादिप्रत्ययानामक्षाश्रितत्वम्" ( तत्त्व० ७१३ ) इति, तत्र यदि साक्षादक्षव्यापारान्तरभावित्वादिति हेत्वर्थोऽभिप्रेतः, तदा हेतुरसिद्धः; सविकल्पकत्वेन सङ्केताभोगस्मरणादिव्यवहितत्वात् ॥ ७२०–७२१ ॥

न चैतच्छक्यं वक्तुम्—एकमनुगामिनमन्तरेण कथं परस्परव्यावृत्तात्मनो भावाः पारम्पर्येणाप्यभिन्नाकारप्रत्ययनिबन्धनं युज्यन्ते ? इत्याशङ्क्याह—यथेत्यादि । यथा ह्यामलक्यादयः परस्परमत्यन्तविभिन्नमूर्त्तयोऽपि प्रत्येकं समुदिता वा [ G. 210 ] नानाविधव्याधिव्यावर्त्तनसामर्थ्याध्यासिता भवन्त्यन्तरेणाप्यनुगामिनम् । न हि तत्र सामान्यमेव तथाविधामर्थक्रियां सम्पादयतीति युक्तं वक्तुम्; यतस्तेषु विविधार्थक्रियासम्पादनयोग्यं न सामान्यमस्ति । यदि स्यात्, तदा येयं

---

१. ०श्चैव तुरङ्गवत्—पा०, गा० । २. सार्यं—जै० ।

एवमत्यन्तभेदेऽपि केचिन्नियतशक्तितः ।
तुल्यप्रत्यवमर्शादेर्हेतुत्वं यान्ति नापरे ॥ ७२५ ॥
कार्यमात्रोपयोगित्वविवक्षायां च सच्छ्रुतेः ।
समयः क्रियते येषु[1] यद्वान्यस्या यथारुचि ॥ ७२६ ॥
वाहदोहादिरूपेण कार्यभेदोपयोगिनि ।
गवादिश्रुतिसंकेतः क्रियते व्यवहर्तृभिः ॥ ७२७ ॥
तत्संकेतमनस्कारात् सदादिप्रत्यया इमे ।
जायमानास्तु लक्ष्यन्ते [2]नाक्षाद् व्यापृत्यनन्तरम्[2] ॥ ७२८ ॥

---

क्वचित् कदाचित् कासाञ्चिद्धात्र्यादीनां चिरक्षिप्ररोगाद्युपशमनसामर्थ्योपलब्धिः, सा न स्यात्; सामान्यस्यैकरूपत्वात् । न च क्षेत्रक्षीरावसेकादिसंस्कारविशेषवशादासादितातिशयं सामान्यमेवैतामर्थक्रियां विचित्रां सम्पादयतीति युक्तम् । तस्य नित्यतया परैरनाधेयविकारस्य क्षेत्रादिभेदतोऽपि नातिशयः कश्चिद्; एकरूपत्वात् । धात्र्यादीनां त्वनित्यानां सोऽतिशयः क्षेत्रादिभेदतो भिद्यत इत्यतस्त एव रोगाद्युपशमनसामर्थ्योपेताः । ततश्च तद्वदेवान्येऽपि घटादयो भावाः स्वहेतुप्रत्ययेभ्यस्तथोत्पत्तेः प्रकृत्यैवैकाकारप्रत्यवमर्शादिहेतवो भविष्यन्तीत्यदोषः । तुल्यप्रत्यवमर्शादेरिति । आदिशब्देन सलिलसन्धारणाद्यर्थक्रियासामर्थ्यपरिग्रहः ॥७२२–७२५॥

कथं पुनः सङ्केताभोगादिव्यवहितत्वमेषां सिध्यति ? इत्याह — कार्येत्यादि । न ह्यगृहीतसमयानां सदादिप्रत्ययप्रसूतिः, अन्यथा सङ्केतकरणवैयर्थ्यं स्यात् । तस्माद् यस्मिन्नेकाकारपरामर्शव्यवस्थितार्थक्रियासामर्थ्यमात्रप्रतिपादनस्यैवाभेदं[3] परामृश्य सदिति श्रुतिं विनिवेशयन्ति समयकृतः[4] । यद्वाऽन्यस्या इति । वस्त्वित्यस्याः श्रुतेः । एवं गवादिविशेषश्रुतेरपि वाहादिसामर्थ्यविशेषजिज्ञासायां समयः क्रियत इति योज्यम् । ततश्च संकेतोत्तरकालं व्यवहारकाले गवादिषु दृष्टेष्वपि पूर्वकृतसङ्केताभोगः, ततस्तन्नामस्मरणम्, ततः पश्चात् सदादिप्रत्ययोदय इति

---

१. तेषु—पा०, गा० । २–२. नाक्षव्यापृत्य०—पा० गा० ।
३. ०प्रतिपादितमेवाभेदं—पा०, गा० ।
४. अत्र 'तस्मिन्सदादिप्रत्ययः' इत्यधिकं पाठमिच्छति गा०सम्पादकः ।

अजल्पाकारमेवादौ विज्ञानं तु प्रजायते ।
ततस्तु समयाभोगस्तस्मात् स्मार्त्तं ततोऽपि ते ॥ ७२९ ॥
अन्यत्रगतचित्तस्य वस्तुमात्रोपलम्भनम् ।
सर्वोपाधिविवेकेन तत एव प्रवर्त्तते ॥ ७३० ॥
हेतावाद्येऽपि वैफल्यं समयाभोगभाविता ।
तेषामिष्टैव संसर्गो सोऽन्वयव्यतिरेकवान् ॥ ७३१ ॥

---

स्फुटतरमालक्ष्यत एव । क्वचिदत्यभ्यासत आशुतरोत्पादादमीषां क्रमो नावधार्यते । मन्दाभ्यासास्तु स्फुटतरमवधारयन्त्येव तदित्युपसंहरति । तत्तस्मात् तदेवं समयाभोगादिव्यवहितत्वात् साक्षादनुत्पत्तेः प्रत्यक्षत्वमेषामसिद्धम् । न चापि पारम्पर्येणोत्पद्यमानस्य प्रत्यक्षत्वं न्याय्यम्; अतिप्रसङ्गादिति भावः ॥ ७२६–७२८ ॥

[ G. 241 ] इतश्च स्मार्त्तत्वात् तदन्यस्मृतिवत् प्रत्यक्षत्वमयुक्तं सदादिप्रत्ययस्येति दर्शयन्नाह—अजल्पेत्यादि । स्वलक्षणे सङ्केतस्याकरणाद् दृष्ट्वा च विकल्पनात् प्रथमतरं वस्तुस्वलक्षणविषयतयाऽभिलापसंसर्गविवेकि विज्ञानमक्षाश्रितमुपजायते । ततः पश्चात् तस्मिन्नेव परिदृष्टे वस्तुनि समयाभोगः, तदनन्तरं यथासमयं परिदृष्टार्थविषयास्तदध्यवसायितया[1] सदादि प्रत्ययास्तमेवार्थं परिदृष्टमभिलपन्तः समुत्पद्यमानाः कथमिव स्मार्त्ततां नासादयेयुः ! ततोऽपीति । यथा परिदृष्टाध्यवसायात्[2] । त इति सदादिप्रत्ययाः ॥ ७२९ ॥

कुतः पुनरयमुत्पत्तिक्रमो विज्ञानानामालक्षितः ? इत्याह—अन्यत्रेत्यादि । यतस्ते सदादिप्रत्यया अमुना क्रमेणोपजायन्ते, तत एवान्यत्र = विषयान्तरे गतचित्तस्य = व्यासक्तमनसः पुरोऽवस्थितं वस्तु पश्यतः सम्मुखीभूतवस्तुसङ्केतमनस्काराद्यप्रवृत्तेः प्रथमतरं सर्वोपाधिविविक्तवस्तुमात्रदर्शनं प्रवर्त्तते । अन्यथा हि यदि सर्वमेव साभिजल्पं विज्ञानं स्यात्, तदा पुरोऽवस्थितं वस्तु सर्वोपाधिशून्यमन्यत्रगतमनाः कथमीक्षेत ! न ह्येकस्मिन् काले युगपदभिलापद्वयं संवेद्यते । तदेवं साक्षादक्षगतावन्वयव्यतिरेकानुविधायित्वमसिद्धम् ॥ ७३० ॥

---

1. तदन्यवसायितया—जै०, पा० । 2. परिदृष्टान्यवसायात्—जै०, पा० ।

तस्य पक्षाबहिर्भावे साध्यशून्यं निदर्शनम् ।
नैव[1] तद्धेतवः साक्षाद् बाह्यवत्साङ्कुशादयः ॥ ७३२ ॥
नाभिधानविकल्पानां वृत्तिरस्ति स्वलक्षणे ।
सर्वं वाग्गोचरातीतमूर्त्तिर्येन स्वलक्षणम् ॥ ७३३ ॥
अन्तर्मात्रासमारूढं सांवृतं त्ववलम्ब्य ते ।
बहीरूपाध्यवसितं प्रवर्त्तन्तेऽङ्कुशादिकम् ॥ ७३४ ॥

---

तत्र यदुक्तम्—"गवादि" ( तत्त्व० ७१६ ) इत्यादि, तत्राह—हेताविन्यादि । यदि सामान्येनानुरूपसंसर्गि निमित्तान्तरमात्रनिबन्धनत्वमेषां प्रसाध्यते तदा सिद्धसाध्यता; यतो गवादिसङ्केताभोग एव गवादिप्रत्ययव्यपदेशानामनुरूपसम्बन्धी । तथा हि—तस्मिन् सति भवन्ति विजातीयमनस्कारे, असति[2] च न भवन्ति । अतः स एवान्वयव्यतिरेकवान् हेतुरेषां सिद्धः; तद्गतान्वयव्यतिरेकस्यैवानुविधानात्, अतो वैफल्यं हेतुप्रयोगप्रयासस्य ॥ ७३१ ॥

[ G. 242 ] अथैनं संकेतमनस्कारं पक्ष एवान्तर्भाव्य तद्व्यतिरिक्तनित्यैकानुगामिसामान्याख्यसंसर्गिनिबन्धनत्वमेषां साध्यते, तदा दृष्टान्तस्य साध्यविकलता, न ह्येवम्भूतेन कश्चिदन्वयः सिद्धः । ये चामी वत्साङ्कुशादयः सवत्साद्यभिधानप्रज्ञानहेतुत्वेन वर्णिताः, तेऽपि तद्धेतुत्वेन न सिद्धाः; न ह्येषामासादितस्वलक्षणभावानां साक्षादभिधानप्रज्ञानहेतुत्वमस्ति, सर्ववाग्विकल्पगोचरातीतरूपत्वात् स्वलक्षणस्येत्यतः साध्यविकलता दृष्टान्तस्य । पारम्पर्येण तु हेतुत्वकल्पनायामतिप्रसङ्गः स्यात्; सर्वस्यैव सर्वत्र पारम्पर्येणोपयोगस्य विद्यमानत्वात् ॥ ७३२-७३३ ॥

यद्येवम्, कथं तर्हि लोकोऽङ्कुशादि बाह्यमेव तद्धेतुत्वेनाध्यवस्यति ? इत्याह—अन्तर्मात्रेत्यादि । यत्तावदङ्कुशादिप्रज्ञप्त्युपादानं स्वलक्षणम्, न तद्विकल्पैः स्पृश्यत इत्युक्तम् । यत्तु सांवृतं तत् कल्पनाशिल्पिनिर्मितात्मरूपतयाऽन्तर्मात्रारूढमेव, न बाह्यम् । दृश्यविकल्पयोस्तु विवेकेनानभिज्ञतया जनो बाह्यमिव तमाकारं मन्यमानो बाह्यमेव वस्त्वभिधावतीति नातो बाह्यरूपतासिद्धिरङ्कुशादीनाम् । अङ्कुशादिकमिति 'अवलम्ब्य' इत्यनेन पूर्वकेण सम्बन्धनीयम् । अन्तर्मात्रासमारूढं बहीरूपतया-

---

१. नैवं—पा०, गा० । २. जै०. पा० पुस्तकयोर्नास्ति ।

क्रियागुणव्यपदेशाभावो हेतुश्च वर्ण्यते ।
अभावप्रत्ययस्येति विशेषणमनर्थकम् ॥ ७३५ ॥
तदप्ययुक्तं हेतुत्वे वस्तुता शक्तितोऽपि च ।
अभावप्रत्ययः प्राप्तः सत्तादिष्वविशेषतः ॥ ७३६ ॥
वैलक्षण्यमसिद्धं च पिण्डाकृत्यादिबुद्धितः ।
तज्ज्ञानानामसिद्धोऽपि हेतुरेष भवत्यतः ॥ ७३७ ॥
अन्वयी प्रत्ययो यस्माच्छब्दव्यक्त्यवभासवान् ।
वर्णाकृत्यक्षराकारशून्या जातिस्तु वर्ण्यते ॥ ७३८ ॥

---

ऽध्यवसितं सांवृतमङ्कुशादिकमालम्ब्य बाह्ये प्रवर्त्तत इत्यर्थः । अन्तर्मात्रा = बुद्धिः ॥ ७३४ ॥

यच्च गवादिविषयत्वे सतीति विशेषणम्, तदप्ययुक्तमेव; व्यवच्छेद्याभावादिति दर्शयन्नाह—क्रियेत्यादि । [ G. 243 ] अभावप्रत्ययस्यापि क्रियागुणव्यपदेशाभाव एव हेतुत्वेन भवद्भिर्वर्ण्यते ।

तदप्ययुक्तमिति । क्रियाद्यभावस्य हेतुत्वोपवर्णनम् । तथा हि—कार्योत्पादनसामर्थ्यमेव हेतुत्वमुच्यते, तच्च सामर्थ्यं वस्त्वाधारमेव; तल्लक्षणत्वाद्वस्तुनः । यदि चाभावोऽपि तथाविधसामर्थ्याध्यासितो भवेत्, तदा कथमिव वस्तुत्वं नासादयेत्; एतावन्मात्रनिबन्धनत्वाद् वस्तुनः । ततश्चाभावरूपतामेव विजह्यात्; वस्तुस्वभावप्रच्युतिरूपत्वादभावस्य । अपि च—यदि क्रियागुणव्यपदेशाभावोऽभावप्रत्ययहेतुः स्यात्, तदा सत्तादिष्वप्यभावप्रत्ययः प्राप्तः, तत्रापि शशविषाणादिवत् क्रियागुणव्यपदेशाभावाविशेषात् ॥ ७३५-७३६ ॥ ।

हेतुश्चासिद्ध इति दर्शयन्नाह—वैलक्षण्यमिति[1] । न हि गवादेप्रत्ययानां पिण्डादिव्यतिरिक्तमर्थान्तरमध्यवसेयमस्ति, येन तत्प्रत्ययान्यत्वमेषां भवेत् ॥७३७॥

प्रतिज्ञायाश्चानुमानबाधेति दर्शयन्नाह—अन्वयीत्यादि । एतदुक्तं भवति—अनुगामिप्रत्ययानां पिण्डादिव्यतिरिक्तं निमित्तमालम्बनभूतमेव भवद्भिः सिसाधयि-

---

१. जै०पुस्तके नास्ति ।

शङ्करस्वामिमतनिरसनम्

सामान्यस्यापि नीलादिरूपत्वे गुणतोऽस्य कः ।
भेदो नानुगतश्चैको नीलादिरुपलक्ष्यते ॥ ७३९ ॥
भासमानोऽपि चेदेष न विवेकेन लक्ष्यते ।
तत्कथं धीध्वनी व्यक्तौ वर्त्तेते तद्बलेन तौ ॥ ७४० ॥
निश्चयात्मक एवायं सामान्यप्रत्ययः परैः ।
इष्टश्चाग्रहणप्राप्तेर्युक्तं[1] नानुपलक्षणम् ॥ ७४१ ॥

---

षितम्, तच्चायुक्तम्; तस्याप्रतिभासनात्, तद्विलक्षणवर्णाकृत्यादिप्रतिभासनाच्च। तथा हि—भवद्भिर्वर्णाकृत्यक्षराकारशून्यमेव वर्ण्यते गोत्वादिसामान्यम्, विज्ञानं च वर्णादिप्रतिभासानुगतमनुभूयते, तत् कथमस्य वर्णादिशून्यमालम्बनं भवेत्, न ह्यन्याकारस्य विज्ञानस्यान्यदालम्बनं युक्तम्; अतिप्रसङ्गात्। प्रयोगः—यो यद्विलक्षणार्थप्रतिभासः प्रत्ययः स तद्ग्राहको न भवति, तद्यथा शब्दज्ञानं न रूपग्राहकम्। जातिविलक्षणवर्णादिप्रतिभासश्चान्वयी प्रत्यय इति व्यापकविरुद्धोपलब्धेः। शब्दव्यक्त्यवभासवानिति। शब्दः = गौरित्यादिव्यपदेशः, व्यक्तिः = वर्णसंस्थानात्मिका, तयोरवभासः सोऽस्यास्तीति तद्वान्। अक्षराणि = गकारौकारविसर्जनीयादीनि ॥ ७३८ ॥

शङ्करस्वामी प्राह[2]—"सामान्यमपि नीलत्वादि नीलाद्याकारमेव, अन्यथा हि 'नील' [ G. 244 ] इत्येवमनुवृत्तिप्रत्ययो न स्यात्, ततश्च हेतोरसिद्धत्वान्नानुमानबाधा" इति। तदत्राह—सामान्यस्यापीत्यादि। एवं सति गुणान्नीलादेर्नीलत्वादिसामान्यस्य विशेषो न प्राप्नोति; आकाराभेदात्।

स्यान्मतम्—गुणो हि नीलादिरनुगतो न भवति, सामान्यं तु भिन्नदेशकालव्यक्त्यनुगामीत्यत आकारभेदोऽस्ति ? इत्याह—नानुगतश्चैक इत्यादि। न हि नीलादिगुणव्यतिरिक्तमपरं नीलत्वादि नीलाद्याकारानुगतमनुगामि प्रतिभासमानमालक्ष्यते; अध्यक्षत एकस्यैव नीलादेरसाधारणस्य प्रतिभासनात्। नापि विकल्पचेतसि नीलत्वादि द्वितीयं प्रतिभासते, यथादृष्टस्यैव तेनाध्यवसायात्।

---

१. ०श्चाग्रहणे प्राप्ते युक्तं—पा०, गा०। २. त्वाह—पा०, गा०।

सिद्धेऽप्यन्यनिमित्तित्वे न सामान्यं प्रसिद्ध्यति ।
अनुगाम्येकमध्रौव्यविविक्तं च क्रमोदयात् ॥ ७४२ ॥

प्रकारान्तरेण दूषणम्

पदार्थशब्दः कं हेतुमपरं षट्स्वपेक्षते ।
अस्तीति प्रत्ययो यश्च सत्तादिष्वनुवर्त्तते ॥ ७४३ ॥

---

स्यादेतद्—यथा भवतां क्षणिकत्वं भासमानमपि नोपलक्ष्यते विवेकेन मन्दैः, तथेदमपि सामान्यमिति ? तदप्ययुक्तम्। एवं हि 'तद्दर्शनबलाद् भिन्नास्वपि व्यक्तिष्वभिन्नौ धीध्वनी भवत.' इति यदेतद्वर्णितं तन्नोपपद्यते; न हि विशेषणानुपलक्षणे विशेष्ये धीरुपजायते, यथा दण्डानुपलक्षणे दण्डीति प्रत्ययो न भवति तद्वत्रापि स्यात्। तथा हि—स्वतःशब्दप्रत्ययगोचरातिवृत्ता भेदा भवद्भिरुपवर्ण्यन्ते, तांश्च भेदान् स्वतो बुद्धिशब्दविषयव्यतिवृत्तशरीरान् सामान्यदर्शनबलेन प्रतियन् प्रतिपत्ता कथं तस्यैवानुपलक्षको नाम। अपि च—यस्याविकल्पकमेव प्रत्यक्षम्, तस्यैतद्युक्तं वक्तुम्—प्रतिभासमानमपि नोपलक्ष्यत इति; निश्चयप्रत्ययव्यापारत्वादुपलक्षणस्य। यस्य तु भवतः सर्वमेव सविकल्पकं प्रत्यक्षमिति पक्षः; तस्यायुक्तमनुपलक्षणम्; अग्रहणप्रसङ्गात्। इयमेव हि निश्चयानां स्वार्थप्रतिपत्तिर्यत्तन्निश्चयनम्। तच्चेन्न निश्चिन्वन्ति, न गृह्णन्तीत्येव प्राप्तम् ॥ ७३९-७४१ ॥

अभ्युपेत्यापि नीलादिव्यतिरिक्तार्थान्तरसिद्धिं नेष्टसिद्धिः; भवतामभिमतसाध्यार्थस्यानुमानबाधितत्वात्, तेन व्याप्त्यसिद्धेरिति दर्शयन्नाह—सिद्धेऽपीत्यादि। [G. 245] अध्रौव्यविविक्तमिति। अनित्यत्वविविक्तम्, नित्यमिति यावत्। कस्मान्न सिद्ध्यतीति ? क्रमोदयात्। गवादिभिधानप्रत्ययानामिति शेषः। यदा हि तथाविधसामान्यधर्महेतुकत्वमेषामभविष्यत्, तदा क्रमेणामी नोदपत्स्यन्त; अविकलकारणत्वाद् युगपदेवोत्पद्येरन्, युगपदुत्पद्यमानानेकपदार्थवत्। न हि परैरनुपकार्यस्य काचिदपेक्षाऽस्ति ॥ ७४२ ॥

सम्प्रति हेतोः सिद्धिमभ्युपगम्य व्यभिचारमाह—पदार्थशब्द इति। न हि पदार्थत्वं नाम षट्सु पदार्थेष्वपरमस्ति, येन 'पदार्थः पदार्थः' इत्यनुगामी प्रत्ययो

अन्यधर्मनिमित्तश्चेत् तत्राप्यस्त्यस्तितामतिः ।
तदन्यधर्महेतुत्वेऽनिष्टासक्तेरधर्मिता ॥ ७४४ ॥
व्यभिचारी ततो हेतुरमीभिरयमीक्ष्यते[1] ।
न च सर्वोपसंहाराद् व्याप्तिरस्य प्रसाधिता ॥ ७४५ ॥

भवेत् । तथा सामान्यविशेषसमवायेषु[2] न सत्तास्ति, येनास्तीति तेषु प्रत्ययः स्यात्; द्रव्यगुणकर्मस्वेव सत्तायाः स्थितत्वात्। द्रव्यादिषु तु सामान्यनिबन्धन एव व्यपदेशः परेषामभीष्ट इति न तेन व्यभिचारश्चोत्पद्यते[3] ॥ ७४३ ॥

स्यादेतत्—तत्रापि सत्तादिसदुपलम्भकप्रमाणविषयत्वं धर्मोऽस्ति, तेनान्यनिमित्तोऽयमत्रापि व्यपदेश इत्यव्यभिचार एव? इत्याह—अन्यधर्मेत्यादि । अन्यधर्मनिमित्तत्वेऽप्यभ्युपगम्यमाने व्यभिचारदोषस्तदवस्थ एव; यस्मात् तत्राप्यस्मिन् धर्मेऽस्त्येवास्तितामतिः— अस्ति सद्धर्म इति । तत्राप्यन्यधर्माभ्युपगमेऽनवस्थाप्रसङ्गः स्यात् । अन्येषामपि धर्मान्तराश्रयत्वाद्धर्मित्वप्रसङ्गश्च । ततश्च षडेव पदार्था धर्मिणः—इति षट्सङ्ख्यानियमो न स्यात् । अथानवस्थाभयाद्धर्मान्तरं नाश्रीयते? तदाऽमीभिः पदार्थेषु सत्तादौ धर्मे वा प्रवृत्तैः प्रत्ययैर्व्यभिचारिता हेतोः ।

मा भूत्तावदस्य साधारणानैकान्तिकता, सन्दिग्धव्यतिरेकिता तु केन परिह्रियते? इत्येतदाह—न च सर्वोपसंहारादित्यादि । सर्वस्मिन् धर्मिणि हेतोः साध्येन व्याप्तिप्रदर्शनं सर्वोपसंहारः ।

स्यादेतत्—व्याप्तिरत्र युक्तैवेति, निमित्तान्तराभावे हि तद्वस्तुप्रत्ययवैलक्षण्यं कथमुपपद्येत, न ह्येकविषयाणां बहूनामपि प्रत्ययानां वैलक्षण्यमस्ति, यदि स्यात्, तदा [G. 246] रूपरसादिप्रत्ययानामपि नानाविषयो न सिध्येत् । प्रत्ययभेदकृतत्वाद्विषयभेदव्यवस्थानस्येति? तदप्ययुक्तम्; न हि सामान्यप्रत्ययो वस्तुस्वस्वलक्षणविषयः परमार्थतो युक्तः; आविष्टाभिलापेन प्रत्ययेन स्वलक्षणस्याविषयीकारणात् । किन्तु यतो यतस्तस्यैकस्यापि वस्तुतो व्यावृत्तिः, तन्निबन्धनास्तत्र यथासंकेताभ्यासं तद्वस्त्वनुभवद्वारा यतो विकल्पा वाचकाश्च विश्वकल्पा यदि प्रवर्त्तेर-

१. °रयमिष्यते—पा°, गा° । २. सत्तासामान्य°—जै° ।
३. °श्चोदयते—पा°, गा° ।

उद्द्योतकरखण्डनम्

तदनन्तरमुद्दिष्टमनेनैव निराकृतम् ।
सामान्यसाधनं तस्मिन्निष्टसिद्ध्यादयः समाः ॥ ७४६ ॥
पाचकादिषु च ज्ञानं विशिष्टमुपजायते ।

प्रकारान्तरेण व्यभिचारोपपादनम्

अभावेऽभावबुद्धिश्च विनैकेनानुगामिना ॥ ७४७ ॥
इच्छारचितरूपेषु नष्टाजातेषु वा ततः ।
अनैकान्तिकता हेतोः सर्वैरेभिर्यथोदितैः ॥ ७४८ ॥
न पाचकादिबुद्धीनामस्ति किञ्चिन्निबन्धनम् ।
कर्मास्ति चेत् प्रतिव्यक्ति न तु[1] तद्भिद्यते तथा ॥ ७४९ ॥

---

नसत्यपि सामान्ये तदा को विरोध इत्यतो व्याप्त्यभाव उच्यते ॥७४४-७४५॥

यच्चोक्तम्—"गवादिष्वनुवृत्तं च" ( तत्त्व० ७१८ ) इत्यादि, तत्राह—तदनन्तरमित्यादि । अनेनैवेति समनन्तरोक्तहेतुदूषणेनैव; तत्रापि तुल्यदोषत्वात् । तथा हीष्टसिद्ध्यादयोऽत्रापि समानाः । आदिशब्देन साध्यशून्यता, दृष्टान्तस्य हेतोरसिद्धिर्व्यभिचारश्चेत्यादि परिगृह्यते ॥ ७४६ ॥

प्रकारान्तरेणापि व्यभिचारमाह—पाचकादिष्वित्यादि । न हि तत्रैकमनुगामि निमित्तं पाचकत्वपाठकत्वादिकमस्ति; येन पाचकः, पाठक इत्यनुवृत्तिप्रत्ययो भवेत् । तथा प्रागभावादिषु चतुर्षु 'अभावोऽभावः' इति कथमनुवृत्तप्रत्ययो भवेत् । न ह्यत्रापि सामान्यमस्ति; तस्य वस्त्वाश्रितत्वात् । इच्छारचितरूपेषु चन्द्रापीडादिषु नष्टाजातेषु नभस्तलोपकल्पितधवलगृहादिषु नष्टाजातेषु च महासम्मतशङ्खप्रभृतिषु बुद्धिर्विनैकेनानुगामिना कथं भवेत् । न हि तत्रापि सामान्यमस्ति; व्यक्त्याश्रितत्वात्तस्य ॥ ७४७–७४८ ॥

न पाचकादीत्यादिना[2] पाचकादिषु ज्ञानं समर्थयते । [G. 247] न हि पाचकादिषु कर्मनिबन्धना बुद्धिरिति युक्तं वक्तुम्; तस्यापि कर्मणः प्रतिव्यक्तिवद्भेदाभ्युपगमात् । भिन्नेषु हि विनैकेनानुगामिनाऽन्वयी प्रत्ययो नोपपद्यत

---

१. ननु—पा०, गा० । २. पाचकादिष्वित्यादिना—जै० ।

भिन्नेष्वन्वयिनोऽसत्वे न युक्तान्वयिनी मतिः ।
इत्येकमिष्टं सामान्यं सर्वव्यक्त्यनुवृत्तिमत् ॥ ७५० ॥
कर्मान्वयदरिद्रं च यदि हेतुः प्रकल्प्यते ।
तदा व्यक्तय एवास्याः किमितीष्टा न हेतवः ॥ ७५१ ॥
पाचकादिमतिर्न स्यात् तत्र चोपरतक्रिये ।
न सदासन्निधानं हि कर्मेष्टं जातिवत् परैः ॥ ७५२ ॥
अतीतानागतं कर्म निमित्तीकृत्य तेषु चेत् ।
पाचकादिषु धीशब्दौ, तन्न हेतुरसत्त्वतः ॥ ७५३ ॥

शङ्करस्वामिमतम्

क्रियात्वजातिसम्बन्धक्रियायोगान्मतिर्यदि ।
नष्टक्रियेऽपि च तया ध्रुवहेतूपलक्षणात् ॥ ७५४ ॥
न तु नष्टक्रिये तत्र लक्षितापि न विद्यते ।

---

इति कृत्वा सामान्यं 'सर्वव्यक्त्यनुगतं परिकल्प्यते भवद्भिः । यदि चान्वयशून्यमपि कर्माभिन्नाभिधानप्रत्ययहेतुः स्यात्, तदा को व्यक्तिषु प्रद्वेषो येन ताः परिहृत्य सामान्यं तद्धेतुत्वेन कल्प्यते । किञ्च—यदि कर्मनिबन्धनः पाचकादिषु प्रत्ययः स्यात्, तदा परतः क्रिये पाकमकुर्वति पाचक इति प्रत्ययो न स्यात् । न हि जातिवद्भवद्भिः सदा सन्निहितं कर्माभीष्टम्, येनोपरतक्रियेऽपि प्रत्ययः स्यात् । न हि यो यन्निबन्धनः स तदभावे भवितुमर्हति; अतिप्रसङ्गात्, एवं हि सर्वः सर्वनिबन्धनं स्यात् । न चाप्यतीतानागतं कर्म तत्प्रत्ययनिबन्धनं युक्तम्; तस्यातीतादेरसत्त्वात्, असतश्च हेतुभावानुपपत्तेः ॥ ७४९–७५३ ॥

शङ्करस्वामी प्राह—"पाचकाद्यनुवृत्तिप्रत्ययस्तत्कर्मजातिसम्बद्धया क्रियया योगात्तस्माद् भवति, तेनोपरतक्रियेऽपि क्रियया [1]ध्रुवनिमित्तस्योपलक्षणात्पाचकादित्वस्य इत्यवसेयम्" (        ) इति । तदेतद्दर्शयति—क्रियेत्यादि । तयेति क्रियया । ध्रुवनिमित्तं क्रियात्वजातिः ॥ ७५४ ॥

न त्वित्यादिना प्रतिविधत्ते । स्वस्या आधारः—क्रियाजातेः[2] सैव

---

१. ०लक्षणात्पाचकादि०—दा०, गा० । २. क्रियत्वजातेः—गा० ।

तत्प्रतिविधानम्

गृह्यते वा[1] ध्रुवा जातिः स्वाधारविनिवृत्तितः ॥ ७५५ ॥
दण्डाङ्गदादिजातीनामेकदा न हि लक्षणे ।
तद्वियोगेऽपि दण्ड्यादिमतिस्तेषु प्रवर्त्तते ॥ ७५६ ॥
अथापि पाचकत्वादिजातिरन्यैव वर्त्तते ।
सद्योजातेऽपि तद्योगात् पाचकादिमतिर्भवेत् ॥ ७५७ ॥
सदादिमतिजन्नो[2] चेत् तदा सा समवायिनी ।
पश्चादपि न सा तत्र तथा स्यादविशेषतः ॥ ७५८ ॥
तत्सम्बद्धस्वभावस्य वैगुण्यान्न तयोरसौ ।
समवायस्तथा पश्चात् तादात्म्ये च कथं भवेत् ॥ ७५९ ॥

---

क्रिया। न हि जातेराश्रयग्रहणमन्तरेण केवलाया ग्रहणम् = अवस्थितिर्वास्ति; अनाश्रितत्वप्रसङ्गात् ॥ ७५५ ॥

[G. 248] स्यादेतद्-एकदा जातेर्लक्षितत्वादुपरतेऽति कर्मणि तदाधारे प्रवर्त्तत एव तन्निबन्धनप्रत्ययः ? इत्याह—दण्डेत्यादि । एवं ह्यतिप्रसङ्गः स्यात्, न हि दण्डादिजातीनामेकदा लक्षितत्वात् परित्यक्तदण्डेष्वपि तेषु देवदत्तादिषु दण्डी, कुण्डली-इत्यादिमतिर्भवेत् । न च पाचकत्वादिजातिरत्राप्यस्तीति युक्तम्; सद्योजातेऽपि जातेर्विद्यमानत्वात् पाचकादिबुद्धिप्रसङ्गः स्यात् । स्यादेतद्—यथा सत्तानिबन्धनापि सदिति मतिर्भवन्ती न सर्वदा भवति, तथा जातिरप्याश्रयविशेष-समवायिनी भवन्ती न सर्वदा भविष्यति, तेन सद्योजातावस्थायां जातिर्नैव समवायिनी भविष्यति । 'समवायिनी' इत्युपलक्षणम्, नाभिव्यक्तेत्यपि ज्ञेयम् । एवं तर्हि न कदाचिदपि सा तत्समवायिनी प्राप्नोति । तथा हि—प्रथमतरं तयोर्जातिद्रव्ययोस्तत्सम्बद्धस्वभाववैगुण्यान्न समवायो जातेः, पश्चादपि तद्वैगुण्यं तदवस्थमेवेति कथं सा समवेयात् । न हि द्रव्यं भवतां मतेन क्षणिकम्, येन पश्चाद्विशिष्टता तस्य भवेत् । तथेति समवायिनी । तयोरिति जातिद्रव्ययोः । तादात्म्य इति अपरित्यक्तप्राक्तनविगुणरूपत्वे ॥ ७५६–७५९ ॥

---

१. या—गा०, गा० । २. मतिवान्नो—जै० ।

यदि नामाध्रुवा व्यक्तिर्लभेतातिशयं तदा ।
जातेस्तु विगुणं रूपं न कदाचिन्निवर्त्तते ॥ ७६० ॥

उद्द्योतकरमतम्

रचनादिक्रियायाश्च प्रधानं साधनं मतम् ।
पाचकादीति तच्चास्ति प्राधान्यं पाचकान्तरे ॥ ७६१ ॥

तत्प्रतिविधानम्

प्राधान्यं किमिदं नाम न शक्तिरसमन्वयात् ।
द्रव्यक्रियागुणात्मादि नात एवावकल्प्यते ॥ ७६२ ॥

---

अथापि द्रव्यमनित्यमङ्गीक्रियते, तदापि दोष इति दर्शयन्नाह—यदि नामत्यादि ।

यदि नामाध्रुवतया व्यक्तिरतिशयं पश्चाल्लभते, जातेस्तु ध्रुवत्वात् प्राग्वत् पश्चादपि तत्समवायविगुणं रूपमस्ति, कथमिव पश्चादपि समवायिनी भवेत् । न चापि पश्चात्कालभाविद्रव्यसमवायाविगुणरूपैव जातिः सर्वदावस्थितेति शक्यं वक्तुम्; द्रव्यस्यापि [ G. 249 ] नित्यत्वप्रसङ्गात्, तत्सम्बद्धस्वभावाया जातेः सदावस्थितत्वात् । न हि द्वितीयसम्बन्ध्यभावे तत्सम्बद्धत्वभावात्[1] स्वभाववैगुण्यं[1] युक्तम् ॥ ७६० ॥

पचनादीत्यादिनोद्द्योतकरविहितं परिहारमाशङ्कते । स ह्याह—हेत्वर्था-परिज्ञानादिदमुच्यते । यथा पाचकादिशब्दा अनुवृत्ताश्च भवन्ति, न च पाचकत्वं नाम सामान्यमस्ति, तथा गवादिष्वनुवृत्तिप्रत्यया इति । यस्माद्विशेषप्रत्ययानामना-कस्मिकत्वादित्यस्य हेतोरयमर्थः—पिण्डप्रत्ययव्यतिरिक्तप्रत्ययस्य निमित्तान्तरादुत्पाद इति, न पुनः सर्वोऽनुवृत्तिप्रत्ययः सामान्यादेव भवतीति । एवं सति पचनक्रियाया यत् प्रधानं साधनम्, तत् पाचकशब्देनोच्यते; तच्च प्राधान्यं पाचकान्तरेऽप्यस्तीति न दोष इति ॥ ७६१ ॥

तदेतत् प्राधान्यमित्यादिना प्रतिविधत्ते । किमिदं प्राधान्यं नाम ? यदि शक्तिः; तदयुक्तम्; तस्याः प्रत्याधारनियताया व्यक्त्यन्तरासमन्वयात् । नापि

---

१–१. तत्सम्बद्धस्वभावा॰—पा॰, गा॰ ।

उपसंहारः

तद्विजातीयविश्लेषिरूपमात्रावसायिनी ।
संकेतभेदसापेक्षा पाचकादिषु शेमुषी ॥ ७६३ ॥
यथासंकेतमेवातः शब्दा बुद्धय एव च ।
विभागे [1]नानुवर्तन्ते भिन्नैकेनानुगामिना ॥ ७६४ ॥
तथा चाभावविज्ञानं नाभावेषु विरुध्यते ।
ध्वनिर्वाऽनुगतोऽनर्थसंकेतानुगमात् तयोः ॥ ७६५ ॥

---

द्रव्यादीनामात्मा स्वभावः स्वातन्त्र्यम्; अत एवासमन्वयात् । आदिशब्देन षट्पदार्थव्यतिरिक्त इष्टो धर्मो गृह्यते । यत् पुनरुक्तम्—"निमित्तान्तरादुत्पाद इत्यस्यायमर्थ" इति, तत्र प्रतिविहितमेव । सामान्येन किञ्चित् निमित्तान्तरमस्तीति साधने सिद्धसाध्यता; सङ्केतमनस्कारस्य निमित्तत्वेनेष्टत्वात् । विशेषेण त्वन्वयवैकल्यं व्यभिचारश्च पाचकादिप्रत्ययैरिति ॥ ७६२ ॥

तदित्यादिनोपसंहरति । तत—तस्मात्, यतो[2] निमित्तान्तरं निरूप्यमाण पाचकादिधियो नोपपद्यते, तस्मात् । भिन्नजातीयस्य व्यवच्छिन्नवस्तुमात्राध्यवसायिनी यथासमयम् 'पाचकः पाचकः' इत्येवमाकाराऽनुगता भिन्नेष्वपि वस्तुष्वभेदेन पाचकादिषु शेमुषी = धीरुपजायते; [G. 250] सर्वत्र विजातीयव्यवच्छेदस्य विद्यमानत्वात् । यत एवं गवादिष्वपि यथासङ्केतमभिन्नाकारव्यवसायिनः प्रत्ययाः शब्दाश्च प्रवर्तिष्यन्ते विनापि सामान्यमित्यनैकान्तिकता हेतोः ॥ ७६३-७६४ ॥

तथा चेत्यादिना 'अभावेऽभावबुद्धिश्च' इत्येतत् समर्थयते । इदमेव हि सामान्यप्रत्ययस्य निबन्धनं व्यापि यदुत सङ्केताभोगः, अन्यथा ह्यभावेष्वभाव इत्यनुगतः प्रत्ययो ध्वनिश्च केन न विरुध्येत । न ह्यत्र जातिरस्ति; वस्तुसमवायिनीत्वात्तस्याः । कस्मान्न विरुध्यते ?— इत्यत्र कारणमाह—अनर्थसंकेतानुगमात्तयोरिति । अविद्यमानो जात्यादिरर्थो यस्मिन् सङ्केते स तथोक्तः, तस्मादनुगमात् = अन्वयात्, तयोः = ध्वनिविज्ञानयोः शब्दज्ञानयोः । सङ्केतमात्रान्वयव्यतिरेकानुविधायित्वादिति यावत् ॥ ७६५ ॥

---

१. न प्रवर्तन्ते- पा०, गा० । २. यद्यतो—पा०, गा० ।

शङ्करस्वामिन उत्तरम्

घटस्य प्रागभावोऽयं घटप्रध्वंस इत्ययम् ।
तद्वस्तूपाधिकानेव धीरभावान् प्रपद्यते ॥ ७६६ ॥
उपाधिगतसामान्यवशादेवानुवृत्तता ।
तस्याः सर्वत्र चेत् ?

तत्खण्डनम्

नैवम्; वैलक्षण्यातदाश्रयात् ॥ ७६७ ॥
घट इत्यादिका बुद्धिस्तेभ्यो युक्ताऽनुगामिनी ।
नाभावो भाव इत्येषा तन्मतिस्तु विलक्षणा ॥ ७६८ ॥
न हि सत्तावशाद् बुद्धिर्गौरश्व इति चेष्यते ।
एकमेवान्यथा कल्प्यं सामान्यं सर्वसाधनम् ॥ ७६९ ॥

भाविविक्तमतम्

न निमित्तानुरूपा चेत् सर्वस्मिन् बुद्धिरिष्यते ।

---

घटस्येत्यादिना शङ्करस्वामिन उत्तरमाशङ्कते । स ह्याह—न हि तेष्वभावेष्वनुपाधिकाः प्रत्यया दृश्यन्ते, किं तर्हि ? घटस्य प्रागभावः, घटस्य प्रध्वंसाभावः—इत्येवं सर्वत्राभावप्रत्ययो वस्तूपाधिकानेवाभावानवलम्बते । तस्मात् सर्वत्रैव तस्या धिय उपाधिगतसामान्यवशादेवानुवृत्ततेति नास्ति व्यभिचार इति । तस्या इति । धियः प्रकृतत्वात् सम्बन्धः ।

नैवमित्यादिना प्रतिविधत्ते । वैलक्षण्यसहितोऽतदाश्रय इति विग्रहः । समाहारद्वन्द्वो वा वैलक्षण्यादतदाश्रयाच्च नैव युक्तमित्यर्थः । तत्र 'वैलक्षण्यात्' इत्यस्य तावद्विस्तरेण समर्थनमाह—घट इत्यादि । [ G. 251 ] न ह्येकोपाधिनिबन्धना भिन्नाकारा बुद्धयो युक्ताः, एकेनैव सर्वसामान्यकार्यसाधनादनेकसामान्यकल्पनावैयर्थ्यप्रसङ्गात् । तस्माद् घटत्वादिसामान्यवशाद् 'घटः' इत्यादिका धियो भवन्तु, 'अभावः' इत्यादिकास्तु कथमिवात्यन्तविलक्षणास्तन्निबन्धना युज्येरन्, न हि सत्तावशाद् गोत्वादिधीर्भवेत् ॥ ७६६-७६९ ॥

भाविविक्तस्त्वाह—"न हि सर्वत्र निमित्तानुरूपः प्रत्यय इष्यते । तथा हि—गजतुरगधवखदिरादिसमवायिनी बहुत्वसङ्ख्या सेनावनादिबुद्धीनां निमित्तम्,

यतस्सेनादिबुद्धिनां सङ्ख्यादीष्टं निबन्धनम् ॥ ७७० ॥

तन्निरासः

यद्येवमियमेष्वेव भेदेष्विष्टा न किं मतिः ।
इच्छारचितसंकेतभेदाभोगानुसारिणी ॥ ७७१ ॥

आभोगमात्रस्यान्वयव्यतिरेकाभ्याम्
अनुगतप्रत्ययहेतुत्वम्

भेदज्ञाने सतीच्छा हि संकेतकरणे ततः ।
तत्कृतिस्तच्छ्रुतिश्चास्या आभोगस्तन्मतिस्ततः ॥ ७७२ ॥
अन्वयव्यतिरेकाभ्यामियदेव[1] विनिश्चितम्[1] ।
समर्थं कारणं यस्यामन्येषामनवस्थितिः ॥ ७७३ ॥
अनुरूपो हि संसर्गी स्यादित्यन्यार्थकल्पना ।

---

पानककाञ्जिकादिबुद्धीनां विजातीयद्रव्यसंयोगो निमित्तम्, अन्यथा हि 'बहवः संयुक्ताः' इति च प्रत्ययः स्यात्" इति, तदेतत् न निमित्तेत्यादिनाऽऽशङ्क्य यद्येवमित्यादिना प्रतिविधत्ते । इयमिति सामान्यधीः । सङ्केतस्य भेदो विशेषः ॥ ७७०-७७१ ॥

कः पुनरत्रातिशयो येनैवमुच्यते ? इत्याह—भेदेत्यादि । अन्वयव्यतिरेकसमधिगम्यः कार्यकारणभावः, स च सामान्यधियं प्रतीच्छारचितसङ्केताभोगमात्रस्य निश्चितः । तथा हि—प्रथमतरं तावद् भेदविषयमनुभवज्ञानमुत्पद्यते, तस्मिन्नुत्पन्ने सङ्केतकरणेच्छा जायते, ततश्चेच्छातस्तस्य सङ्केतस्य कृतिः = करणम्, ततस्तस्यैव व्यवहारकाले श्रुतिः = श्रवणम्, अस्याश्च श्रुतेः सकाशादुत्तरकालमाभोगो यथाश्रुतसङ्केतविषयः, ततश्चाभोगात् तेष्वेव भेदेषु तदध्यवसायेन प्रवृत्ते 'घट' इत्यादिका मतिरुदयमासादयति । आगोपालमेतावन्मात्रमेवास्यां बुद्धौ कारणत्वेन निश्चितम् । अपरिदृष्टसामर्थ्यस्य तु सामान्यस्य कारणत्वोपकल्पनेऽतिप्रसङ्गः स्यात्, तदपि कल्पयित्वाऽपरमप्यदृष्टसामर्थ्येन तुल्यत्वात् किमिति न कल्प्येत ॥ ७७२-७७३ ॥

[G. 252] तत्रैवोपचयमाह—अनुरूपो हीत्यादि । तथा हि भवद्भिः

---

१—१. मिदमेव०—पा०, गा० । 'अन्वयव्यतिरेकाभ्यां कल्पितो ज्ञातशक्तिषु'—इति जै० पुस्तके पाठान्तरम् ।

वैलक्षण्ये तु बुद्धीनामियदेवाश्रितं वरम् ॥ ७७४ ॥
सामर्थ्यनियमो ह्यत्र कल्पनीयो वरं स च ।
अन्वयव्यतिरेकाभ्यां कल्पितो ज्ञातशक्तिषु ॥ ७७५ ॥

सामान्यस्यापि तदसम्भवोपपादनम्

अन्वयानुविधानं च सामान्येषु न विद्यते ।
सदाऽसत्त्वान्न नित्यानां व्यतिरेकस्तु सम्भवी ॥ ७७६ ॥
अद्रव्यादिधियो हेतुर्न गुणत्वादि युक्तिमत् ।

---

सामान्यबुद्धीनामनुरूपमालम्बनाख्यं हेतुं निरूपयद्भिः भेदान्यर्बुदस्य सामान्यमुपकल्पितम्, यदि च तदपि कल्पितं सामान्यमन्याकारा अपि बुद्धीर्जनयति, तदा वरमियदेव, यदेव यथोपवर्णितं दृष्टसामर्थ्यं कल्पितं भवेत्, एवं ह्यदृष्टार्थकल्पना न कृता स्यात् । अपि च—कथमभिन्नं सामान्यं विलक्षणा बुद्धीर्जनयतीति पृष्टेन सता वक्तव्यमिदमवश्यम्—यदुत शक्तिप्रतिनियमोऽयं पदार्थानां यदेकमपि सदनेकाकारप्रत्ययोपजननायालमिति । यद्येवम्, ज्ञातशक्तिषु निश्चितसामर्थ्येषु भेदादिष्वेव सामर्थ्यनियामकमिति न कल्प्येत ! एवं हि नानुभवविरुद्धमनुष्ठितं स्यात् ॥ ७७४–७७५ ॥

स्यादेतत्—सामान्यस्याप्यन्वयव्यतिरेकाभ्यां सामर्थ्यं निश्चितमेवेत्याह—अन्वयेत्यादि । सदा सदादिप्रत्ययानामसत्त्वादनुत्पत्तेर्नैषां तद्गतान्वयानुविधायित्वं युक्तम् । यदि ह्येते सामान्यानुविधायिनः स्युः, तदा सर्वदा सामान्यस्यावस्थितत्वात् किमिति सदा न भवेयुः, न हि सामान्यस्य काचिदपेक्षास्ति, परैस्तस्यानाधेयविशेषत्वात्, अतो न तद्गतान्वयानुविधानमेषाम् । नापि व्यतिरेकानुविधानम्, तथा हि—यदाऽमी सदादिप्रत्यया नोत्पद्यन्ते, तदा तत्र सामान्याभावः कारणमिति न शक्यं वक्तुम्; नित्यानां सदाऽवस्थायितया व्यतिरेकासम्भवात्, अतो नापि तद्गतव्यतिरेकानुविधानमेषामस्ति ॥ ७७६ ॥

यतश्चैवं निमित्तान्तराभ्युपगमे सामान्यादिधियां दोषः; तस्माद्यत् परैरुच्यते—"गुणत्वादिरेव सामान्यविशेषो गुणादिष्वद्रव्याकर्मादिप्रत्ययहेतुः, सामान्येषु च सत्तादिषु सामान्यमित्यनुगतप्रत्ययस्यानेकार्थसमवायो निमित्तम्" (      ) इति,

अनेकसमवायश्च न सामान्यधियस्ततः ॥ ७७७ ॥
अनेकसमवायश्च सङ्ख्यादिष्वपि विद्यते ।
सामान्येष्विव तेषु स्युः सामान्यमिति बुद्धयः ॥ ७७८ ॥
घटत्वादि च सामान्यं घटादावेव वर्त्तते ।
नाभावेष्वस्य वृत्तिस्तु तस्मात् तेषु कथं नु धीः ॥ ७७९ ॥
नाश्रयान्तरवृत्तार्द्धि युक्तावन्यत्र धीध्वनी ।
हस्तित्वादिव कर्कादावत्रैकार्थाश्रयोऽपि न ॥ ७८० ॥
रसः शीतो गुरुश्चेति स्यादेकार्थाश्रयान्मतिः ।
इहायमपि नैवास्ति नाभावो वर्त्तते क्वचित् ॥ ७८१ ॥

---

रादपास्तं भवतीत्येतदाह—अद्रव्यादीत्यादि ॥ ७७७ ॥

[ G. 253 ] अतिप्रसङ्गश्चास्यामपि कल्पनायामिति दर्शयन्नाह—अनेके-त्यादि । यद्यनेकार्थसमवायः सामान्येषु सामान्यधियो निबन्धनं स्यात्, तदा सङ्ख्यासंयोगविभागावयविद्रव्यादिष्वनेकद्रव्याश्रितत्वमस्तीति; तेष्वपि सामान्यमिति धियः स्युः, निमित्ताविशेषात् । एकबुद्धिहेतुत्वमपि सत्तादीनां सदाद्याकारेण स्वात्म-नियतत्वान्न सामान्यान्तरमास्कन्दति, ततश्च तद्बलेनापि न सामान्येषु 'सामान्यं सामान्यम्' इत्यनुगतः प्रत्यय उपपद्यते । ततश्चासम्बद्धमिदं कुमारिलेनोक्तम्—

"तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तादावेकधीकरणेन वा" ॥

( श्लो० वा०, आकृ० २४ ) इति ॥ ७७८ ॥

एवं तावद् "वैलक्षण्यात्" ( तत्त्व० ७६७ ) इत्येतद्व्याख्यातम्, "अत-दाश्रयात्" ( तत्त्व० ७६७ ) इत्येतद्व्याचिख्यासुराह—घटत्वादि चेत्यादि : घटादिष्वेव सामान्यं समवेतम्, नाभावेषु; तस्यावस्तुत्वात् । तत्कथं तेष्वभावेषु तस्माद् घटत्वादेरन्यसमवायिनः सामान्यानुकारानुगतः प्रत्ययो भवेत् । न हि गोत्वादि कर्कादिष्वेकाकारप्रत्ययनिबन्धनं भवति । ननु चान्यत्र समवेतादप्य-न्यत्र प्रत्ययो दृष्टः, तद्यथा—मधुरो रसः स्निग्धः शीतो गुरुश्चेति ? अत्राह—एकार्थाश्रयोऽपि नेति । यत्रैव हि द्रव्ये माधुर्यं समवेतं तत्रैव शीतत्वादयोऽ-

उद्द्योतकरमतम्

विशेषणविशेष्यत्वसम्बन्धोऽस्तीति[1] चेदिह ।

तत्प्रतिविधानम्

सम्बधान्तरसद्भावे ननु चासौ प्रकल्प्यते ॥ ७८२ ॥
तयोरासत्तिमाश्रित्य विशेषणविशेष्यता ।
कल्प्यते तदभावे तु साऽनिमित्ता न सिद्ध्यति ॥ ७८३ ॥
घटस्य प्रागभावोऽयमित्यादि वचनं पुनः ।
कल्पनामात्रनिर्माणं कल्पिते शूरतादिवत् ॥ ७८४ ॥
विशेषणविशेष्यत्वं यत्र वस्तुसमाश्रयम् ।
सम्बन्धान्तरसद्भावस्तत्रावश्यं[2] प्रकल्प्यते ॥ ७८५ ॥

---

णीत्येकार्थसमवायबलादत्र भवति सामानाधिकरण्यम्, न तु पुनरभावो घटत्वादि-सामान्यैः सह क्वचिदप्येकस्मिन् द्रव्ये समवैति; नीरूपस्य क्वचिदपि समवायायोगात् ॥ ७७९–७८१ ॥

विशेषणेत्यादिनाऽत्रोद्द्योतकरस्य परिहारमाशङ्कते । [G 254] स आह—"घटत्वादीनां सामान्यानां घटादिभिः समवायलक्षणः सम्बन्धः, अभावानां तु विशेषणविशेष्यभावलक्षणः, ततश्च सामान्याभावयोरेकार्थसम्बन्धोऽत्रापि व्यपदेशहेतुरस्त्येव" ( ) इति ।

तदत्र प्रतिविधानमाह—सम्बन्धान्तरेत्यादि । सम्बन्धान्तरोपजनितो हि भावानां परस्परं विशेषणविशेष्यभावः, तद्यथा – दण्डदेवदत्तयोः राजपुरुषयोश्च संयोग-स्वस्वामिभावादिकं सम्बन्धमाश्रित्य विशेषणविशेष्यता । तस्य तु सम्बन्धान्तरस्य विशेषणविशेष्यभावं प्रति निमित्तभूतस्याभावे सा विशेषणविशेष्यता कथमिव भवेत्, अन्यथा ह्यतिप्रसङ्गः स्यात् । एवं हि सर्वं सर्वस्य विशेषणं भवेत् ॥ ७८२–७८३ ॥

कथमिदानीम् 'घटस्य प्रागभावः' इत्यादिविशेषणविशेष्यभावो लोके सम्बन्धमन्तरेण प्रतीतः ? इत्याह—घटस्येत्यादि । प्रागभूत्वा भवतीत्येतन्मात्रार्थ-

---

१. ०ऽप्यस्ति—पा०, गा० । २. तथावश्यं—पा०, गा० ।

### शङ्करस्वामिमतखण्डनम्

अभावोऽभाव इत्येव ज्ञानमत्रावचोदितम् ।
उपाधिस्थं च सामान्यं स्वाश्रयेष्वेव वर्त्तते ॥ ७८६ ॥
न चानुयायि तेष्विष्टमन्यत् सत्त्वं यदीष्यते ।
न षडर्थातिरेकेण जायन्तेऽभावबुद्धयः ॥ ७८७ ॥

---

जिज्ञासायां बुद्धिरियं कल्पिका भावादर्थान्तरभूतमिव सम्बन्धेन प्रागभावमुपदर्शयन्ती प्रसूयते । तदभिप्रायवशादत्र विशेषणविशेष्यभावः, न तु वास्तवः । यथा कल्पनाशिल्पिघटितस्य शूरत्वादयो धर्मा विशेषणत्वेनोपादीयन्ते । यत्र तु भिन्नवस्तुसमाश्रयो विशेषणविशेष्यभावो गृहीतः, तत्रावश्यं सम्बन्धान्तरमन्वेषणीयम्; अन्यथा व्यवस्थानियमो न स्यात् ॥ ७८४–७८५ ॥

अपि चायं न चोद्यानुरूप[1] एव परिहारः शङ्करस्वामिनोक्त इति दर्शयन्नाह—अभावोऽभाव इत्यादि । [ G. 255 ] यदिदं घटाभावे शशविषाणाद्यभावे वा–'अभावोऽभावः' इत्यनुगामिज्ञानं प्रवृत्तम्, तत्रास्माभिरसत्यपि समान्येऽनुगतप्रत्ययदर्शनाद् व्यर्थान्यत्रापि सामान्यकल्पनेति चोदितम्; न तु सजातीयानां बहूनां घटादीनां ये प्रागभावादयः,तत्र यज्ज्ञानम्[2] । यदि नामैवम्, ततः किम् ? इत्याह—उपाधिस्थं चेत्यादि । घटाद्युपाधिगतं यत् सामान्यं घटत्वादि, तत् स्वाश्रयेष्वेव घटादिषु वर्त्तते, नाश्रयान्तरे पटादौ, तत् कथं विजातीयपटादगतप्रागभावादौ तस्मात् प्रत्ययः स्यादिति भावः ॥ ७८६ ॥

सर्वत्रैकमनुगामि सामान्यमस्तीति चेत् ? आह—न चेत्यादि । न हि सकलपटादिविजातीयानेकपदार्थव्याप्यपरं सामान्यमस्ति, यतोऽसौ प्रत्ययो भवेत् ।

स्यान्मतम्—सत्ताख्यं महासामान्यमस्ति तद्बलादभावप्रत्ययो भविष्यतीति ? तदयुक्तम्; व्यभिचारात् । तथा हि—षट्पदार्थव्यतिरेकेणापरस्य प्रतिसङ्ख्यानिरोधादेः पदार्थस्याभाव इति भवतामभावबुद्धयो याः समुदाचरन्ति, तथोत्पाद-

---

१. नवोद्यानुरूप—पा०; नश्चोद्यानुरूप—गा०
२. 'तत्र' इत्यधिकः पाठो गा० पुस्तके ।

इच्छारचितरूपादावर्थे जातिर्न विद्यते ।
व्यक्तेरसम्भवादेव स्थिता तद्व्यभिचारता ॥ ७८८ ॥
अतीतानुपजातेषु नित्यसामान्यगोचरम् ।
ज्ञानं चेत् केवलं नेदं[1] सामान्यं गृह्यते न तु ॥ ७८९ ॥

---

कथारचितानां कपिञ्जलादीनां स्वभावः[2] परमार्थत इति मतयः, तासु कतमदुपाधिगतं सामान्यम्, यत्तासां निमित्तं स्यात् । न ह्येषां प्रतिसङ्ख्यानिरोधादीनां सत्त्वमस्ति भवन्मतेन । एतेनैतदपि प्रत्युक्तं यदुक्तं कुमारिलेन—

"ननु च प्रागभावादौ सामान्यं वस्तु नेष्यते ।
सत्त्वैव ह्यत्र सामान्यमनुत्पत्त्यादिरूपता[3] ॥" इति। (श्लो० वा०, अ० १९)

अनुत्पत्त्यादिरूपता = अनुत्पादादिविशिष्टतेत्यर्थः । अत्रापि ह्ययमेव दोषः । न हि मतान्तरीयाणां[4] पदार्थानामुत्पाद्यकथार्थानां च सत्तास्ति, येन तदभावप्रतीतिः स्यात् । तदध्यवसायिविकल्पसत्ता तत्र बहिरर्थशून्या प्रतीयत इति चेत् ? यद्येवम्, नित्यैकसत्तारहितो विकल्पमात्रात्मक एव सकलशब्दार्थः किं नेष्यते ! अन्यथा हि नित्यैकसत्तादिरूपसामान्याभ्युपगमे सत्तापुरुषत्वादीनां सर्वत्र स्वभेदे निरतिशयत्वात् कथं भिन्नरूपा प्रतीतिः स्यादिति चोद्यं दुष्परिहारमेव स्यादिति ॥ ७८७ ॥

इदानीमिच्छारचितरूपेषु नष्टाजातेषु चैतत् समर्थनमाह—इच्छारचितेत्यादि । [G. 256] इच्छया रचितं रूपं स्वभावो यस्य स तथोक्तः, स आदिर्यस्येति विग्रहः । आदिशब्देन नष्टाजातपरिग्रहः । न हि तत्र कल्पितादिषु सामान्यमस्ति, येन तन्निबन्धना तेषु मतिः स्यात् ।

स्यादेतत्—मा भूत् कल्पितेषु सामान्यम्, अतीताजाते तु तन्निबन्धना बुद्धिर्भविष्यति ? तदेतन्मिथ्या; न ह्याश्रितानामयं धर्मो यदाश्रयमन्तरेणापि केवलानामवस्थानं भवेत्; अनाश्रितत्वप्रसङ्गात् ।

भवतु नाम केवलानामवस्थानम्, तथापि दोष एव; केवलस्य सामान्यस्य

---

१. चेदं—पा०, गा० । २. ०ञ्जलादीनामभावः—पा०, गा० ।
३. रूपिता—इति तत्रस्थः पाठः । ४. मतान्तरीयानां—पा०, गा० ।

केवलस्योपलम्भे वा न व्यक्तीनामिदं भवेत् ।
सामान्यं न च तद्व्यङ्ग्यं विन्ध्यस्येव हिमालयः ॥ ७९० ॥
नोत्पत्तिपारतन्त्र्येण प्रतिबद्धं हि तास्विदम् ।
न ज्ञानपारतन्त्र्यं च नित्यत्वात् केवलग्रहात् ॥ ७९१ ॥
स्वाश्रयेन्द्रिययोगादिव्यपेक्षाया असम्भवात् ।
तत् सदैवोपलभ्येत यदि वा न कदाचन ॥ ७९२ ॥
स्वात्मनि ज्ञानजनने योग्यं वाऽयोग्यमेव वा ।
यद्येकदा तदा रूपं सर्वदैव हि तद् भवेत् ॥ ७९३ ॥
तस्य योग्यमयोग्यं वा रूपं यत् प्रकृतिस्थितम् ।
तद् ध्रौव्यादप्रकम्प्यं हि को नाम चलयिष्यति ॥ ७९४ ॥

---

ग्रहणानभ्युपगमात् । तथा चोक्तम्—"स्वाश्रयेन्द्रियसन्निकर्षापेक्षप्रतिपत्तिकं सामान्यम्" ( ) इति । केवलस्य सामान्यस्यग्रहणे सामान्यधियो व्यक्तिव्यवसायो न प्राप्नोति; व्यक्तेस्तदानीमभावात् । व्यक्तीनामिदं सामान्यमिति सम्बद्धश्च न स्यात्; निबन्धनाभावात् । तथा हि—निबन्धनं भवत् सम्बन्धस्य तद्व्यङ्ग्यत्वं वा सामान्यस्य भवेत्; तज्जन्यता वा, तद्ग्रहणापेक्षग्रहणता वा । तत्र न तावत्ताभिर्व्यङ्ग्यत्वात् तत्सम्बद्धं सामान्यम्; नित्यतया परैरनुपकार्यस्य विशेषाभावाद् व्यङ्ग्यत्वानुपपत्तेः । यो हि यस्यानुपकारकः स तस्याभिव्यञ्जको न भवति, यथा विन्ध्यस्य हिमवान् । तथा च व्यक्तयः सामान्यस्येति व्यापकविरुद्धोपलब्धेः । अनुपकारकस्यापि व्यञ्जकत्वेऽतिप्रसङ्गः; सर्वः सर्वस्य व्यञ्जकः स्यात् । अत एव नित्यतया तस्याभ्युपगतत्वात् तासु नोत्पत्तिपारतन्त्र्यमपि तस्य युक्तम् । केवलस्यापि ग्रहणान्नापि तज्ज्ञानपारतन्त्र्यमिति त्रयाणामपि पक्षाणामसम्भवः । ततश्च यदिदमुच्यते—"स्वाश्रयेन्द्रियसन्निकर्षापेक्षप्रतिपत्तिकं सामान्यम्" ( ) इति, तदयुक्तम्; आश्रयस्यैवायोगात्; [G 257] कुतस्तद्गतेन्द्रियसन्निकर्षाद्यपेक्षता भविष्यति । आदिग्रहणेनात्ममनःसन्निकर्षादिपरिग्रहः । नित्यतया परैरनुपाधेयविशेषत्वान्नाप्यस्य क्वचिदपेक्षाऽस्ति, ततश्च यदि तत् स्वविषयज्ञानोत्पादनसमर्थम्, तदा सर्वदैव तज्जनयेत् । अथासमर्थम्,

"पिण्डभेदेषु गोबुद्धिरेकगोत्वनिबन्धना ।
गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥
न शाबलेयाद् गोबुद्धिस्ततोऽन्यालम्बनापि वा । [G. 258]
तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥
प्रत्येकसमवेतार्थविषया वाऽथ गोमतिः ।
प्रत्येकं कृत्स्नरूपत्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥
प्रत्येकसमवेताऽपि जातिरेकैकबुद्धितः ।
नन्व्युक्तेष्विव वाक्येषु ब्राह्मणादिनिवर्त्तनम् ॥
नैकरूपा मतिर्गोत्वे मिथ्या वक्तुं च शक्यते ।
नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥" इति ।

तदत्र प्रथमे साधने तावत् साध्यविकलमुदाहरणम् : एकस्य गोत्वस्यासिद्धेस्तन्निबन्धनत्वमेकगोबुद्धेरप्यसिद्धमेव । अथ सामान्येनैकनिबन्धनत्वं साध्यते, तदा सिद्धसाध्यता; विजातीयव्यवच्छेदेन कल्पितैकगोव्यावृत्तिनिबन्धनत्वस्येष्टत्वात् । 'न शाबलेयाद् गोबुद्धिः' इत्यत्रापि साक्षात्तदुत्पत्तिनिषेधे साध्ये सिद्धसाध्यता; [1]तत्स्वलक्षणानुभवसङ्केतमनस्कारादिव्यवहितत्वात् । अथ परम्परयापि ततो न भवतीति साध्यते; तदा प्रतिज्ञाया अनुभवबाधा, दृष्टान्तस्य च साध्यविकलता ।

अन्यालम्बनत्वेऽपि साध्ये—यदि सन्निहिते शाबलेये 'गौरयम्' इति या बुद्धिरुत्पद्यते सा ततोऽन्यालम्बनेति साध्यते, तदाऽत्राप्यनुभवविरोधः; तथा हि—सा सन्निहितपिण्डाध्यवसायेनैव वर्त्तते, दृष्टान्तस्य च साध्यविकलता । अथ तदसन्निधाने या बाहुलेयादिसन्निधौ तथा प्रवृत्ता बुद्धिः, सा ततोऽन्यालम्बनेति साध्यते, तदा सिद्धसाध्यता । यदि तु साक्षाद्वस्तुसदालम्बनेति साध्यते, तदाऽनैकान्तिकता; 'न ह्यस्य किञ्चित् परमार्थतो वस्तु सदालम्बनमस्ति' इति प्रतिपादितत्वात् । यच्च प्रत्येकपरिसमाप्तार्थविषयत्वसाधनम्, तत्रापि सामान्येन साध्ये सिद्धसाध्यता; [2]प्रतिपादनार्थमतद्रूपपरावृत्तवस्तुरूपाध्यवसायेन प्रवृत्तत्वात् ।

१. तत्स्वलक्षण—पा०, त(त्त्व) स्वलक्षण—गा० ।
२. प्रतिपदार्थ०—पा०, गा० ।

### सामान्यस्य बाधकं प्रमाणम्

अपि चानेकवृत्तित्वं सामान्यस्य यदुच्यते।
तत्र केयं मता वृत्तिः स्थितिः किं व्यक्तिरेव वा ॥ ७९७ ॥
स्वरूपाप्रच्युतिस्तावत् स्थितिरस्य स्वभावतः।
नाधारस्तत्कृतौ शक्तो येन स्थापकता भवेत् ॥ ७९८ ॥

---

अथ नित्यैकप्रत्येकपरिसमाप्तवस्तुभूतसामान्याख्यपदार्थविषयत्वं साध्यते, तदा दृष्टान्तस्य साध्यविकलता, हेतोश्चानैकान्तिकता; तथाविधेन धर्मेण क्वचिदप्यन्वयासिद्धेः। एकस्य च सर्वात्मना बहुषु परिसमाप्तत्वे सर्वेषां व्यक्तिभेदानां परस्परमेकरूपतापत्तिः, एकव्यक्तिपरिनिष्ठितस्वभावसामान्यपदार्थसंस्पृष्टत्वादेकव्यक्तिरूपत्वात्। सामान्यस्य वाऽनेकत्वापत्तिः; युगपदनेकवस्तुपरिसमाप्तात्मरूपत्वात्, दूरदेशावस्थितानेकभाजनगतबिल्वादिफलवदित्यनुमानबाधा। तेन यदुक्तम्—"न चात्र बाधकः प्रत्ययोऽस्ति" ( ) इति, तदसिद्धम्; पूर्वं चोक्तत्वाद्, वक्ष्यमाणत्वाच्च बाधकस्य। यच्चैकत्वसाधनं जातेः, तत्रापि जातेः प्रत्येकसमवेताया असिद्धत्वादेकबुद्धिग्राह्यत्वमसिद्धमित्याश्रयासिद्धो हेतुः। ब्राह्मणादिनिवर्तनं च परमार्थतो नैकम्, अवस्तुत्वादिति साध्यविकलमुदाहरणम्। काल्पनिके चैकत्वे साध्ये सिद्धसाध्यता; कल्पितस्यापोहरूपत्वेनेष्टत्वात्।

यच्चाप्युच्यते—"न चात्र कारणदोषोऽस्ति" ( ) इति, तदप्यसिद्धमेव; अनादेरविद्यावासनालक्षणस्य [ G. 259 ] कारणदोषस्य विद्यमानत्वाद्। तदेवमनया दिशा कुहेतवोऽमी दूष्याः ॥ ७९५–७९६ ॥

एवं तावद् विस्तरेण परोक्तसामान्यसाधनानां दूषणमभिधाय सामान्यस्य बाधकं प्रमाणमभिधातुकाम आह—अपि चेत्यादि। अवश्यं सामान्यस्य भेदेषु वृत्तिरेष्टव्या, अन्यथा कथं तेषु प्रतिनियतैकाकारा बुद्धिस्तन्निबन्धना सेत्स्यति। तत्र च वृत्तिरस्य भवन्ती स्थितिलक्षणा वा भवेत्, तदभिव्यक्तिलक्षणा वा, स्थितिरपि द्विधा—स्वभावाप्रच्युतिलक्षणा वा, यद्वाऽधोगतिप्रतिबन्धलक्षणा। तत्र न तावदाद्या—नित्यत्वात् स्वत एव स्वभावाप्रच्युतेः सिद्धत्वात्। नापि द्वितीया—

गमनप्रतिबन्धोऽपि न तस्य बदरादिवत् ।
विद्यते निष्क्रियत्वेन नाधारोऽतः प्रकल्प्यते ॥ ७९९ ॥
स्थितिस्तत्समवायश्चेन्न त्वेष्वेव[1] विचार्यते ।
सोऽभीष्टोऽयुतसिद्धानामाश्रयाश्रयितात्मकः ॥ ८०० ॥
स्यादाधारो जलादीनां गमनप्रतिबन्धकः ।
अगतीनां किमाधारैः सामान्यानां प्रकल्पितैः ॥ ८०१ ॥
स्वज्ञानोत्पत्तियोग्यत्वे किमभिव्यक्तिकारणैः ।
स्वज्ञानोत्पत्त्ययोग्यत्वे किमभिव्यक्तिकारणैः ॥ ८०२ ॥

---

अमूर्त्तसर्वगतत्वाभ्यां निष्क्रियतयाऽधोगमनासम्भवात् । अतो न तत्प्रतिबन्धकत्वेनाधारणं युक्तम् ।

'भेदेषु यः सामान्यस्य समवायः सा स्थितिः' इत्येतदप्यनुत्तरमेव; तस्यैव समवायस्य विचार्यमाणत्वात् । तथा हि—अपृथक्सिद्धानामाश्रयाश्रयिभावलक्षणः सम्बन्धः समवाय उच्यते, तदभिव्यञ्जितया वा—इतीदमेव निरूपयितुमारब्धम् । न हि परस्परासङ्कीर्णात्मनामकिञ्चित्करमर्थान्तरं समवायो युक्तः; अतिप्रसङ्गात् । एवं हि सर्वः सर्वस्य समवायः स्यात् । तथा हि—परस्परव्यावृत्तशरीरान् भावान् यः संश्लेषयति स समवायः कल्पितः । न चार्थान्तरसद्भावेऽपि स्वात्मनि व्यवस्थिताः परस्परस्वभावमन्वाविशन्ति; स्वरूपहानिप्रसङ्गात् । तस्य चार्थान्तरस्य 'समवायः' इति नामकरणे न विवाद इत्युक्तमर्थान्तरम्, स्थितिरिति ॥ ७९७–८०० ॥

स्यादित्यादिना सामान्यं प्रत्याधारकल्पनाया अत्यन्तासम्बद्धतां दर्शयति । [ G. 260 ] अगतीनामिति गतिरहितानाम्; अमूर्त्तसर्वगतत्वाभ्यां गतेरभावात् । तदभिव्यक्तिलक्षणापि स्थितिरयुक्ता । तथा हि—तद्विषयज्ञानोत्पादनमेव तस्याभिव्यक्तिः, न तु स्वभावपरिपोषणलक्षणा; नित्यस्य स्वभावान्यथाकरणासम्भवात् । ततश्च तस्य यदि स्वत एव ज्ञानोत्पादनसामर्थ्यम्, तदा किमित्यभिव्यक्तिकारणमपेक्षते । अथासामर्थ्यम्, तदा परैरनाधेयविषयत्वान्न तदपेक्षा युक्तिमती । परैरा-

---

१. न तथैव—पा०; गा० ।

ह्यः समर्थः समर्थात्मा व्यञ्जकः क्रियते यदि ।
भावोऽस्थिरो भवेदेवं दीपव्यङ्ग्यघटादिवत् ॥ ८०३ ॥

दूषणान्तरम्

घटादिजातिभेदाश्च [1]स्वाश्रयेष्वेव भाविनः ।
सर्वत्र वृत्तिभाजो वा भवेयुः परजातिवत् ॥ ८०४ ॥
तत्र देशान्तरे वस्तुप्रादुर्भावे कथं नु ते ।
दृश्यन्ते वृत्तिभाजो वा तस्मिन्निति न गम्यते ॥ ८०५ ॥
न हि तेन सहोत्पन्ना नित्यत्वान्नाप्यवस्थिताः ।
तत्र प्रागविभुत्वेन न चाऽऽयान्त्यन्यतोऽक्रियाः ॥ ८०६ ॥

---

धेयविशेषत्वे चाङ्गीक्रियमाणे सत्यनित्यत्वप्रसंङ्गः, ततश्च व्यक्तिवदेवासाधारणत्वान्न सामान्यं स्यात् । भाव इति । भवतोऽस्मादभिधानप्रत्ययाविति कृत्वा कृत्स्न एव सामान्यपदार्थ उच्यते । प्रयोगः––यस्य यस्मिन् वृत्तिनिबन्धनं न किञ्चिदस्ति न तत् तस्मिन्वर्तते, यथा विन्ध्ये हिमवान् । नास्ति च सामान्यस्य भेदेषु वृत्तिनिबन्धनं किञ्चिदिति व्यापकानुपलब्धिः ॥ ८०१-८०३ ॥

घटादीत्यादिना दूषणान्तरमप्याह । घटादिजातिभेदाश्चेति[2] । घटत्वपार्थिवत्वादयः सर्वगतत्वेन वर्ण्यमानाः कदाचित् स्वाश्रयमात्रव्यापितया वर्ण्येरन्, यद्वा देशे सर्वत्र भावादिति पक्षद्वयम् । परजातिवदिति । महाविषयतया सत्ता परेत्यभिधीयते । इयं च महाविषयत्वमात्रसाम्येनैव दृष्टान्तीकृता । न तु व्यक्त्यन्तरालवर्त्तिदेशव्यापितया; तस्या अपि तद्धर्माप्रतीतेः ॥ ८०४ ॥

तत्र प्रथमे पक्षे दोषमाह––तत्रेत्यादि । [ G. 261 ] घटादिव्यक्तिशून्ये देशे घटादिवस्तुप्रादुर्भावे सति ते जातिभेदा घटत्वादयः कथं तत्र घटादौ दृश्यन्ते वर्त्तन्ते चेति न गम्यते = नावबुध्यत इति यावत् ८०५ ॥

कथम् ? इत्याह––न हीत्यादि । तथा हि––यदि घटादिना व्यक्तिभेदेन सहोत्पन्नास्ते भवेयुः, प्राग्वा तत्रावस्थिताः स्युः, अन्यतो वा देशान्तरादागच्छेयुः,

---

1. आश्रयेष्वेव––जै० । 2. घटत्वादिजातिभेदादि––पा०, गा० ।

स्वाश्रयेन्द्रिययोगादेरेकस्मिंस्तद्ग्रहे सति ।
सर्वत्रैवोपलभ्येरंस्ततस्वरूपाविभागतः ॥ ८०७ ॥
ज्ञातादव्यतिरिक्तं चेत् तस्यापि ग्रहणं भवेत् ।
तद्वदेव न वा तस्य ग्रहणं भेद एव वा ॥ ८०८ ॥

---

तदा तत्र दृश्येरन्, वर्त्तेरन् वा । यावता न तेषामुत्पादः; नित्यत्वात् । नापि प्रागवस्थानम्; सर्वव्यापित्वात् । नाप्यन्यदेशादागमनम्; अक्रियत्वात् । तत् कथं तेषु तेषां वृत्तिरुपलब्धिर्वा भवेत् । प्रयोगः—ये यत्र नोत्पन्नाः, नापि प्रागवस्थायिनः, नापि पश्चादन्यतो देशादागतिमन्तः, ते तत्र नोपलभ्यन्ते, नापि वर्त्तन्ते, यथा—शशशिरसि तद्विषाणम् । तथा च सामान्यम् । तच्छून्यदेशोत्पादवति घटादिके वस्तुनीति व्यापकानुपलब्धिः । न चायमनैकान्तिको हेतुः; तत्र वृत्त्युपलम्भयोः प्रकारान्तराभावात् ॥ ८०६ ॥

द्वितीयेऽपि पक्षे दोषमाह—स्वाश्रयेत्यादि । स्वाश्रयेन्द्रियसंयोगादेः = उपलम्भहेतोः । आदिशब्देनात्ममनःसन्निकर्षादिपरिग्रहः । [1]ततः एकस्मिन् व्यक्तिभेदे तेषां जातिभेदानां ग्रहणे सति सर्वत्रैव विजातीयेऽपि व्यक्तिभेदेऽन्तराले चोपलभ्येरन्; तेषां यथास्वमेकरूपतया प्रत्येकं गृहीतरूपाव्यतिरेकात् ॥ ८०७ ॥

एतदेव स्पष्टयन्नाह—ज्ञातादित्यादि । तथा हि—दृष्टव्यक्तिसमवेतसामान्यरूपाद् विज्ञातादव्यतिरिक्तं चेद् व्यक्त्यन्तरालवर्त्ति सामान्यरूपम्, तदा तस्यापि ग्रहणं भवेत्; गृहीतादभिन्नत्वात्, गृहीतस्वरूपवत् । अथ तस्य ग्रहणं न भवति, तथा सत्यगृहीतरूपाव्यतिरेकात् तद्वद् दृष्टव्यक्तिसमवायिनोऽपि ग्रहणं न स्यात् । अथोभयरूपताऽङ्गीक्रियते, तदा स्वभावभेदप्रसङ्गः; परस्परविरुद्धधर्माध्यासात् । [G. 262] न ह्यन्योन्यप्रत्यनीकग्रहणाग्रहणधर्माध्यासितमपि सदेकमिति युक्तमभिधातुं स्वच्छचेतसः; अतिप्रसङ्गात् । एवं हि विश्वमेकमेव द्रव्यं स्यात्, ततश्च सहोत्पादविनाशादिप्रसङ्गः; अन्यथैकमिति नाममात्रमेव स्यात्, न च नाम्नि विवादः ॥ ८०८ ॥

---

1. पा०, गा० पुस्तकयोर्नास्ति ।

नान्यकल्पितजातिभ्यो वृक्षादिप्रत्यया इमे।
क्रमित्वानुगमादिभ्यः पाचकादिधियो यथा ॥ ८०९ ॥
नित्यस्याजनकत्वं च बाधकं सम्प्रतीयते।
संयोगदूषणे सर्वं यदेवोक्तं प्रबाधकम् ॥ ८१० ॥

सामान्यदूषणोपसंहारः

एवमेकान्ततो भिन्नजातिरेषा निराकृता।
जैमिनीयाभ्युपेता तु स्याद्वादे प्रतिषेत्स्यते ॥ ८११ ॥

---

तदेवं सर्वप्रकारेण जातिमभिदूष्य प्रयोगं रचयन्नाह—नान्येत्यादि। ये क्रमित्वानुगामित्ववस्तुत्वोत्पत्तिमत्त्वादिधर्मोपेताः, ते परपरिकल्पितनित्यैकसर्वगत-सामान्यतो न भवन्ति, यथा—पाचकादिप्रत्ययाः। तथा चामी वृक्षादिप्रत्यया इति विरुद्धव्याप्तोपलब्धिः। नित्यताभावविरुद्धानित्यताभावेन क्रमित्वादेर्व्याप्तत्वात्, नित्यस्य च क्रमाक्रमाभ्यामर्थक्रियाविरोधान्नानैकान्तिकता हेतोः। दृष्टान्तस्य च साध्याविकलतायाः पूर्वं विस्तरेण प्रसाधितत्वान्नासिद्धो दृष्टान्तः।

बाधकान्तरमप्याह —संयोगेत्यादि। तत्र सयोगदूषणे बाधकमुक्तम्—"एकस्यानेकवृत्तिश्च न युक्तेति प्रबाधकम्" (तत्त्व० ६७३) इत्यनेन। यथा चानेकत्रैकस्य वृत्तिर्न युक्ता, तथाऽवयविदूषणे "तद्धयेकवृत्तिभाजा" (तत्त्व० ६०६) इत्यादिना प्रदर्शिता ॥ ८०९–८१० ॥

एवमित्यादिनोपसंहरति। यैर्वैशेषिकादिभिर्व्यक्तितो जातिरेकान्तंभिन्नेष्टा, तेषामिदं दूषणमुक्तम्। ये पुनरभिन्नामुभयरूपां च जातिमिच्छन्ति जैन-जैमि-नीय-साङ्ख्यादयः, तदुपवर्णिता जातिः प्रस्तावात् स्याद्वादे निषेत्स्यते। इह तु वैशेषिक-नैयायिकोपकल्पिताया जातेः प्रस्तुतत्वान्न दूष्यते; प्रस्तावाभावा-दिति भावः ॥ ८११ ॥

इति सामान्यपरीक्षा

# विशेष(पदार्थ)परीक्षा

## विशेषदूषणम्

ये पुनः कल्पिता एते विशेषा अन्त्यभाविनः ।
नित्यद्रव्यव्यपोहेन तेऽप्यसम्भविलक्षणाः[1] ॥ ८१२ ॥
अण्वाकाशदिगादीनामसङ्कीर्णं यदा स्थितम् ।
स्वरूपं च तदैतस्माद् वैलक्षण्योपलक्षणम् ॥ ८१३ ॥
मिश्रीभूतापरात्मानो भवेयुर्यदि ते पुनः ।
नान्यभावेऽप्यविभ्रान्तं वैलक्षण्योपलक्षणम् ॥ ८१४ ॥
कथं तेषु विशेषेषु वैलक्षण्योपलक्षणम् ।
स्वत एवेति चेन्नैवमण्वादावपि किं मतम् ॥ ८१५ ॥

---

[ G. 263 ] विशेषदूषणमाह—ये पुनरित्यादि। यत् तावन्नित्यद्रव्यवृत्तित्वमन्त्यद्रव्यभावित्वं च विशेषाणां लक्षणमुक्तम्, तदसम्भवदोषदुष्टत्वादलक्षणमेव न हि नित्यं किञ्चिद् द्रव्यमस्ति, तस्य पूर्वं द्रव्यपरीक्षायां व्यपोढत्वात्, तत् कथं तद्वृत्तित्वमेषां सिद्ध्येत् । ॥ ८१२ ॥

यदपि योगिनां विशेषप्रत्ययबलात् सत्त्वमेषां साध्यते, तत्राप्यनैकान्तिकतेति दर्शयति—अण्वाकाशदिगादीनामित्यादि । तथा हि[2]—अण्वादीनां रूपं स्वस्वभावावस्थानात् परस्परमसङ्कीर्णं वा भवेत् ? मिश्रीभूतं वा ? यद्याद्यः कल्पः, तदा स्वत एवासङ्कीर्णवस्तूपलम्भात् तेषु योगिनां परस्परवैलक्षण्यबुद्धिर्भविष्यतीति व्यर्था विशेषान्तरकल्पना । अथ द्वितीयः पक्षः, तदा कथमिव विशेषाख्यपदार्थान्तरसन्निधानेऽपि तेषु परस्परान्ऽतिभिन्नस्वभावेषु विलक्षणं ज्ञानं योगिनामभ्रान्तमुत्पद्यते, भ्रान्तमेव तत् स्याद् ; अतस्मिंस्तथावृत्तत्वात् । ततश्चायोगिन एव स्युः, भ्रान्तज्ञानसमङ्गित्वादिति[3] भावः । किञ्च—यदि विशेषाख्यपदार्थान्तरमन्तरेण विलक्षणा धीर्न जायते, तत्कथं तेष्वेव विशेषेषु विलक्षणा धीर्भवति, न हि तेष्वपरे विशेषाः सन्ति; अनवस्थाप्रसङ्गात् । "नित्यद्रव्यवृत्तयोऽन्त्याः" ( वै० द० भा०

---

१. ०सम्भविताः क्षणाः—पा०, गा० । २. पा०, गा० पुस्तकेषु नास्ति ।
३. ०संसर्गित्वादिति—पा०, गा० ।

प्रशस्तमतेरुत्तरम्

स्वत एवाशुचित्वं हि श्वमांसादेर्यथा स्थितम् ।
तद्योगादपरेषां[1] तु तथेहापि यदीष्यते ॥ ८१६ ॥
यथा प्रकाशको दीपो घटादेश्च स्वतः स्थितः ।
तत्प्रकाश्यात्मतायां[2] च नियतोऽयमिदं तथा ॥ ८१७ ॥

तत्प्रतिविधानम्

ननु चाशुचिभावोऽयं सांवृतो न तु तात्त्विकः ।
तत् स्वयं परतो वाऽयं कथं नाम भविष्यति ॥ ८१८ ॥
अथ वा भाविकत्वेऽपि श्वमांसादिवशादिमे ।
जायन्तेऽशुचयो भावा नैव नित्या अजन्मतः ॥ ८१९ ॥

---

उ० प्र० ) इति चाभ्युपगमहानिप्रसङ्गाच्च; विशेषेष्वपि वृत्तेः । अत स्वत एवैषां परस्परवैलक्षण्यमतिहेतुत्वमङ्गीक्रियते, तदा परमाण्वादीनामपि तद्धेतुत्वं स्वत एवास्तु, को ह्यत्र तेषु प्रद्वेषो येन तेषां स्वत एव परस्परव्यावृत्तमूर्त्तीनामपि सतां परमाण्वादीनां परस्परवैलक्षण्यज्ञानोत्पत्तिहेतुत्वं नेष्यते, विशेषाणां त्विष्यत इति, नात्र किञ्चित्कारणमुत्पश्यामोऽन्यत्र जाड्यात् । ॥ ८१३–८१५ ॥

[ G. 264 ] स्वत एवेत्यादिना प्रशस्तमतेरत्रोत्तरमाशङ्कते । स ह्याह— "यथा श्वमांसादीनां स्वत एवाशुचित्वम्, तद्योगाच्चान्येषाम्, तथेहापि तादात्म्यादन्त्येषु विशेषेषु स्वत एव व्यावृत्तिप्रत्ययहेतुत्वम्, तद्योगात् परमाणुषु" ( वै. द. भा. स. प्र.)। किञ्च—"अतदात्मकेष्वप्यन्यनिमित्तः प्रत्ययो भवत्येव, यथा घटादिषु प्रदीपात्, न तु प्रदीपेषु घटादिभ्यः" ( वै. द. भा. स. प्र. ) इति । नियतोऽयमिति । घटादिः । इदं तथेति । वैलक्षण्योपलक्षणं विशेषेभ्य एवाण्वादीनाम्, विशेषाणां तु[3] स्वत एवेत्यर्थः ॥ ८१६–८१७ ॥

ननु चेत्यादिना प्रतिविधत्ते । अशुचित्वं हि नाम भावानां कल्पनोपरचितम्. न पारमार्थिकम्; अनवस्थितत्वात् । तथा हि-—यदेव द्रव्यं कस्यचिच्छ्रोत्रियादेरशु-

---

१. न योगाद०—जै० । २. तत्प्रकाशा०—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

प्रदीपादिप्रभावाच्च ज्ञानोत्पादस्वरूपताम् ।
लभन्ते क्षणिका अर्थाः[1] कलशाभरणादयः ॥ ८२० ॥
न विवादास्पदीभूतविशेषबलभाविनी ।
वैलक्षण्यमतिस्तेषु क्रमोत्पत्तेः सुखादिवत् ॥ ८२१ ॥

## समवायपदार्थपरीक्षा

### समवायदूषणोपक्रमः

तन्तुष्वेव पटोऽमीषु वीरणेषु कटः पुनः ।
इत्यादीहमतेर्भावात् समवायोऽवगम्यते ॥ ८२२ ॥

---

चित्वेनाभाति, तदेवान्यस्य [2]कोटिङ्गादेः शुचित्वेन, न चैकस्य परस्परप्रत्यनीकानेकरूपसम्पातो युक्तः; एकत्वहानिप्रसङ्गात् । अथ वा—भवतु भाविकमशुचित्वं भावानाम्, तथापि नेदं दृष्टान्तेन समम् । तथा हि—श्वमांसादिकाशुचिद्रव्यसम्पर्कादन्नादयो भावाः परित्यक्तपूर्वशुचिस्वभावा अन्य एवाशुचयो जायन्ते, ततो[3] युक्तमेषां परोपाधिकमशुचित्वम् । न त्वेवं किञ्चित् परमाण्वादिषु निबन्धनमस्ति, येनैषां परोपाधिकं वैलक्षण्यं भवेत्तेषाम्[4]; नित्यत्वादेवाजन्मतोऽनुत्पत्तेः । [ G. 265 ] एवं प्रदीपदृष्टान्तेऽपि घटादीनां ज्ञानोत्पत्तिहेतुत्वं परोपाधिकं योज्यम् । नेत्यादिना विशेषाणां बाधकं प्रमाणमाह । तस्यापि पूर्ववत् स्वरूपम्, प्रतिबन्धश्च वाच्यः ॥ ८१८–८२१ ॥

इति विशेषपरीक्षा ।

---

समवायदूषणार्थमाह—तन्तुष्वित्यादि । अयुतसिद्धानामाधार्याधारभूतानामिहबुद्धिहेतुर्यः सम्बन्धः स समवायः, स चायम् 'इह तन्तुषु पटः' इत्यादीहबुद्धिविशेषतो द्रव्यादिभ्योऽर्थान्तरत्वेनावगम्यते । यथा हि सत्ताद्रव्यत्वादीनां स्वाधारेष्वात्मानुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः, तथा समवाय-

---

१. ह्यर्थाः—पा०, गा० । २. कौटिकादेः—पा०, गा० ।
३. अतो—पा०, गा० । ४. भवेत्तथा—पा०, गा० ।

तस्याभावे 'भवेत् किं हि मतेरस्या निबन्धनम् ।
न विशेषमतिर्दृष्टा निमित्तान्तरवर्जिता ॥ ८२३ ॥
इहबुद्ध्यविशेषाच्च योगवन्न विभिद्यते ।
सर्वस्मिन् भाववत्त्वेष एक एव प्रतीयते ॥ ८२४ ॥
कारणानुपलब्धेश्च नित्यो भाववदेव सः ।
न ह्यस्य कारणं किञ्चित् प्रमाणेनोपलभ्यते ॥ ८२५ ॥

समवायदूषणम्

तदेतदिहविज्ञानं परेषामेव वर्त्तते ।

---

स्यापि पञ्चसु पदार्थेषु—इह तन्तुषु पटः, इह द्रव्ये गुणकर्मणी, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणेषु गुणत्वम्, इह कर्मणि कर्मत्वम्, इह द्रव्येष्वन्त्या विशेषाः—इत्यादिप्रत्ययदर्शनात् पञ्चभ्यः पदार्थेभ्योऽर्थान्तरत्वं गम्यते । प्रयोगः—यो येषु यदाकारविलक्षणः प्रत्ययः, स तदर्थान्तरनिबन्धनः, यथा देवदत्ते दण्डीति प्रत्ययः । तथा चायं पञ्चसु पदार्थेष्विहप्रत्यय इति स्वभावहेतुं मन्यते ॥ ८२२ ॥

प्रतिबन्धमस्य दर्शयन्नाह—तस्याभाव इत्यादि । निबन्धनमन्तरेण भवतो नित्यं सत्तादिप्रसङ्गो बाधकं प्रमाणम् । एवं तावद् वैशेषिकाणां मतेन—इहबुद्धिलिङ्गानुमेयः समवायः, नैयायिकमतेन तु—इहबुद्धिप्रत्यक्षगम्य एव। तथा हि—ते अक्षव्यापारे सतीह तन्तुषु पट इत्यादिप्रत्ययोत्पत्तेः प्रत्यक्षत्वमाचक्षते । स चायं समवायो यथा संयोगः सम्बन्धिषु भिन्नः, तथा नायं [ G. 266 ] भिद्यते, किं तर्हि ? भाववत् सत्तावत् तल्लिङ्गाविशेषाद् विशेषलिङ्गाभावात् सर्वत्रैक एव समवायः । योगवदिति । वैधर्म्यदृष्टान्तः । अकारणत्वाच्च भाववदेव नित्यः सिद्धः, अकारणत्वं च प्रमाणतः कारणानुपलब्धेः सिद्धम् ॥ ८२३–८२५ ॥

तदेतदित्यादिना दूषणमारभते । तदनेन हेतोराश्रयासिद्धतामाह । 'इह

---

१. स चेत्—पा०, गा० ।

स्वसिद्धान्तानुरागेण न दृष्टं लौकिकं तु तत् ॥ ८२६ ॥
नानात्वलक्षणे हि स्यादाधाराधेयभूतयोः ।
इदमत्रेति विज्ञानं कुण्डादौ श्रीफलादिवत् ॥ ८२७ ॥
नैव तन्तुपटादीनां नानात्वेनोपलक्षणम् ।
विद्यते येन तेषु स्युरिदमत्रेति बुद्धयः ॥ ८२८ ॥
स्वेच्छया रचिते वास्मिन् कल्पितेष्विव वस्तुषु ।
न कारणनियोगोऽयं परं प्रत्युपपद्यते ॥ ८२९ ॥
वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिकी मतिः ।
अगाख्यपरिशिष्टाङ्गनैरन्तर्योपलम्भनात् ॥ ८३० ॥

---

तन्तुषु पटः' इत्यादिका हि धियः स्वसिद्धान्तानुरागोपकल्पिता एव । न तु लोके तथोत्पद्यमानाः संवेद्यन्त इत्यतः साध्यधर्मी न सिद्धः ॥ ८२६ ॥

नानात्वेत्यादिना तामेव धर्म्यसिद्धिं समर्थयते । ययोर्हि नानात्वमुपलक्षितं भवेत्, तयोरेवाधाराधेयभावे सतीहबुद्धिरुद्भवन्ती लोके दृष्टा, यथेह कुण्डे श्रीफलादीति[1] । न च तन्तुपटयोर्नानात्वमुपलक्षितम्, विद्यते च, तत् कथं तत्रेहबुद्धिर्भवेत् ॥ ८२७–८२८ ॥

स्यादेतद् – यदि नामाऽस्माभिः सिद्धान्तबलादुपकल्पितेयमिहमतिः, तथाप्यस्या भवद्भिर्निबन्धनं वक्तव्यम् ? इत्याह – स्वेच्छयेत्यादि[2] । यो हि यत्कारणमेव नेच्छति स कथं कार्यं स्वयमुपकल्प्य तत्कारणं पर्यनुयुज्येत । आत्मैव हि भवता पर्यनुयोक्तव्यः, येनेदं कार्यमुपकल्पितमिच्छावशात् । नैवेच्छानां वस्तुस्वभावानुरोधः; स्वातन्त्र्यवृत्तित्वादासाम् । नातो वस्तुसिद्धिः; अनवस्थाप्रसङ्गात् । तथा हि— भवदुपकल्पितस्यापि हि वस्तुनः कैश्चिदन्यथापि कल्पयितुं शक्यत्वात् ॥ ८२९ ॥

अपि च—न केवलम् 'इह तन्तुषु पटः' इत्यादिका धियो लोके न सिद्धाः, किन्तु तद्विपरीता एव प्रसिद्धा इति दर्शयन्नाह – वृक्ष इत्यादि । [G. 267] वृक्षे शाखाः, पर्वते शिला—इत्येवं लोके दृश्यते, न तु शाखायां वृक्षः, शिलासु

---

१. श्रीफलानीति—पा०, गा० । २. स्वेच्छेत्यादि—पा०, गा० ।

तौ पुनस्तास्विति ज्ञानं लोकातिक्रान्तमुच्यते ।
घटे रूपं श्रियादीति तादात्म्यं त्ववगच्छति ॥ ८३१ ॥
रूपकुम्भादिशब्दा हि सर्वावस्थाभिधायकाः ।
तद्विशेषाभिधानाय तथा ते विनिवेशिताः ॥ ८३२ ॥

---

पर्वत इति । सापि च वृक्षे शाखेत्यादिका मतिर्न समवायवशात्; किन्तु—अगाख्यानि यानि परिशिष्टानि = विवक्षितशाखाशिलाव्यतिरिक्तान्यधोव्यवस्थितानि स्कन्धादीन्यङ्गानि, तेषां नैरन्तर्योपलम्भात् । अगशब्देनात्र 'न गच्छन्ति' इति कृत्वा तरवो गिरयश्चाभिप्रेताः । ताविति अगवृक्षौ । तास्विति शिलाशाखासु ।

यत् तर्हीदमिह घटे रूपरसगन्धस्पर्शाश्चलनं च—इत्यादि लोके प्रसिद्धं ज्ञानम्, तस्य समवायं मुक्त्वा कोऽन्यो विषय ? इत्याह—घट इत्यादि । तादात्म्यम् = घटस्वभावत्वम्, रूपादीनामवगच्छति ज्ञानं लोको वेति शेषः । घटे रूपम् = घटस्वभावं-रूपम्, न [1]घटाद्यात्मकमित्यर्थः । बहुषु रूपादिषु साधारणशक्तिविशेषप्रतिपादनेच्छया तदन्यरूपादिव्यवच्छेदेन घटादिश्रुतेर्निवेशः, रूपादिश्रुतिस्तु प्रत्येकमसाधारणचक्षुर्विज्ञानादिकार्यनिर्वर्तनसामर्थ्यद्योतनाय निवेशितेत्यतो घटादिश्रुती रूपादिभेदानाक्षिपतीति सामानाधिकरण्याभावाद्वैयधिकरण्येनैव तादात्म्यं प्रतिपाद्यते ।

उभयोस्तु किमर्थं प्रयोगः ? इत्याह—रूपकुम्भेत्यादि । रूपादिशब्दा हि सर्वावस्थस्य रूपादेर्वाचकाः । तथा हि—यथा घटात्मनाऽवस्थितरूपादि रूपादीत्युच्यते, तथा पटाद्यात्मनाऽवस्थितमपि, ततश्च केवलेभ्यो रूपादिशब्देभ्यो न विशेषः प्रतीयते—किमवस्था रूपादय इति । 'घटे रूपादयः' इत्येवं तु प्रयोगे 'घटात्मकास्ते' इति पटादिव्यवच्छेदेन प्रतीयन्ते । तथा घटशब्दोऽपि सर्वावस्थं घटं ब्रूते—शुक्लं पीतं चलं निश्चलमित्यादिकम्, अतः केवलान्न विशेषप्रतीतिः । 'घटे शुक्लं रूपम्' इत्यादिप्रयोगे तु तदन्यरूपादिव्यवच्छेदेन प्रतिपत्तिर्भवति, ततश्च तस्यैवम्भूतस्य विशेषस्याभिधानाय यथा तथा घटे रूपमिति ये निवेशिताः । [ G. 268 ] शब्दा इति शेषः । तान् शब्दानाश्रित्यैषु घटादिषु तेनाकारेण घटे

---

१. पटा०—जै० । २. ते—पा०, गा० ।

तानाश्रित्यैषु विज्ञानं तेनाकारेण वर्त्तते ।
समवायान्न भेदस्य सर्वेषामप्यनीक्षणात् ॥ ८३३ ॥
यद्येकः समवायः स्यात् सर्वेष्वेव च वस्तुषु ।
कपालादिष्वपि ज्ञानं पटादीति प्रसज्यते ॥ ८३४ ॥
गजादिष्वपि गोत्वादि समस्तीत्यनुषज्यते ।
ततो गवादिरूपत्वममीषां शावलेयवत् ॥ ८३५ ॥
पटस्तन्तुषु योऽस्तीति समवायात् प्रतीयते ।
अस्ति चासौ कपालेषु तस्येति न तथेति किम् ॥ ८३६ ॥
नाश्रितः स कपाले चेन्ननु तन्तुष्वपीष्यते ।
आश्रितः समवायेन स कपालेऽपि नास्ति किम् ॥ ८३७ ॥
तन्तोर्यः समवायो हि पटस्येत्यभिधीयते ।
स घटस्य कपालेषु तद्धीरनवधिर्भवेत् ॥ ८३८ ॥

---

रूपमित्यादिना प्रवर्त्तते ज्ञानम्, न तु समवायमाश्रित्य वर्त्तत इति सम्बन्धः । अत्र कारणमाह—भेदस्येत्यादि । न हि समवायघटरूपादीनां सर्वेषां परस्परतो भेद उपलभ्यते, येनेयं समवायनिबन्धना बुद्धिर्भवेत् । एतेन हेतोरनैकान्तिकत्वम्, प्रतिज्ञायाश्चानुमानादिबाधितत्वमुक्तम् ॥ ८३०–८३३ ॥

यच्चोक्तम्—"इहबुद्ध्यविशेषात्" ( तत्त्व० ८२४ ) इत्यादि, तत्राह—यद्येक इत्यादि । यद्येकस्त्रैलोक्ये समवायः स्यात्, 'तदा कपालेषु पटः'[1] इत्यादयोऽपि धियः प्रसूयेरन् । अश्वादिषु च गोत्वादिर्विद्यत इत्येवं स्यात् । ततश्च शावलेयादिभेदवद् गजादिष्वपि गवादिप्रत्ययो भवेत् । तथा हि—तन्तुषु पट इति यत्समवायबलात् प्रतीतिरुपवर्णिता, स समवायस्तस्य पटस्य कपालादिष्वप्यस्तीति किमिति तथा प्रतीतिर्न भवेत् । स्यादेतत्—न कपाले पट आश्रित इति यत्समवायबलादुपवर्ण्यते, स समवायः किं[2] कपालेषु[2] नास्ति, येन तत्र तन्तुष्विव पटोऽस्तीति तद्बुद्धिर्न भवेत् । किन्तु य एव तन्तौ पटस्य समवाय इति निर्दिश्यते, स

---

१. पा० गा० पुस्तकयोर्नास्ति । २–२. कपालेषु किं—पा०, गा० ।

एवं यश्च गजत्वादिसमवायो गजादिषु ।
गोत्वादिजातिभेदानां स एव स्वाश्रयेष्वपि ॥ ८३९ ॥

प्रशस्तमतेरुत्तरम्

आधाराधेयनियमः स चैकत्वेऽपि विद्यते ।
द्रव्येष्विव हि तज्जातिकर्मस्वेव च कर्मता ॥ ८४० ॥
इहेति समवायोत्थविज्ञानान्वयदर्शनात् ।
सर्वत्र समवायोऽयमेक एवेति गम्यते ॥ ८४१ ॥
द्रव्यत्वादिनिमित्तानां व्यतिरेकस्य दर्शनात् ।
धियां द्रव्यादिजातीनां नियमस्त्ववसीयते ॥ ८४२ ॥
तद्यथा कुण्डदध्नोश्च संयोगैक्येऽपि दृश्यते ।
आधाराधेयनियमस्तथेह नियमो मतः ॥ ८४३ ॥

---

एव पटस्य समवायः कपालेषु, तत्कथं सङ्करो न स्यात् । तत् = तस्मात्, धीरनवधिः = अवधिरहिता भवेत् । ततश्च द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सम्बन्धस्यैकत्वात् । पञ्चपदार्थविभागो न स्यात् ॥ ८३४–८३८ ॥

[ G. 269 ] एवमित्यादिना गजादिषु गवादिबुद्धिप्रसङ्गं समर्थयते ।

आधारेत्यादिनाऽत्र प्रशस्तमतेरुत्तरमाशङ्कते । स ह्याह—यद्यप्येकः समवायः, तथापि पञ्चपदार्थसङ्करो न भवति; आधाराधेयनियमात् । तथा हि—द्रव्येष्वेव द्रव्यत्वम्, गुणेष्वेव गुणत्वम्, कर्मस्वेव कर्मत्वम्—इत्येवं द्रव्यत्वादीनां प्रतिनियताधारावच्छेदेन प्रतिपत्तिरुपजायते ॥ ८४० ॥

यद्येवम्, तर्हि संमवायः प्रतिपदार्थं भिन्नः प्राप्नोति ? इत्याह—इहेत्यादि । इहेति समवायनिमित्तस्य प्रत्ययस्य सर्वत्राभिन्नाकारतयाऽन्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते । सत्यपि चैकत्वे द्रव्यत्वादिनिमित्तानां धियां प्रतिनियताधारावच्छेदेनोत्पत्तेः व्यतिरेकस्यानन्वयलक्षणस्य दर्शनाद् द्रव्यत्वादिजातीनां व्यतिरेको विज्ञायते । तेन पञ्चपदार्थसङ्करो न भवति ॥ ८४१–८४२ ॥

कथं पुनः सम्बन्धाविशेषेऽप्यमीषामाधाराधेयप्रतिनियमो युज्यते ? इत्याह—तद्यथेत्यादि । यथा हि कुण्डदध्नोः संयोगैकत्वेऽपि भवत्याश्रयाश्रयिप्रतिनियमः,

व्यङ्ग्यव्यञ्जकसामर्थ्यभेदाद् द्रव्यादिजातिषु ।
समवायैकभावेऽपि नैव चेत् स विरुध्यते ॥ ८४४ ॥

तत्प्रतिविधानम्

आधाराधेयनियमो नन्वेकत्वेऽस्य दुर्घटः ।
द्रव्यत्वं द्रव्य एवेष्टं कथं तत्सम्भवायतः ॥ ८४५ ॥
तस्यासौ समवायश्च गुणादिष्वपि विद्यते ।
गुणजात्यादिसम्बन्धादेक एव ह्ययं तयोः ॥ ८४६ ॥
अन्यथा गुणजात्यादिभिन्न एव भवेदयम् ।
योगिभेदात् प्रतिव्यक्ति यथा योगो विभिद्यते ॥ ८४७ ॥
द्रव्यत्वादिनिमित्तानां व्यतिरेको न युज्यते ।
धियां निमित्तसद्भावादतस्तन्नियमोऽपि न ॥ ८४८ ॥

---

तथा द्रव्यत्वादीनां समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयप्रतिनियम इति । स इति आधाराधेयनियमः ॥ ८४३–८४४ ॥

[G. 270] आधाराधेय इत्यादिना प्रतिविधत्ते । न ह्यस्माकं रूपत्वादीनां रूपादिष्वाधेयनियमः सिद्धः, किन्तु भवतामेव; स च सर्वत्र समवायमेकमेवाभ्युपगच्छतां दुर्घट इत्यादिप्रसङ्गापादानं क्रियते । तथा हि— 'द्रव्य एव द्रव्यत्वम्' इत्येवं यो नियम इष्यते स समवायवलादेव, तस्य च द्रव्यत्वादेर्यः समवायः स एव गुणादिष्वप्यस्ति; गुणत्वादिजात्या तेषां सम्बन्धत्वात् । यदि नाम सम्बन्धः, तथापि स एव तत्र समवायोऽस्तीति कथमवसीयते ? इत्याह— एक एवेत्यादि । तयोरिति द्रव्यत्वगुणादिजात्योः । ततश्चाभिन्ननिमित्तत्वात् तत्सङ्करप्रसङ्गो दुर्निवार इति भावः ॥ ८४५–८४६ ॥

अन्यथेति । यदि द्रव्ये द्रव्यत्वस्य यः समवायः स एव गुणादिषु गुणत्वादीनां न भवेत्, तदा संयोगवत् प्रत्याधारं समवायो भिद्यते ॥ ८४७ ॥

यच्चोक्तम्—"द्रव्यत्वादिनिमित्तानाम्" ( तत्त्व० ८४२ ) इत्यादि, तत्राह— द्रव्यत्वादीत्यादि । न ह्यविकले निमित्ते सति कार्यस्य व्यति-

तदाश्रितत्वस्थानादि तस्मादेवाभिधीयते ।
समवायादतश्चैतन्न युक्तं तन्नियामकम् ॥ ८४९ ॥
व्यङ्ग्यव्यञ्जकसामर्थ्यभेदोऽपि समवायतः ।
नान्यतस्तु स नित्यानामुत्पादानुपपत्तितः ॥ ८५० ॥
न हि दीपादिसद्भावाज्जायन्ते यादृशा इमे ।
विज्ञानजनने योग्या घटाद्या जातयस्तथा ॥ ८५१ ॥
कुण्डदध्नोश्च संयोग एकः पूर्वं निराकृतः ।
न चासौ नियतस्तस्माद् युज्यतेऽतिप्रसङ्गतः[1] ॥ ८५२ ॥

---

रेकोऽभावो युक्तः; अतत्कार्यत्वप्रसङ्गात् । ततश्च धियां व्यतिरेकायोगात् तस्याप्याधाराधेयभावस्य नियमो न युक्तः ॥ ८४८ ॥

ननु द्रव्य एव द्रव्यत्वमाश्रितं स्थितमित्यादिव्यपदेशतो नियतो भविष्यतीत्याह – तदाश्रितत्वेत्यादि । तस्मादेव हि समवायादाश्रितत्वादिव्यवस्थानमुपवर्ण्यते भवद्भिः, तस्य च सर्वत्राविशिष्टत्वे कथमेष नियमो योक्ष्यते । तस्मादेतदप्याश्रितत्वादि[2] न तस्याधाराधेयभावस्य नियामकमयुक्तम्[3]; आधाराधेयभावेन सहैकयोगक्षेमत्वादेषाम् ॥ ८४९ ॥

[ G. 271 ] व्यङ्ग्यव्यञ्जकशक्तिप्रतिनियमात्तर्हि नियमो भविष्यति ? इत्याह–व्यंग्येत्यादि । द्रव्यत्वादिसामान्यव्यञ्जकत्वं द्रव्यादीनां यदुच्यते तत्समवायबलादेव । तथा हि–यत एव द्रव्यत्वं द्रव्ये समवेतम्, तत एव तेन तद्व्यज्यत इत्युच्यते । अन्यत इति । सौगतोपवर्णितात् ज्ञानोत्पादनयोग्यस्वभावोत्पादनात् । यस्मान्नित्यानामपि सत्तादीनां समवाय इष्टः, न च नित्यानामुत्पत्तिर्युक्ता ॥ ८५० ॥

एतदेव न हीत्यादिना समर्थ्यते ॥ ८५१ ॥

यद्यपि दधिकुण्डसंयोगो दृष्टान्तत्वेनोक्तः; सोऽप्यस्माकमसिद्ध इति दर्शयति—कुण्डदध्नोरित्यादि । पूर्वमिति । संयोगपदार्थदूषणे । भवतु नाम

---

१. 'अतिप्रसङ्गतः' इति पा० पुस्तके नास्ति ।
२. ०श्रितत्वादी—जै० ।
३. नियामकं युक्तम्—पा०, गा० ।

नित्यत्वेनास्य सर्वेऽपि नित्याः प्राप्ताः घटादयः[1] ।
स्वाधारेषु[2] सदा तेषां समवायो न संस्थितेः ॥ ८५३ ॥

परस्य शङ्का तन्निरसनं च

स्वारम्भकविभागाद्वा यदि वा तद्विनाशतः ।
ते नश्यन्ति क्रियाद्याश्च[3] योगादेरिति चेन्न तत् ॥ ८५४ ॥
स्वाधारैस्समवायो हि तेषामपि सदा मतः ।
तेषां विनाशभावे तु नियताऽस्यापि नाशिता ॥ ८५५ ॥

---

संयोग एकः, तत्रापि तुल्य एव प्रसङ्ग इति दर्शयति—न चासावित्यादि । तस्मादिति संयोगात् । 'दध्नि कुण्डम्' इत्यादिबुद्धिप्रसङ्गोऽतिप्रसङ्गः; संयोगस्य निमित्तस्य निर्विशिष्टत्वात् ॥ ८५२ ॥

यच्चोक्तम्—"कारणानुपलब्धेर्नित्यः समवायः" ( तत्त्व० ८२५ ) इति, तत्राह—नित्यत्वेनेत्यादि । यदि हि समवायो नित्यः स्यात्, तदा घटादीनामपि नित्यत्वप्रसङ्गः; स्वाधारेषु तेषां सर्वदाऽवस्थानात् । तथा हि—समवायास्तित्वादेवैषां स्वाधारेष्ववस्थानमिष्यते, स च समवायो नित्य इति किमिति सदाऽमी न सन्तिष्ठेरन् । ॥ ८५३ ॥

स्वारम्भकेत्यादिना परस्योत्तरमाशङ्कते । [ G. 272 ] स्यादेतत्—घटादीनां ये स्वारम्भकावयवांस्तेषां विभागाद्विनाशाद्वा घटादीनां विनाशः । यथा घटस्योद्वेष्टनपाकावस्थयोः क्रियादयः स्पर्शवद्द्रव्यसंयोगादिभ्यो विनश्यन्ति । यथोक्तम्—"स्पर्शवद्द्रव्यसंयोगात् कर्मणो नाशः, कार्यविरोधि च कर्म" (        ) इति । तथा बुद्धेर्बुद्ध्यन्तराद् विनाशः शब्दस्य शब्दान्तरादिति परप्रक्रिया । तेन सत्यपि समवायेऽवस्थितिहेतौ सहकारिकारणान्तराभावाद्विरोधिप्रत्ययोपनिपाताच्च न नित्यत्वप्रसङ्गो घटादीनामिति परस्य भावः । न तदित्यादिना प्रतिषेधति । नैतद्युक्तम्; यतस्तेषामपि स्वारम्भकावयवानां कपालादीनां स्वारम्भकेष्ववयवान्तरेषु समवायः,

---

१. 'घटादयः' इति पा० पुस्तके नास्ति । २. आधारेषु—पा०, गा० ।
३. क्रियादीव—पा०, गा० ।

सम्बन्धिनो निवृत्तौ हि सम्बन्धोऽस्तीति दुर्घटम् ।
न हि संयुक्तनाशेऽपि संयोगो [1]व्यवतिष्ठते ॥ ८५६ ॥
यथा संयोगभावे तु संयुक्तानामवस्थितिः ।
समवायस्य सद्भावे तथा स्यात् समवायिनाम् ॥ ८५७ ॥

परस्य प्रत्यवस्थानम्

एकसम्बन्धिनाशेऽपि समवायोऽवतिष्ठते ।
अन्यसम्बन्धिसद्भावाद् योगो नो चेन्न[2] [2]भेदतः ॥ ८५८ ॥

---

तेषामप्यन्येषु[3] यावत्परमाणुरवशिष्यते, तस्य च परमाणोर्नित्यत्वान्नान्यथात्वमस्ति, ततश्च सर्वेषां स्वारम्भकेष्ववयवेषु समवायः[3] सर्वदाऽस्त्येवेति कुतो विनाशः, विभागो वा। न केवलं तदारब्धानां द्रव्याणाम्, क्रियादीनां चेत्यपिशब्देन दर्शयति। यदि तु स्वारम्भकाणामवयवानां विनाशोऽभ्युपगम्येत; तदा नियतमस्य समवायस्यापि विनाशः प्राप्नोति ॥ ८५४–८५५ ॥

कस्मात्? इत्याह—सम्बन्धिनो निवृत्तौ हीत्यादि। एतदेव घटयन्नाह—न हीत्यादि। ततश्च विनष्टसम्बन्धित्वान्नष्टसंयोगिसंयोगवदनित्यः समवायः प्राप्नोतीत्युक्तं भवति। सम्बन्धिनां वा स्थितिः प्राप्नोति; अविनष्टसम्बन्धत्वात्, अनुपरतसंयोगद्रव्यद्वयवत्। अन्यथा तत्सम्बन्धस्वभावहानिरुभयेषामपि प्रसज्येत ॥ ८५६–८५७ ॥

एकसम्बन्धनाशेऽपीत्यादिना परः प्रत्यवतिष्ठते। एवं मन्यते—यदि प्रथमे हेतौ विनष्टाशेषसम्बन्धित्वादिति हेत्वर्थोऽभिप्रेतः; तदा पक्षैकदेशासिद्धता हेतोः। न ह्यशेषाणां सम्बन्धिनां विनाशः क्वचिदस्ति; प्रलयेऽपि परमाण्वादीनामवशिष्यमाणत्वात्। अथ यथाकथञ्चिद्विनष्ट[4] [4]सम्बन्धित्वसम्बन्धमधिकृत्यहेतुरुच्यते, तदाऽनैकान्तिकता। यदि नामैकः सम्बन्धी क्वचिद्विनष्टः, तथाप्यपरसम्बन्धिनिबन्धनावस्थितिरस्य भविष्यति। यद्येवम्, संयोगस्याप्यनया नीत्या नित्यत्वं प्राप्नोतीत्याशङ्क्य [ G. 273 ] परः प्रतिविधत्ते—न भेदत इति।

---

१. नावतिष्ठते।
२–२. चेद्भि—जै०।
३–३. पा०, गा० पुस्तकयोर्नास्ति।
४–४. विनष्टसम्बन्धि०—पा० गा०।

### तत्प्रतिविधानम्

यद्येवं ये विनश्यन्ति घटाद्याः समवायिनः ।
तेषां वृत्त्यात्मको योऽसौ समवायः प्रकल्पितः ॥ ८५९ ॥
स एव व्यवतिष्ठेत किं सम्बन्ध्यन्तरस्थितेः ।
अथान्य एव संयोगविभागबहुतादिवत्[1] ॥ ८६० ॥
तद्वृत्तिलक्षणस्यैव[2] समवायस्य संस्थितौ ।
पूर्ववत् ते स्थिता एव प्राप्नुवन्ति घटादयः ॥ ८६१ ॥
ये[3] तेषामनवस्थाने तेषां [4]वृत्त्यात्मकः कथम्[4] ।
समवायोऽवतिष्ठेत[5] संज्ञामात्रेण वा तथा ॥ ८६२ ॥
अतः प्रागपि [6]तद्भावान्न ते वृत्ताः स्युराश्रये ।

---

संयोगो हि प्रतिसंयोगि भिद्यते । तेनास्यानित्यत्वं युक्तम्, समवायस्तु—इह-प्रत्ययनिबन्धनस्याभिन्नत्वादेक एव जगति । तेनास्यानित्यत्वमयुक्तम्; अन्यत्रापि सम्बन्ध्यन्तरे तस्योपलभ्यमानत्वात् ॥ ८५८ ॥

यद्येवमित्यादिना प्रतिविधत्ते । तथा हि—ये ते विनश्यन्ति घटादयः स्वकारणादिसमवायिनः, तेषां स्वकारणेषु वृत्त्यात्मको योऽसौ समवायः कल्पितः, स एव किं तेषु विनष्टेषु सम्बन्ध्यन्तरेष्वस्ति; आहोस्विदन्य एव, यथा संयोगो बहुत्वं वा प्रतिसंयोगि भिद्यते । आदिशब्दाद् विभागादिपरिग्रहः । तत्र यद्याद्यः पक्षः, तदा प्रागवस्थावदप्रच्युतप्रवृत्तित्वादवस्थिता एव घटादयः प्राप्नुवन्ति, तेषां वा घटादीनामनवस्थानेऽनवस्थितप्रवृत्तित्वान्नावस्थितिः समवायस्य प्राप्नोति, अन्यथा न वृत्त्यात्मकः स्यात् । तथाभूतस्य च स्वतन्त्रस्यानुपकारिणो वृत्तिः समवाय इति वा नामकरणे संज्ञामात्रमेव स्यात्, न तु वस्तुतथाभावस्तथैवेति तद्वृत्त्यात्मक इत्येवम्, ततः संज्ञामात्रान्वयो दोषः, तं दर्शयति—अत इत्यादि ।

---

१. संयोग······बहुतादिवत्—पा०, गा० । 'सम्बन्धसंख्या न बहुतादिवत्' इति पाठान्तरं जै० पुस्तके लिखितम् । २. नादयस्तल्लक्षणस्यैव—पा०, गा० । ३. न—पा०, गा० । ४-४. पा० पुस्तके नास्ति; ०कश्चित्—गा० । ५. सम···वतिष्ठेत—पा० । ६. सद्भावान्न—पा०, गा० ।

पश्चादिव तथा ह्येषा वृत्तिस्तेषां [1]न वस्तुतः[1] ॥ ८६३ ॥
अथान्य एव संयोगविभागबहुतादिवत् ।
सम्बन्ध्यन्तरसद्भावे समवायोऽवतिष्ठते ॥ ८६४ ॥
संयोगादिवदेवं हि नन्वस्य बहुता भवेत् ।
एवमाद्यस्य सद्भावे बहु स्यादसमञ्जसम् ॥ ८६५ ॥

---

प्रागपि सम्बन्धिनाशात् । अविनष्टसम्बन्ध्यवस्थायामपीत्यर्थः । ते घटादयः स्वाश्रये वृत्तास्तस्य समवायस्य भावात् सद्भावलाभ्न सिध्येयुः, पश्चादिव विनष्टसमवायिकारणवत्; परमार्थतो वृत्त्यभावात् । तथा हीत्यादिना हेत्वर्थं दर्शयति ॥ ८५९–८६३ ॥

[ G. 274 ] अथान्य एवेति द्वितीयः पक्षः, तदा संयोगादिवत् समवायबहुत्वं प्राप्नोति, ततश्च न समवायो भेदवानित्यस्याभ्युपेतस्य हानिः । एवमादीत्यादिशब्देन कारणवैफल्यम्, अनेकसूत्रविरोधः, प्रत्यक्षादिविरोधः, सर्वपदार्थानामक्रमोत्पत्तिः—इत्यादिदोषान्तरपरिग्रहः । तथा हि—स्वकारणसमवायः सत्तासमवायो वा जन्मोच्यते, समवायश्च नित्य इति न क्वचिदपि कार्यजन्मनि कारणानां सामर्थ्यमिति कारणवैफल्यम् । तथा "अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः" ( वै० द० ७.२.१० ); "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्" ( न्या० द० १.१.४ ) इत्यादिजन्मप्रतिपादकसूत्रविरोधः । तथा [2]प्रत्यक्षादिप्रतीतानि कारणानि शालिचक्षुरादीनि[2] विरुध्यन्ते । तथा समवायलक्षणस्य जन्मनो नित्यतया न क्रमोऽस्तीति क्रमोत्पत्तिर्दृष्टभावानां विरुध्यते । ततश्च "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" ( न्या० द० १.१.१६ ) इति स्वसिद्धान्तव्याहतिः । नित्यत्वाच्च जन्मनोऽनुपकार्योपकारकभूतं जगदिति व्यर्थं शास्त्रप्रणयनमित्यादिबहुतरमसमञ्जसमाल्लनविशीर्णं स्यात् ॥ ८६४–८६५ ॥

इति समवायपदार्थपरीक्षा

---

१–१. तेषामवस्तुतः—पा०, गा० ।
२–२. प्रत्यक्षप्रतीतकारणानि चक्षुरादीनि—पा०, गा० ।

# शब्दार्थपरीक्षा

## पराभिमतपारमार्थिकालम्बनत्वस्यानुवादः

यदि नोपाधयः केचिद् विद्यन्ते पारमार्थिकाः[1] ।
दण्डी शुक्लश्चलत्यस्ति[2] गौरिहेत्यादिधीध्वनी[2] ॥ ८६६ ॥
स्यातां[3] किंविषयावेतौ नानिमित्तौ च तौ मतौ ।
सर्वस्मिन्नविभागेन तयोर्वृत्तेरसम्भवात्[4] ॥ ८६७ ॥

---

आरोपिताकारशब्दप्रत्ययगोचरत्व (तत्त्व० २) समर्थनार्थं प्रस्तावमारचयन्नाह— यदीत्यादि । वस्त्वेव हि परमार्थतः शब्दप्रत्ययग्राह्यम्, अतः शब्दैः साक्षाद् विधिनिषेधाभ्यां वस्तुस्वभावप्रतिपादनाद् विधिरेव शब्दार्थ इति विधिशब्दार्थवादिनां दर्शनम् । अपोहवादिनां तु—न परमार्थतः शब्दानां किञ्चिद्वाच्यं वस्तुस्वरूपमस्ति, सर्व एव हि शाब्दः[5] प्रत्ययो[5] भ्रान्तः; भिन्नेष्वर्थेष्वभेदाकाराध्यवसायेन प्रवृत्तेः । यत्र तु पारम्पर्येण वस्तुप्रतिबन्धः, तत्रार्थसंवादो भ्रान्तत्वेऽपीति दर्शनम् । तत्र यत्तदारोपितं विकल्पधियाऽर्थेष्वभिन्नं रूपं तदन्यव्यावृत्तपदार्थानुभवबलायातत्वात्, स्वयं चान्यव्यावृत्ततया प्रख्यानाद् भ्रान्तैश्चान्यव्यावृत्तार्थेन सहैक्येनाध्यवसितत्वादन्यापोढपदार्थाधिगतिफलत्वाच्च 'अन्यापोढः' [G. 275] इत्युच्यते । तेनापोहः शब्दार्थ इति प्रसिद्धम् ।

तत्र विधिवादिनश्चोदयन्ति—यदि भवतां द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणा उपाधयो विशेषणानि शब्दप्रत्ययं प्रति निमित्तानि परमार्थतो न सन्ति, तत् कथं लोके दण्डीत्यभिधानप्रत्ययाः प्रवर्त्तन्ते द्रव्याद्युपाधिनिमित्ताः । तथा हि— 'दण्डी', 'विषाणी' इत्यादिधीध्वनी लोके द्रव्योपाधिकौ प्रसिद्धौ; 'शुक्लः', 'कृष्णः'— इति गुणोपाधिकौ; 'चलति', 'भ्रमति'—इति कर्मनिमित्तौ; 'अस्ति', 'विद्यते'— इति सत्ताप्रवृत्तिनिमित्तकौ; गौरश्वो हस्ती इति सामान्यविशेषोपाधी, 'इह तन्तुषु पटः' इति समवायबलात् । तत्रैषां द्रव्यादीनामभावे दण्डीत्यादिधीध्वनी निर्विषयौ

---

१. पा० पुस्तके नास्ति; परमार्थतः—गा० ।
२–२. "'रिहेत्यादिधी'"—पा० ।  ३. पा० पुस्तके नास्ति ।
४. ०र्वृत्तिरसम्भवी—पा०, गा० ।  ५–५. शब्दप्रत्ययो—पा०, गा० ।

तत्प्रतिविधानम्

उच्यते—विषयोऽमीषां धीध्वनीनां न कश्चन ।
अन्तर्मात्रानिविष्टं तु बीजमेषां निबन्धनम् ॥ ८६८ ॥
यस्य यस्य हि शब्दस्य यो यो विषय उच्यते ।
स स [1]संघटते नैव वस्तूनां सा हि धर्मता ॥ ८६९ ॥

---

स्यातामिति । आदिग्रहणं प्रत्येकमभिसम्बध्यते, तेन प्रत्येकम् 'छत्री', 'विषाणी' इत्यादिसमानजातीयधीध्वनीनां ग्रहणं भवति । अन्त्यास्तु विशेषा योगिनामेव ग्राह्या इति न तेषामादिशब्देन परिग्रहः । न चानिमित्तावेतौ युक्तौ; सर्वत्रा-विशेषेण सर्वदा तयोर्वृत्तिप्रसङ्गात्, न चाविभागेन तयोः प्रवृत्तिरस्ति । तस्मात् सन्ति द्रव्यादय इति परः । प्रयोगः—ये परस्परमसङ्कीर्णप्रवृत्तयस्ते सनिमित्ताः, यथा श्रोत्रादिप्रत्ययाः । असङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशब्दप्रत्यया इति स्वभाव-हेतुः । अनिमित्तत्वे सर्वत्राविशेषेण प्रवृत्तिप्रसङ्गो बाधकं प्रमाणम् ॥८६६-८६७॥

उच्यत इत्यादिना प्रतिविधत्ते । तत्र यदि मुख्यतो बाह्येन विषयभूतेन सनिमित्तत्वमेषां साधयितुमिष्टम्, तदाऽनैकान्तिकता हेतोः; साध्यविपर्यये बाधक-प्रमाणाभावात् । अथ येन केनचिन्निमित्तेन सनिमित्तत्वमिष्यते, तदा सिद्ध-साध्यता । तथा ह्यस्माभिरिष्यत एवैषामन्तर्जल्पवासनाप्रबोधो निमित्तम्, न तु विषयभूतम्; भ्रान्तत्वेन पूर्वस्य शाब्दप्रत्ययस्य निर्विषयत्वात् । अन्तर्मात्रानिविष्ट-मिति । विज्ञानसन्निविष्टम्, वासनेति यावत् ॥ ८६८ ॥

एतदेवागमेन [2]संस्पन्दयन्नाह—यस्य यस्येत्यादि । यो यो विषय इति । स्वलक्षणसामान्यादिः । सा हि धर्मतेति सा = प्रकृतिः, सर्ववाक्पथातीतत्वं वस्तूनां स्वभाव इति यावत् । यथोक्तम् —

"येन येन हि नाम्ना वै यो यो धर्मोऽभिलप्यते ।
न स संविद्यते तत्र धर्माणां सा हि धर्मता" ॥ (   ) इति ॥ ८६९ ॥

---

१. पा०-पुस्तके नास्ति; संविद्यते—गा० ।
२. समर्थयन्नित्यर्थः ।

### स्वलक्षणादीनां शब्दार्थत्वासम्भवत्वम्

यतः स्वलक्षणं जातिस्तद्योगो जातिमांस्तथा ।
बुद्ध्याकारो न शब्दार्थे घटामञ्चति तत्त्वतः ।। ८७० ।।

[ G. 276 ] अथ शाब्दप्रत्ययस्य[1] भ्रान्तत्वाविषयत्वयोः किं प्रमाणमिति चेत् ? उक्तमत्र प्रमाणमस्माभिर्यद् भिन्नेष्वभेदाध्यवसायेन प्रवृत्तेः सर्व एवायं शाब्दप्रत्ययो भ्रान्त इति । तथा हि- योऽतस्मिंस्तदिति प्रत्ययः स भ्रान्तः, यथा—मरीचिकायां जलप्रत्ययः । तथा चायं भिन्नेष्वर्थेष्वभेदाध्यवसायी शाब्दप्रत्यय इति स्वभावहेतुः । न च सामान्यं वस्तुभूतं ग्राह्यमस्यास्ति, येनासिद्धता हेतोरिति स्यात्; तस्य [2]पूर्वं विस्तरेण निरस्तत्वात् । भवतु वा सामान्यम्, तथापि तस्य भेदेभ्योऽर्थान्तरत्वे भिन्नेष्वभेदाध्यवसायो भ्रान्तिरेव, न ह्यन्येनान्ये समाना युक्तास्तद्वन्तो नाम स्युः । अनर्थान्तरत्वेऽपि सामान्यस्य सर्वमेव विश्वमेकमेव वस्तु परमार्थत इति तत्र सामान्यस्य प्रत्ययो भ्रान्तिरेव । न ह्येकवस्तुविषयः सामान्यप्रत्ययः; भेदग्रहणपुरःसरत्वात् तस्य । भ्रान्तत्वे च सिद्धे निर्विषयत्वमपि सिद्धम् । स्वाकारार्पणेन जनकस्य कस्यचिदर्थस्यालम्बनलक्षणप्राप्तस्याभावात् ।

अथ वा — अन्यथा निर्विषयत्वं साध्यते । यत्रैव हि कृतसमया ध्वनयः, स एव तेषामर्थो युक्तः, नान्यः; अतिप्रसङ्गात् । न च क्वचिद् वस्तुन्येषां परमार्थतः समयः समस्तीत्यतो निर्विषया धीध्वनयः । प्रयोगः—ये यत्र भावतः कृतसमया न भवन्ति, न ते परमार्थतस्तमभिदधति, यथा सास्नादिमति पिण्डेऽश्वशब्दोऽकृतसमयः । न भवन्ति च भावतः कृतसमयाः सर्वस्मिन् वस्तुनि सर्वे ध्वनय इति व्यापकानुपलब्धेः । कृतसमयत्वेनाभिधायकत्वस्य व्याप्तत्वात्, तस्य चेहाभावः । न चायमसिद्धो हेतुरित्यादर्शयन्नाह — यत इत्यादि ।

[3]यथा हि गृहीतसमयं वस्तु शब्दार्थत्वेन व्यवस्थाप्यमानं कदाचित् स्वलक्षणं वा व्यवस्थाप्यते, जातिर्वा, तद्योगो वा, तया = जात्या योगः = सम्बन्धः, यद्वा जातिमान्, पदार्थबुद्धेर्वा आकारः—इति विकल्पाः । तत्र सर्वेष्वेव समया-

---

१. शब्दप्रत्ययस्य—पा०, गा० ।  २. सामान्यपरीक्षायामित्यर्थः ।
३. तथा—पा०, गा० ।

स्वलक्षणेऽशब्दार्थत्वम्

तत्र स्वलक्षणं तावन्न शब्दैः प्रतिपाद्यते ।
सङ्केतव्यवहाराप्तकालव्याप्तिवियोगतः ॥ ८७१ ॥
व्यक्त्यात्मानोऽनुयन्त्येते न परस्पररूपतः
देशकालक्रियाशक्तिप्रतिभासादिभेदतः ॥ ८७२ ॥

---

सम्भवान्न युक्तं शब्दार्थत्वम् । तत्त्वत इत्यनेन सांवृतस्य शब्दार्थस्याप्रतिषेधं दर्शयति । तेन स्ववचनव्याघातो न भवति; अन्यथा हि प्रतिज्ञायाः स्ववचनविरोधः स्यात् । तथा हि — एतान् स्वलक्षणादीन् शब्देनाप्रतिपाद्य न शक्यमशब्दार्थत्वमेषां प्रतिपादयितुम् । तत्प्रतिपिपादयिषया च शब्देन स्वलक्षणादीनुपदर्शयता शब्दार्थत्वमेषामभ्युपेतं स्यात् । पुनश्च तदेव प्रतिज्ञया प्रतिषिद्धमिति स्ववचनव्याघातः । एतेन यदुक्तमुद्द्योतकरेण "अवाचकत्वे शब्दानां [G. 277] प्रतिज्ञाहेत्वोर्व्याघातः" (    ) इति तदपि प्रत्युक्तं भवति, न हि सर्वथा शब्दार्थापवादोऽस्माभिः क्रियते, तस्यागोपालमति[1] प्रतीतत्वात्; किन्तु तात्त्विकत्व धर्मो यः परैस्तत्रारोप्यते तस्य निषेधः क्रियते, न तु धर्मिणः ॥ ८७० ॥

तत्र स्वलक्षणे तावत् सङ्केतसम्भवोपदर्शनादशब्दार्थत्वं प्रतिपादयन्नाह— तत्रेत्यादि । न शब्दैः प्रतिपाद्यत इति । तत्र सङ्केताभावादिति भावः । कथं सङ्केताभावः ? इत्याह—संकेतेत्यादि । सङ्केतव्यवहाराभ्यामाप्तः = प्राप्तो यः कालः, तस्य व्याप्तिः = व्यापनम्, तया वियोगात् कारणात् । न तत्र स्वलक्षणे समय इति शेषः । एतदुक्तं भवति—समयो हि व्यवहारार्थं क्रियते, न व्यसनितया । तेन यस्यैव संकेतव्यवहाराप्तकालव्यापकत्वमस्ति, तत्रैव समयो व्यवहर्तॄणां युक्तः, नान्यत्र । न च स्वलक्षणस्य संकेतव्यवहाराप्तकालव्यापकत्वमस्ति, तस्मान्न तत्र समय इति ॥ ८७१ ॥

कस्मात् पुनः स्वलक्षणस्य संकेतव्यवहाराप्तकालव्यापकत्वं न सम्भवति ? इत्याह—व्यक्त्यात्मान इत्यादि ।

---

१. ०गोपालमपि—पा०, गा० ।

तस्मात् संकेतदृष्टोऽर्थो व्यवहारे न दृश्यते ।
न चागृहीतसंकेतो [1]गम्यतेऽन्य इव ध्वनेः ॥ ८७३ ॥

---

शाबलेयादयो हि व्यक्तिभेदा देशादिभेदेन परस्परतोऽत्यन्तव्यावृत्तमूर्त्तयः, नैते परस्परमन्वाविशन्ति । तत्रैकत्र कृतसमयस्य पुंसोऽन्यैर्व्यवहारो न स्यात् । प्रतिभासादीत्यादिशब्देन वर्णसंस्थानावस्थाविशेषादिपरिग्रहः । व्यवहारे[2] न दृश्यत इति । तेन तत्र समयाभावान्नासिद्धता हेतोरिति भावः । न चाप्यनैकान्तिकत्वमिति दर्शयन्नाह—न चागृहीतेत्यादि । गृहीतः संकेतो यत्र स तथा, न गृहीतसंकेतोऽगृहीतसंकेतः । [3]ध्वनेरिति शब्दात्[3] । अन्य इवेति । विजातीयार्थवत् । एतदुक्तं भवति—यद्यगृहीतसंकेतमर्थं शब्दः प्रतिपादयेत्, तदा गोशब्दोऽप्यश्वं प्रतिपादयेत्, संकेतकरणानर्थक्यं च स्यात् । तस्मादतिप्रसङ्गापत्तिर्बाधकं प्रमाणमिति सिद्धा व्याप्तिः ।

अयमेव च 'अकृतसमयत्वात्' इति हेतुराचार्यदिङ्नागेन "न जातिशब्दो भेदानां वाचकः, [ G. 278 ] आनन्त्यात्" (     ) इत्यनेन निर्दिष्टः । तथा हि 'आनन्त्यात्' इत्यनेन समयासम्भव एव दर्शितः ।

तेन यदुद्द्योतकरेणोक्तम्—"यदि शब्दान् पक्षयसि, तदाऽनन्त्यादित्यस्य वस्तुधर्मत्वाद् व्यधिकरणो हेतुः । अथ भेदा एव पक्षीक्रियन्ते तदा नान्वयी न व्यतिरेकी दृष्टान्तोऽस्तीत्यहेतुरानन्त्यम्" (     ) इति, तत् प्रत्युक्तं भवति । पुनः स एवाह—"यस्य निर्विशेषणा भेदाः शब्दैरभिधीयन्ते तस्यायं दोषः, अस्माकं तु सत्तादिविशेषणानि द्रव्यगुणकर्माण्यभिधीयन्ते । तथा हि—यत्र यत्र सत्तादिकं सामान्यं पश्यति तत्र तत्र सदादिशब्दं प्रयुङ्क्ते । एकमेव च सत्तादिकं सामान्यम्, अतः सामान्योपलक्षितेषु भेदेषु समयक्रियासम्भवादकारणमानन्त्यम्" (     ) इति, तदेतदसम्यक्; न हि सत्तादिकं वस्तुभूतं सामान्यं तेभ्यो भिन्नमभिन्नं वाऽस्तीति प्रसाधितमेतत् । भवतु वा सामान्यम्,

---

१. पा० पुस्तके नास्ति; बोध्येता०—गा० ।
२. व्यवहारकाले—जै०; व्यवहारो—पा०, गा० ।
३–३. पा०, गा० पुस्तकयोरयं पाठः 'विजातीयार्थवत्' इत्यस्यानन्तरमस्ति ।

हिमाचलादयो येऽपि देशकालाद्यभेदिनः ।
इष्टास्ते त्वणुशो[1] भिन्नाः[1] क्षणिकाश्च प्रसाधिताः ॥ ८७४ ॥

---

तथाप्येकस्मिन् भेदेऽनेकसामान्यसम्भवादसाङ्कर्येण सदादिशब्दप्रयोजनं न स्यात् । न च शब्देनानुपदर्श्य सत्तादिकं तेन सत्तादिना भेदान् परमुपलक्षयितुं समयकारः शक्नुयात् । न चाकृतसमयेषु सत्तादिशब्दप्रवृत्तिरस्ति; ततश्चेतरेतराश्रयदोषः स्यात् ।

अथापि स्यात्—स्वयमेव प्रतिपत्ता व्यवहारोपलम्भादन्वयव्यतिरेकाभ्यां सदादिशब्दैः समयं प्रतिपद्यत इति ? तदेतदसम्यक्; न ह्यनन्तभेदविषयं[2] निःशेषं कश्चिद् व्यवहारमुपलभते । एकदा सत्तादिमत्सु भेदेष्वसकृद्व्यवहारमुपलभ्याद्दृष्टेष्वपि तज्जातीयेषु ताच्छब्द्यं प्रतिपद्यत इति चेत् ? न; अदृष्टत्वात् । न ह्यदृष्टेष्वतीतानागतभेदभिन्नेष्वनन्तेषु भेदेषु समयः सम्भवति; अतिप्रसङ्गात् । विकल्पबुद्ध्या व्याहृत्य-तेषु प्रतिपद्यत एवेति चेत् ? एवं तर्हि विकल्पसमारोपितार्थविषय एव शब्दसन्निवेशनम्, न परमार्थतो भेदेष्विति प्राप्तम् । तथा हि—अतीतानागतयोरसत्त्वेनासन्निहितत्वात् तत्र विकल्पबुद्धिर्भवन्ती निर्विषयैवेति तया व्याहृतमसदेव, ततश्च तत्र भवन् समयः कथं परमार्थतो वस्तुभूतो भवेत् । इत्यलं बहुना । सपक्षे भावात् नापि हेतोर्विरुद्धतेति सिद्धम्— स्वलक्षणविषयत्वं शब्दानाम् ॥ ८७२–८७३ ॥

स्यादेतद्—ये हिमाचलादयो भावास्तेषां स्थिरैकरूपत्वान्न देशकालभेदादिभेदः सम्भवति, अतः संकेतव्यवहारासकालव्यापकत्वात् तेषु समयः सम्भवतीत्यतः पक्षैकदेशासिद्धता हेतोः ? इत्यत आह—हिमाचलादय इत्यादि ।

[ G. 279 ] आदिशब्देन मलयादिपरिग्रहः । एते ह्यनेकाणुप्रचयस्वभावाः, अतो नैषामशेषावयवपरिग्रहेण समयः समस्ति । प्रसाधितोदयानन्तरविनाशाश्च । तेनैतेष्वपि समयकालपरिदृष्टस्य स्वभावस्य न व्यवहारकालेष्वन्वयोऽस्तीति नासिद्धता हेतोः ॥ ८७४ ॥

---

१–१. पा० पुस्तके नास्ति; इष्टास्तेष्वणवो भिन्नाः—गा० ।
२. ह्यनन्तरभेदविषयं—पा०, गा० ।

[1]अशक्यसमयं चेदं सर्वमेव स्वलक्षणम्[1] ।
नाजाते समयो युक्तो भाविकोऽश्वविषाणवत् ॥ ८७५ ॥
उपजाते[2] गृहीते च यदा वाचामनुस्मृतौ[2] ।
क्रियते समयस्तत्र [3]चिरातीतं तदापि तत्[3] ॥ ८७६ ॥
यश्चापि [4]क्षण उत्पन्नस्तद्बलेन[4] तदापरः ।
न तत्र समयाभोगः सादृश्यं च विकल्पितम् ॥ ८७७ ॥

---

एवं तावत् स्वलक्षणे व्यवहारानुपपत्तेः समयवैयर्थ्यप्रसङ्गान्न समयः सम्भवतीति प्रतिपादितम् । साम्प्रतमशक्यक्रियत्वादेव न सम्भवतीति प्रतिपादयन्नाह—अशक्यमित्यादि । सर्वं एव भावाः पूर्वं प्रसाधितोदयानन्तरापवर्गाः, तेषु समयः क्रियमाणः कदाचिदनुत्पन्नेषु वा क्रियेत ? उत्पन्नेषु वा ? तत्र न तावदनुत्पन्नेषु परमार्थेन समयो युक्तः; असतः सर्वोपाख्याविरहलक्षणत्वेनाधारत्वानुपपत्तेः । भाविकग्रहणं सांवृतनिषेधार्थम् । तेनाजातेऽपि पुत्रादौ समयदर्शनान्न दृष्टविरोधः; तस्य विकल्पनिर्मितार्थविषयत्वेनाभाविकत्वात् । अश्वविषाणवदिति । सप्तम्यन्ताद् वतिः । नाप्युत्पन्ने समयो युक्तः, तथा हि—तस्मिन्ननुभवोत्पत्तौ सत्यां तत्पूर्वके च नामभेदस्मरणे सति समयः कार्यः, नान्यथा; अतिप्रसङ्गात् । ततश्च नामभेदस्मरणकाले क्षणध्वंसितया चिरनिरुद्धं स्वलक्षणमिति, नाजातवज्जातेऽपि भाविकः समयः समस्ति; समयक्रियाकाले द्वयोरप्यसन्निहितत्वात् । तथा हि अनुभवावस्थायामपि तावत् तत्कारणतया स्वलक्षणं क्षणिकं न सन्निहितसत्ताकं भवति, किं पुनरनुभवोत्तरकालभाविनामभेदाभोगस्मरणोत्पादकाले भविष्यति ॥८७५–८७६॥

अथापि स्यात्—तज्जातीये तत्सामर्थ्यबलोपजाते समयक्रियाकालभाविनि क्षणे समयः करिष्यत इति ? अत आह—यश्चापीत्यादि । यद्यपि समयक्रिया-

---

१–१. अशक्यं समय—पा०; अशक्यं समयस्यास्य जातेऽजाते च कल्पनम्—गा० ।
२–२. उपजाते गृहीता......वाचामनुस्मृतौ—पा०; नापि जाते गृहीतानां पूर्वं वाचामनुस्मृतौ—गा० ।
३–३. चिरातीते......—पा०; चिरातीते कथं नु तत्—गा० ।
४–४. ......लेन—पा०; तत्सजातीयस्तद्बलेन—पा० ।

[1]उष्णादिप्रतिभासा च[1] नोष्णादिध्वनिभाविनी ।
विस्पष्टा [2]विद्यते [2]बुद्धिः तदर्थेन्द्रियबुद्धिवत् ॥ ८७८ ॥

काले सन्निहितं क्षणान्तरमस्ति, तथापि तत्र समयाभोगासम्भवान्न समयो युक्तः; न ह्यश्वमुपलभ्य तन्नामस्मरणोपक्रमपूर्वकं समयं कुर्वाणस्तत्कालसन्निहिते [G. 280] गवादावाभोगाविषयीकृते 'अश्वः' इति समयं समयकृत् कश्चित् करोति। अथापि स्यात् — सर्वेषां स्वलक्षणक्षणानां सादृश्यमस्ति तेनैकत्वमध्यवसाय समयः करिष्यते ? इत्याह—सादृश्यं च विकल्पितमिति । विकल्पबुद्धि-समारोपितं हि सादृश्यम्, तस्य च ध्वनिभिः प्रतिपादने सति स्वलक्षणमवाच्य-मेव[3] स्यात् । तदेवं न [4]स्वलक्षणासमयः सम्भवति । नापि शब्दस्वलक्षणस्य; तथा हि — समयकारः स्मृत्युपस्थापितमेव नामभेदमर्थे योजयति, न च स्मृति-र्भावतोऽनुभूतमेवाभिलापमुपस्थापयितुं शक्नोति; तस्य चिरनिरुद्धत्वात् । यच्चो-च्चारयति तस्य पूर्वमननुभूतत्वान्न तत्र स्मृतिः, न चाविषयीकृतस्तया समुपस्थापयितुं शक्यः; अतः स्मृत्युपस्थापितमनुसन्धीयमानं विकल्पनिर्मितत्वेनास्वलक्षणमेवेति न स्वलक्षणस्य समयः । तस्मादव्यपदेश्यं स्वलक्षणमिति सिद्धम् ॥ ८७७ ॥

अत्रैव स्वलक्षणावाच्यत्वसिद्धयै प्रमाणान्तरमाह—उष्णादीत्यादि । यथा हि उष्णाद्यर्थविषयेन्द्रियबुद्धिः स्फुटप्रतिभासा वेद्यते, न तथोष्णादिशब्द-भाविनी; न ह्युपहतनयनरसनघ्राणादयो [5]मातुलुङ्गादिशब्दश्रवणात् तद्रूपरसाद्यनु-भाविनो भवन्ति, यथाऽनुपहतनयनादय इन्द्रियधियाऽनुभवन्तः । यथोक्तम्—

"अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोऽभिमन्यते ।
अन्यथा दाहशब्देन दाहार्थः सम्प्रकाश्यते ॥" (                ) इति ।

तदर्थेन्द्रियबुद्धिवदिति [6]वैधर्म्योदाहरणम् । स [7]उष्णादिरर्थः = विषयो यस्याः सा तथोक्ता[7], तदर्था चासाविन्द्रियबुद्धिश्चेति विग्रहः ॥ ८७८ ॥

१–१. पा० पुस्तके नास्ति; उष्णादिप्रतिपत्तिर्या—गा० ।
२–२. पा० पुस्तके नास्ति; भासते नैषा—गा० ।
३. स्वलक्षणमवाच्यमेव—पा०, गा० । ४. स्वलक्षणे समयः—पा०, गा० ।
५. मातुलिङ्गा०—पा०, गा० । ६. वैधर्मोदा०—पा०, गा० ।
७–७. पा०, गा० पुस्तकयोर्नास्ति ।

न स तस्य च शब्दस्य 'युक्तोऽर्थो यो' न तत्कृते ।
प्रत्यये सति भात्यर्थो रूपबोधे यथा[2] रसः ॥ ८७९ ॥

नैयायिकाभिमत-व्यक्त्याकृतिशब्दार्थतानिरासः

एतेनैव प्रकारेण व्यक्त्याकृत्योर्निराकृतिः ।

---

यदि नाम सा तथा न भवति, तथापि किमिति शब्दस्य स्वलक्षणमर्थो न भवति ? इत्याह— न स तस्येत्यादि । प्रयोगः— यो हि तत्कृते प्रत्यये न प्रतिभासते न स तस्यार्थः, यथा रूपजनिते प्रत्यये रसः, न प्रतिभासते च शाब्दे प्रत्यये स्वलक्षणमिति व्यापकानुपलब्धिः । अत्र चातिप्रसङ्गो बाधकं प्रमाणम् । तथा हि— शब्दस्य तद्विषयज्ञानजनकत्वमेव तद्वाचकत्वमुच्यते, नान्यत् । न च यद्विज्ञानं यदाकारशून्यं तत्तद्विषयं युक्तम्; अतिप्रसङ्गात् । [G. 281] न चैकस्य वस्तुनो रूपद्वयमस्ति स्पष्टास्पष्टम्, येनास्पष्टं वस्तुगतमेव रूपं शब्दैरभिधीयत इति स्यात्; एकस्य द्वित्वविरोधात्, भिन्नसमयस्थायिनां च परस्परविरुद्धस्वभावप्रतिपादनात् ॥ ८७९ ॥

नैयायिकास्तु ब्रुवते – "व्यक्त्याकृतिजातयस्तु पदार्थः" ( न्या० द० २.२.६८ ) इति । पदस्यार्थः पदार्थः, शब्दार्थ इति यावत् । तत्र व्यक्तिशब्देन द्रव्यगुणविशेषकर्माण्यभिधीयन्ते । तथा च सूत्रम् "व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः" ( न्या० द० २.२.६९ ) इति । अस्यार्थो वार्त्तिककारमतेन[3] तावदुच्यते – "विशेष्यत इति विशेषः, गुणेभ्यो विशेषो गुणविशेषः, कर्माभिधीयते । द्वितीयश्चात्र गुणविशेषशब्द एकशेषं कृत्वा निर्दिष्टः, तेन गुणपदार्थो गृह्यते । गुणाश्च ते विशेषाश्चेति गुणविशेषाः, विशेषग्रहणमाकृतिनिरासार्थम् । तथा ह्याकृतिः संयोगविशेषः; स्वस्वभावात् । संयोगश्च गुणपदार्थान्तर्गतः, ततश्चासति विशेषग्रहणे आकृतेरपि ग्रहणं स्यात् । न च तस्या व्यक्तावन्तर्भाव इष्यते; पृथक्शब्देन तस्या उपादानात् । आश्रयशब्देन द्रव्यमभिधीयते, तेषां गुणविशेषाणामाश्रयस्तदाश्रयो द्रव्यमित्यर्थः । सूत्रे तच्छब्दलोपं कृत्वा निर्देशः कृतः । एवं विग्रहः कर्त्तव्यः— गुणविशेषाश्च गुणविशेषाश्चेति गुणविशेषाः, गुणविशेषाश्च

---

१–१. युक्तो योगो—पा०, गा० । २. तथा—गा० । ३. उद्द्योतकरमतेनेत्यर्थः ।

तदाश्रयश्चेति गुणविशेषाश्रयः, समाहारद्वन्द्वश्चायम्, 'लोकाश्रयत्वाल्लिङ्गस्य' इति नपुंसकलिङ्गानिर्देशः। तेनायमर्थो भवति—योऽयं गुणविशेषाश्रयः सा व्यक्तिश्चोच्यते, मूर्तिश्चेति। तत्र यदा द्रव्ये मूर्त्तिशब्दः, तदाऽधिकरणसाधनो द्रष्टव्यः—मूर्च्छन्त्यस्मिन्नवयवा इति मूर्त्तिः। यदा तु रूपादिषु; तदा कर्तृसाधनः—मूर्च्छन्ति द्रव्ये समवयन्तीति रूपादयो मूर्त्तिः। व्यक्तिशब्दस्तु द्रव्ये कर्मसाधनः, रूपादिषु करणसाधनः" ( द्र०—न्या० वा० २.२.६९ )।

भाष्यकारमतेन तु यथाश्रुति सूत्रार्थः—गुणविशेषाणामाश्रयो द्रव्यमेव व्यक्तिर्मूर्त्तिश्चेति तस्येष्टम्। यथोक्तम्—"गुणविशेषाणां रूपरसगन्धस्पर्शानां गुरुत्वद्रवत्वघनत्वसंस्काराणामव्यापिनश्च परिमाणविशेषस्याश्रयो यथासम्भवं तद् द्रव्यं मूर्त्तिः, मूर्च्छितावयवत्वात्" ( न्या० द०, वा० भा० २.२.६९ ) इति।

आकृतिशब्देन प्राण्यवयवानां पाण्यादीनां तदवयवानां चाङ्गुल्यादीनां संयोगोऽभिधीयते। 'तथा च सूत्रम्—"आकृतिर्जातिलिङ्गाख्या" ( न्या० द० २.२.७० ) इति। अस्य भाष्यम्—"यया जातिर्जातिलिङ्गानि चाख्यायन्ते तामाकृतिं विद्यात्, सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद्व्यूहात्" ( न्या० द०, वा० भा० २.२.७० ) इति। व्यूहशब्देन संयोगविशेष उच्यते। नियतग्रहणेन कृत्रिमसंयोगनिरासः। तत्र जातिलिङ्गानि प्राण्यवयवाः शिरःपाण्यादयः, तैर्हि गोत्वादिलक्षणा जातिर्लिङ्ग्यते। आकृत्या तु कदाचित् साक्षाज्जातिर्व्यज्यते—यदा [ G. 282 ] शिरःपाण्यादिसन्निवेशदर्शनाद् गोत्वं व्यज्यते। कदाचिज्जातिलिङ्गानि—यदा विषाणादिभिरवयवैः पृथक्पृथक्स्वावयवसन्निवेशाभिव्यक्तैर्गोत्वादिर्व्यज्यते। तेन जातेस्तल्लिङ्गानां च प्रख्यापिका भवति आकृतिः। जातिशब्देनाभिन्नाभिधानप्रत्ययप्रसवनिमित्तं सामान्याख्यं वस्तूच्यते। तथा च सूत्रम्—"समानप्रसवात्मिका जातिः" ( न्या० द० २.२.७१ ) इति समानप्रत्ययोत्पत्तिकारणं जातिरित्यर्थः।

तत्र व्यक्त्याकृत्योरेतेनैव स्वलक्षणस्य शब्दार्थत्वनिराकरणेन शब्दार्थत्वनिराकरणं बोद्धव्यमिति दर्शयन्नाह—एतेनैवेत्यादि। जातेस्तु पश्चान्निराकरणं भविष्यतीत्यभिप्रायः। निराकृतिरिति। शब्दार्थत्वेनेति शेषः। कस्मात्?

स्वलक्षणात्मतैवेष्टा तयोरपि यतः परैः ॥ ८८० ॥

द्रव्यादियोगयोः प्राक् तु प्रतिषेधाभिधानतः ।

न तात्त्विकी तयोर्युक्ता शब्दार्थत्वव्यवस्थितिः ॥ ८८१ ॥

जातितद्योगयोः शब्दार्थतानिरसनम्

जातिसम्बन्धयोः पूर्वं व्यासतः प्रतिषेधनात् ।

नानन्तराः प्रकल्प्यन्ते शब्दार्थास्त्रिविधाः परे ॥ ८८२ ॥

उपसंहारः

तद्व्यक्त्याकृतिजातीनां पदार्थत्वं यदुच्यते ।

तदसम्भवि सर्वासामपि नीरूपता यतः ॥ ८८३ ॥

---

इत्याह—स्वलक्षणात्मतैवेत्यादि । तयोरिति व्यक्त्याकृत्योः । तेन यथा स्वलक्षणस्याकृतसमयत्वादशब्दार्थत्वम्, तथा 'तयोरपि' इत्यतः 'अकृतसमयत्वात्' इत्यस्य हेतोर्नासिद्धिः, नाप्यनैकान्तिकतेति भावः ॥ ८८० ॥

किञ्च—व्यक्तिर्द्रव्यगुणविशेषकर्मलक्षणा, आकृतिश्च संयोगात्मिका; एते च द्रव्यादयः प्रागेव प्रतिषिद्धाः—इत्यतोऽपि शब्दार्थत्वमनयोरसद्भावान्न युक्तमिति दर्शयति—द्रव्यादीत्यादि ॥ ८८१ ॥

एवं तावत् स्वलक्षणे समयासम्भवं प्रतिपाद्य, जात्यादिषु त्रिषु समयासम्भवं प्रतिपादयन्नाह—जातिसम्बन्धयोरित्यादि । अनन्तरा इति । स्वलक्षणमुक्तां जातिः, तद्योगो जातिमानिति [1]जातियोगयोरभावात् तद्वतोऽप्यसम्भव एव, तत्कृतत्वात् तद्व्यपदेशस्य; तद्वतश्च स्वलक्षणात्मकत्वात् । तत्पक्षभावी दोषः समान एवेति भावः ।

'जातिः पदार्थः' इति [2]कात्यायनः, 'द्रव्यम्' इति व्याडिः, उभयं पाणिनिः; तदप्यनेनैव निरस्तम्, जातेरयोगाद् द्रव्यस्य च स्वलक्षणात्मकत्वात् तत्पक्षभाविदोषानिवृत्तेः ॥ ८८२ ॥

उपसंहरन्नाह—तद्व्यक्त्याकृतीत्यादि । [G. 283] तदिति तस्मात् । नीरूपतेति निःस्वभावता ॥ ८८३ ॥

---

१. जातितद्योगयो०—पा०, गा० । २. वाजात्यायनः—पा० ।

### बुद्ध्याकारस्य शब्दार्थतानिरासः

बुद्ध्याकारश्च बुद्धिस्थो नार्थबुद्ध्यन्तरानुगः ।
नाभिप्रेतार्थकारी च सोऽपि वाच्यो न तत्त्वतः ॥ ८८४ ॥

### अस्त्यर्थादीनां शब्दार्थतानिरसनप्रतिज्ञा

येऽन्येऽन्यथैव [1]शब्दार्थानस्त्यर्थादीन् प्रचक्षते ।
निरस्ता एव तेऽप्येतैस्तथापि पुनरुच्यते ॥ ८८५ ॥

### अस्त्यर्थस्य शब्दार्थतापक्षः

अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ ८८६ ॥

---

[2]बुद्ध्याकारेऽपि सङ्केतसम्भवं प्रतिपादयन्नाह—बुद्ध्याकारश्चेत्यादि[2] । बुद्ध्याकारो हि तादात्म्येन बुद्धावेवावस्थित इति नासौ तद्बुद्धिस्वरूपवत् प्रतिपाद्यमर्थं बुद्ध्यन्तरं वाऽनुगच्छति । ततश्च सङ्केतव्यवहारासकालव्यापकत्वात् स्वलक्षणवन्न तत्रापि समयः सम्भवति । भवतु वा तस्य व्यवहारकालान्वयः, तथापि न तत्र समयो व्यवहर्तॄणां युक्तः । तथा हि—अपि नामेतः शब्दादर्थक्रियार्थी पुमानर्थक्रियाक्षमानर्थान् विज्ञाय प्रवर्त्तिष्यते तेष्विति मन्यमानैर्व्यवहर्तृभिरभिधायकानि योज्यन्ते, न व्यसनितया । न चासौ विकल्पबुद्ध्याकारोऽभिप्रेतं शीतापनोदादि कार्यं तदर्थिनः सम्पादयितुमलम्, तदनुभवोत्पत्तावपि तदभावात् । तेन तत्रापि समयाभावान्नासिद्धः 'अकृतसमयत्वात्' इति हेतुः ॥ ८८४ ॥

स्यादेतत्—अस्त्यर्थादयोऽपरे शब्दार्थाः सन्ति, ततश्च तत्र समयसम्भवादसिद्धतैव हेतोः ? इत्यत आह—येऽन्येऽन्यथैवेत्यादि । एतैरिति स्वलक्षणादिशब्दार्थप्रतिषेधैः; तेषां स्वलक्षणादिष्वेवान्तर्भावादिति भावः ॥ ८८५ ॥

के पुनस्तेऽस्त्यर्थादयः ? इति दर्शयन्नाह—अस्त्यर्थ इत्यादि । इतिशब्दा भिन्नक्रमः 'अस्त्यर्थः' इत्यस्यानन्तरं सम्बध्यते तेनायमर्थो भवति—अस्त्यर्थ इति यदेतत् प्रतीयते, तत् सर्वशब्दानां प्रत्याय्यस्याभिधेयस्य लक्षणम् । शब्दार्थस्य लक्षणमिति यावत् । तेन गवादिष्वर्थेषु विषयभूतेषु यदगवादिशब्दप्रत्याय्यं

---

१. शब्दार्थमस्त्यादीन्—पा०, गा० । २-२. पा०, गा० पुस्तकयोर्नास्ति ।

समुदायस्य शब्दार्थतापक्षः

समुदायोऽभिधेयो वाऽप्यविकल्पसमुच्चयः ।

असत्यसंसर्गस्य शब्दार्थतापक्षः

असत्यो वाऽपि संसर्गः शब्दार्थः कैश्चिदुच्यते ॥ ८८७ ॥

---

तदपूर्वदेवतास्वर्गैस्तुल्यमित्याहुः । अपूर्वादिशब्दार्थैस्तत्तुल्यमित्येवमाहुरित्यर्थः । यथैव ह्यपूर्वादिशब्दा नार्थाकारविशेषं बुद्धिषु सन्निवेशयन्ति, केवलं तत्रैतावत् प्रतीयते—सन्ति [G. 284] केऽप्यर्था येष्वपूर्वादयः शब्दाः प्रयुज्यन्त इति । तथा दृष्टार्थेष्वपि गवादिशब्देषु तुल्यम्; यतस्तेऽभ्योऽप्येवं प्रतीयते—अस्ति कोऽप्यर्थो गवादिशब्दाभिधेयः, गोत्वादिसामान्यसम्बद्धो वेति । यस्तु तत्राकारविशेषपरिग्रहः केषाञ्चिदुपजायते, स तेषां सिद्धान्तबलात् ॥ ८८६ ॥

आदिशब्देनोपात्तान् शब्दार्थान् दर्शयन्नाह—समुदाय इत्यादि । केचिद् ब्राह्मणादिशब्दैस्तपोजातिश्रुतादिसमुदायो विना विकल्पसमुच्चयाभ्यामभिधीयत इत्याहुः, यथा वनादिशब्दैर्धवादय इति । तथा हि—'वनम्' इत्युक्ते धवो वा, खदिरो वा, पलाशो वेति न विकल्पेन प्रतीतिर्भवति; नापि धवश्च खदिरश्च पलाशश्चेति समुच्चयेन; अपि तु सामान्येन प्रतीयन्ते धवादयः । तथा 'ब्राह्मणः' इत्युक्ते तपो वा जातिर्वा श्रुतं वा, तपश्च जातिश्च श्रुतं चेति न प्रतिपत्तिर्भवति । अपि तु साकल्येन सम्बन्ध्यन्तरव्यच्छिन्नास्तपःप्रभृतयः संहताः प्रतीयन्त इति । तत्र बहुष्वनियतैकसमुदायिभेदावधारणम् = विकल्पः, एकत्र युगपदभिसम्बध्यमानस्य नियतस्यानेकस्य स्वरूपभेदावधारणम् = समुच्चयः । अविद्यमानौ विकल्पसमुच्चयौ यस्य स तथोक्तः ।

अन्ये तु—द्रव्यत्वादिभिरनिर्धारितरूपैर्यः सम्बन्धो द्रव्यादीनां स शब्दार्थः, स च सम्बन्धिनां शब्दार्थत्वेनासत्यत्वादसत्य इत्युच्यते । यद्वा—तपःश्रुतादीनां मेचकवर्णवदैक्येन भासनादेषामेव परस्परम् 'असत्यः' संसर्गः । तथा ह्येते प्रत्येकं समुदिता वा न स्वेन रूपेणोपलभ्यन्ते, किन्त्वलातचक्रवदेषां समूहः स्वरूपमुक्त्यावभासत इति ॥ ८८७ ॥

**असत्योपाधिसत्यस्य शब्दार्थतापक्षः**

असत्योपाधि यत् सत्यं तद्वा शब्दनिबन्धनम् ।

**अभिजल्पत्वापन्नशब्दस्य शब्दार्थतापक्षः**

शब्दो वाऽप्यभिजल्पत्वमागतो याति वाच्यताम् ॥ ८८८ ॥

सोऽयमित्यभिसम्बन्धाद् रूपमेकीकृतं यदा ।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥ ८८९ ॥

**पारमार्थिकबाह्यवस्त्वध्यस्तबुद्ध्याकारस्य परमार्थतः शब्दार्थतापक्षः**

यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।
स बाह्यं वस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते ॥ ८९० ॥

---

अन्ये त्वाहुः—'यदसत्योपाधि सत्यं स शब्दार्थः' इति । तत्र शब्दार्थत्वे-त्वेनासत्या उपाधयो विशेषा वल्याङ्गुलीयकादयो यस्य सत्यस्य, सर्वभेदानुयायिन [1]सुवर्णादिसामान्यात्मनः, तत् सत्यमसत्योपाधि । शब्दनिबन्धनमिति । शब्दप्रवृत्तिनिमित्तमभिधेयमित्यर्थः ।

अन्ये तु ब्रुवते—'शब्द एवाभिजल्पत्वमागतः शब्दार्थः' इति ॥ ८८८ ॥

तत्र कोऽसावभिजल्पः ? इत्याह—सोऽयमित्यादि । [ G. 285 ] शब्द एवार्थ इत्येवं शब्देऽर्थस्य निवेशनं सोऽयमित्यभिसम्बन्धः, तस्मात् कारणाद्यदा शब्दस्यार्थेन सहैकीकृतं रूपं भवति तं स्वीकृतार्थाकारं शब्दमभिजल्पमित्याहुः ॥ ८८९ ॥

अन्ये तु बुद्ध्यारूढमेवाकारं बाह्यवस्तुविषयं बाह्यवस्तुतया गृहीतं बुद्धिरूपत्वेनाविर्भावितं शब्दार्थमाहुः, तद्दर्शयति—यो वेत्यादि । बुद्धिविषय इति बुद्धौ विपरिवर्त्तमानः, बुद्धिस्थ इति यावत् । बाह्यवस्तुनिबन्धन इति । सदसद्बाह्यं वस्तु निबन्धनमक्षरचिह्नस्थानीयं स्वरूपमुदर्शयितुं प्रक्रम्यते यस्य स बाह्यवस्तुनिबन्धनः । बाह्यं वस्त्विति ज्ञात इति । बुद्धिरूपत्वेनाविर्भावितो बाह्यतयाध्यवसित इत्यर्थः । तथा हि—यावद् बुद्धिरूपमर्थेष्वप्रत्यस्तं बुद्धिरूपमेवेति सत्त्वभावनया गृह्यते, तावत् तस्य शब्दार्थत्वं नावसीयते; तत्र क्रियाविशेषसम्बन्धा-

---

१. सुवर्णादिः०—पा०. गा० ।

भावात्। न हि गामानय, दधि खादेत्यादिकाः क्रियास्तादृशि बुद्धिरूपे सम्भवन्ति, क्रियायोगसम्भवी चार्थः शब्दैरभिधीयते। अतो बुद्धिरूपतया गृहीतोऽसौ न शब्दार्थः। यदा तु बाह्यवस्तुनि प्रत्यस्तो भवति; तदा तस्मिन् प्रतिपत्त्वा बाह्यतया विपर्यस्तः क्रियासाधनसामर्थ्यं तस्य मन्यत इति भवति शब्दार्थः।

ननु चापोहवादिपक्षादस्य को विशेषः, तथा हि—अपोहवादिनाऽपि बुद्ध्याकारो बाह्यरूपतया गृहीतः शब्दार्थ इति भाष्यत एव, यथोक्तम्—

"तद्रूपारोपगत्यान्यव्यावृत्त्यधिगते पुनः।
शब्दार्थोऽर्थः स एवेति वचने न विरुध्यते॥" (प्र. वा. २.१७१) इति ?

नैतदस्ति; अयं हि बुद्ध्याकारवादी बाह्ये वस्तुभ्रान्तं सविषयं द्रव्यादिषु पारमार्थिकेष्वध्यस्तं बुद्ध्याकारं परमार्थतः शब्दार्थमिच्छति।

यदि तु यथाऽस्माभिरुच्यते—

"सर्वो[1] मिथ्यावभासोऽयमर्थेष्वेकात्मना ग्रहः[1]।
इतरेतरभेदोऽस्य बीजं संज्ञा यदर्थिका॥" (प्र. वा. ३.७१) इति,

तदा सिद्धसाध्यता। तथा च वक्ष्यति—

"इतरेतरभेदोऽस्य बीजं चेत् पक्ष एव नः"। (तत्त्व० ९०४) इति।

न चापोहवादिना परमार्थतः किञ्चिद् वाच्यं बुद्ध्याकारोऽन्यो वा शब्दानामिष्यते। [G. 286] तथा हि—[2]यदेव शाब्दे प्रत्यये व्यवसीयमानतया प्रतिभासते स शब्दार्थः। न च बुद्ध्याकारः शाब्दप्रत्ययेन व्यवसीयते, किं तर्हि ? बाह्यमेवार्थक्रियाकारि वस्तु। न चापि तेन बाह्यं परमार्थतो व्यवसीयते, यथातत्त्वमनध्यवसायात्, यथाध्यवसायमतत्त्वात्। अतः समारोपित एव शब्दार्थः। यच्च समारोपितं तन्न किञ्चिदिति न किञ्चिद्भावतोऽभिधीयते शब्दैः। यत् पुनरुक्तम्—"शब्दार्थोऽर्थः स एव" (प्र० वा० २.१७१) इति, तत्समारोपितमेवार्थमभिसन्धाय। बुद्ध्याकारवादिना तु बुद्ध्याकारः परमार्थतो वाच्य इष्यत इति महान् विशेषः। ८९० ॥

---

१–१. 'तस्मान्मिथ्याविकल्पोऽयमर्थेष्वेकात्मताग्रहः' इति तत्रस्थः पाठः।
२. य एव—पा०, गा०।

प्रतिभाहेतुत्वमात्रपक्षः

अभ्यासात् प्रतिभाहेतुः सर्वः शब्दः समासतः ।
बालानां च तिरश्चां च यथार्थप्रतिपादने ॥ ८९१ ॥

अस्त्यर्थाभिधानपक्षनिरसनम्

तत्रास्त्यर्थोऽभिधेयोऽयं किं स्वलक्षणमिष्यते ।
जातिर्योगोऽथ तद्वान्न[1] बुद्धेर्वा प्रतिबिम्बकम् ॥ ८९२ ॥
एतेषु[2] दोषाः[2] पूर्वोक्ता अस्त्यर्थे केवलेऽपि च ।
प्रतिपाद्ये न भेदेन व्यवहारोऽवकल्प्यते ॥ ८९३ ॥

---

अन्ये त्वाहुः—अभ्यासात् प्रतिभाहेतुः शब्दो न तु बाह्यार्थप्रत्यायक इति[3] दर्शयति – अभ्यासादित्यादि । शब्दस्य क्वचिद्विषये पुनः पुनः प्रवृत्तिदर्शनम् = अभ्यासः । नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा = प्रतिभा । सा प्रयोगदर्शनाद्वृत्तिसहितेन शब्देन जन्यते, प्रतिवाक्यं प्रतिपुरुषं च सा भिद्यते । स तु तस्या अपरिमाणो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यते विधातुमित्यत आह—'समासत इति । अत्र दृष्टान्तमाह[4]—बालानां च तिरश्चां चेत्यादि । यथैव हि अङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणाया प्रतिभाहेतवो भवन्ति, तथा सर्वेऽर्थवत्सम्मता वृक्षादयः शब्दा यथाभ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति, न त्वर्थं साक्षात् प्रतिपादयन्ति; अन्यथा हि कथं परसंस्पराहताः प्रवचनभेदा उत्पाद्यकथाप्रबन्धाश्च स्वविकल्पोपरचितपदार्थभेदद्योतकाः स्युरिति ॥ ८९१ ॥

तत्रेत्यादिना प्रतिविधत्ते । यद्यस्त्यर्थः पूर्वोदितस्वलक्षणादिस्वभाव इष्यते, तदा पूर्वोदितदोषप्रसङ्गः । किञ्च—अनिर्धारितरूपविशेषत्वादस्त्यर्थस्य तस्मिन् केवले शब्दैः प्रतिपद्यमाने गौः, गवयः, गजः—इत्यादिभेदेन व्यवहारो न स्यात्; तस्य शब्दैरप्रतिपादितत्वात् ॥ ८९२–८९३ ॥

---

१. यद्वाऽन्य—पा०; यद्वान्यत्—पा० ।
२–२. एते स्वदोषाः—पा०, गा० ।
३. इतोऽग्रे गा०सम्पादकः 'तदेतत्' इत्यधिकं पाठमिच्छति ।
४–४. पा०, गा० पुस्तकयोर्नास्ति ।

(शङ्का)

गोत्वशब्दविशिष्टार्थसत्तामात्रगतेर्भवेत् ।
विषाणाकृतिनीलादिभेदाख्यातेस्तु तन्मतम् ॥ ८९४ ॥

(समाधानम्)

नन्वेवं तद्वतोऽर्थस्य भेदानां चाभिधा भवेत् ।
तद्भावे तत्र दोषश्च नान्योऽस्त्यर्थश्च दृश्यते ॥ ८९५ ॥

समुदायाभिधानपक्षनिरसनम्

समुदायाभिधानेऽपि जातिभेदाभिधा स्फुटा ।
तपोजातिक्रियादीनां सामस्त्येनाभिधानतः ॥ ८९६ ॥

---

[G. 287] गोत्वेत्यादिना परस्योत्तरमाशङ्कते । स्यादेतत्—गोत्वशब्दाभ्यां विशिष्टस्यार्थसत्तामात्रस्य शाबलेयत्वादिभेदरहितस्य गोशब्दाद् गतेः = प्रतीतेः कारणात् भेदेन व्यवहारो भविष्यतीति ? यद्येवम्; कथं तर्हि शब्दार्थत्वमस्त्यर्थमात्रस्य मतम्, यावता गवादिविशेषः प्रतिपाद्योऽस्त्येव ? इत्याशङ्क्य परः परिहारमाह—विषाणाकृतीत्यादि । विषाणादेर्विशेषस्य शब्दख्यातेरप्रतीतेः कारणात् । तदुक्तम्—'अस्ति कश्चिदर्थः प्रत्याय्यः' इति. न गोत्वादिशब्दयोः विशेषणभूतयोरप्रतीतेरित्यदोषः ॥ ८९४ ॥

नन्वेवमित्यादिना प्रतिविधत्ते । यदा गोत्वादिना विशिष्टमर्थमात्रमुच्यते इति मतम्, तदा तद्वतोऽर्थस्याभिधानमङ्गीकृतं स्यात् । तत्र च जातेस्तत्समवायस्य च निषेधात् तद्वतोऽर्थस्यासम्भव इति पूर्वोक्तो दोषः । किञ्च—तद्वतोऽर्थस्य स्वलक्षणात्मकत्वादशक्यसमयत्वमव्यवहार्यत्वम्, अस्पष्टावभासप्रसङ्गश्च पूर्ववदापद्यते एव । स्वलक्षणादिव्यतिरेकेणान्य एवास्त्यर्थ इति चेद् ? आह—नान्योऽस्त्यर्थश्च दृश्यत इति । स्वलक्षणादिव्यतिरेकेणान्योऽस्त्यर्थो निरूप्यमाणो न बुद्धेर्गोचरतामवतरति ॥ ८९५ ॥

समुदायाभिधानपक्षे दोषमाह—समुदायाभिधानेऽपीत्यादि । समुदायाभिधानपक्षे स्फुटतरमेव जातेर्भेदानां च तपःप्रभृतीनामभिधानमङ्गीकृतमिति प्रत्येकाभिधानपक्षभाविनो दोषाः समुदायाभिधाने सर्वे युगपत् प्राप्नुवन्ति ॥ ८९६ ॥

असत्यसंसर्ग-असत्योपाधिसत्याख्यपक्षद्वये दोषः

निर्धारितस्वरूपाणां द्रव्यादीनां तु योगतः ।
सम्बन्धो यच्च सामान्यं सत्यं तद् वारितं पुरा ॥ ८९७ ॥
भेदजात्यादिरूपेण शब्दार्थानुपपत्तितः ।
अर्थेनैकीकृतं रूपं न शब्दस्योपपद्यते ॥ ८९८ ॥

अभिजल्पाभिधानपक्षनिरसनम्

जल्पो बुद्धिस्थ एवायं बाह्ययोगविभेदतः ।
ततः को भेद एतस्य [1]बुद्धिपक्षादनन्तरात् ॥ ८९९ ॥

बुद्ध्याकारपक्षवारणम्

बुद्ध्याकारोऽपि शब्दार्थः प्रागेव विनिवारितः ।
ज्ञानादव्यतिरिक्तस्य व्यापकत्ववियोगतः ॥ ९०० ॥

---

असत्यो वाऽपीत्यादिपक्षद्वये दोषमाह—निर्धारितेत्यादि । [G. 288] पूर्वं षट्पदार्थपरीक्षायां संयोगसमवायलक्षणस्य सम्बन्धस्य वारितत्वात्, सामान्यस्य च त्रिगुणात्मकस्य सत्यस्याव्यतिरिक्तस्य साङ्ख्यपरीक्षायाम्, व्यतिरिक्तस्यापि षट्पदार्थपरीक्षायां निरस्तत्वान्नासत्यसंयोगः, नाप्यसत्योपाधिसामान्यं वाच्यम् ।

अभिजल्पपक्षेऽप्याह—यदि शब्दस्य कश्चिदर्थः सम्भवेत्, तदा तेन सहैकीकरणं भवेत् । अपि चायमभिजल्पो बुद्धिस्थ एव । तथा हि—बाह्ययोः शब्दार्थयोर्भिन्नेन्द्रियग्राह्यत्वादिभ्यो भेदस्य सिद्धेस्तयोरैक्यापादनमयुक्तमेव भाविकम् । अतो बुद्धिस्थयोरेव शब्दार्थयोरेकबुद्धिगतत्वादेकीकरणं युक्तम् । तथा हि उपगृहीताभिधेयाकारस्तिरोभूतशब्दस्वभावो बुद्धौ विपरिवर्त्तमानः शब्दात्मा स्वरूपानुगतमर्थविभागेनान्तःसन्निवेशयन् 'अभिजल्पः' उच्यते । स च बुद्धेरात्मगत एवाकारो युक्तः, न बाह्यः; तस्यैकान्तेन परस्परं विविक्तस्वभावत्वात् । ततश्च बुद्धिशब्दार्थपक्षादनन्तरोक्तादस्य को भेदः ? नैव कश्चित् । उभयत्रापि बौद्ध एवार्थः । एतावन्मात्रं तु भिद्यते—शब्दार्थावेकीकृताविति । दोषस्तु समान एव—

---

1. त्रुटिपक्षा०—पा०, गा० ।

प्रतिभापक्षे दोषः

प्रतिभाऽपि च शब्दार्थो बाह्यार्थविषया यदि ।
एकात्मनियते बाह्ये विचित्राः प्रतिभाः कथम् ॥ ९०१ ॥
अथ निर्विषया एता वासनामात्रभावतः ।
प्रतिपत्तिः प्रवृत्तिर्वा बाह्यार्थेषु कथं भवेत् ॥ ९०२ ॥
बाह्यरूपाधिमोक्षेण स्वाकारे यदि ते मते ।
शब्दार्थोऽतात्त्विकः प्राप्तस्तथा भ्रान्त्या प्रवर्त्तनात् ॥ ९०३ ॥
निर्बीजा न च सा युक्ता सर्वत्रैव प्रसङ्गतः ।
इतरेतरभेदोऽस्य बीजं चेत् पक्ष एष नः ॥ ९०४ ॥

सर्वेष्वेव पक्षेषु समानं दूषणम्

यदि वा सर्वमेवेदं क्षणिकं स्यान्न वा तथा ।
क्षणिकत्वेऽन्वयायोगः क्रमिज्ञानं च नान्यथा ॥ ९०५ ॥

---

"ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्" इति। तदेव दर्शयति–बुद्ध्याकारोऽपीत्यादि ॥ ८९७–९०० ॥

प्रतिभापक्षे दोषमाह – प्रतिभापीत्यादि। [ G. 289 ] यदि प्रतिभा परमार्थतो बाह्यार्थविषया, तदैकत्र वस्तुनि शब्दादौ विरुद्धसमयावस्थायिनां विचित्राः प्रतिभा न प्राप्नुवन्ति; एकस्यानेकस्वभावसम्भवात्। अथ निर्विषयाः, तदा अर्थे प्रवृत्तिप्रतिपत्ती न प्राप्नुतः? अतद्विषयत्वाच्छब्दस्य। अथ स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन भ्रान्त्या ते प्रवृत्तिप्रतिपत्ती भवतः? तदा भ्रान्तः शब्दार्थः प्राप्नोति, तस्याश्च भ्रान्तेर्बीजं कारणं वक्तव्यम्; अन्यथा निर्बीजा भ्रान्तिर्भवन्ती सर्वतः सर्वदैव स्यात्। अथ भावानां परस्परतो भेद एव बीजमस्या अभ्युपगम्यते? तदाऽस्मत्पक्षमेव भवान् साधयतीति सिद्धसाध्यता ॥ ९०१–९०४ ॥

साम्प्रतं सर्वेष्वेव पक्षेषु सम[ानं] दूषणमाह—यदि वेत्यादि। सर्वमेतत् स्वलक्षणजात्यादि क्षणिकं वा स्यात्? अ[क्ष]णिकं वा? तत्राद्ये पक्षे संकेतकालदृष्टस्य व्यवहारकालेऽन्वयासम्भवान्न तत्र समयः। अक्षणिकपक्षे च 'नाक्रमात्

### अर्थविवक्षानुमापकपक्षखण्डनम्

एतेनैव विवक्षाऽपि शब्दगम्या निराकृता।
शब्दार्थासम्भवे हीत्थं क्व विवक्षा क्व वा श्रुतिः ! ॥ ९०६ ॥
बहिरर्थे[1] श्रुतेर्वृत्तिः कथं वाऽशब्दचोदिते[2]।
सारूप्यात्[3] सर्वदा न स्यान्नामाद्येतेन[3] दूषितम् ॥ ९०७ ॥

---

क्रमिणो भावः' ( प्र० वा० १.४५ ) इति शब्दार्थविषयस्य क्रमिज्ञानस्याभावप्रसङ्गः। अन्यथेति। अक्षणिकत्वे ॥ ९०५ ॥

अन्ये त्वाहुः—अर्थविवक्षां शब्दोऽनुमापयतीति। यथोक्तम्—"अनुमानं विवक्षायाः शब्दादन्यन्न विद्यते" (          ) इति। अत्राह—एतेनैवेत्यादि।

यदि परमार्थतो विवक्षा पारमार्थिकशब्दार्थविषयेष्यते, तदसिद्धम्; स्वलक्षणादेः शब्दार्थस्य कस्यचिदसम्भवात्। अतो न क्वचिदर्थे परमार्थतो विवक्षाऽस्ति; अन्वयिनोऽर्थस्याभावात्। नापि तत्प्रतिपादकः शब्दोऽस्ति, [4]यदाह—क्व वा श्रुतिरिति। श्रुतिः = शब्दः। विवक्षायां च प्रतिपाद्यायां श्रुतेः शब्दाद् बहिरर्थे प्रवृत्तिर्न प्राप्नोति; तस्याचोदितत्वादर्थान्तरवत् ॥ ९०६ ॥

अथ मतम्—यो विवक्षाविपरिवर्त्ती रूपादिरर्थः, यश्च बाह्यः, तयोः सारूप्यमस्ति; अतः सारूप्यादचोदिते बाह्ये प्रवृत्तिर्भविष्यति यमलकवत् ? इत्यत आह—[5]सारूप्यादिति।

[ G. 290 ] एवं सति सर्वदा बाह्ये प्रवृत्तिर्न प्राप्नोति, कदाचिद् विवक्षापरिवर्त्तिन्यपि चोदिते प्रवृत्तिर्भवेत्। यथा—यमलकयोरिव।

योऽपि वैभाषिकः शब्दविषयं नामाख्यं निमित्ताख्यं चार्थचिह्नरूपं विप्रयुक्तं संस्कारमिच्छति, तदप्येतेनैव दूषितं द्रष्टव्यम्। तथा हि—तन्नामादि यदि क्षणिकम्, तदाऽन्वयायोगः; अक्षणिकत्वे क्रमिज्ञानानुपपत्तिः; बाह्ये च प्रवृत्त्यभावप्रसङ्गः। "सारूप्यान्न सर्वदेति सर्वं यथोक्तं दूषणमखण्डमेवावतरति।

---

१. पा० पुस्तके नास्ति; सारूप्याच्च—गा०। २. वा चोदिते—पा०।
३. सारूप्यान्नामाद्येतेन—पा०, गा०। ४. तदाह—गा०।
५. सारूप्या न—पा०; सारूप्याच्च न—गा०।

विवक्षानुमितिश्लिष्टमाकारं[1] 'बाह्यरूपतः ।
व्यवसायानुवृत्तिश्चेत्[2] तदेवास्मन्मतं पुनः ॥ ९०८ ॥

शब्दानामपोहार्थत्वे परविरोधोत्पादः

नन्वन्यापोहकृच्छब्दो युष्माभिः कथमुच्यते ।
निषेधमात्रं नैवेह प्रतिभासेऽवगम्यते ॥ ९०९ ॥

---

अथ वा—एतेनेति । यथासम्भवं स्वलक्षणादिदूषणेन । तथा हि-अत्राप्येवं वक्तव्यम्—

"अशक्यसमयो ह्यात्मा नामादीनामनन्यभाक् ।
तथा मतो न वाच्यत्वं कथञ्चिदुपपद्यते ॥" इति ॥ ९०७ ॥

यदुक्तम्—"विवक्षासमारूढार्थद्योतकत्वे शब्दानां बाह्ये प्रवृत्तिर्न प्राप्नोति"; अत्र परस्योत्तरमाशङ्कयन्नाह—विवक्षेत्यादि ।

विवक्षा च वक्तृसन्तानवर्त्तिनी, तस्या एव विवक्षाया अनुमितिश्च श्रोतृसन्तानगतेति विवक्षानुमिती, ताभ्यां श्लिष्टः = सम्बद्धः, तत्प्रतिभासीत्यर्थः । तमाकारं बाह्यतया व्यवस्यतोर्वक्तृश्रोत्रोरत्र बाह्ये प्रवृत्तिर्भविष्यति । एतदुक्तं भवति—परमार्थतः स्वप्रतिभासानुभवेऽपि वक्तुरेवमध्यवसायो भवति—मयाऽस्मै बाह्य एवार्थः प्रतिपाद्यते । श्रोतुरप्येवं भवति—ममायं बाह्यमेव प्रतिपादयतीति । अतस्तैमिरिकद्वयद्विचन्द्रदर्शनवदयं सर्वः शाब्दो व्यवहार इति । यद्येवम्, अस्मत्पक्ष एव पतितोऽसीति सिद्धसाध्यता; पूर्वं प्रतिभाद्वारेणागतत्वात् ? इत्यतः पुनरित्याह । तदेवम् 'अकृतसमयत्वात्' इत्यस्य हेतोर्नासिद्धतेति प्रतिपादितम् । अनैकान्तिकत्व-विरुद्धत्वे तु पूर्वमेव निरस्ते । तस्मात् सिद्धा यथोक्तापोहकृतः शब्दा इति ॥ ९०८ ॥

अत्र परोऽपोहशब्दश्रवणाच्छलितमतिरविदितविवक्षितापोहस्वरूपः प्रतिज्ञायाः प्रतीत्यादिविरोधमुत्पादयन्नाह—नन्वन्यापोहकृच्छब्दो युष्माभिः कथमुच्यत इति । [ G. 291 ] 'अन्यापोहकृच्छब्दः' इत्यत्रेतिशब्दोऽध्याहार्यः ।

---

१.—१. ०बाह्यभावतः | गा० । पा० पुस्तके 'विवक्षा' इत्येव पाठ उपलभ्यते ।
२: व्यवस्यतोः प्रवृत्तिश्चेत्—गा० । पा०पुस्तके नास्ति

किन्तु गौर्गवयो हस्ती [1]वृक्ष इत्यादिशब्दतः[1] ।
विधिरूपावसायेन मतिः शाब्दी प्रवर्त्तते ? ॥ ९१० ॥

भामहमतम्

यदि [2]गौरिति शब्दश्च कृतार्थोऽन्यनिराकृतौ[2] ।
जनको गवि [3]गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ ९११ ॥
( का० लं० ६. १७ )

न तु ज्ञानफलाः शब्दा न चैकस्य फलद्वयम्[4] ।
अपवादविधिज्ञानं फलमेकस्य वः कथम्[4] ? ॥ ९१२ ॥
( का० लं० ६. १८ )

---

अन्यापोहकृच्छब्द इत्येवं कथमभिधीयत इत्यर्थः । कस्मान्नाभिधेयम् ? इत्याह—निषेधमात्रमित्यादि । निषेधमात्रमेव किलान्यापोहोऽभिप्रेतः, न चेह शाब्दे प्रतिभासे निषेधमात्रं गम्यते, किं तर्हि ? वस्तुरूपाध्यवसायेनैव शाब्दी धीः प्रवर्त्तमाना समालक्ष्यते । न च शाब्दे ज्ञाने यो न प्रत्यवभासते स शब्दार्थो युक्तः; अतिप्रसङ्गात् । तस्मात् प्रतीतिविरोधः प्रतिज्ञायाः ॥ ९०९-९१० ॥

यदि गौरित्यादिना श्लोकत्रयेण भामहस्य मतेन प्रतीत्यादिबाधामुद्भावयति । यदि गोशब्दोऽन्यव्यवच्छेदप्रतिपादनपरः, तदा तस्य तत्रैव चरितार्थत्वात् सास्नादिमति पदार्थे गोशब्दात् प्रतीतिर्न प्राप्नोति, ततश्च सास्नादिमत्पदार्थविषयाया गोबुद्धेर्जनकोऽपरो ध्वनिरन्वेषणीयः स्यात् ॥ ९११ ॥

स्यादेतत् – एकेनैव गोशब्देन बुद्धिद्वयस्य जन्यमानत्वान्नापरो ध्वनिर्मृग्यते ? इत्याह—न त्वित्यादि । विधिविषयं प्रतिषेधविषयं च ज्ञानं फलं येषां ते तथोक्ताः । ततः किमित्याह—न चैकस्येत्यादि । न ह्येकस्य विधिकारिणः प्रतिषेधकारिणो वा शब्दस्य युगपद्विज्ञानद्वयलक्षणं फलम् । उपलभ्यत इति शेषः । न चापि परस्परविरुद्धमपवादविधिज्ञानं फलं युक्तम् ॥ ९१२ ॥

---

१–१. वृक्षश्चेत्यादि०—पा०, गा० ।
२–२. गौ····न्यनिराकृतौ—पा०; गौरिति शब्दोऽयं भवेदन्य०—पा० ।
३. ०बुद्धेर्दृश्यता०—पा०, गा० ।
४–४. ···यम्, अपवादविधि···—पा०; ०वा कथम्–गा० ।

प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेत् ।
येनागोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ ९१३ ॥"
( का० ल० ६.१९ )

कुमारिलमतम्*

अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम् ॥ ९१४ ॥
भावान्तरात्मकोऽभावो येन सर्वो व्यवस्थितः ।
तत्राश्वादिनिवृत्तात्माऽभावः क[1] इति कथ्यताम् ॥ ९१५ ॥

---

प्रागित्यादिनोपचयहेतुमाह । यदि च गोशब्देनागोनिवृत्तिर्मुख्यतः प्रतिपाद्यते, तदा गोशब्दश्रवणानन्तरं प्रथमतरम् 'अगौः' इत्येषा श्रोतुः प्रतिपत्तिर्भवेत् । तत्रैव ह्यव्यवधानेन शब्दात् प्रत्यय उपजायते, स एव शब्दार्थो व्यवस्थाप्यते । न चाव्यवधानेनागोव्यवच्छेदे मतिरुपजायते । अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात् प्रथमतरमगोप्रतीतिसङ्गाच्च नापोहः शब्दार्थ इति ॥ ९१३ ॥

[G. 292] अगोनिवृत्तिरित्यादिना कुमारिलमतेन प्रतिज्ञादोषमुद्भावयति । स ह्येवमाह—अपोहलक्षणं सामान्यं वाच्यत्वेनाभिधीयमानं कदाचित् पर्युदासलक्षणं वाऽभिधीयते, प्रसज्यलक्षणं वा । तत्र प्रथमे पक्षे सिद्धसाध्यता प्रतिज्ञादोषः, तथा हि—अस्माभिर्गोत्वाख्यं सामान्यं गोशब्देन वाच्यमित्येवमिष्यते, भवता चागोनिवृत्तिलक्षणं सामान्यं गोशब्देनोच्यत इति ब्रुवता तदेव शब्दान्तरेणाभिधीयते इति केवलं नाम्नि विवादः ॥ ९१४ ॥

अथ कथं तदेव शब्दान्तरेणाभिहितम् ? इत्याह—भावान्तरात्मक इत्यादि । येन यस्मात् प्रागभावादिलक्षणश्चतुर्विधः सर्व एवाभावो भावान्तरात्मको व्यवस्थितः । यच्चोक्तम्—

---

* इदं समग्रं कुमारिलमतमाचार्येण प्रायस्तस्यैव गिरा ( श्लोकवार्तिकापोहप्रकरणस्थकारिकाभिः ) उपस्थापितमिति ध्येयम् ।

१. स—पा० ।

नेष्टोऽसाधारणस्तावद्[1] विशेषो निर्विकल्पनात् ।
तथा च शाबलेयादिरसामान्यप्रसङ्गतः ॥ ९१६ ॥
तस्मात् [2]सर्वेष्वयद्रूपं प्रत्येकं प्रतिनिष्ठितम् ।
गोबुद्धिस्तन्निमित्ता स्याद्[3] गोत्वादन्यच्च [3]नास्ति तत् ॥९१७॥

---

"क्षीरे दध्यादि यन्नास्ति प्रागभावः स कथ्यते ॥
नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ।
गवि [4]योऽश्वाद्यभावश्च सोऽन्योन्याभाव उच्यते ॥
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण[5] सोऽत्यन्ताभाव उच्यते ॥
न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।"
( श्लो० वा०. अभा० २–४, ८ ) इति ।

एतेन क्षीरादय एव च दध्यादिरूपेणाविद्यमानाः प्रागभावादिव्यपदेश-भाज इति दर्शितं भवति। तत्रैवमभावस्य भावान्तरात्मकत्वे स्थिते सति कोऽयं भवद्भिरश्वादिनिवृत्तिस्वभावोऽभावोऽभिप्रेत इति कथ्यताम् ॥ ९१५ ॥

स्यान्मतम्—किमत्र कथ्यते, गवादिस्वलक्षणात्मैवासौ ? इत्यत आह—नेष्ट इत्यादि । योऽसावसाधारणो विशेषः सोऽश्वादिनिवृत्त्यात्मा नेष्टो भवताम् । कस्मात् ? इत्याह—निर्विकल्पनात् । तत्र सर्वविकल्पप्रत्यस्तमयात् । विकल्पज्ञानगोचरः सामान्यमेवेष्यते, [G. 293] असाधारणस्त्वर्थः सर्वविकल्पानामगोचरः । यथोक्तम्—"स्वसंवेद्यमनिर्देश्यं रूपमिन्द्रियगोचरः" ( ) इति । विशेषात्मकत्वे कारणमसाधारणात्मकता, असाधारणात्मतया यो विशेषः इत्यर्थः ।

एवमविशेषेणोक्तम् । साम्प्रतं विशेषेणैनमेवार्थमाह—तथा चेत्यादि । यथैव भवतामसाधारणो विशेषोऽश्वादिनिवृत्त्यात्मा गोशब्दाभिधेयो नेष्टः, तथैव

---

१. पा० पुस्तके नास्ति; ०साधारणात्मा वा—गा० ।
२. सर्वेषु यद्रूपं—पा०, गा० । ३–३. स्या···स्ति—पा०, गा० ।
४. ह्यश्वा०—पा०, गा० । ५. ०रूपाणां—गा० ।

निषेधमात्ररूपश्च शब्दार्थो यदि कल्प्यते ।
अभावशब्दवाच्या[1] स्याच्छून्यताऽन्यप्रकारिका[1] ॥ ९१८ ॥
तस्यां चाश्वादिबुद्धीनामात्मांशग्रहणं भवेत् ।
तत्रान्यापोहवाच्यत्वं मुधैवाभ्युपगम्यते ॥ ९१९ ॥

---

शावलेयादिः[2] शावलेयादिशब्दवाच्यतया नेष्टः । अश्वादिनिवृत्त्यात्माऽभाव[3] इत्यत्राप्यनुवर्त्तते । कस्मात् ? इत्याह—असामान्यप्रसङ्गत इति । यदीष्येत, तदा सामान्यं शब्दवाच्यं न स्यात्; तस्याननन्वयात् । यत एवमश्वादिनिवृत्त्यात्माभावोऽसाधारणो न घटते, तस्मात् सर्वेषु सजातीयेषु शावलेयादिपिण्डेषु यत् प्रत्येकं परिसमाप्तं तन्निबन्धना गोबुद्धिः । तच्च गोत्वाख्यमेव सामान्यम् । तस्यागोऽपोहशब्देनाभिधानात् केवलं नामान्तरमित्यतः सिद्धसाध्यता प्रतिज्ञादोषः ॥ ९१६-९१७ ॥

अथ प्रसज्यलक्षणमिति पक्षः ? तत्राह—निषेधमात्ररूपश्चेत्यादि । अभावशब्दवाच्येति । अगोऽपोहलक्षणोऽभाववाचकः[4] शब्दोऽभावशब्दः, तद्वाच्या बहिरर्थशून्यता स्यात्, वस्तुरूपापह्नवात् । अन्यप्रकारिकेति । पूर्वं विज्ञानमात्रवादोपन्यासकाले भवद्भिरुपन्यस्ता, निरस्ता चास्माभिः, पुनरप्यत्र शब्दार्थचिन्ताप्रस्तावे सैवापोहव्याजेनाभिहिता; प्रतीतिसिद्धस्यार्थस्यापवादात् ॥ ९१८ ॥

ततश्च को दोषः ? इत्याह—तस्यां चेत्यादि । तस्याम् = शून्यतायां वाच्यायाम्, शाब्दीनामश्वादिबुद्धीनामात्मांशग्रहणं प्राप्नोति, बाह्यवस्तुस्वरूपाग्रहात् । एवं च सति को दोषः ? इत्याह—तत्रेत्यादि । तत्रैवं स्थिते सति, अपोहस्य वाच्यत्वं मुधैवाभ्युपगतं स्यात्; बुद्ध्याकारस्यानपेक्षितबाह्यार्थावलम्बनस्य विधिरूपस्यैव शब्दार्थत्वापत्तेः । ततश्चाभ्युपगमबाधा प्रतिज्ञाया इति भावः ॥ ९१९ ॥

---

१-१. अभावशब्द''''—पा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।
३. अश्वादिनिवृत्त्या भाव—जै० ।
४. ०लक्षणाभाववाचकः—गा० ।

सामान्यं [1]वस्तुरूपं हि बुद्धयाकारो[1] भविष्यति ।
शब्दार्थोऽर्थानपेक्षो[2] हि वृथापोहः प्रकल्पितः[2] ॥ ९२० ॥
वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते ।
तेन[3] वस्त्वेव कल्प्येत[4] वाच्यं[4] बुद्धयनपोहकम् ॥ ९२१ ॥
असत्यपि[5] च बाह्येऽर्थे प्रतिभालक्षणो[5] यथा ।
पदार्थोऽपि तथैव स्यात् किमपोहः प्रकल्प्यते ॥ ९२२ ॥

---

एतदेव दर्शयति—सामान्यमित्यादि । [G. 294] बुद्धयाकार एव वस्तुरूपं सामान्यं शब्दार्थो भविष्यतीति सम्बन्धः ॥ ९२० ॥

स्यादेतद् – अनालम्बनापि सा बुद्धिर्विजातीयगवादिबुद्धिभ्यो व्यावृत्तरूपा प्रवर्त्तते, तेनापोहकल्पना युक्तैव ? इत्यत आह—वस्तुरूपेत्यादि । वस्तुरूपेति विधिरूपावसायिनी । सा बुद्धिरिति । अनालम्बना अश्वादिबुद्धिः । शब्दार्थेष्विति अश्वादिष्वध्यवसितेषु । वस्त्वेवेति अश्वादिपिण्डाध्यवसायिबुद्धयात्मकम् ।

अवधारणफलं दर्शयति—बुद्धयनपोहकमिति । अविद्यमानोऽपोहो यत्र वाच्ये बुद्धयात्मके वस्तुनि तत्तथोक्तम् । बुद्धेरनपोहकम्, बुद्धयन्तरापोहरहितमित्यर्थः । अथ वा—अपोहत इत्यपोहकम्, नापोहकमनपोहकम्, बुद्धेरनपोहकं बुद्धयनपोहकमिति समासः । एतदुक्तं भवति—यद्यपि बुद्धिर्बुद्धयन्तराद् व्यवच्छिन्ना, तथापि सा न बुद्धयन्तरव्यवच्छेदावसायिनी जायते, किं तर्हि ? अश्वादिष्वर्थेषु विधिरूपावसायिनी, तेन वस्त्वेव विधिरूपं वाच्यं कल्पेत युक्तिमत्, नापोहः; बुद्धयन्तरस्य बुद्धयन्तरानपोहकत्वात् ॥ ९२१ ॥

किञ्च—योऽयं भवद्भिरपोहः पदार्थत्वेन कल्पितः, स वाक्यादपोद्धृत्य कल्पितस्य पदस्यार्थ इष्टः, वाक्यार्थस्तु प्रतिभालक्षण एव । यथोक्तम्—

"अपोद्धारे पदस्यायं वाक्यादर्थो विवेचितः ।
वाक्यार्थः प्रतिभाख्योऽयं तेनादावुपजन्यते ॥" (      ) इति ।

---

१–१. ....कारो—पा० । २–२. शब्दार्थ...प्रकल्पितः—पा०, गा० ।
३. तेषु—पा०, गा० । ४–४. पा० पुस्तके नास्ति ।
५–५. पा० पुस्तके नास्ति; ०च वाक्यार्थः०—गा० ।

बुद्ध्यन्तराद् [1]व्यवच्छेदो न च बुद्धेः[1] प्रतीयते ।
स्वरूपोत्पादमात्राच्च नान्यसंज्ञं[2] बिभर्त्ति सा[2] ॥ ९२३ ॥
भिन्नसामान्यवचना विशेषवचनाश्च ये ।
सर्वे भवेयुः पर्याया यद्यपोहस्य वाच्यता ॥ ९२४ ॥
संसृष्टैकत्वनानात्वविकल्परहितात्मनाम्[3] ।
अवस्तुत्वादपोहानां[4] नैव भेदोऽपि विद्यते ॥ ९२५ ॥

---

अत्रोच्यते—असत्यपीत्यादि । यथा बाह्येऽर्थे शब्दवाच्यत्वेनासत्यपि वाक्यार्थो भवद्भिः प्रतिभालक्षण एव वर्ण्यते, नापोहलक्षणः, तथा पदार्थोऽपि वाक्यार्थवत् प्रतिभालक्षण एव स्यादित्यपोहः पदार्थतया किमिति कल्प्यते । द्वयोरपि पदवाक्यार्थयोर्विधिरूपत्वमेवास्त्विति भावः ॥ ९२२ ॥

स्यादेतत् — प्रतिभायाः प्रतिभान्तराद् विजातीयाद् व्यवच्छेदोऽस्तीत्यतोऽपोहः कल्प्यते ? इत्याह—बुद्ध्यन्तरादित्यादि । [ G. 295 ] यद्यप्यसौ न प्रतीयते, तथाप्यस्त्येवेति चेत् ? आह—स्वरूपोत्पादेत्यादि । यद्यपि बुद्धेर्बुद्ध्यन्तराद्व्यावृत्तिरस्ति, तथापि तस्यां न शब्दव्यापारोऽस्ति । तथा हि—शब्दादियं बुद्धिरुत्पद्यमाना न स्वरूपोत्पादव्यतिरेकेणान्यं बुद्ध्यन्तरव्यवच्छेदलक्षणं शब्दादवसीयमानमंशं बिभ्रती लक्ष्यते, किं तर्हि ? विधिरूपावसायिन्येवोत्पद्यत इत्यर्थः । न च शब्दादवसीयमानो वस्त्वंशः शब्दार्थो युक्तः; अतिप्रसङ्गात् । तस्मात् प्रतीतिबाधितत्वं प्रतिज्ञाया इति भावः ॥ ९२३ ॥

पुनरपि प्रसङ्गापादनेन प्रतीत्यादिबाधितत्वमेव दर्शयन्नाह—भिन्नेत्यादि । ये हि भिन्नसामान्यवचना गवाश्वादयः, ये च विशेषवचनाः शाबलेयादयस्ते सर्वे भवतां पर्यायाः प्राप्नुवन्ति; अर्थभेदाभावात्, वृक्षपादपादिशब्दवत् ॥ ९२४ ॥

कस्मात् पुनरर्थभेदो न सम्भवति ? इत्याह—संसृष्टेत्यादि । वस्तुन्येव हि

---

१–१. पा० पुस्तके नास्ति; ०च बुद्धौ—गा० ।
२–२. पा० पुस्तके नास्ति; विधिरूपावसायिनी—गा० ।
३. ०विकल्प······पा०, ०विकल्परहितो हि सः—गा० ।
४. पा० पुस्तके नास्ति ।

यदि वा भिद्यमानत्वाद्[1] वस्त्वसाधारणांशवत्[1]।
अवस्तुत्वे [2]त्वनानात्वात् पर्यायत्वान्न मुच्यते[3] ॥ ९२६ ॥
ननु चापोह्यभेदेन[4] भेदोऽपोहस्य सेत्स्यति।
न विशेषः स्वतस्तस्य परतश्चौपचारिकः[5] ॥ ९२७ ॥
संसर्गिणोऽपि चाधारा[6] यं न भिन्दन्ति रूपतः।

---

संसृष्टत्वैकत्वनानात्वविकल्पाः सम्भवन्ति, नावस्तुनि; अपोहानां चावस्तुत्वान्न परस्परं संसृष्टत्वादिविकल्पो युक्तः, तत् कथमेषां परस्परं भेदः सिद्ध्यति ! ॥ ९२५ ॥

अथ भेदस्तेषामभ्युपगम्यते, तथा सति नियमेन वस्तुत्वमापद्यते — इति दर्शयति — यदि वेत्यादि। वस्त्विति साध्यनिर्देशः। प्रयोगः — ये परस्परं विभिद्यन्ते ते वस्तु, यथा स्वलक्षणानि। परस्परं विभिद्यन्ते चापोह्या इति स्वभाव-हेतुः। ततश्च वस्तुत्वे सति विधिरेव शब्दार्थ इति सिद्धम्। एतेन चानु-मानबाधितत्वं प्रतिज्ञाया उक्तं भवति। अथावस्तुत्वमभ्युपगम्यतेऽपोहानाम्, तदा नानात्वाभावात् पूर्ववत् पर्यायत्वप्रसङ्ग इत्येकान्त[7] एषः ॥ ९२६ ॥

अत्र परो बौद्धस्य परिहारमाशङ्कते — ननु चेत्यादि। [ G. 296 ] यथोक्तम् — "अपोह्यभेदाद्भिन्नार्थाः स्वार्थभेदगतौ जडाः" (    ) इति। ततश्च स्वतो भेदाभावेऽप्यपोह्यस्याश्वादेर्भेदादपोहस्यागवादिव्यावृत्तिरूपस्य भेदे सिद्धे न पर्यायत्वं भविष्यति।

न विशेष इत्यादिना परो दूषणमाह — स्वतो न तस्यापोहस्य विशेषो नानात्वमस्ति; अभावैकरसत्वात्। परतोऽप्यसौ भवन् काल्पनिकः स्यात्, न पारमार्थिकः। न हि स्वतोऽसतो भेदस्य परतः सम्भवो युक्तः ॥ ९२७ ॥

कस्मान्न युक्तः ? इत्याह — संसर्गिण इत्यादि। तथा हि— संसर्गिणः = सम्बन्धिनः शाबलेयादयः, आधाराः = अन्तरङ्गा अपि सन्तः, यम् = अपोहम्,

---

१–१. पा० पुस्तके नास्ति, वस्तु साधा०—गा०।
२. पा० पुस्तके नास्ति। ३. मुंच्यते—पा०, गा०।
४. नाश्वादिभेदेन - पा०, गा०। ५. ०श्चोपजायते—पा०, गा०।
६. साधारा—पा०, गा०। ७. निश्चय इत्यर्थः।

अपोहैः[1] स बहिःसंस्थैर्भिद्येतेत्यतिकल्पना[1] ॥ ९२८ ॥
तथैवाधारभेदेनाप्यस्य भेदो न युज्यते ।
न हि सम्बन्धिभेदेन भेदो वस्तुन्यपीष्यते ॥ ९२९ ॥
किमुतावस्त्वसंसृष्टमन्यतश्चानिवर्त्तितम्[2] ।
अनवाप्तविशेषांशं[3] यत् किमित्यनिरूपितम्[3] ॥ ९३० ॥
न चाप्रसिद्धसारूप्यानपोहविषयात्मना[4] ।

---

रूपतः = स्वभावतो भेत्तुमशक्ताः; बहुष्वपि शाबलेयादिष्वेकस्यागोव्यवच्छेद-लक्षणस्यापोहस्य प्रवृत्तेरिष्टत्वात्, स कथं बहिरङ्गभूतैरपोहैरश्वादिभिर्भिद्येत न हि यस्यान्तरङ्गोऽप्यर्थो न भेदकस्तस्य बहिरङ्गो भविष्यति; बहिरङ्गत्वहानि-प्रसङ्गात् । तस्मादतिशयवती कल्पनेयमित्युपहसति ॥ ९२८ ॥

एवं तर्ह्यन्तरङ्गा एवाधाराः संसर्गिणो भेदका [5]भविष्यन्तीति चेत् आह — तथैवेत्यादि । अस्येति अपोहस्य । कस्मान्न युज्यते ? इत्याह — न हीत्यादि । आस्तां तावद् — यदवस्तु सम्बन्धिभेदान्न भिद्यत इति, [6]तस्य निःस्वभावत्वात् ; वस्तुन्यपि हि यावत् सम्बन्धिभेदाद्भेदो नोपलभ्यत एव । तथा हि — देवदत्तादिकं वस्तु युगपत्, क्रमेण वाऽनेकैरासनादिभिः सम्बध्यमानमनासादितभेदमेवो-पलभ्यते, किं पुनर्यदन्यव्यावृत्ति रूपमवस्तु । [G. 297] अवस्तुत्वादेव च क्वचिदसंसृष्टम् = असम्बद्धम्, अन्यतश्च विजातीयादव्यावृत्तमवस्तुत्वादेव । अत [7]एवानधिगतविशेषांशं तत्तादृशं सम्बन्धिभेदादपि कथमिव भेद मश्नुवीत ॥ ९२९–९३० ॥

किञ्च — भवतु नाम सम्बन्धिभेदाद् भेदः, तथापि वस्तुभूतसामान्यानभ्यु-पगमे भवतां स एवापोहाश्रयः सम्बन्धी न सिद्ध्यति । [7]यस्य भेदात् [8]तद्भेदो-

---

१–१. अपोहै ......... ति कल्पना—पा०; अपोहैर्बहिरङ्गैस्स भिद्येते०—गा० ।
२. ०मव्यावृत्तं निवर्तते—पा०, गा० ।
३–३. अविशेषांशं यत्यनिरूपितम्—पा०; अत एवाविशेषांशं यद्धिमत्यनिरू-पितम्—गा० ।
४. ०सारूप्यमपोह०—पा०, गा० ।
५. न भविष्यन्तीति—पा०, गा० ।
६. अपोहस्येत्यर्थः ।
७. सम्बन्धिन इत्यर्थः ।
८. अपोहभेद इत्यर्थः ।

शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः[1] ॥ ९३१ ॥
अपोह्यानपि चाश्वादीनेकधर्मान्वयादृते[2] ।
न निरूपयितुं शक्तिस्तदपोहो न सिद्धयति ॥ ९३२ ॥
न चान्वयविनिर्मुक्ता प्रवृत्तिः शब्दलिङ्गयोः ।
ताभ्यां च न विनापोहो न चासाधारणेऽन्वयः ॥ ९३३ ॥

---

ऽवकल्प्यत इति दर्शयति—न चाप्रसिद्धेत्यादि । यदि हि गवादीनां वस्तुभूतं सारूप्यं प्रसिद्धं भवेत्, तदाऽश्वाद्यपोह्याश्रयत्वमेषामविशेषेण सिद्धयेत्, नान्यथा, ततश्चापोहविषयत्वमेषामिच्छताऽवश्यं सारूप्यमङ्गीकर्त्तव्यम्, तदेव च[3] सामान्यं वस्तुभूतं शब्दवाच्यं भविष्यतीत्यपोहकल्पना [4]निरर्थिकैवेति भावः । विषय-शब्दोऽत्राश्रयवचनः, जलविषया मत्स्या इति यथा ॥ ९३१ ॥

यैरप्यपोह्यभेदेन भेदः कल्प्यते, तेषां सोऽपि वस्तुभूतसामान्यमन्तरेण न सिध्यतीति दर्शयति—अपोह्यानपीत्यादि । यदि ह्यश्वादीनामेकः कश्चित् सर्व-व्यक्तिसाधारणो धर्मोऽनुगामी स्यात्, तदा ते सर्वे गवादिशब्दैरविशेषेणापोह्येरन्, नान्यथा; विशेषापरिज्ञानात् । साधारणधर्माभ्युपगमे चापोहकल्पनावैयर्थ्यम्; तत् = तस्मात्; अपोहो न सिद्धयति ॥ ९३२ ॥

अपि च—'अपोहः शब्दलिङ्गाभ्यामेव प्रतिपाद्यते' इति भवद्भिरिष्यते, तयोश्च शब्दलिङ्गयोर्वस्तुभूतसामान्यमन्तरेण प्रवृत्तिर्न युक्ता, ततश्च केनापोहः प्रति-पाद्यतामित्येतद्दर्शयति – न चान्वयेत्यादि । अन्वयविनिर्मुक्तेति, अन्वयमन्त-रेणेत्यर्थः । ताभ्यामिति । शब्दलिङ्गाभ्यां विना नापोहः । अवगम्यत[5] इति शेषः । स्वलक्षणेनैवान्वयं कृत्वा शब्दलिङ्गयोः प्रवृत्तिः करिष्यते इति चेद् ? आह – न चासाधारणेऽन्वय इति । स्वलक्षणमसाधारणम् = अनन्यभाक्, [G. 298] तत्कथं [6]तेनान्वयो भवेत् । तदेवमपोहकल्पनायां शब्दलिङ्गयोः प्रवृत्तिरेव न प्राप्नोति ॥ ९३३ ॥

---

१. गवादीन·······तः—पा०, गा० ।
२. ०धर्माया०—पा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।
४. निरर्थकैवेति—पा०, गा० ।
५. गम्यत—पा०, गा० ।
६. स्वलक्षणेनेत्यर्थः ।

अपोहश्चाप्यनिष्पन्नः साहचर्यं क्व कथ्यताम् ।
तस्मिन्नदृश्यमाने च न तयोः स्यात् प्रमाणता ॥ ९३४ ॥
न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।
सर्वत्रैव ह्यदृष्टत्वात् प्रत्ययो न विशिष्यते ॥ ९३५ ॥
अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना ।
गवाश्वयोरयं कस्मादगोऽपोहो न कल्प्यते ॥ ९३६ ॥

---

भवतु वा प्रवृत्तिः, तथाप्यनयोः प्रामाण्यमभ्युपगतं हीयत इति दर्शयति—अपोहश्चेत्यादि । प्रतिपाद्यार्थाव्यभिचारे सति शब्दलिङ्गयोः प्रामाण्यं स्यात्, प्रतिपाद्यश्चार्थोऽपोहस्त्वयेष्यते, स चाभावरूपत्वादनिष्पन्नो निःस्वभावतः; ततश्च साहचर्यमव्यभिचारित्वं क्व कस्मिन्विषये कथ्यतां शब्दलिङ्गयोः । किं तेन कथितेनेति चेद् ? आह—तस्मिन्नित्यादि । तस्मिन्निति साहचर्ये । तयोरिति शब्दलिङ्गयोः । अविसंवादलक्षणत्वात् प्रामाण्यस्येति भावः ॥ ९३४ ॥

अथापि स्याद्—विजातीयादर्शनमात्रेणैव शब्दलिङ्गे अगृहीतसाहचर्ये एतत् स्वमर्थं गमिष्यत इत्याह—न चादर्शनमात्रेणेत्यादि । मात्रग्रहणमन्वयदृष्टिव्यवच्छेदार्थम् । कस्मान्न भवेत् ? इत्याह—सर्वत्रैवेत्यादि । सर्वत्र = सजातीये, विजातीये स्वार्थे च । ततश्च 'अयं स्वार्थः', 'अयं परार्थः'—इत्येवं प्रत्ययो ज्ञानं न विशिष्येत । स्वार्थमपि न गमयेत्, तत्राप्यदृष्टत्वात् परार्थवदिति यावत् ।

क्वचित् प्रत्याय्य इति पाठः । तत्र प्रत्याय्योऽभिधेयोऽर्थो न विशिष्यते = न भिद्यत इत्यर्थः । तदेवं शब्दलिङ्गयोः प्रवृत्तिप्रामाण्याभ्युपगमहानिप्रसङ्गान्नापोहः शब्दार्थो युक्तः ॥ ९३५ ॥

यदुक्तम्—"न चाप्रसिद्धसारूप्या०" (तत्त्व० ९३१) इत्यादि, तत्र परस्योत्तरमाशङ्कते—अथासत्यपीत्यादि । यदि सारूप्यमन्तरेण शाबलेयादिष्वगोपोहस्य कल्पना स्यात्, तदा गवाश्वयोरपि कस्मान्न प्रकल्प्येत, अविशेषात् । "गवाश्वप्रभृतीनि च" (पा० सू० २.४.११) इत्यस्य लक्षणस्य विस्मृतत्वाद् विप्रेण गवाश्वयोरित्युक्तम्[1] ॥ ९३६ ॥

---

१. कुमारिलो व्याकरणमपि न जानातीति कमलशीलस्तं विप्रशब्देनोपहसति ।

शाबलेयाच्च भिन्नत्वं बाहुलेयाश्वयोः समम् ।
सामान्यं नान्यदिष्टं चेत् क्वागोऽपोहः प्रवर्त्तताम् ॥ ९३७ ॥
इन्द्रियैर्नाप्यगोऽपोहः प्रथमं व्यवसीयते ।
नान्यत्र शब्दवृत्तिश्च किं दृष्ट्वा स प्रयुज्यताम् ॥ ९३८ ॥
पूर्वोक्तेन प्रबन्धेन नानुमाऽप्यत्र विद्यते ।
सम्बन्धानुभवोऽप्यस्य तेन नैवोपपद्यते ॥ ९३९ ॥

---

[ G. 299 ] तमेवाविशेषं दर्शयति—शाबलेयाच्चेत्यादि । क्वागोऽपोहः प्रवर्त्ततामिति । यथैव शाबलेयाद् वैलक्षण्यादश्वे न प्रवर्त्तते, तथा बाहुलेयस्यापि [1]ततो वैलक्षण्यमस्तीति तत्रापि न प्रवर्त्तेत । एवं शाबलेयादिष्वपि योज्यम्, सर्वत्र वैलक्षण्याविशेषात् ॥ ९३७ ॥

अपि च—यथा स्वलक्षणादिषु समयासम्भवान्न शब्दार्थत्वं युक्तम्, तथापोहेऽपीति दर्शयन्नाह—इन्द्रियैरित्यादि । स्वयं निश्चितार्थो हि समयकृत् समयं करोति, न चापोहः केनचिदिन्द्रियैर्व्यवसीयते । प्रथमम् = व्यवहारकालात् पूर्वम्, संज्ञासंज्ञिसम्बन्धकाल इत्यर्थः । तस्यावस्तुत्वात्, इन्द्रियाणां च वस्तुविषयत्वादिति भावः ।

स्यादेतद्—अन्यव्यावृत्तस्वलक्षणमुपलभ्य शब्दः प्रयोक्ष्यते ? इत्यत आह—नान्यत्रेत्यादि । अन्यापोहादन्यत्र स्वलक्षण इत्यर्थः ॥ ९३८ ॥

मा भूदिन्द्रियैरपोहस्य व्यवसायः, अनुमानेन भविष्यतीति चेत् ? आह—पूर्वोक्तेनेत्यादि । तत्र पूर्वोक्तः प्रबन्धः—"न चान्वयविनिर्मुक्ता प्रवृत्तिः शब्दलिङ्गयोः" (तत्त्व० ९३३) इत्यादिः । सम्बन्धानुभवोऽपीति । शब्देन सहेति शेषः । 'न केवलं [2]पूर्वोक्ताश्ववैलक्षण्यादिर्नोपपद्यते' इत्यपिशब्देन दर्शयति । तेनेति तस्मात् । तदेवम् 'अकृतसमयत्वात्' इत्यस्य हेतोरनैकान्तिकत्वं प्रतिपादितम्; अकृतसमयत्वेऽप्यपोहे शब्दप्रवृत्त्यभ्युपगमात् ॥ ९३९ ॥

---

१. शाबलेयादित्यर्थः ।
२. पूर्वोक्ताश्ववै०—पा० ।

अगोशब्दाभिधेयत्वं [1]गम्यतां च कथं पुनः ।
न दृष्टो यत्र गोशब्दः सम्बन्धानुभवक्षणे ॥ ९४० ॥
एकस्मात् तर्हि[2] गोपिण्डाद्यदन्यत् सर्वमेव तत् ।
भवेदपोह्यमित्येतन्न सामान्यस्य वाच्यता ॥ ९४१ ॥
सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ ९४२ ॥

पुनरप्यपोहे सङ्केतासम्भवं प्रतिपादयन्नाह—अगोशब्दाभिधेयत्व-मित्यादि । इदं हि भवान् वक्तुमर्हति—कथमश्वादीनाम् अगोशब्दाभिधेयत्वम् = गोशब्दानभिधेयत्वं [ G. 300 ] भवद्भिरवगम्यत इति । बौद्ध आह— न दृष्टो यत्रेत्यादि । सम्बन्धानुभवक्षण इति । सङ्केतप्रतिपत्तिवेलायामित्यर्थः ॥९४०॥

एकस्मादित्यादिना परो दूषणमाह । यदि हि यदेव सङ्केतानुभववेलायामुप-लब्धं ततोऽन्यत्र गोशब्दप्रवृत्तिर्नेष्यते, तदैकस्मात् सङ्केतेन विषयीकृताच्छा-बलेयादिकाद् गोपिण्डात् सकाशाद् यदन्यद् बाहुलेयादि तदपि गोशब्देनापोह्यं भवेत् । ततश्च 'सामान्यं वाच्यम्' इत्येतन्न सिद्ध्येत् ॥ ९४१ ॥

इतश्चेतरेतराश्रयदोषप्रसङ्गादपोहे सङ्केतोऽशक्यक्रिय इति दर्शयन्नाह-सिद्धश्चेत्यादि । अगोव्यवच्छेदेन गोप्रतिपत्तिः, स चागौर्गोनिषेधात्मा, ततश्चा-गौरित्यत्रोत्तरपदार्थो वक्तव्यः, यो न· गौरगौरित्यत्र नञा प्रतिषिध्येत । न ह्यनिर्ज्ञातस्वरूपस्य निषेधः शक्यते कर्तुम् । अथापि स्यात्—किमत्र वक्तव्यमगो-निवृत्त्यात्माऽसौ गौः ? इत्यत आह— स चेत्यादि । स इति गौः । तथा ह्यगोनिवृत्तिस्वभावत्वाद् गोरगोप्रतिपत्तिद्वारेणैव प्रतीतिः, अगोश्च गोप्रतिषेधात्मक-त्वाद् गोप्रतिपत्तिद्वारिकैव प्रतीतिरिति स्फुटतरमवतरतीतरेतराश्रयत्वम् । अथापि स्यात्—अगोशब्देन यो गौर्निषेध्यते स विधिरूप एव सिद्धोऽपोहार्थम् = अगो-व्यवच्छेदलक्षणापोहसिध्यर्थम्, तेनेतरेतराश्रयत्वं न भविष्यति ? इत्यत आह— सिद्धश्चेदित्यादि । यद्येवम्, सर्वस्य शब्दस्यापोहार्थं[3] इत्येवमपोहकल्पनं वृथा:

१. ···तां—पा०; भवतां—गा० । २. नहि—पा०, गा० ।
३. ०पोहोऽर्थ—पा०, गा० ।

स चेदगोनिवृत्त्यात्मा भवेदन्योऽन्यसंश्रयः ।
सिद्धश्चेद् गौरपोहार्थं वृथाऽपोहप्रकल्पनम् ॥ ९४३ ॥
गव्यसिद्धे त्वगौर्नास्ति तदभावे तु गौः कुतः ।
नाधाराधेयवृत्त्यादिसम्बन्धश्चाप्यभावयोः ॥ ९४४ ॥
न चासाधारणं वस्तु गम्यतेऽपोहवत्तया ।
कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ ९४५ ॥

---

विधिरूपस्य शब्दार्थस्य भावात् । तस्मान्न कश्चिद् विधिरूपः शब्दार्थः सिद्धोऽङ्गीकर्त्तव्यः, तदनङ्गीकरणे चेतरेतराश्रयदोषो दुर्निवारः ॥ ९४२–९४३ ॥

तदेवेतरेतराश्रयत्वमुपसंहरन्नाह— गव्यसिद्ध इत्यादि । [G. 301] 'तदभावे त्विति । अगोरभावे' । आचार्यदिङ्नागेन विशेष्यविशेषणभावसमर्थनार्थमुक्तम् — "नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहुः" ( ) इत्यादि, तदेतदयुक्तमिति दर्शयन्नाह — नाधाराधेयेत्यादि । यस्य हि येन सह कश्चिद् वास्तवः सम्बन्धः सिद्धो भवेत्, तत्तेन विशिष्टमिति युक्तं वक्तुम् । न च नीलोत्पलयोरनीलोत्पलव्यवच्छेदरूपत्वेनाभावरूपयोराधाराधेयादिसम्बन्धः सम्भवति; नीरूपत्वात् । आदिग्रहणेन संयोगसमवायैकार्थसमवायादिसम्बन्धग्रहणम् । न चासति वास्तवे सम्बन्धे तद्विशिष्टस्य प्रतिपत्तिर्युक्ता; अतिप्रसङ्गात् ॥ ९४४ ॥

अथापि स्यात्-नैवास्माकमनीलादिव्यावृत्त्या विशिष्टोऽनुत्पलादिव्यवच्छेदोऽभिमतः, यतोऽयं दोषः स्यात्; किं तर्हि ? अनीलानुत्पलाभ्यां व्यावृत्तं वस्त्वेव तथा व्यवस्थितम् । तदर्थान्तरानिवृत्त्या विशिष्टं शब्देनोच्यत इत्ययमर्थोऽत्राभिप्रेतः ? इत्यत आह— न चासाधारणं वस्त्वित्यादि । स्वलक्षणस्यावाच्यत्वात् तत्पक्षभाविदोषप्रसङ्गाच्चेति भावः । गम्यतां नामासाधारणं वस्तु, तथापि तस्यान्यव्यावृत्त्या विशिष्टत्वं न सिध्यतीति दर्शयति— कथं वेत्यादि । अवस्तु अपोहः, असाधारणं तु वस्तु; न चावस्तुवस्तुनोः सम्बन्धो युक्तः; वस्तुद्वयाधारत्वात् तस्य ॥ ९४५ ॥

---

१-१. तदभावे इति गोरभावे—पा०, गा० ।

स्वरूपसत्त्वमात्रेण न स्यात् किञ्चिद् विशेषणम् ।
स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥ ९४६ ॥
न चाप्यश्वादिशब्देभ्यो जायतेऽपोहबोधनम् ।
विशेष्यबुद्धिरिष्टेह न चाज्ञातविशेषणा ॥ ९४७ ॥
न चान्यरूपमन्यादृक् कुर्याज्ज्ञानं विशेषणम् ।
कथं चान्यादृशे ज्ञाने तदुच्येत विशेषणम् ॥ ९४८ ॥

---

अपि च—भवतु नाम सम्बन्धः, तथापि विशेषणत्वमपोहस्य न युक्तमिति दर्शयति— स्वरूपेत्यादि । न हि सत्तामात्रेणोत्पलादीनां नीलादि विशेषणं भवति, किं तर्हि ? ज्ञातं सद् यत् स्वाकारानुरक्तया बुद्ध्या विशेष्यं रञ्जयति तद्विशेषणमुच्यते ॥ ९४६ ॥

न चापोहेऽयं प्रकारः सम्भवतीति दर्शयति—न चापीत्यादि । न ह्यश्वादिबुद्ध्याऽपोहो व्यवसीयते, किं तर्हि ? वस्त्वेव । ततश्चापोहस्य बोधासम्भवान्न [G. 302] तेन स्वबुद्ध्या रज्यतेऽश्वादिः । स्यादेतद्—अज्ञातोऽप्यपोहो विशेषणं भविष्यति ? इत्याह—विशेष्येत्यादि । न ह्यगृहीतविशेषणा विशेष्ये बुद्धिर्भवति । न ज्ञातं विशेषणं यस्याः सा तथोक्ता ॥ ९४७ ॥

भवतु नामापोहबोधनम्, तथापि वस्तुनि तदाकारबुद्ध्यभावात् तस्य[1] [2]तद्विशेषणमयुक्तमिति दर्शयन्नाह—न चान्यरूपमित्यादि । सर्वमेव हि विशेषणं स्वाकारानुरूपं विशेष्ये बुद्धिं जनयद् दृष्टम्, न त्वन्यादृशं विशेषणमन्यादृशीं बुद्धिं विशेष्ये जनयति ; न हि नीलमुत्पले रक्तमिति प्रत्ययमुत्पादयति, दण्डो वा कुण्डलीति । न चात्राश्वादिष्वभावानुरक्ता शाब्दी बुद्धिरुपजायते, किं तर्हि ? भावाकाराध्यवसायिनी । स्यादेतत्—अन्यादृशमपि ज्ञानं जनयद् विशेषणमुच्यते ? इत्याह—कथं चान्यादृश इत्यादि । अन्यादृशे इति[3] विशेषणानुरूपे ॥ ९४८ ॥

---

१. वस्तुन इत्यर्थः ।
२. अपोहविशेषणमित्यर्थः ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

अथान्यथा विशेष्येऽपि स्याद् विशेषणकल्पना।
तथा सति हि यत्किञ्चित् प्रसज्येत[1] विशेषणम् ॥ ९४९ ॥
अभावगम्यरूपे च न विशेष्येऽस्ति वस्तुता।
विशेषितमपोहेन वस्तु वाच्ये[2] न तेऽस्त्यतः ॥ ९५० ॥
यद्यप्यपोहनिर्मुक्ते न वृत्तिः शब्दलिङ्गयोः।
युक्ता[3], तथापि बोधस्तु ज्ञातुं वस्त्ववलम्बते ॥ ९५१ ॥
न चासाधारणं वस्तु बुद्धौ विपरिवर्त्तते।

---

यदि स्यात्, को दोषः ? इत्याह—अथान्यथेत्यादि। अथ यदि भवतो विशेषणाननुरूपतयाऽन्यथा व्यवस्थितेऽपि विशेषे स्याद् विशेषणकल्पना, तथा सतिसर्वमेव नीलादि सर्वस्य विशेषणं स्यात्, ततश्चाव्यवस्था स्यात् ॥ ९४९ ॥

अथ स्याद्—अपोहेनापि स्वबुद्ध्या विशेष्यं वस्तु रज्यते ? इत्याह—अभावगम्येत्यादि। अभावः = अपोहः, तेनापोहेन ताद्रूप्याद् गम्यम् अभावगम्यम्, अभावगम्यं रूपं स्वभावो यस्य वस्तुनस्तत् तथोक्तम्। यद्यभावरूपेण वस्तुनः प्रतीतिः स्यात्, तदा तस्य वस्तुत्वमेव न स्यात्, भावाभावयोर्विरोधात्। प्रकृतमुपसंहरन्नाह—विशेषतमित्यादि ॥ ९५० ॥

स्यादेतद्—अन्यव्यावृत्त एव वस्तुनि शब्दलिङ्गयोः प्रवृत्तिर्दृश्यते, नापोहरहिते, तेनापोहः [G. 303] शब्दलिङ्गाभ्यां प्रतिपाद्यत इत्यभिधीयते, न तु प्रसज्यमात्रप्रतिपादनात्, तेन यथोक्तः सर्वः प्रतीत्यादिविरोधो न भविष्यति ? इत्याशङ्कयाह—यद्यपीत्यादि। यदि नाम तद्वस्त्वन्यतो व्यावृत्तम्, तथापि तत्रोत्पद्यमानः शब्दलिङ्गोद्भवो बोधोऽन्यव्यावृत्तिं सतीमपि नावलम्बते, किं तर्हि ? वस्त्वंशमेवाभिधावति, तत्रैवानुरागात्। य एवांशो वस्तुनः शाब्देन लैङ्गिकेन वा प्रत्ययेनावसीयते, स एव तस्य विषयः, नानवसीयमानः सन्नपि; न हि मालतीशब्दस्य गन्धादयो विद्यमानतया वाच्या व्यवस्थाप्यन्ते ॥ ९५१ ॥

---

१. प्रपद्येत—पा०, गा०। २. वाच्यं—पा०, गा०।
३. युक्तम्—पा०, गा०।

न चापि निर्विकल्पत्वात् तस्य युक्ताधिगम्यता ॥ ९५२ ॥
शब्देनागम्यमानं च विशेष्यमिति साहसम् ।
तेन सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः ॥ ९५३ ॥
यदा चाशब्दवाच्यत्वान्न[1] व्यक्तीनामपोह्यता ।
तदाऽपोह्येत सामान्यं तस्यापोहाच्च वस्तुता ॥ ९५४ ॥
नापोह्यत्वमभावानामभावाभाववर्जनात् ।
व्यक्तोऽपोहान्तरोऽपोहस्तस्मात्[2] सामान्यवस्तुनः ॥ ९५५ ॥

---

न चाप्येतद्युक्तम्, यदन्यव्यावृत्ते वस्तुनि शब्दलिङ्गयोः प्रवृत्तिरित्येतद्दर्शयति—न चेत्यादि । अन्यव्यावृत्तं हि वस्तु भवद् भवतां मतेन स्वलक्षणमसाधारमेव भवेत्, न च तच्छब्दलिङ्गजायां बुद्धौ विपरिवर्त्तत इति भवतां मतम्; तस्य निर्विकल्पबुद्धिग्राह्यत्वात्, शब्दलिङ्गजबुद्धेश्च सामान्यलक्षणविषयत्वात् । अथापि स्वलक्षणविषयत्वमस्या अभ्युपेयते[3], तदपि युक्त्या न सङ्गच्छत इति दर्शयन्नाह—न चापीत्यादि । न ह्यसाधारणं वस्तु शब्दलिङ्गजप्रत्ययाधिगम्यम्; तत्र सर्वविकल्पानां प्रत्यस्तमयात् । तथा हि—विकल्पो जात्यादिविशेषणसंस्पर्शेनैव प्रवर्त्तते, न च शुद्धवस्तुपरिग्रहेण ॥ ९५२ ॥

अथापि स्यात्—शब्देनागम्यमानमप्यसाधारणं वस्तु व्यावृत्त्या विशिष्टमित्युच्यते ? इत्याह—शब्देनागम्यमानं चेत्यादि ॥ ९५३ ॥

प्रकारान्तरेणापि सामान्यस्य वस्तुत्वं साधयन्नाह—यदेत्यादि । [G 304] व्यक्तीनामिति । असाधारणवस्तुरूपाणामवाच्यत्वान्नापोह्यता; अनुक्तस्य निराकर्तुमशक्यत्वात् । अपोह्येत सामान्यमिति । तस्य वाच्यत्वादिति भावः ॥९५४॥

स्यादेतद्—यदि नाम सामान्यमपोह्येत, तथापि कथं तस्य वस्तुत्वं सिध्यति ? इत्यत आह—नापोह्यत्वमित्यादि । अभावानामिति अपोहानाम् । यदि भवेद्, वस्तुत्वमेव स्यात् । अत्रोपपत्तिमाह—अभावाभाववर्जनादिति ।

---

1. वाच्यत्वं न—पा०, गा० । २. ०न्तरापोह०—पा०, गा० ।
३ अभ्युपगम्यते—पा०, गा० ।

अभावस्य च योऽभावः स चेत् तस्माद्विलक्षणः ।
भाव एव भवेन्नो चेद् गौरगौस्ते प्रसज्यते ॥ ९५६ ॥
यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता ।
सच्छब्दस्य त्वभावाख्यान्नापोह्यं भिन्नमिष्यते ॥ ९५७ ॥
तत्रासतोऽपि भावत्वमिति क्लेशो महान् भवेत् ।

---

अभावानामभावरूपत्यागादित्यर्थः । एतदुक्तं भवति— यद्यपोहानामपोह्यत्वं भवेत्; तदैषामभावरूपत्वं प्रतिषिद्धं भवेत्, तत्प्रतिषेधे च 'सत्यभावैरभावरूपत्वं त्यक्तं स्यात् । ततश्चाभावानामपोहलक्षणानामभावरूपत्यागाद् वस्तुत्वमेव भवेदित्येके ।

अन्ये त्वाहुः—अभावाभावविवर्जनादिति । अभावानामभावाभावादित्यर्थः । न ह्यभावस्वभावा अपोहा अपोह्या युज्यन्ते । वस्तुविषयत्वात् प्रतिषेधस्येति यावत् । तस्माद्व्यक्तः स्फुटोऽपोहान्तरेऽश्वादावपोहान्तरस्य गवादेरपोहो भवन् सामान्यभूतस्यैवेति निश्चीयते । अतः सिद्धम्— अपोह्यत्वाद् वस्तुत्वं सामान्यस्येति ॥ ९५५ ॥

अपि च — अपोहानां परस्परतो वैलक्षण्यं वा स्याद् ? अवैलक्षण्यं वा ? तत्राद्ये पक्षे तावद्दोषमाह—अभावस्य चेत्यादि । अभावस्य = अगोशब्दाभिधेयस्य अभावो यो गोशब्दाभिधेयोऽर्थः । स चेत् तस्मात् पूर्वोक्तादभावाद्विलक्षणोऽन्य इत्यर्थः । तदानीं भाव एव भवेत्; अभावनिवृत्तिमात्ररूपत्वाद् भावस्य । नो चेद्विलक्षणः, तदा गौरप्यगोर्भवतः प्रसज्यते; तदवैलक्षण्येन तादात्म्यप्रतिपत्तेः ॥ ९५६ ॥

स्यादेतद्—गवाश्वादिशब्दैः स्वलक्षणान्येव परस्परतो व्यावृत्तान्यपोह्यन्ते, नाभावाः, तेनाऽपोह्यत्वेन तेषां वस्तुत्वप्रसङ्गापादानं नानिष्टम् ? इत्यत आह — यद्यपीत्यादि । [ G. 305 ] यद्यपि सच्छब्दादन्येषु वस्तुनः पर्वतादेरपोह्यता सिध्यति, सच्छब्दस्य त्वभावाख्यादपोह्यान्नान्यदपोह्यमस्ति, अभाव एवापोह्य इत्यर्थः; असद्व्यवहारव्यवच्छेदेन सच्छब्दस्य प्रवृत्तत्वात् ॥ ९५७ ॥

ततश्च को दोषः ? इत्याह—तत्रासतोऽपीत्यादि । पूर्ववदभावाभाववर्जनादसतोऽपोहे वस्तुत्वमेव स्यात्, ततश्चापोहवादिनोऽभ्युपगमादिविरुद्धमसतोऽपि वस्तुत्वं प्रसक्तमिति महद् बत कष्टमापतितम् । अस्त्वभा-

---

१. भवत्यभावै०—पा०, गा० ।

तदसिद्धौ न सत्ताऽस्ति न वा सत्ता प्रसिद्ध्यति ॥ ९५८ ॥
न चापि वासनाभेदाद् भेदः सद्रूपताऽपि वा ।
अपोहानां प्रकल्प्येत न ह्यवस्तुनि वासना[1] ॥ ९५९ ॥
भवद्भिः शब्दभेदोऽपि तन्निमित्तो न लभ्यते ।

---

वस्यापि वस्तुत्वमिति चेत् ? आह—तदसिद्धावित्यादि। तस्याभावस्यासिद्धौ सत्यां न सत्ता कस्यचिद्भावस्य सिद्ध्येत्; अभावव्यवच्छेदेन तस्य भवन्मतेन स्थितलक्षणत्वात्। तस्य चाभावस्यापोह्यत्वे सति वस्तुत्वप्रसंगेन स्वरूपासिद्धेरसत्तापि न सिद्ध्यति; तस्याः सत्ताव्यवच्छेदरूपत्वात्, सत्तायाश्च यथोक्तेन प्रकारेणायोगात् ॥ ९५८ ॥

यत् पूर्वमुक्तम्—"अपोह्यैः स बहिःसंस्थैर्भिद्येते" (तत्त्व० ९२८) इत्यादि, यच्चोक्तम्—"अवस्तुत्वादपोहानां नैव भेदः" (तत्त्व० ९२५) इत्यादि। तत्र केचिद् बौद्धाः परिहारमाहुः—"न खल्वपोह्यभेदाद्, आधारभेदाद्वाऽपोहानां भेदः, अपि त्वनादिकालप्रवृत्तविचित्रवितत्त्वार्थविकल्पवासनाभेदान्वयैस्तत्त्वतो निर्विषयैरपि भिन्नविषयालम्बिभिरिव प्रत्ययैर्भिन्नेष्वर्थेषु बाह्येषु भिन्ना इवार्थात्मान इवास्वभावा अप्यपोहाः समारोप्यन्ते। ते च तथा तैः समारोपिता भिन्नाः सन्तश्च प्रतिभासन्ते, तेन वासनाभेदाद्भेदः सद्रूपता चापोह्यानां भविष्यति" इति, अत्राह—न चापीत्यादि। 'न ह्यवस्तुनि वासना' इत्येवं मन्यते। 'निर्विषयो न कश्चित् प्रत्ययोऽस्ति' इति निर्लोडितमेतद् विज्ञानवादविचारे, ततश्च वितथार्थानां विकल्पानामयोगात्तदाहितापि वासना कुतो भविष्यति। अवस्तुनीति। आलम्बनभूते वस्तुन्यसति निर्विषयविज्ञानायोगेन वासनाधायकविज्ञानाभावात् कुतो वासनेत्यर्थः, ततश्च वासनाभावात् कुतो वासनाकृतोऽपोहानां भेदः सद्रूपता वा भविष्यतीति भावः ॥ ९५९ ॥

एवं तावद्वाच्याभिमतमपोहं निराकृत्य, वाचकाभिमतमपि निराकर्तुमाह—भवद्भिरित्यादि। [ G. 306 ] शब्दानां भिन्नसामान्यवचनानां विशेषवचनानां च

---

१. सा मता—पा०, गा०।

न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः ॥ ९६० ॥
तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते ।
तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते ॥ ९६१ ॥
वाचकानां यथा नैवं[1] वाच्यवाचकयोर्मिथः ।
न चाप्यपोहभेदेन भेदोऽस्तीत्युपपादितम् ॥ ९६२ ॥

---

परस्परतो भेदः शब्दभेदः । तन्निमित्त इति । स वासनाभेदो वाच्यापोहभेदो वा निमित्तं कारणमस्येति तन्निमित्तः । ननु प्रत्यक्षत एव शब्दानां कारणभेदाद्, विरुद्धधर्माध्यासाच्च भेदः प्रसिद्ध एव ? इत्याह—न ह्यसाधारण इत्यादि । वाचकं हि शब्दमधिकृत्यैतदुच्यते, न च श्रोत्रज्ञानावसेयो यः स्वलक्षणात्माऽसाधारणशब्दो वाचकः । कस्मात् ? इत्याह—प्रागदृष्टित इति । यो हि व्यवहारकालावस्थायी शब्दः स व्यवहारकालात् प्राक् सङ्केतकाले न दृष्टः, यो दृष्टस्तस्य चिरनिरुद्धत्वान्न तेन व्यवहारः । न च सङ्केतकाले यो न दृष्टस्तेन व्यवहारो युक्तः; अतिप्रसङ्गात् । तस्मान्न स्वलक्षणस्य वाचकत्वम् । भवतामपि चात्र विवाद एव । यथोक्तम्—

"नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते ।
तस्य पूर्वमदृष्टत्वात् सामान्यं तूपदेक्ष्यते" ॥ (  ) इति ।

तस्माद्वाचकं शब्दमधिकृत्याभिधानाददोषः । तत्रैवमवस्थिते सति शब्दान्तरापोहः शब्दसामान्यं वाचकं यदि कल्प्यते, यथार्थान्तरापोहोऽर्थसामान्यम्, तदा तथैव = पूर्वोक्तेन विधिना "संसृष्टैकत्वनानात्व" ( तत्त्व० ९२५ ) इत्यादिनोक्तेन, वाच्यापोहानामिव शब्दापोहानामपि परस्परतो भेदो न घटते; नीरूपत्वात् । यथा च वाचकानां परस्परतो भेदो न सङ्गच्छते, एवं वाच्यवाचकयोरपि मिथः परस्परतो भेदो न कल्प्यते, निःस्वभावत्वात् । स्यादेतद्— अपोह्यभेदात्[2] भेदो भविष्यति ? इत्यत आह—न चापीत्यादि । यथा चापोह्यभेदादपि भेदो न विकल्प्यते, तथा "न विशेषः स्वतस्तस्य" ( तत्त्व० ९२७ ) इत्यादिना प्रतिपादितम् । ९६०-९६२ ॥

---

१. नैव—पा०, गा० । २. ०भेदेन—पा०, गा० ।

न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः ।
भवत्पक्षे यथा लोके खपुष्पशशशृङ्गयोः ॥ ९६३ ॥
वृष्टिमेघासतोर्दृष्ट्वा यद्यनैकान्तिकं वदेत् ।
वस्त्ववस्त्वेवात्र मत्पक्षे भवत्पक्षेऽप्यदः कुतः ॥ ९६४ ॥
विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ।

---

तदेवं प्रतिज्ञायाः प्रतीत्यभ्युपेतबाधा प्रतिपादिता । साम्प्रतं वाच्यवाचकत्वाभावप्रसङ्गापादनाभ्युपेतबाधादिदोषं प्रतिपिपादयिषुः प्रमाणयन्नाह—न गम्येत्यादि । [G. 307] ये अवस्तुनी न तयोर्गम्यगमकत्वमस्ति, यथा खपुष्पशशशृङ्गयोः, अवस्तुनी च वाच्यवाचकापोहौ भवेतामिति व्यापकविरुद्धोपलब्धेः ॥ ९६३ ॥

ननु च मेघाभावाद् वृष्ट्यभावप्रतीतेरनैकान्तिकता हेतोरित्याह— वृष्टिमेघासतोरित्यादि ।

वृष्टिमेघयोरसती = असत्त्वे, अभावाविति यावत् । भावप्रधानत्वान्निर्देशस्येति[1] 'वृष्टिमेघासती' तयोर्दृष्ट्वा । गम्यगमकमित्यधिकृतम् । यद्यनैकान्तिकमवस्तुत्वादिति हेतुं वदेद् बौद्धः, तदप्ययुक्तम्; यस्मात् तद्धि विविक्ताकाशालोकात्मकं वस्तु मत्पक्षेऽत्रापि वृष्टिमेघाभावप्रयोगेऽस्त्येव; अभावस्य वस्तुत्वप्रतिपादनात् । भवतस्तु बौद्धस्य पक्षे अदोऽपि = एतद्वृष्टिमेघाभावयोर्गम्यगमकत्वं कुतः = नैव । अपिशब्दो भिन्नक्रमः 'अदः' इत्यस्यानन्तरं सम्बध्यते । अनेनायमर्थो[2] भवति—न केवलमपोहयोर्विवादास्पदीभूतयोर्गम्यगमकत्वं भवतो न युक्तम्, एतदपि वृष्टिमेघाभावयोर्गम्यगमकत्वं न युज्यत एवेति ॥ ९६४ ॥

किञ्च यदेतद्, भवद्भिरन्वयोपसर्जनयोर्व्यतिरेकप्रधानयोः शब्दलिङ्गयोः स्वविषयप्रतिपादकत्वं वर्ण्यते, यच्च—

"अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात् ।
श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता" (     ) इत्यादि वर्णितम्, तदपोहाभ्युपगमे न युक्तमित्येतत् प्रतिपादयन्नाह— विधिरूपश्चे-

---

१-१ ०न्निर्देशस्य—पा०, गा० । २. तेनाय०—पा०, गा० ।

न भवेद् व्यतिरेकोऽपि तस्य तत्पूर्वको ह्यसौ ॥ ९६५ ॥
अपोहमात्रवाच्यं यदि[1] [1]वाभ्युपगम्यते ।
नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु ॥ ९६६ ॥
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।
न सिद्धिर्न ह्यनीलत्वव्युदासेऽनुत्पलच्युतिः ॥ ९६७ ॥

---

त्यादि[2] । तत्पूर्वक इति विधेः पूर्वकः । विधेर्निवृत्तिलक्षणत्वाद् व्यतिरेकस्येति भावः । किञ्च—नीलोत्पलादिशब्दानां विशेषणविशेष्यभावः सामानाधिकरण्यं च यदेतल्लोकप्रतीतं तस्यापह्नवोऽपोहवादे प्राप्नोति ॥ ९६५ ॥

यच्चेदमुच्यते विशेषणविशेष्यत्वसामानाधिकरण्यसमर्थनार्थम्—

"अपोह्यभेदाद्भिन्नार्थाः स्वार्थभेदगतौ जडाः ।
एकत्राभिन्नकार्यत्वाद् विशेषणविशेष्यकाः ॥
तन्मात्राकाङ्क्षणाद्भेदः स्वसामान्येन नोज्झितः ।
नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः[3] ॥ ( ) इति ।

तदेतन्नोपपद्यत इति दर्शयन्नाह—अपोहमात्रवाच्यत्वमित्यादि । [G. 308] पूर्वमर्थयोरेव विशेष्यविशेषणभावो निरस्तः । इदानीं शब्दयोरपि निरस्यत इति न पुनरुक्तता । तत्र परस्परं व्यवच्छेद्यव्यवच्छेदकभावो[4] विशेषणविशेष्यभावः, स च वाक्य एव व्यवस्थाप्यते, यथा—नीलमुत्पलमिति । तथा व्यधिकरणयोरपि भवति, यथा—राज्ञः पुरुष इत्यादौ । भिन्ननिमित्तप्रयुक्तयोस्त्वेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्, तच्च नीलोत्पलमित्यादौ [5]वृत्तावेव व्यवस्थाप्यते । तत्र नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु यदेतत् सामानाधिकरण्यादि, तस्य न सिद्धिः । शबलोऽर्थः = चित्रः, यथोक्तम्—

"न हि तत् केवलं नीलं न च केवलमुत्पलम् ।
समुदायाभिधेयत्वात्" ॥ ( ) इति ।

---

१–१. यदिहा०—पा०, गा० । २. विधिरूपत्वेत्यादि—जै० ।
३. विशेषणविशेष्यकयोः शब्दयोरित्यर्थः । ४. व्यवच्छेदकभावो—पा०, गा० ।
५. समास इत्यर्थः ।

नापि तत्रेतरस्तस्मान्न विशेष्यविशेषणे ।
शब्दयोर्नापि ते स्यातामभिधेयानपेक्षयोः ॥ ९६८ ॥
सामानाधिकरण्यं च न भिन्नत्वादपोहयोः ।
अर्थतश्चेत् तदिष्येत कीदृश्याधेयता तयोः ॥ ९६९ ॥

---

कस्मात् सिद्धिर्न भवति ? इत्याह—न हीत्यादि । यस्मादनीलत्वव्युदासेऽनुत्पलव्युदासो नास्ति । नापि[1] तत्र = अनुत्पलच्युतौ । इतरः = नीलव्युदासः । क्वचिदितरेति स्त्रीलिङ्गस्य पाठः । स च्युतिशब्दापेक्षया द्रष्टव्यः । इतरा—अनीलच्युतिरित्यर्थः । नानयोः परस्परमाधाराधेयसम्बन्धोऽस्ति, नीरूपत्वादिति यावत् । न चासति सम्बन्धे विशेष्यविशेषणभावो युक्तः; अतिप्रसङ्गादित्युक्तम् । एतेन युष्मन्मते शबलार्थाभिधायित्वमेव नास्ति, सर्वेषामभाववाचित्वादित्युक्तं भवति । तस्माच्च विशेष्यविशेषणे युक्ते ।

स्यादेतत्—मा भूदर्थयोर्विशेष्यविशेषणभावः, तद्वाचकयोस्तु शब्दयोः किमिति न भवतीत्यत आह—शब्दयोरित्यादि । अभिधेयद्वारेणैव हि तदभिधायिनोः शब्दयोर्विशेष्यविशेषणभाव उपचर्यते, अभिधेये च तस्यासम्भवे सत्यभिधानेऽपि कुतस्तदारोपः ॥ ९६६–९६८ ॥

सामानाधिकरण्यं दूषयन्नाह—सामानाधिकरण्यं चेति । एकस्मिन्नर्थे वृत्तौ सत्यां सामानाधिकारण्यं भवति, न च नीलोत्पलशब्दयोरेकस्मिन्नर्थे [G. 309] वृत्तिः सम्भवति; तद्वाच्ययोरनीलानुत्पलव्यवच्छेदलक्षणयोरपोहयोर्भिन्नत्वात् । तथा हि भवद्भिरेवोक्तम्—"अपोह्यभेदाद्भिन्नार्थाः" इति । प्रयोगः—न नीलोत्पलादिशब्दाः समानाधिकरण्यव्यवहारविषयाः; भिन्नविषयत्वात्, घटपटादिशब्दवत् । अथापि स्याद्—यत्रैव ह्यनुत्पलव्युदासो वर्त्तते, तत्रैवानीलव्युदासोऽपि स्थित इत्यतो नीलोत्पलशब्दवाच्ययोरपोहयोरेकस्मिन्नर्थे वृत्तेरर्थद्वारकं सामानाधिकरण्यं शब्दयोरपि निर्दिश्यते ? इत्यत आह—अर्थतश्चेत्यादि । तदिति सामानाधिकरण्यम् । तयोरिति अनीलानुत्पलव्युदासयोः । नैव

---

1. पा०, गा० पुस्तकयोर्नास्ति ।

न चासाधारणं वस्तु गम्यतेऽन्यच्च नास्ति ते ।
अगम्यमानमैकार्थ्यं शब्दयोः क्वोपयुज्यते ॥ ९७० ॥
अथान्यापोहवद्[1] वस्तु वाच्यमित्यभिधीयते ।
तत्रापि परतन्त्रत्वाद् व्याप्तिः शब्देन दुर्लभा ॥ ९७१ ॥

---

क्वचिद् वास्तवी तयोराधेयता सम्भवतीति[2]; नीरूपस्य क्वचिदवस्थानासम्भवात्, यथा—वन्ध्यापुत्रस्येति भावः ॥ ९६९ ॥

किञ्च—भवतु नाम नीलोत्पलादिष्वर्थेषु तयोराधेयता, तथापि सा विद्यमानापि सती न शब्दैः प्रतिपाद्यत इति दर्शयति—न चेत्यादि । यस्मात् तदेव तावदसाधारणं नीलोत्पलादि वस्तु न शब्देन गम्यते; तत्र सर्वविकल्पानां प्रत्यस्तमयादित्युक्तम् । ततश्च तस्मिन्नाधारभूते वस्तुन्यज्ञाते तदधिकरणयोरपोहयोस्तदाधेयता कथं ग्रहीतुं शक्यते, धर्मिग्रहणनान्तरीयकत्वाद् धर्मग्रहणस्येति भावः ।

अथापि स्यात्—असाधारणार्थव्यतिरेकेण तयोरन्यदेवाधिकरणमस्ति, अतोऽयमदोष इत्यत आह—अन्यच्चेत्यादि । त इति तव[3] । स्यादेतद्—यदि नामैकार्थ्यं न गम्यते, तथापि वस्तुस्थित्याऽवस्थितमेवेत्याह—अगम्यमानमित्यादि । ऐकार्थ्यमिति सामानाधिकरण्यम् । क्वोपयुज्यत इति क्वचिदित्यर्थः । सतोऽप्यज्ञातस्य शाब्दे व्यवहारेऽनङ्गत्वात् ॥ ९७० ॥

अथापि स्यात्— यदि व्यावृत्तिमात्रं शब्देनोच्येत तदाऽयं दोषः स्यात्, यावता व्यावृत्तिमद्वस्तु वाच्यम्, अतो व्यावृत्तिद्वयोपाधिकयोः शब्दयोरेकस्मिन्नपोहवति वस्तुनि वृत्तेः सामानाधिकरण्यमस्त्येव ? इत्यत आह—अथेत्यादि । तत्रापीति । अपोहवति वस्तुनि वाच्यत्वेनाङ्गीक्रियमाणेऽनीलादिभेदानामुत्पलादीनां नीलादिशब्दैर्व्याप्तिः = आक्षेपो दुर्लभः, किं कारणम् ? परतन्त्रत्वान्नीलादिशब्दस्य, [G. 310] स हि व्यावृत्त्युपसर्जनं तद्वन्तमर्थमाह, न साक्षात् । ततश्च साक्षादनभिधानात् तद्गतभेदाक्षेपो नास्ति, यथा—मधुरशब्देन शुक्लादेः ।

---

१. अथाप्यपोहवद्—पा०, गा० । २. सम्भवति—पा०, गा० । ३. त—पा० ।

लिङ्गसङ्ख्यादिसम्बन्धो न चापोहस्य विद्यते ।
व्यक्तेश्चाव्यपदेश्यत्वात्[1] तद्द्वारेणापि नास्त्यसौ ॥ ९७२ ॥
आख्यातेषु च नान्यस्य निवृत्तिः सम्प्रतीयते ।

---

यद्यपि वस्तुस्थित्या शुक्लादीनां [2]मधुरादिभेदत्वमस्ति, तथापि शब्दस्य साक्षादभिहितार्थगतस्यैव भेदस्याक्षेपसामर्थ्यम्, न तु पारतन्त्र्येणाभिहितार्थगतस्येति भावः। ततश्च नीलादिशब्देन तद्गतभेदानाक्षेपादुत्पलादीनामतद्भेदत्वं स्यात्, अतद्भेदत्वे च सामानाधिकरण्यं न प्राप्नोति। तेन जातिमन्मात्रपक्षे यो दोष उक्तो भवता "तद्वतो[3] न वाचकः[4] शब्दोऽस्वतन्त्रत्वात्" इति, स व्यावृत्तिमन्मात्रपक्षेऽपि तुल्य इति दर्शितं भवति। तथा हि—जातिमन्मात्रे शब्दार्थे—सच्छब्दो जातिस्वरूपोपसर्जनं द्रव्यमाह, न साक्षादिति तद्गतघटादिभेदानाक्षेपादतद्भेदत्वे सामानाधिकरण्याभावप्रसङ्ग उक्तः, स व्यावृत्तिमन्मात्रपक्षेऽपि समानः; तत्रापि हि सच्छब्दो व्यावृत्त्युपसर्जनं द्रव्यमाह, न साक्षात् इति तद्गतभेदानाक्षेपोऽत्रापि समान एव, को ह्यत्र विशेषः—जातिर्व्यावृत्तिः, जातिमान्व्यावृत्तिमानिति ! ॥ ९७१ ॥

दोषान्तरमाह—लिङ्गेत्यादि। लिङ्गानि = स्त्रीत्वपुंस्त्वनपुंसकानि, सङ्ख्या = एकत्वद्वित्वबहुत्वानि। आदिग्रहणेन क्रियाकालादिसम्बन्धपरिग्रहः। एभिः सम्बन्धो नास्त्यपोहस्य; अवस्तुत्वात्, एषां च वस्तुधर्मत्वात्। न च लिङ्गादिविविक्तः पदार्थः शक्यः शब्देनाभिधातुम्। अतः प्रतीतिबाधाप्रसङ्गः प्रतिज्ञाया इति भावः।

अथापि स्याद्—व्यावृत्त्याधारभूताया व्यक्तेर्वस्तुत्वाल्लिङ्गादिसम्बन्धोऽस्ति, एतद्द्वारेणापोहस्यापि व्यवस्थाप्यते ? इत्याह—व्यक्तेश्चेत्यादि। सा हि व्यक्तिर्निर्विकल्पत्वाल्लिङ्गसङ्ख्यादिसम्बन्धेन व्यपदेष्टुं न पार्यते, ततः कथमपोहे तद्द्वारेण तद्व्यवस्था सिद्ध्येत् ॥ ९७२ ॥

अव्यापित्वं चापोहशब्दार्थव्यवस्थयोर्दर्शयन्नाह—आख्यातेष्वित्यादि। आख्यातेषु = तिङन्तेषु पचति, गच्छतीत्येवमादिषु क्रियाप्रधानेषु शब्देषु,

---

१. ०व्यपदेशत्वात्—जै०। २. अमधुरादि०—गा०।
३. जातिमत इत्यर्थः। ४. बाधकः—पा०, गा०।

न पर्युदासरूपं हि निषेध्यं तत्र विद्यते ॥ ९७३ ॥
न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम् ।
पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठति ॥ ९७४ ॥
साध्यत्वप्रत्ययश्चात्र तथा भूतादिरूपणम् ।
निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते ॥ ९७५ ॥
विध्यादावर्थराशौ च नान्यापोहनिरूपणम् ।
नञश्चापि नञा युक्तावपोहः कीदृशो भवेत् ॥ ९७६ ॥

---

नान्यव्यवच्छेदो गम्यते ? कस्मात् ? इत्याह—न पर्युदासरूपं हीत्यादि । यथा सुबन्तेषु [G. 311] घटादिशब्देषु निष्पन्नरूपमघटादिकं पर्युदासरूपं निषेध्यमस्ति, न तथा पचतीत्यादिषु; प्रतियोगिनो निष्पन्नस्य कस्यचिद-प्रतीतेः ॥ ९७३ ॥

स्यादेतत्—मा भूत् पर्युदासरूपं निषेध्यम्, न पचतीत्येवमादि प्रसज्यरूपं पचतीत्यादेर्निषेध्यं भविष्यति ? इत्याह—न नेति हीत्यादि । 'न न पचति' इत्येवमुच्यमानेऽपि प्रसज्यप्रतिषेधस्य निषेधनमेवोक्तं स्यात्, ततश्च को दोषः ? इत्याह—पचतीत्यनिषिद्धमित्यादि । प्रतिषेधद्वयस्य विधेर्विषयत्वात् पचतीत्येतत् स्वरूपेणैव = विध्यात्मनैव तिष्ठतीति विधिरेव शब्दार्थः स्यात् । किञ्च—अत्र पचतीत्यादौ साध्यत्वं प्रतीयते; यस्याः क्रियायाः केचिदवयवा निष्पन्नाः, केचिद-निष्पन्नाः, सा पूर्वापरीभूतावयवा क्रिया साध्यत्वप्रत्ययविषया, तथा 'अभूत्', 'भविष्यति' इत्यादौ भूतादिकालविशेषप्रतीतिरस्ति; न चापोहस्य साध्यत्वादि-सम्भवः; निष्पन्नत्वादभावैकरसत्वेन । तस्मादपोहशब्दार्थपक्षे साध्यत्वप्रत्ययो भूतादिप्रत्ययश्च निर्निमित्तः प्राप्नोतीति प्रतीतिबाधा । भूतादिरूपणमिति । भूतादीनामवधारणम्, प्रत्यय इति यावत् ॥ ९७४-९७५ ॥

[1]पुनरप्यव्यापित्वं दर्शयन् प्रतीतिबाधामेव दर्शयति—विध्यादावित्यादि । आदिशब्देन निमन्त्रणामन्त्रणादीनां ग्रहणम् । अन्यापोहस्य = अन्यव्यवच्छेदस्य

---

१, ०व्यापिनं—पा०, गा० ।

चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम् ।
वाक्यार्थेऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते ॥ ९७७ ॥
अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते ।
प्रमेयज्ञेयशब्दादेरपोह्यं कुत एव तु ॥ ९७८ ॥

---

न निरूपणमुपलम्भोऽस्ति । "न पर्युदासरूपं हि निषेध्यं तत्र विद्यते" (तत्त्व० ९७३) इत्येतत् पूर्वोक्तमेवात्र कारणमिति भावः । 'न न पचति देवदत्तः' इत्यादौ नञोऽपरेण नञा योगे सति [G. 312] कीदृशोऽपोहो भवेत्, नैव कश्चित्, प्रतिषेधद्वयेन विधेरेव संस्पर्शनात् ।

अपि च चादीनां निपातोपसर्गकर्मप्रवचनीयानां पदत्वमिष्टम्, न चैषां नञा सम्बन्धोऽस्ति; असत्त्ववचनत्वात् । तथा हि—यथा घटादिशब्दानाम् 'अघटः' इत्यादौ नञा सम्बन्धे सत्यर्थान्तरस्य पटादेः परिग्रहात् तद्व्यवच्छेदेन नञा रहितस्य घटशब्दस्यार्थोऽवकल्प्यते, न तथा चादीनां नचेत्यादि नञा सम्बन्धोऽस्ति । न चासम्बध्यमानस्य नञाऽपोहनं युक्तम् । अतश्चादिष्वनपोहनम् । अपोहाभाव इत्यर्थः ।

किञ्च—वाक्यार्थः कल्माषवर्णवच्छबलैकरूप इष्यते, अतस्तत्रान्यनिवृत्तिर्व्यपदेष्टुं न शक्यते, निष्पन्नरूपस्य प्रतियोगिनोऽप्रतीतेः । या चात्र 'चैत्र ! गामानय' इत्यादावचैत्रादिव्यवच्छेदरूपान्यनिवृत्तिरवयवपरिग्रहेण वर्ण्यते, सा पदार्थ एव स्यात्, न वाक्यार्थः । तस्यानवयवस्येत्थं विवेक्तुमशक्यत्वादित्यव्यापिनी शब्दार्थव्यवस्था ।

अपि च—नान्यापोहोऽनन्यापोह इत्यादौ शब्दे विधिरूपादन्यद्वाच्यं न निरूप्यते, नोपलभ्यत इत्यर्थः । तथा हि—नापोहरूपमात्रं वाच्यं गम्यते; प्रतिषेधद्वयेन विधेरेवावसायात् । आदिशब्देनाऽनन्यव्यावृत्तिः, अनन्यव्यवच्छेद इत्यादिपर्यायग्रहणम् । ननु च "नञश्चापि नञा युक्तौ[1]" (तत्त्व० ९७६) इत्यनेनैव गतत्वात् पुनरुक्तमेतत् ? सत्यमेतत्; किन्तु 'अन्यापोहः शब्दार्थः' इत्येवं-

---

1. योगः—जै० ।

अपोह्यकल्पनायां च वरं वस्त्वेव कल्पितम् ।
ज्ञानाकारनिषेधाच्च [1]नान्तरार्थाभिधेयतः ॥ ९७९ ॥
न चाप्यपोह्यता तस्मान्नापोहस्तेषु सिद्ध्यति ।
एवमित्यादिशब्दानां न चापोह्यं निरूप्यते ॥ ९८० ॥

---

वादिना स्ववचनेनैव विधिरिष्ट इति ज्ञापनार्थं पुनरुच्यते । तथा ह्यन्यापोहशब्दस्यानन्यापोहशब्दार्थो व्यवच्छेद्यः, स च विधेर्नान्यो लक्ष्यते । ये च प्रमेयज्ञेयाभिधेयादयः शब्दाः, तेषां न किञ्चिदपोह्यमस्ति; सर्वस्यैव प्रमेयत्वादिस्वभावत्वात् । तथा हि—यन्नाम किञ्चिद्व्यवच्छेद्यमेषां कल्प्यते, तत् सर्वं व्यवच्छेद्याकारेणालम्ब्यमानं ज्ञेयादिस्वभावमेवावतिष्ठते, न ह्यविषयीकृतं व्यवच्छेत्तुं शक्यते । ततश्चैषामपोह्यार्थाभावादव्यापिनी व्यवस्था ॥ ९७६-९७८ ॥

ननु हेतुमुखे निर्दिष्टम्--"अज्ञेयं कल्पितं कृत्वा तद्व्यवच्छेदेन ज्ञयेऽनुमानम्" ( ) इति, तत्कथमव्यापित्वं शब्दार्थव्यवस्थायाः ? इत्याह—अपोह्येत्यादि । यदि ज्ञेयमपि सर्वं ज्ञेयत्वेनापोह्यमस्य कल्प्यते, तदा वरं वस्त्वेव विधिरूपमेव [ G. 313 ] शब्दार्थत्वेन विकल्पितं भवेद्, यद्ध्यवसीयते लोकेन । एवं ह्यदृष्टारोपो दृष्टार्थपलापश्च न कृतः स्यादिति भावः । अत एव 'वरम्' इत्युक्तम् ।

ये त्वाहुः—"विकल्पप्रतिबिम्बकमेव सर्वशब्दानामर्थः, तदेव चाभिधीयते व्यवच्छिद्यत इति चोच्यते" इति, तान् प्रतीदमाह—ज्ञानाकारनिषेधाच्चेत्यादि । निराकारा बुद्धिः, आकारवान् बाह्योऽर्थः, स च बहिर्देशसम्बन्धो विस्पष्टमुपलभ्यत इत्येवमस्माभिर्ज्ञानाकारो निषिद्धः, तस्मादान्तरस्य बुद्ध्यारूढस्याकारस्यासत्त्वात् तदाभिधायकत्वं शब्दानामयुक्तम् । नापि तस्यान्तरस्यार्थस्यापोह्यत्वं युक्तम्; असत्त्वादेव । तेष्विति प्रमेयादिशब्देषु । ये च 'एवम्', 'इत्थम्' इत्यादयः शब्दाः, तेषामपि न किञ्चिदपोह्यमुपलभ्यते; कस्यचित् प्रतियोगिनः पर्युदासरूपस्याभावात् । अथापि स्यात्—नैवमित्यादि प्रसज्यरूपं निषेध्यं भवतीति ? नैतदस्ति; उक्तमत्र । तथा हि अत्रापि—

---

१. नान्तरार्थोऽभिधीयते—पा०, गा० ।

उद्द्योतकरमतम्

सर्वशब्दस्य कश्चार्थो व्यवच्छेद्यः प्रकल्प्यते ।
नासर्वंनाम किञ्चिद्धि भवेद्यस्य निराक्रिया ॥ ९८१ ॥
एकाद्यसर्वमिति चेत् [1]स्वार्थापोहः प्रसज्यते ।
अङ्गानां प्रतिषिद्धत्वादनिष्टेश्चाङ्गिनः पृथक् ॥ ९८२ ॥
एवं समूहशब्दार्थे समुदायिव्यपोहतः ।
अन्यानिष्टेश्च सर्वेऽपि प्राप्नुवन्ति निरर्थकाः ॥ ९८३ ॥
द्व्यादिशब्दा इहेष्टाश्च ये समुच्चयगोचराः ।
एकादिप्रतिषेधेन न भवेयुस्तथाविधाः ॥ ९८४ ॥

"न नैवमिति निर्देशे निषेधस्य निषेधनम् ।
एवमित्यनिषिद्धं तु स्वरूपेणैव तिष्ठति" ॥

इति सैव पूर्वोक्ता ( तत्त्व० ९७४ ) नीतिरवतरति ॥ ९७९-९८० ॥

एतत् सर्वं कुमारिलोक्तमुपन्यस्तम्, साम्प्रतं सर्वशब्दस्येत्यादिनोद्द्योतकरोक्तमपोहदूषणमाशङ्कते – [ G. 314 ] स ह्याह – 'अपोहः शब्दार्थः' इत्ययुक्तमेतत्; अव्यापकत्वात् । यत्र द्वैराश्यं भवति तत्रेतरप्रतिषेधादितरत् प्रतीयते, यथा—गौरिति पदे गौः प्रतीयमानोऽगौर्निषिध्यमानः, न पुनः सर्वपदे एतदस्ति। न ह्यसर्वं नाम किञ्चिदस्ति, यत् सर्वशब्देन निवर्त्येत । अथ मन्यसे—एकाद्यसर्वं तत् सर्वशब्देन निवर्त्त्यत इति ? तन्न; स्वार्थापवाददोषप्रसङ्गात् । एवं ह्येकादिव्युदासेन प्रवर्त्तमानः सर्वशब्दोऽङ्गप्रतिषेधादङ्गव्यतिरिक्तस्याङ्गिनोऽनभ्युपगमादनर्थकः स्यात् । अङ्गशब्देनैकदेश उच्यते । एवं सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्त्तमानाः समुदायिव्यतिरिक्तस्यान्यस्य समुदायस्यानभ्युपगमादनर्थकाः प्राप्नुवन्ति । द्व्यादिशब्दानां च समुच्चयविषयत्वादेकादिप्रतिषेधे[2] प्रतिषिध्यमानानामर्थानामसमुच्चयत्वादनर्थकत्वम्; तद्दर्शयति—न भवेयुस्तथाविधा इति । यथाविधा[3] इष्टास्ते समुच्चयगोचरा-

१. अर्थापोहः—पा०, गा० । २. विषयसम्र०—पा०. गा० .
३. पा, गा० पुस्तकयोर्नास्ति ।

नागौरिति च योऽपोहो गोशब्दस्यार्थ उच्यते ।
स किं भावोऽथ वाऽभावो भावो गौर्वाऽथ वाऽप्यगौः ॥ ९८५ ॥
गौश्चेन्नास्ति विवादोऽयमर्थस्तु विधिलक्षणः ।
अगौर्गोशब्दवाच्यश्चेदतिशब्दार्थकौशलम् ॥ ९८६ ॥
अभावोऽपि न युक्तोऽयं प्रैषादीनामसम्भवात् ।
न हि गोशब्दतः कश्चिदभावं प्रतिपद्यते ॥ ९८७ ॥
नागौर्गौरिति शब्दार्थः कस्माद्[1] वापोह इष्यते ।
केन ह्यगोत्वमासक्तं गौर्येनैतदपोह्यते ॥ ९८८ ॥
अगौरपोहो यश्चायं गवि शब्दार्थ उच्यते ।
स किं गोर्व्यतिरिक्तोऽथाऽव्यतिरिक्तोऽभ्युपेयते[2] ॥ ९८९ ॥

---

स्तथाविधा न भवेयुरित्यर्थः । यश्चायमगोऽपोहो गौर्न भवतीति गोशब्दस्यार्थः, स किं भावः ? अथाभावः ? यदि भावः, स किं गौः, अथाऽगौरिति ? यदि गौः, नास्ति विवादः । अथागौः, गोशब्दस्यागौरर्थ इत्यतिशब्दार्थकौशलम् । अथाभावः, तन्न युक्तम् ; प्रैषसम्प्रतिपत्त्योरविषयत्वात् । न हि शब्दश्रवणादभावे प्रैषः सम्प्रतिपत्तिश्च भवेत् । तदेतद् दर्शयति—अभावोऽपि न युक्तोऽयमित्यादि । प्रैषणं प्रैषः = प्रतिपादकेन श्रोतुरर्थे विनियोगः, सोऽयं प्रतिपादकधर्मः । सम्प्रतिपत्तिः = श्रोतृधर्मः । आदिशब्देन भावधर्माः सर्वे वाहदोहादयो गृह्यन्ते । अपि च शब्दार्थः प्रतीत्या प्रतीयते, न च गोशब्दादभावं कश्चित् प्रतिपद्यते ॥ ९८१-९८७ ॥

किञ्च – क्रियारूपत्वादपोहस्य विषयो वक्तव्यः, तत्रागौर्न भवतीत्ययमपोहः किं गोविषयः ? अथागोविषयः ? यदि गौर्विषयः, कथं गोर्गव्येवाभावः ! अथागौर्विषयः, कथमन्यविषयादपोहादन्यत्र प्रतिपत्तिः, न हि खदिरे च्छिद्यमाने पलाशे छिदा भवति ! अथागोर्गवि प्रतिषेधो गौरगौर्न भवतीति, केनागोत्वं प्रसक्तं यत् प्रतिषिध्यत इति ! तदत्र प्रथमौ विकल्पावत्यसम्बद्धाविति मत्वा तृतीयमेव दर्शनाह—नागौर्गौरित्यादि ।

---

१. वापोह—पा०, गा० । २. ०वाऽव्यतिरिक्त उपेयते—पा०, गा० ।

विभिन्नोऽप्याश्रितोऽयं[1] स्यादथ वा स्यादनाश्रितः ।
आश्रितत्वे गुणः प्राप्तो न द्रव्यवचनं ततः ॥ ९९० ॥
अतो गौरिति शब्देन गुणमात्राभिधानतः ।
सामानाधिकरण्यं स्यान्न गौर्गच्छति तिष्ठति ॥ ९९१ ॥
अथानाश्रित एवायं यद्यर्थस्तस्य को भवेत् ।
येनागोः[2] प्रतिषेधाय गौरिति व्यपदिश्यते ॥ ९९२ ॥
अथ[3] वाऽव्यतिरिक्तोऽयमन्यापोहस्त्वयेष्यते ।
गौरेवायमतः प्राप्तः किमुक्तमधिकं ततः ॥ ९९३ ॥
प्रतिभावमपोहोऽयमेकोऽनेकोऽपि वा भवेत् ।
यद्येकोऽनेकगोयुक्तो गोत्वमेव भवेदसौ ॥ ९९४ ॥
अनेकत्वेऽपि चानन्त्यं पिण्डवत् सम्प्रयुज्यते ।
तेन भेदवदेवास्य वाच्यता नोपपद्यते[4] ॥ ९९५ ॥

---

[G. 315] [5]वाशब्दः समुच्चये । कस्माच्च भवता गौरित्येतस्य नागौरित्येषोऽपोहलक्षणः शब्दार्थ उच्यत इति वाक्यार्थः । कस्मात् पुनर्न वक्तव्यः[6] ? इत्याह—केनेत्यादि ।

इतश्चायुक्तोऽपोह; विकल्पानुपपत्तेः । तथा हि—योऽयमगोरपोहो गवि स किं गोव्यतिरिक्तः ? आहोस्विदव्यतिरिक्तः ? यदि[7] व्यतिरिक्तः[7], स किमाश्रितः ? अथानाश्रितः ? यद्याश्रितः, तदाऽऽश्रितत्वाद् गुणः प्राप्तः, ततश्च गोशब्देन गुण एवाभिधीयते नागौरिति गौस्तिष्ठति, गौर्गच्छतीति सामानाधिकरण्यं न प्राप्नोति । अथानाश्रितः, तदा केनार्थेनागोरपोह इति षष्ठी स्यात् ? अथाव्यतिरिक्तः, तदा गौरेवासाविति न किञ्चित् कृतं भवति ॥ ९८८–९९३ ॥

अयं चापोहः प्रतिवस्त्वेकः, अनेको वेति वक्तव्यम् । यद्येकः ? तदाऽनेकगो-

---

१. ०श्रितो वा—पा०, गा० ।
२. येनासौ—पा०, गा० ।
३. चा०—पा०, गा० ।
४. नोपयुज्यते—पा०, गा ।
५. चशब्दः—पा०, गा० ।
६. वक्तव्या—गा० ।
७–७. यद्व्यतिरिक्तः—पा; गा० ।

अन्यापोहश्च किं वाच्यः ? किं वाऽवाच्योऽयमिष्यते ?
वाच्योऽपि विधिरूपेण यदि वाऽन्यनिषेधतः ? ॥ ९९६ ॥
विध्यात्मनाऽस्य वाच्यत्वे त्याज्यमेकान्तदर्शनम् ।
सर्वत्रान्यनिरासोऽयं शब्दार्थ इति वर्णितम् ॥ ९९७ ॥
अन्यापोहव्युदासेन[1] यद्यपोहोऽभिधीयते ।
तत्र तत्रैवमिच्छायामनवस्था भवेत् ततः ॥ ९९८ ॥
अथाप्यवाच्य [2]एवायमन्यापोहस्त्वयेष्यते ।
तेनान्यापोहकृच्छब्द इति बाध्येत ते वचः ॥ ९९९ ॥

कुमारिलमतोपसंहारः

अपि चैकत्वनित्यत्वप्रत्येकसमवायिताः[3] ।
निरुपाख्येष्वपोहेषु कुर्वतोस्तत्र[4] कः पटः[4] ॥ १००० ॥

---

द्रव्यसम्बन्धी गोत्वमेवासौ भवेत् । अथानेकः ? ततः पिण्डवदानन्त्यादाख्यानानुपपत्तेरवाच्य एव स्यात ॥ ९९४–९९५ ॥

[ G. 316 ] किञ्चेदं तावत् प्रष्टव्यो भवति भवान्—किमपोहो वाच्यः ? अथावाच्य इति ? वाच्यत्वे विधिरूपेण वा वाच्यः स्यात, अन्यव्यावृत्त्या वा ? तत्र यदि विधिरूपेण, तदा नैकान्तिकः शब्दार्थः—अन्यापोहः शब्दार्थ इति । अथान्यव्यावृत्त्येति पक्षः ? तदा तस्याप्यन्यव्यवच्छेदस्यापरेणान्यव्यवच्छेदरूपेणाभिधानम्, तस्याप्यपरेणेत्यव्यवस्था स्यात् । अथावाच्यः ? तदाऽन्यशब्दार्थापोहं शब्दः करोतीति व्याहन्येत ॥ ९९६-९९९ ॥

एतत्सर्वमुद्द्योतकरेणोक्तमुपन्यस्तम् । यत्राचार्यदिङ्नागेनोक्तम्—"सर्वत्राभेदादाश्रयस्यानुच्छेदात् कृत्स्नार्थपरिसमाप्तेश्च यथाक्रमं जातिधर्मा एकत्वप्रत्येकपरिसमाप्तिलक्षणा अपोह एवावतिष्ठन्ते, तस्माद् गुणोत्कर्षादप्यर्थान्तरापोह एव शब्दार्थः साधुः" (        ) इति । एतदाशङ्क्य कुमारिल उपसंहरन्नाह—अपि चैकत्वेत्यादि ।

---

१. अथापोह०—पा०, गा० । २. एवायं यद्यपोह०—पा०, गा० ।
३. ०समवायिनः—पा०, गा० ४–४. कुर्वतस्तत्र कः परः—पा०, गा० ।

तस्माद्येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।
भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते ॥ १००१ ॥

उत्तरपक्षः

अन्यापोहापरिज्ञानादेवमेते कुदृष्टयः ।
स्वयं नष्टा[1] दुरात्मानो नाशयन्ति परानपि ॥ १००२ ॥
तथा हि द्विविधोऽपोहः पर्युदासनिषेधतः ।
द्विविधः पर्युदासोऽपि बुद्ध्यात्मार्थात्मभेदतः ॥ १००३ ॥
एकप्रत्यवमर्शस्य य उक्ता हेतवः पुरा ।
अभयादिसमा अर्थाः प्रकृत्यैवान्यभेदिनः ॥ १००४ ॥
तानुपाश्रित्य यज्ज्ञाने भात्यर्थप्रतिबिम्बकम् ।

---

येष्वेव शब्देषु नञ्योग इति । 'अभक्ष्यो ग्रामसूकरः' इत्यादिषु । स्वात्मैवेति । स्वरूपमेव विधिलक्षणम् । अन्यत्रेति नञ्रहिते ॥ १०००-१००१ ॥

एवं यथाप्रधानं परमतमाशङ्क्य, अन्यापोहापरिज्ञानादित्यादिना समाधानमारभते । पर्युदासनिषेधत इति पर्युदासात्, निषेधाच्च । पर्युदासलक्षणः, प्रसज्यप्रतिषेधश्चेति [G. 317] यावत् । बुद्ध्यात्मार्थात्मभेदत इति । बुद्ध्यात्मभेदात्, अर्थात्मभेदादित्यर्थः । तत्र बुद्ध्यात्मा = बुद्धिप्रतिभासोऽर्थेष्वनुगतैकरूपत्वेनाध्यवसितः, अर्थात्मा = अर्थस्वभावः, विजातीयव्यावृत्तमर्थस्वलक्षणमित्यर्थः । अनयोर्भेदः = विभाग इति समासः ॥ १००२-१००३ ॥

तत्र बुद्ध्यात्मनः स्वरूपं दर्शयन्नाह—एकेत्यादि । पुरेति । पूर्वं सामान्यपरीक्षायाम् "यथा धान्यभयादीनाम्" (तत्त्व० ७२२) इत्यादिनोक्ताः । तत्रोक्तम्—यथा हरीतक्यादयो बहवोऽन्तरेणापि सामान्यमेकं ज्वरादिशमनलक्षणं कार्यं कुर्वन्ति, तथा शाबलेयादयोऽप्यर्थाः सत्यपि भेदे प्रकृत्यैकाकारप्रत्यवमर्शस्य हेतवो भविष्यन्त्यन्तरेणापि वस्तुभूतं सामान्यमिति । अभयादिसमा इति । हरीतक्यादितुल्याः । एकार्थकारितया साम्यम् । तानुपाश्रित्येति । तानभयादिसमानार्थानाश्रित्य = हेतूकृत्य तदनुभवबलेन यदुत्पन्नं विकल्पकं ज्ञानं तत्र यदर्थाकार-

---

१. दुष्टा—पा०, गा० ।

कल्पकेऽर्थात्मताऽभावेऽप्यर्था इत्येव निश्चितम् ॥ १००५ ॥
प्रतिभासान्तराद् भेदादन्यव्यावृत्तवस्तुनः ।
प्राप्तिहेतुतयाऽश्लिष्टवस्तुद्वारा गतेरपि ॥ १००६ ॥
विजातीयपरावृत्तं तत्फलं यत्स्वलक्षणम् ।
तस्मिन्नध्यवसायाद्वा तादात्म्येनास्य विप्लुतैः ॥ १००७ ॥
तत्रान्योऽपोह[1] इत्येषा संज्ञोक्ता सनिबन्धना ।
स्वलक्षणेऽपि तद्धेतावन्यविश्लेषभावतः ॥ १००८ ॥

---

तयार्थप्रतिविम्बकमर्थाभासो भाति तादात्म्येन, तत्र 'अन्यापोहः' इत्येषा संज्ञोक्तेति सम्बन्धः । कल्पक इति । विकल्पके, सविकल्प इति यावत् । एतच्च ज्ञान इत्यनेन समानाधिकरणम् । अर्थात्मताऽभावेऽपीति । बाह्यार्थात्मताया अभावेऽपि । निश्चितमिति अध्यवसितम् ॥ १००४–१००५ ॥

अथ कथं तस्यापोह इत्येष व्यपदेशः ? इत्याह—प्रतिभासान्तरादित्यादि । चतुर्भिर्निमित्तैरपोह इति तस्याख्या । विकल्पान्तरारोपितप्रतिभासान्तराद् भेदेन स्वयं प्रतिभासनान्मुख्यतः; अपोह्यत इत्यपोहः, अन्यस्मादपोहोऽन्यापोह इति व्युत्पत्तेः । [G. 318] उपचारात्तु त्रिभिः कारणैः[2] । १. कारणे [3]कार्यधर्म्यारोपाद्वा, [4]यदाह—अन्यव्यावृत्तवस्तुनः प्राप्तिहेतुतयेति । २. कार्ये वा कारणधर्मोपचारात्, तद्दर्शयति—अश्लिष्टवस्तुद्वारा गतेरपीति । अश्लिष्टम् = अन्यासम्बद्धम्, अन्यतो व्यावृत्तमिति यावत् । तदेव वस्तुद्वारमुपायः, तदनुभवबलेन तथाविधविकल्पोत्पत्तेः । ३. विजातीयापोढपदार्थेन[5] सहैक्येन भ्रान्तैः प्रतिपत्तृभिरध्यवसितत्वाच्चेति चतुर्थं कारणम्, तद्दर्शयति—विजातीयेत्यादि । अस्येति विकल्पबुद्ध्यारूढस्यार्थप्रतिविम्बस्य । सनिबन्धनेति । सह निबन्धनेन प्रतिभासान्तराद्भेदादिनोक्तेन चतुर्विधेन वर्त्तत इति सनिबन्धना ॥ १००६–१००७ ॥

अर्थात्मनोऽपोहस्य स्वरूपं दर्शयन्नाह—स्वलक्षणेऽपीत्यादि । 'अन्यापोहः'

---

१. तत्रान्यापोह—पा०, गा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।
३. कार्यधर्मारोपाद्वा—पा०, गा० ।
४. गा० सम्पादकः 'तदाह'—इति पाठमभीप्सति ।
५. ०पोहपदार्थेन—पा०, गा० ।

प्रसज्यप्रतिषेधश्च गौरगौर्न भवत्ययम् ।
अतिविस्पष्ट एवायमन्यापोहोऽवगम्यते ॥ १००९ ॥
तत्रायं प्रथमः शब्दैरपोहः प्रतिपाद्यते ।
बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात् समुद्भवात् ॥ १०१० ॥
तद्रूपप्रतिबिम्बस्य धियः शब्दाच्च जन्मनि ।
वाच्यवाचकभावोऽयं जातो हेतुफलात्मकः ॥ १०११ ॥

---

इत्येषा संज्ञोक्ता सनिबन्धनेति प्रकृतेन सम्बन्धः । तत्र निबन्धनमाह—अन्यविश्लेषभावत इति । अन्यस्मात् = विजातीयाद्, विश्लेषः = व्यावृत्तिः, तस्य भावात् । विजातीयविश्लेषस्य विद्यमानत्वादिति यावत् । एतेन मुख्यत एव स्वलक्षणेऽन्यापोहव्यपदेश इत्युक्तं भवति ॥ १००८ ॥

प्रसज्यप्रतिषेधलक्षणस्यापोहस्य स्वरूपं दर्शयति—प्रसज्येत्यादि ॥१००९॥

तदेवं त्रिविधमपोहं प्रतिपाद्य प्रकृते शब्दार्थत्वे योजयन्नाह—तत्रायमित्यादि । प्रथम इति यथोक्तार्थप्रतिबिम्बात्मा । तत्र कारणमाह—बाह्यार्थाध्यवसायिन्या इत्यादि । यदेव हि शाब्दे ज्ञाने प्रतिभासते स एव शब्दार्थो युक्तः, न चात्र प्रसज्यप्रतिषेधाध्यवसायोऽस्ति, न चापीन्द्रियज्ञानवत् स्वलक्षणप्रतिभासः, किं तर्हि ? बाह्यार्थाध्यवसायिनी केवलं शाब्दी बुद्धिरुपजायते, तेन तदेवार्थप्रतिबिम्बकं शाब्दे ज्ञाने साक्षात् तदात्मतया प्रतिभासनाच्छब्दार्थो युक्तः, नान्य इति भावः ॥ १०१० ॥

यद्यपि शब्दस्यार्थेन सह वाच्यवाचकभावलक्षणः सम्बन्धः प्रसिद्धः, नासौ कार्यकारणभावादन्योऽवतिष्ठते, अपि तु कार्यकारणभावात्मक एवेति दर्शयति तद्रूपप्रतिबिम्बस्येत्यादि । [ G. 319 ] तत् = अध्यवसितबहिर्भावत्वलक्षणम्, रूपम् = स्वभावो यस्य तत्तथोक्तम् । तद्रूपं च तत्प्रतिबिम्बं चेति समासः । तस्य तद्रूपप्रतिबिम्बस्य धियः सम्बन्धिनः शब्दाज्जन्मन्युत्पादे सति स वाच्यवाचकभावलक्षणो[1] निरूप्यमाणः कार्यकारणभावात्मक एव जातः । तथा हि—

---

[1] वाच्यवाचकलक्षणो—पा०, गा० ।

साक्षादाकार एतस्मिन्नेवं च प्रतिपादिते ।
प्रसज्यप्रतिषेधोऽपि सामर्थ्येन प्रतीयते ॥ १०१२ ॥
न तदात्मा परात्मेति सम्बन्धे सति वस्तुभिः ।
व्यावृत्तवस्त्वधिगमोऽप्यर्थादेव भवत्यतः ॥ १०१३ ॥
तेनायमपि शब्दस्य स्वार्थं इत्युपचर्यते ।
न तु साक्षादयं शब्दो द्विविधोऽपोह उच्यते ॥ १०१४ ॥

---

शब्दप्रतिबिम्बस्य जनकत्वाद् वाचक उच्यते, तच्च प्रतिबिम्बं शब्देन जन्यमानत्वाद् वाच्यम् । तेन यदुक्तम्—"निषेधमात्रं नैवेह [1]शाब्दे [1]ज्ञानेऽवभासते" ( तत्त्व० ९०९ ) इति, तदसङ्गतम्; निषेधमात्रस्य शब्दार्थत्वानभ्युपगमादिति भावः ॥ १०११ ॥

एवं तावत् प्रतिबिम्बलक्षणोऽपोहः साक्षाच्छब्दैरुपजन्यमानत्वान् मुख्यः शब्दार्थ इति दर्शितम् । शेषयोरप्यपोहयोर्गौणं शब्दार्थत्वमुपवर्ण्यमानमविरुद्धमेवेति दर्शयन्नाह—साक्षादित्यादि । एवं चेति जन्यत्वेन ॥ १०१२ ॥

कस्मात् पुनः सामर्थ्येन प्रसज्यप्रतिषेधः प्रतीयते ? इति दर्शयन्नाह—न तदात्मेति । तस्य गवादिप्रतिबिम्बस्यात्मा यः परस्याश्वादिप्रतिबिम्बस्यात्मा स्वभावो न भवतीति कृत्वा । एवं प्रसज्यलक्षणापोहस्य नान्तरीयकतया प्रतीतेर्गौणं शब्दार्थत्वं प्रतिपाद्य स्वलक्षणस्यापि प्रतिपादयन्नाह—सम्बन्धे सतीत्यादि । तत्र सम्बन्धः शब्दस्य वस्तुनि पारम्पर्येण कार्यकारणलक्षणः प्रतिबन्धः । [2]तथा हि[2]—प्रथमं यथास्थितवस्त्वनुभवः, ततो विवक्षा, ततस्ताल्वादिपरिस्पन्दः, ततः शब्दः—इत्येवं परम्परया यदा शब्दस्य वस्तुभिर्बाह्यैरग्न्यादिभिः सम्बन्धः स्यात्, तदा तस्मिन् सम्बन्धे सति विजातीयव्यावृत्तस्यापि वस्तुनोऽर्थापत्तितोऽधिगमो भवति । अतो द्विविधोऽपि प्रसज्यप्रतिषेधोऽन्यव्यावृत्तवस्त्वात्मा चापोहः शब्दार्थ इत्युपचर्यते । अयमिति स्वलक्षणात्मा । अपिशब्दात् प्रसज्यात्मा च ॥ १०१३–१०१४ ॥

---

१–१. 'प्रतिभासेऽवगम्यते' इति तत्रस्थः पाठः । २–२. पा०, गा० पुस्तकयोर्नास्ति ।

आचार्यदिङ्नागवचनसमर्थनम्

अर्थान्तरव्यवच्छेदं कुर्वती श्रुतिरुच्यते ।
अभिधत्त इति स्वार्थमित्येतदविरोधि तत् ॥ १०१५ ॥
बाह्यार्थाध्यवसायेन प्रवृत्तं प्रतिबिम्बकम् ।
उत्पादयति येनेयं तेनाहेत्यपदिश्यते ॥ १०१६ ॥
न तु स्वलक्षणात्मानं स्पृशत्येषा विभेदिनम् ।
तन्मात्रांशातिरेकेण नास्त्यस्या अभिधाक्रिया ॥ १०१७ ॥

---

[ G. 320 ] नेन आचार्यदिङ्नागस्योपरि यदुद्द्योतकरेणोक्तम्—"यदि शब्दस्यापोहोऽभिधेयोऽर्थः, तदाभिधेयार्थव्यतिरेकेणास्य स्वार्थो वक्तव्यः । अथ स एवास्य स्वार्थः, तथापि व्याहतम्, एतदन्यशब्दार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति, अस्य हि वाक्यस्यायमर्थस्तदानीं भवति—अभिदधानाऽभिधत्ते" (     ) इति । तदेतद् वाक्यार्थापरिज्ञानादुक्तमिति दर्शयन्नाचार्यीयवाक्याविरोधं प्रतिपादयति—अर्थान्तरेत्यादि । [1]स्वलक्षणमपि हि शब्दस्योपचारात् स्वार्थ इति प्रतिपादितम्, अतस्तस्मिन् स्वलक्षणात्मके स्वार्थेऽर्थान्तरव्यवच्छेदं प्रतिबिम्बान्तराद्व्यावृत्तं प्रतिबिम्बात्मकमपोहं कुर्वती जनयन्ती श्रुतिरभिधत्त इत्युच्यते इत्येतदाचार्यीयं वचनमविरोधि ॥ १०१५ ॥

बाह्यार्थेत्यादिनैतदेवाचार्यीयं वचनं व्याचष्टे[2] । अयमाचार्यस्याभिप्रायः—न शब्दस्य बाह्यार्थाध्यवसायिविकल्पप्रतिबिम्बोत्पादव्यतिरेकेणान्यो बाह्याभिधानव्यापारः सम्भवति; निर्व्यापारत्वात् सर्वधर्माणाम् । अतो बाह्यार्थाध्यवसायेन प्रवृत्तविकल्पप्रतिबिम्बं जनयन्ती श्रुतिः स्वार्थमभिधत्त इत्युच्यत इति । न तु विभेदिनं सजातीयविजातीयव्यावृत्तं स्वलक्षणमेषा स्पृशति; अकिञ्चित्करत्वात् । तन्मात्रांशातिरेकेणेति । तथाविधप्रतिबिम्बजनकत्वव्यतिरेकेण नापरा श्रुतेरभिधाक्रियाऽस्तीत्यर्थः ॥ १०१६–१०१७ ॥

एवमपोहस्य स्वरूपमभिधाय साम्प्रतं परोक्तानि दूषणान्युद्धर्तुमारभते ।

१. पा०, गा० पुस्तकयोर्नास्ति । २. वचनमाचष्टे—पा०, गा० ।

भामहमतखण्डनम्

तस्य च प्रतिबिम्बस्य गतावेवावगम्यते[1] ।
सामर्थ्यादन्यविश्लेषो नास्यान्यात्मकता यतः ॥ १०१८ ॥
दिवाभोजनवाक्यादेरिवास्यापि फलद्वयम् ।
साक्षात् सामर्थ्यतो यस्मान्नान्वयोऽव्यतिरेकवान् ॥ १०१९ ॥
नाभिमुख्येन कुरुते यस्माच्छब्द इदं द्वयम् ।
स्वार्थाभिधानमन्यस्य विनिर्वृत्तिं च वस्तुनः ॥ १०२० ॥

तत्र यदुक्तम्—"यदि गौरिति शब्दश्चेत" ( तत्त्व० ९११ ) इत्यादि, तत्राह—तस्य चेत्यादि । गोबुद्धिमेव हि शब्दो जनयति, अन्यविश्लेषस्तु सामर्थ्याद् गम्यते, न तु शब्दात्, तस्य गोप्रतिबिम्बस्य प्रतिभासान्तरात्मरहितत्वात्, अन्यथा नियतरूपस्य तस्य प्रतिपत्तिरेव [ G. 321 ] न स्यात् । तेनापरो ध्वनिर्गोबुद्धेर्जनको न मृग्यते । तेनैव गोशब्देन गोबुद्धेर्जन्यमानत्वात् ॥ १०१८ ॥

"न तु ज्ञानफलाः शब्दाः" ( तत्त्व० ९१२ ) इत्यादावाह— दिवाभोजनेत्यादि । यथा हि—'दिवा न भुङ्क्ते पीनो देवदत्तः' इत्यस्य वाक्यस्य साक्षाद्दिवाभोजनप्रतिषेधः स्वार्थाभिधानम्, गम्यस्तु रात्रिभोजनविधिः, न साक्षात्; तद्वद् गौरित्यादेरन्वयप्रतिपादकस्य शब्दस्यान्वयज्ञानं साक्षात् फलम् । व्यतिरेकगतिस्तु सामर्थ्यात् । अत्र कारणमाह—यस्मादित्यादि । यस्मादन्वयो विधेरव्यतिरेकवान्नास्ति, किं तर्हि ? विजातीयव्यवच्छेदाव्यभिचार्येव । न हि विजातीयादव्यावृत्तस्य कस्यचित् सम्भवोऽस्ति, तेनैकस्य शब्दस्य फलद्वयमविरुद्धमेव ॥ १०१९ ॥

कस्मात् ? इत्याह—नाभिमुख्येनेत्यादि । यदि साक्षादेकस्य शब्दस्य विधिनिषेधज्ञानलक्षणं फलद्वयं युगपदभिप्रेतं भवेत्, तदा स्याद्विरोधः । यदा[2] तु दिवाभोजनवाक्यवदेकं साक्षात्, अपरं सामर्थ्यलभ्यं फलमितीष्टम्, तदा न विरोधः । यच्चोक्तम्—"प्रागगौरिति विज्ञानम्" ( तत्त्व० ९१३ ) इत्यादि

१. गतावेवागम्यते— पा०, गा० ।  २. यदि—पा०, गा० ।

कुमारिलमतखण्डनम्

तादृशः प्रतिभासंश्च सामान्यं गोत्वमिष्यते ।
सर्वत्र शाबलेयादौ समानत्वावसायतः ॥ १०२१ ॥
वस्त्वित्यध्यवसायाच्च वस्त्वित्यपि तदुच्यते ।
झटित्येव हि तज्ज्ञानं भ्रान्तं जातं स्वबीजतः ॥ १०२२ ॥
स एव च तदाकारशब्दार्थोऽपोह उच्यते ।
सामान्यं वस्तुरूपं च तथा भ्रान्त्याऽवसायतः ॥ १०२३ ॥

---

तदपि निरस्तम्; अनभ्युपगमात् । न ह्यगोप्रतिषेधमाभिमुख्येन गोशब्दः करोतीत्यभ्युपगतमस्माभिः, किं तर्हि ? सामर्थ्यादिति प्रतिपादितम् ॥ १०२० ॥

यदुक्तम्—"अगोनिवृत्तिः सामान्यम्" ( तत्त्व० ९१४ ) इत्यादि, तत्राह—तादृश इत्यादि । तादृश इति बाह्यरूपतयाऽध्यस्तो बुद्ध्यारूढः । अत्रोपपत्तिमाह—सर्वत्रेत्यादि । सर्वत्र शाबलेयादौ गौर्गौरिति समरूपतयाऽवसानात् तेषां तत् सामान्यमित्युच्यते ॥ १०२१ ॥

बाह्यवस्तुरूपत्वमपि तस्य भ्रान्तप्रतिपत्तृवशाद् व्यवह्रियते, न परमार्थत इति दर्शयति—वस्त्वित्यध्यवसायाच्चेति । [ G. 322 ] ननु यदि कदाचिन्मुख्यवस्तुभूतं सामान्यं बाह्यवस्त्वाश्रितमुपलब्धं भवेत्, तदा साधर्म्यदर्शनात् तत्र सामान्ये भ्रान्तिर्भवेत्, यावता मुख्यार्थासम्भवे सैव भवतां सामान्यभ्रान्तिरनुपपन्नेत्याशङ्क्याह—झटित्येव हीत्यादि । झटिति = [1]धर्म्यदर्शनाद्यनपेक्ष्य द्विचन्द्रादिज्ञानादिवदन्तरुपप्लवादेतज्जातं ज्ञानम् । न हि सर्वा भ्रान्तयः साधर्म्यदर्शनादेव भवन्ति, किं तर्हि ? अन्तरुपप्लवादपीत्यदोषः ॥ १०२२ ॥

तेन सिद्धसाध्यतादोषो न भवतीति दर्शयन्नाह—स एवेत्यादि । स एव बुद्ध्याकारो बाह्यतयाऽध्यस्तः 'अपोह इति शब्दार्थः' इति, बाह्यवस्तुभूतं सामान्यमिति चोच्यते । अत्र कारणमाह—तथा भ्रान्त्यावसायत इति । तथेति[2] सामान्यरूपत्वेन वस्तुरूपत्वेन चावसायात् । शब्दार्थत्वापोहरूपत्वयोः प्रागेव कारणमुक्तम्—

---

१. सामान्यदर्शना०—पा०, गा० ।  २. पा०, गा० पुस्तकयोर्नास्ति ।

सामान्यवस्तुरूपत्वं न युक्तं त्वस्य भाविकम् ।
बुद्धेरनन्यरूपं हि यायादर्थान्तरं कथम् ॥ १०२४ ॥
यद्यप्यव्यतिरिक्तोऽयमाकारो बुद्धिरूपतः ।
तथापि बाह्यरूपत्वं भ्रान्तैस्तस्यावसीयते ॥ १०२५ ॥
तस्य नार्थानपेक्षत्वं पारम्पर्यात् तदागतेः ।
तेनात्मना च वस्तुत्वं नैवास्तीत्युपपादितम् ॥ १०२६ ॥

---

"बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात् समुद्भवात्" । ( तत्त्व० ११११० )
"प्रतिभासान्तराद्भेदात्" ( तत्त्व० १०६ ) इत्यादिना ॥ १०२३ ॥

कस्मात् पुनः परमार्थतः सामान्यं तन्न भवति ? इत्याह—सामान्येत्यादि । परमार्थतो हि बुद्धेरव्यतिरिक्तोऽसौ, तत्कथमर्थान्तरं व्रजेत्; येनार्थानां तत् सामान्यं भवेत् । यथोक्तम्—"ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्" ( )। तस्मात् सिद्धसाध्यतादोषो न भवति । न हि भवद्भिर्बुद्ध्याकारो गोत्वाख्यं सामान्यमवस्तुरूपमिष्टम्, किं तर्हि ? बाह्यशाबलेयादिगतमेकमनुगामि पारमार्थिकं गोत्वादिसामान्यमुपकल्पितम्, अतो न सिद्धसाध्यतेति भावः । यच्चोक्तम्—"निषेधमात्ररूपश्च" ( तत्त्व० ९१८ ) इत्यादि; तस्यानभ्युपगतत्वादेव न दोषः ॥ १०२४ ॥

यच्चेदमुक्तम्—"तस्यां चाश्वादिबुद्धीनाम्" ( तत्त्व० ९१९ ) इत्यादि, तत्राह—यद्यपीत्यादि । [ G. 323 ] सुबोधम् ॥ १०२५ ॥

यच्चोक्तम्—"शब्दार्थोऽर्थानपेक्षः" ( तत्त्व० ९२० ) इति, तत्राह—तस्येत्यादि । यत्र हि पारम्पर्याद्वस्तुनि प्रतिबन्धोऽस्ति, तस्य भ्रान्तस्यापि सतो विकल्पस्य मणिप्रभायां मणिबुद्धिवन्न बाह्यार्थानपेक्षत्वमस्ति । अतोऽसिद्धं बाह्यार्थानपेक्षत्वम् ।

यदुक्तम्—"वस्तुरूपा च सा बुद्धिः" (तत्त्व० ९२१) इत्यादि, तत्राह—तेनेत्यादि । यद्यपि वस्तुरूपा सा बुद्धिः, तथापि तस्यास्तेन बाह्यात्मना बुद्ध्यन्तरात्मना च वस्तुत्वं नास्तीत्युपपादितम् "न तदात्मा परात्मा" ( तत्त्व० १०१३ ) इत्यादिना । तेन 'बुद्धेर्बुद्ध्यन्तरापोहो न गम्यते' इत्यसिद्धम्; सामर्थ्येन गम्यमानत्वादिति भावः ॥ १०२६ ॥

प्रतिबिम्बात्मकोऽपोहः पदादप्युपजायते ।
प्रतिभाख्यो झटित्येव पदार्थोऽप्ययमेव नः ॥ १०२७ ॥
स्वरूपोत्पादमात्राद्धि[1] नान्यमंशं बिभर्त्ति सा ।
बुद्ध्यन्तराद् व्यवच्छेदस्तेन बुद्धेः प्रतीयते ॥ १०२८ ॥
यथैवाविद्यमानस्य न भेदः पारमार्थिकः ।
अभेदोऽपि तथैवेति तेन पर्यायता भवेत् ॥ १०२९ ॥
अभेदो ह्येकरूपत्वं नीरूपेषु च तत्कुतः ।
एकत्वेऽर्थस्य पर्यायाः प्राप्नुवन्ति च वाचकाः ॥ १०३० ॥

---

"असत्यपि च बाह्यार्थे" ( तत्त्व० ९२२ ) इत्यत्राह प्रतिबिम्बात्मक इत्यादि । यथैव हि प्रतिबिम्बात्मकप्रतिभाख्योऽपोहो बाह्यार्थोऽस्माभिरुपवर्णितः, तथैव पदार्थोऽपि । यस्मात् पदादपि प्रतिबिम्बात्मकोऽपोह उत्पद्यत एव, तेनास्माकमयमेव प्रतिबिम्बात्मकोऽपोहः पदार्थोऽपि मतः, न केवलं बाह्यार्थः—इत्यपिशब्दः । तेन विप्रतिपत्तेरभावान्नोपालम्भो युक्त इति भावः ॥ १०२७ ॥

"बुद्ध्यन्तराद्व्यवच्छेदो न च बुद्धेः प्रतीयते" ( तत्त्व० ९२३ ) इत्यत्राह—स्वरूपोत्पादमात्राद्धीत्यादि । यत एव हि स्वरूपोत्पादमात्रादन्यमंशं सा बुद्धिर्न विभर्त्ति, तत एव स्वस्वभावव्यवस्थितत्वाद् बुद्धेर्बुद्ध्यन्तराद् व्यवच्छेदः प्रतीयते, अन्यथा ह्यन्यस्य रूपं बिभ्रती कथं ततो व्यवच्छिन्ना प्रतीयेत ! तेनेति । स्वव्यतिरिक्तपदार्थस्वरूपानवधारणेन ॥ १०२८ ।

"भिन्नसामान्यवचनाः" ( तत्त्व० ९२४ ) इत्यादावाह—यथैवेत्यादि । [G. 324] यथैव ह्यपोहस्य निःस्वभावत्वादविद्यमानरूपस्य परस्परतो भेदो नास्तीत्युच्यते, तथैवाभेदोऽपीति तत् कथमभिन्नार्थाभावे पर्यायत्वप्रसञ्जनं[2] क्रियते ॥ १०२९ ॥

एतदेव स्पष्टीकुर्वन्नाह—अभेदो ह्येकरूपत्वमिति । यदि नाम नीरूपेष्वेकरूपत्वं नास्ति, तथापि किमिति पर्यायता न भवेदिति चेत् ? आह – एकत्वेऽर्थस्येत्यादि ॥ १०३० ॥

---

१. स्वरूपोपाद०—जै० ।

१. पर्यायत्वसञ्जनं—जै० ।

रूपाभावेऽपि चैकत्वं कल्पनानिर्मितं यथा ।
विभेदोऽपि तथैवेति कुतः पर्यायता ततः ॥ १०३१ ॥
भावतस्तु न पर्याया नापर्यायाश्च वाचकाः ।
न ह्येकं बाह्यमेतेषामनेकं चेति वर्णितम् ॥ १०३२ ॥
किन्त्वनेकोऽपि यद्येककार्यकारी य ईक्ष्यते ।
तत्रैकधर्मारोपेण श्रुतिरेका निवेश्यते ॥ १०३३ ॥
लोचनादौ यथा रूपविज्ञानैकफले क्वचित् ।
कश्चिद्यदि श्रुतिं कुर्याद् विनैकेनानुगामिना ॥ १०३४ ॥

---

स्यादेतत्—यदि नाम नीरूपेष्वेकरूपत्वं भावतो नास्ति, तथापि काल्पनिकमस्ति, तेन पर्यायताप्रसञ्जनं युक्तमेव ? इत्यत आह – रूपाभावेऽपीत्यादि । रूपाभावेऽपीति । स्वभावेऽपीत्यर्थः ॥ १०३१ ॥

यद्येवम्, पर्यायापर्यायव्यवस्था कथं शब्दानां प्रसिद्धा ? इत्याह—भावतस्त्वित्यादि । यदि हि परमार्थतो भिन्नमभिन्नं वा किञ्चिद्वाच्यं वस्तु शब्दानां स्यात्, तदा[1] पर्यायता, अपर्यायता[1] वा भवेत्; यावता "स्वलक्षणं जातिः तद्योगो जातिमांस्तथा" ( तत्त्व० ८७० ) इत्यादिना वर्णितं तथैषां न किञ्चिद्वाच्यमस्तीति ॥ १०३२ ॥

कथं सा तर्हि पर्यायादिव्यवस्था ? इत्याह -- किन्त्वित्यादि । तत्रान्तरेणापि सामान्यं सामान्यशब्दत्वव्यवस्थाया इदं निबन्धनम्, यद्बहूनामेकार्थक्रियाकारित्वम् । प्रकृत्यैव हि केचिद्भावा बहवोऽप्येकार्थक्रियाकारिणो भवन्ति । तेषामेकार्थक्रियासामर्थ्यप्रतिपादनाय व्यवहर्तृभिर्लाघवार्थमेकरूपाध्यारोपेणैका श्रुतिर्निवेश्यते । यथा बहुषु रूपादिषु मधूदकाद्याहरणलक्षणैकार्थक्रियासमर्थेषु 'घटः' इत्येषा श्रुतिर्निवेश्यते ॥ १०३३ ॥

कथं पुनरेकेनानुगामिना विना बहुष्वेका श्रुतिर्युज्यते ? इत्याह –लोचनादावित्यादि । [ G. 325 ] इच्छामात्रप्रतिबद्धो हि शब्दानामर्थेषु नियोगः, तथा हि – चक्षूरूपालोकमनस्कारेषु रूपविज्ञानैकफलेषु यदि कश्चिदिच्छावशाद् विनाप्ये-

---

१-१. ०ऽपर्यायता पर्यायता—पा० गा० ।

घटादीनां च यत् कार्यं जलादेर्धारणादिकम् ।
यच्च तद्विषयं ज्ञानं भिन्नं यद्यपि तद्द्वयम् ॥ १०३५ ॥
एकप्रत्यवमर्शस्य हेतुत्वादेकमुच्यते ।
ज्ञानं तथापि तद्धेतुभावादर्था अभेदिनः ॥ १०३६ ॥

---

केनानुगामिना सामान्येन [1]'छ', 'ठ'[1] इत्यादिकां श्रुतिं निवेशयेत्, तत् किं तस्य कश्चित् प्रतिरोद्धा भवेत् । न हि तेषु लोचनादिष्वेकं चक्षुर्विज्ञानजनकत्वं नाम सामान्यमस्ति । यतः सामान्यविशेषसमवाया अपि भवद्भिश्चक्षुर्विज्ञानजनका इष्यन्ते । तेषु न सामान्यसमवायोऽस्ति; निःसामान्यत्वात् सामान्यस्य, समवायस्य च द्वितीयसमवायाभावात् ॥ १०३४ ॥

ननु च घटादिरेककार्यकारी कथमुच्यते, यावता [2]तत्कार्यमुदकधारणादि तद्ग्राहकं च विज्ञानं स्वलक्षणभेदाद् भिद्यत एव ? इत्यत आह—घटादीनां चेत्यादि । यद्यपि स्वलक्षणभेदात् तत्कार्यं भिद्यते, तथापि ज्ञानाख्यं तावत् कार्यमेकार्थाध्यवसायिपरामर्शज्ञानहेतुतयैकमित्युच्यते, तस्य च ज्ञानस्य हेतुभावादर्था अपि मधूदकाद्याहरणादिलक्षणा घटादिव्यक्तिलक्षणाश्चाभेदिन इत्युच्यन्ते, तद्दर्शयति—[3]तथापि तद्धेतुभावादर्था अभेदिन इति । उच्यत इति प्रकृतं वचनपरिणामाद् बहुवचनान्तं सम्बध्यते । अपिशब्दो भिन्नक्रमः 'अर्थाः' इत्यनन्तरं सम्बध्यते तेनैकार्थक्रियाकारित्वमुपपद्यत एव ।

ननु चैवमनवस्था प्राप्नोति, तथा हि—योऽसौ प्रत्यवमर्शप्रत्ययः, तस्यापि स्वलक्षणभेदेन भिद्यमानत्वादेकत्वमसिद्धम्; ततश्च तस्याप्येकत्वसिद्धये परमेकाकार प्रत्यवमर्शकार्यमनुसरतोऽनवस्था स्यात्, ततश्चानवस्थितैककार्यतया न क्वचिदेक श्रुतिनिवेशः सिद्ध्येत् ? नैतदस्ति; न हि प्रत्यवमर्शप्रत्ययस्यैककार्यतयैकत्वमुच्यते किं तर्हि ? एकार्थाध्यवसायितया, तेन नानवस्था भविष्यति; स्वत एव सर्वेषां प्रत्यवमर्शप्रत्ययानामेकार्थाध्यवसायित्वस्य सिद्धत्वात् । तेनायमर्थो भवति—

---

१–१. ००००—पा०, गा० । २. तस्य घटादेः कार्यमित्यर्थः ।
३. तथा—बौ० ।

तत्र सामान्यवचना उक्ताः शब्दा घटादयः ।
विजातीयव्यवच्छिन्नप्रतिबिम्बैकहेतवः ॥ १०३७ ॥
तथाऽनेकार्यकारित्वादेको नैक इवोच्यते ।
अतत्कार्यपरावृत्तिबाहुल्यपरिकल्पितः ॥ १०३८ ॥
यथा सप्रतिघं रूपं सनिदर्शनमित्यपि ।
प्रयत्नानन्तरज्ञातो[1] यथा वा श्रावणो ध्वनिः ॥ १०३९ ॥
अतत्कारणभेदेन क्वचिच्छब्दो निवेश्यते ।
प्रयत्नोत्थो यथा शब्दो भ्रामरं वा यथा मधु ॥ १०४० ॥

एकाकारप्रत्यवमर्शहेतुत्वात् ज्ञानाख्यं कार्यमेकमित्युच्यते, तद्धेतुभावाच्चार्था अपि घटादय एकत्वव्यपदेशभाज इति ॥ १०३५-१०३६ ॥

[G. 326] तेन विनापि सामान्यं वस्तुभूतम्, सामान्यवचना घटादयः सिद्ध्यन्तीति निगमयन्नाह---तत्रेत्यादि ॥ १०३७ ॥

एकस्मिन्नपि वस्तुन्यन्तरेणापि सामान्यविशेषसङ्कीर्णानेकशब्दप्रवृत्तिर्भवत्येवेति दर्शयन्नाह---तथेत्यादि । कश्चिदेकोऽपि सन् प्रकृत्यैव सामग्र्यन्तरान्तःपात-वशादनेकार्थक्रियाकारी भवति । तत्रान्तरेणापि वस्तुभूतसामान्यादिधर्मभेदमतत्कार्य-पदार्थभेदबाहुल्यादनेकधर्मसमारोपादनेका श्रुतिर्निवेश्यते ॥ १०३८ ॥

अत्रोदाहरणमाह---यथेत्यादि । स्वदेशे परस्योत्पत्तिप्रतिबन्धकारित्वाद् रूपं सप्रतिघमित्युच्यते। निदर्शनम् = चक्षुर्विज्ञानम्; तज्जनकत्वात्, सह तेन वर्तत इति सनिदर्शनम् । द्वितीयमप्युदाहरणमाह—प्रयत्नेत्यादि । यथा हि---ध्वनिरेकोऽपि सन् प्रयत्नान्तरज्ञानफलकतया प्रयत्नानन्तरं ज्ञात इत्युच्यते । श्रोत्रज्ञानफलत्वाच्च श्रावणः । श्रवणं हि श्रुतिः, श्रोत्रज्ञानमिति यावत् । तत्प्रतिभासितया तत्र भवः श्रावणः । यद्वा श्रवणेन गृह्यत इति श्रावणः ॥ १०३९ ॥

एवमतत्कार्यभेदेनैकस्मिन्नप्यनेका श्रुतिर्निवेश्यत इति दर्शितम्, इदानीम-तत्कारणभेदेनापि क्वचित् श्रुतिर्निवेश्यत इति दर्शयति—अतत्कारणभेदेनेत्यादि । भ्रामरमिति । भ्रमरकृतम्, क्षुद्रादिकृतान्मधुनो व्यावृत्तम् ॥ १०४० ॥

---

1. ०ज्ञानो—पा०, गा० ।

तत्कार्यहेतुविश्लेषात् क्वचिच्छ्रुतिरिहोच्यते ।
अश्रावणं यथा रूपं विद्युद्वाऽयत्नजा यथा ॥ १०४१ ॥
इत्यादिना प्रभेदेन विभिन्नार्थनिबन्धनाः ।
व्यावृत्तयः प्रकल्प्यन्ते तन्निष्ठाः श्रुतयस्तथा ॥ १०४२ ॥
यथासंकेतमेवातोऽसङ्कीर्णार्थाभिधायिनः ।
शब्दा विवेकतो वृत्ताः पर्याया न भवन्ति नः ॥ १०४३ ॥
बह्वल्पविषयत्वेन तत्संकेतानुमानतः ।
सामान्यभेदवाच्यत्वमप्येषां न विरुध्यते ॥ १०४४ ॥

---

एवमतत्कार्यकारणपदार्थभेदादेकस्मिन् वस्तुनि श्रुतिभेदो दर्शितः । इदानीं तत्कार्यकारणपदार्थव्यवच्छेदमात्रप्रतिपादनेच्छयाऽन्तरेणापि सामान्यं श्रुतेर्भेदनिवेशनं दर्शयन्नाह – तत्कार्येत्यादि । [ G. 327 ] तौ = पूर्वोक्तौ, कार्यहेतू येषां ते तथोक्ताः। तेभ्यो विश्लेषः = व्यावृत्तिः ।

का पुनरसौ श्रुतिः ? इत्याह— अश्रावणमित्यादि । श्रोत्रज्ञानफलशब्दव्यवच्छेदेनाश्रावणं रूपमित्युच्यते । तथा प्रयत्नकारणघटादिपदार्थव्यवच्छेदेन विद्युदप्रयत्नजेत्यभिधीयते ॥ १०४१ ॥

एवमन्तरेणापि सामान्यादिकं वस्तुभूतं व्यावृत्तिकृतमेव शब्दानां भेदेन निवेशनमिति प्रतिपाद्य पर्यायत्वप्रसङ्गाभावं दर्शयन्नाह—इत्यादिनेत्यादि । आदिग्रहणेनावस्थाविशेषवाचका बालादिशब्दा नैरात्म्यादिशब्दा गृह्यन्ते । विभिन्नार्थनिबन्धना इति । विभिन्नतस्ततो व्यावृत्तोऽर्थो निबन्धनं यासां व्यावृत्तीनां तास्तथोक्ताः । तथेति व्यावृत्तिवत् । तन्निष्ठा इति व्यावृत्तार्थनिष्ठाः; प्रणालिकया तथाविधपदार्थाधिगतिहेतुत्वात् । श्रुतय इति शब्दाः ॥ १०४२–१०४३ ॥

स्यादेतत्—मा भूत् पर्यायत्वमेषाम्, अर्थभेदस्य परिकल्पितत्वात्; सामान्यविशेषवाचित्वव्यवस्था तु विना सामान्यविशेषाभ्यां कथमेषां सिद्ध्यतीति ? इत्यत आह—बह्वल्पेत्यादि । वृक्षशब्दो हि सर्वेष्वेव धवखदिरपलाशादिष्ववृक्षव्यव-

ताश्च व्यावृत्तयोऽर्थानां कल्पनामात्रनिर्मिताः ।
नापोह्याधारभेदेन भिद्यन्ते परमार्थतः ॥ १०४५ ॥
तासां हि बाह्यरूपत्वं कल्पितं तन्न वास्तवम् ।
भेदाभेदौ च तत्त्वेन वस्तुन्येव व्यवस्थितौ ॥ १०४६ ॥
स्वबीजानेकविश्लिष्टवस्तुसंकेतशक्तितः ।
विकल्पास्तु विभिद्यन्ते तद्रूपाध्यवसायिनः ॥ १०४७ ॥
नैकात्मतां प्रपद्यन्ते न भिद्यन्ते च खण्डशः ।
स्वलक्षणात्मका अर्था विकल्पः प्लवते त्वसौ ॥ १०४८ ॥

च्छेदमात्रानुस्यूतं[1] प्रतिबिम्बकं जनयति । तेनास्य[2] बहुविषयत्वात्[3] सामान्यं वाच्यमुच्यते । धवादिशब्दस्य तु खदिरादिव्यावृत्तिः कतिपयपादपावसायिविकल्पोत्पादकत्वाद् विशेषो वाच्य उच्यते ॥ १०४४ ॥

"ननु चापोह्यभेदेन" ( तत्त्व० ९२७ ) इत्यादावाह—तांश्चेत्यादि । [ '. 328 ] यदि हि पारमार्थिकोऽपोह्यभेदेनाधारभेदेनापोहभेदोऽभीष्टः स्यात्, तदैतद् दूषणं स्यात्; यावता कल्पनया सजातीयपदार्थभेदनिबन्धना व्यावृत्तयो भिन्नाः कल्प्यन्ते, न परमार्थतः ॥ १०४५ ॥

ताश्च कल्पनावशाद् व्यतिरिक्ता एव वस्तुनो भासन्ते, न परमार्थत इति दर्शयति— तासां हीत्यादि ।

कस्माद् वास्तवं न भवति ? इत्याह—भेदाभेदौ चेत्यादि ॥ १०४६ ॥

परमार्थतस्तु विकल्पा एव भिद्यन्त इति दर्शयति—स्वबीजानेकेत्यादि । स्वबीजं च[4] [4]अनादिविकल्पवासना, अनेकस्माद् विश्लिष्टं वस्तु च सङ्केतश्चेति विग्रहः, तेषां शक्तिः = सामर्थ्यम् । ततो विजातीयानेकपदार्थव्यावृत्तवस्त्वध्यवसायिनो[5] विकल्पा भिद्यन्ते, न त्वर्थाः ।' तथा हि—वृक्षत्वादिसामान्यरूपेण

---

१. ०मात्रानुमानं—पा० गा०, । २. वृक्षशब्दस्येत्यर्थः ।
३. बहु…यत्वात्—पा० । ४–४. वातादिविकल्प०—पा०, गा० ।
५. वस्तुव्यवसायिनो—पा०, गा० ।

एकधर्मान्वयासत्त्वेऽप्यपोह्यापोहगोचराः ।
वैलक्षण्येन गम्यन्ते भिन्नप्रत्यवमर्शतः ॥ १०४९ ॥
एकप्रत्यवमर्शे हि केचिदेवोपयोगिनः ।
प्रकृत्या भेदवत्त्वेऽपि नान्य इत्युपपादितम् ॥ १०५० ॥
अतद्रूपपरावृत्तं वस्तुमात्रं स्वलक्षणम् ।
यत्नेन क्रियमाणोऽयमन्वयो न विरुध्यते ॥ १०५१ ॥
यस्मिन्नधूमतो भिन्नं विद्यते हि स्वलक्षणम् ।
तस्मिन्ननग्नितोऽप्यस्ति परावृत्तं स्वलक्षणम् ॥ १०५२ ॥

---

नैकात्मतां घवादयः प्रतिपद्यन्ते । केवलं विकल्प एव तथा प्लवते, न त्वर्थः । यथोक्तम्—

"संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं च तेषु बुद्धेरुपप्लवः ॥"

( प्र० वा० ३.८६ ) इति ॥ १०४७–१०४८ ॥

यच्चोक्तम्—"न चाप्रसिद्धसारूप्यान्" ( तत्त्व० ९३१ ) इत्यादि, तत्राह—एकधर्मान्वयासत्त्वेऽपीत्यादि । अपोह्यश्चापोहगोचराश्चेति विग्रहः । तत्रापोह्या अश्वादयः; गोशब्दस्य तदपोहेन प्रवृत्तत्वात् । अपोहगोचराः शाबलेयादयः; तद्विषयत्वादगोपोहस्य । तेन यद्यप्येकस्य [ G. 329 ] सामान्यरूपस्यान्वयो नास्ति, तथाप्यभिन्नप्रत्यवमर्शहेतवो ये ते प्रसिद्धसारूप्या भवन्ति । ये तु विपरीताः, ते विपरीता इति ॥ १०४९ ॥

स्यादेतत्—तस्यैवैकप्रत्यवमर्शस्य हेतवोऽन्तरेण सामान्यमेकं कथमर्था भिन्नाः सिद्ध्यन्ति ? इत्यत आह—एकप्रत्यवमर्शे हीत्यादि । प्रतिपादितमेतत् सामान्यपरीक्षायाम्—यथा धात्र्यादयोऽन्तरेणापि सामान्यमेकार्थक्रियाकारिणो भवन्ति, तथैव प्रत्यवमर्शहेतवो भिन्ना अपि भावाः केचिदेव भविष्यन्तीति ॥ १०५० ॥

"न चान्वयविनिर्मुक्ता" ( तत्त्व० ९३३ ) इत्यादावाह—अतद्रूपेत्यादि । यद्यपि सामान्यं वस्तुभूतं नास्ति, तथापि विजातीयव्यावृत्तस्वलक्षणमात्रेणैवान्वयः क्रियमाणो न विरुध्यते ॥ १०५१ ॥

यथा महानसे चेह विद्यतेऽधूमभेदि तत्।
तस्मादनग्नितो भिन्नं विद्यतेऽत्र स्वलक्षणम् ॥ १०५३ ॥
असतो नरशृङ्गादेर्यच्च भिन्नं स्वलक्षणम्।
बुद्धिदीपादिवत् सर्वं व्यावृत्तं तत् स्थिरादपि ॥ १०५४ ॥
असद्रूपं तथा चेदं न शब्दादिस्वलक्षणम्।
इत्यनिर्दिष्टभेदेन[1] भवत्येवान्वयोऽमुना ॥ १०५५ ॥
अविविक्षतभेदं च तदेव परिकीर्त्तितम्।
सामान्यलक्षणत्वेन नानिष्टेरपरं पुनः ॥ १०५६ ॥

---

कथम्? इत्याह—यस्मिन्नित्यादि। यस्मिन्निति प्रदेशे। इह च विद्यते स्वलक्षणमधूमतो भेदीति पक्षधर्मोपदर्शनम्। तस्मादित्यादिना प्रमाणफलोपदर्शनम्। यदि[2] [2]वाऽवयवपञ्चकमपि स्वलक्षणेनान्वये क्रियमाणे [3]शक्योपदर्शनमिति दर्शयति ॥ १०५२–१०५३ ॥

इदं च कार्यहेतावुक्तम्। स्वभावहेतावाह—असत इत्यादि। [G. 330] यदसतो व्यावृत्तं स्वलक्षणमताद्रूप्यात् तत् सर्वं स्थिरादपि व्यावृत्तम्, यथा बुद्धिदीपादयः। तथा चेदं शब्दादिस्वलक्षणमसद्रूपं न भवतीति। अतोऽमुना न्यायेन विशेषासंस्पर्शात् स्वलक्षणेनान्वयः क्रियमाणो न विरुध्यते। अयं च 'सत्त्वात्' इत्यस्य हेतोरन्वयो दर्शितः ॥ १०५४–१०५५ ॥

यद्येवम्, स्वलक्षणेनैवान्वयः, कथमिदानीं सामान्यलक्षणविषयमनुमानं सिध्यति? इत्यत आह—अविवक्षितभेदं चेत्यादि। तदेव हि स्वलक्षणमविवक्षितभेदं सामान्यलक्षणमित्युक्तम्। सामान्येन = भेदापरामर्शेन, लक्ष्यते = व्यवसीयत इति सामान्यलक्षणम्। नापरं पुनरिति। तीर्थिकाभिमतम्; तस्यानिष्टत्वात्। यथोक्तम्—

"तस्य स्वपररूपाभ्यां गतेर्मेयद्वयं मतम्।" (प्र॰ वा॰ २.१) इति।

---

१. इत्थं नि॰—पा॰, गा॰। २–२. यद्वा—गा॰।
३. क्ष्यो—पा॰।

शबलापत्यतो भेदे बाहुलेयाश्वयोः समे ।
तुरङ्गपरिहारेण गोत्वं किं तत्र वर्त्तते ॥ १०५७ ॥
तस्य व्यक्तौ समर्थात्मा स एवेति यदीष्यते ।
तुल्यप्रत्यवमर्शेऽपि स शक्तो न तुरङ्गमः ॥ १०५८ ॥
तादृक् प्रत्यवमर्शश्च विद्यते यत्र वस्तुनि ।

---

तथाऽपरमुक्तम्—

"अतद्रूपपरावृत्तवस्तुमात्रसमाश्रयात् ।
सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः ॥" ( ) इति ।

तेन साहचर्यमपि लिङ्गशब्दयो. स्वलक्षणेनैव कथ्यते । न चाप्यदर्शनमात्रेणास्माभिर्विपक्षे लिङ्गस्याभावोऽवसीयते, किं तर्हि ? अनुपलम्भविशेषादिति भावः ॥ १०५६ ॥

यच्चोक्तम्—"शाबलेयाच्च भिन्नत्वम्" (तत्त्व० ९३७) इत्यादि, तत्राह—शबलापत्यत इत्यादि । इदं हि [1]भवान् वक्तुमर्हति—शाबलेयाच्च [2]बाहुलेयाश्वयोस्तुल्येऽपि भेदे सति किमिति तुरङ्गमपरिहारेण गोत्वं तत्रैव शाबलेयादौ वर्त्तते, नाश्व इति ॥ १०५७ ॥

स्यादेतत्—किमत्र वक्तव्यम्, तस्य हि गोत्वस्याभिव्यक्तौ शाबलेयादिरेव समर्थः, नाश्वादिः, अतस्तत्रैव तद्वर्त्तते, नान्यत्र । न चायं पर्यनुयोगो युज्यते, कस्मात् ? तस्याभिव्यक्तौ स एव शाबलेयादिः समर्थो भवति, नान्य[3] इति[3]; यतो वस्तुस्वभावप्रतिनियमोऽयम्, न हि वस्तूनां स्वभावः पर्यनुयोगमर्हति, तेषां स्वहेतुपरम्पराकृतत्वात् स्वभावभेदप्रतिनियमस्येति ? अत्राह—तस्य व्यक्तावित्यादि । [G. 331] तस्येति गोत्वस्य । स एवेति । शाबलेयादिः, न पुनरश्वः । यद्येवम्, सत्यपि भेदे सामान्यमन्तरेणापि तुल्यप्रत्यवमर्शोत्पादने शाबलेयादिरेव शक्तः, न तुरङ्गम इत्ययमस्मत्पक्षो न विरुध्यत एव ॥ १०५८ ॥

---

१. कुमारिल इत्यर्थः । २. बाहुलेयाच्च०—पा०, गा० ।
३–३. पा० पुस्तके नास्ति; इति—गा० ।

तत्राभावेऽपि गोजातेरगोऽपोहः प्रवर्त्तते ॥ १०५९ ॥
अगोभिन्नं च यद् वस्तु तदक्षैर्व्यवसीयते ।
प्रतिबिम्बं तदध्यस्तं स्वसंवित्त्याऽवगम्यते ॥ १०६० ॥
इदं दृष्ट्वा च लोकेन शब्दस्तत्र प्रयुज्यते ।
सम्बन्धानुभवोऽप्यस्य व्यक्तं तेनोपपद्यते ॥ १०६१ ॥
तादृक् प्रत्यवमर्शश्च यत्र नैवास्ति वस्तुनि ।
अगोशब्दाभिधेयत्वं विस्पष्टं तत्र गम्यते ॥ १०६२ ॥
गावोऽगावश्च संसिद्धा भिन्नप्रत्यवमर्शतः ।
शब्दस्तु केवलोऽसिद्धो यथेष्टं सम्प्रयुज्यते ॥ १०६३ ॥

---

ततश्च किं जातम्? इत्याह—तादृगित्यादि । यत्र शावलेयादौ वस्तुनि तादृक् = गौर्गौरिति, प्रत्यवमर्शः = प्रत्ययो जायते, तत्रैवासत्यामपि गोजातौ वस्तुभूतायामगोपोहः प्रतिबिम्बात्मा प्रवर्त्तते ॥ १०५९ ॥

यच्चोक्तम्—"इन्द्रियैः" ( तत्त्व० ९३८ ) तदसिद्धमिति द[illegible]ह—अगोभिन्नं चेत्यादि । तत्र स्वलक्षणात्मा तावदपोह इन्द्रियैरवगम्यत एव । [1]यश्चार्थप्रतिबिम्बात्माऽपोहः, स परमार्थतो बुद्धिस्वभावत्वात् स्वसंवेदनप्रत्यक्षत एव सिद्धः । चकारोऽनुक्तार्थसमुच्चये । तेन प्रसज्यात्मापि सामर्थ्यात् प्रतीयत एव 'न तदात्मा परात्मा' इति दर्शितं भवति । तेनेदमेव स्वलक्षणादिरूपमपोहं दृष्ट्वा ज्ञात्वा[2] च[2] शब्दो लोकेन प्रयुज्यते, न तु सामान्यं वस्तुभूतम्; तस्यासत्त्वादप्रतिभासनाच्च । यदेव च दृष्ट्वा लोकेन शब्दः प्रयुज्यते, तेनैव तस्य सम्बन्धोऽवगम्यते; नान्येन; अतिप्रसङ्गात् ॥ १०६०–१०६१ ॥

यदुक्तम्—"अगोशब्दाभिधेयत्वं गम्यतां च कथं पुनः" (तत्त्व० ९४०) इति, अत्राह—तादृगित्यादि ॥ १०६२ ॥

यच्चोक्तम्—"सिद्धश्चागौरपोह्येत" ( तत्त्व० ९४२ ) इत्यादि, तत्राह—गावोऽगावश्चेत्यादि । [ G. 332 ] स्वत एव हि गवादयो भावा भिन्नप्रत्य-

---

१. यस्त्वार्थ०—पा०, गा० । २–२. पा०, गा० पुस्तकयोर्नास्ति ।

न ह्यन्यग्रहणं वस्तु भिन्नं वित्तावपेक्षते।
अन्योऽन्याश्रयदोषोऽयं तस्मादस्मिन्निरास्पदः ॥ १०६४ ॥
अवेद्यबाह्यतत्त्वाऽपि [1]प्रकृत्योपप्लवादियम्।
स्वोल्लेखं बाह्यरूपेण शब्दधीरध्यवस्यति ॥ १०६५ ॥
एतावत् क्रियते शब्दैर्नार्थं शब्दाः स्पृशन्त्यपि।
नापोहेन विशिष्टश्च कश्चिदर्थोऽभिधीयते ॥ १०६६ ॥
अर्थान्तरनिवृत्त्या[2] हि विशिष्टानिति[2] यत् पुनः।
प्रोक्तं लक्षणकारेण तत्रार्थोऽयं विवक्षितः ॥ १०६७ ॥

---

वमर्शं जनयन्तो विभागेन सम्यग् निश्चिताः। तेषु व्यवहारार्थं व्यवहर्तृभिर्यथेष्टं शब्दोऽसिद्धः प्रयुज्यते। तथा हि—यदि[3] भिन्नवस्तुस्वरूपप्रतिपत्त्यर्थमन्यपदार्थग्रहणमपेक्षते, तदा स्यादितरेतराश्रयदोषः, यावताऽन्यग्रहणमन्तरेणैव भिन्नं वस्तु संवेद्यते, तस्मिन् भिन्नाकारप्रत्यवमर्शहेतुतया विभागेन सिद्धे सति गौरगौरिति च यथेष्टं सङ्केतः क्रियत इति कथमितरेतराश्रयत्वं भवेत्। वित्ताविति। वित्त्यर्थम् ॥ १०६३–१०६४ ॥

यच्चोक्तम्—"नाधाराधेयवृत्त्यादि" (तत्त्व० ९४४) इत्यादि,[4] तत्राह—अवेद्यबाह्यतत्त्वापीत्यादि। न हि परमार्थेन कश्चिदपोहेन विशिष्टोऽर्थः शब्दैरभिधीयते। यतः प्रतिपादितमेतत्—यथा न किञ्चिदपि शब्दैर्वस्तु संस्पृश्यते, क्वचिदपि [5]समयाभावादिति। तथा हि—शाब्दी बुद्धिरबाह्यार्थविषयापि सती स्वोल्लेखम् = स्वाकारं बाह्यार्थतयाध्यवस्यन्ती जायते, न परमार्थतो वस्तुस्वभावं स्पृशति; यथातत्त्वमनध्यवसायात् ॥ १०६५–१०६६ ॥

यद्येवम्, कथमाचार्येणोक्तम्—"नीलोत्पलादिशब्दा अर्थान्तरनिवृत्तिविशिष्टानर्थानाहुः" (      ) इति? अत आह—अर्थान्तरेत्यादि ॥ १०६७ ॥

---

१. प्रकृष्टो०—पा०, गा०। २–२. ०निवृत्त्याहुर्विशिष्टा०-पा०, गा०
३. ०वस्तुस्वरूपं प्रति०—पा० गा०। ४. पा० पुस्तके नास्ति; इति—गा०।
५. सामया०—पा०, गा०।

अन्यान्यत्वेन ये भावा हेतुना करणेन वा ।
विशिष्टा भिन्नजातीयैरसङ्कीर्णा विनिश्चिताः ॥ १०६८ ॥
वृक्षादीनाहतान् ध्वानस्तद्भावाध्यवसायिनः ।
ज्ञानस्योत्पादनादेतज्जात्यादेः प्रतिषेधनम् ॥ १०६९ ॥
बुद्धौ ये वा विवर्त्तन्ते तानाहाभ्यन्तरानयम् ।
निवृत्त्या च विशिष्टत्वमुक्तमेषामनन्तरम् ॥ १०७० ॥
अर्थान्तरपरावृत्त्या गम्यते तस्य वस्तुनः ।
कश्चिद् भाग इति प्रोक्तं तदेव प्रतिबिम्बकम् ॥ १०७१ ॥

---

कोऽसावर्थो विवक्षितः ? इत्याह—अन्यान्यत्वेनेत्यादि । द्विविधो ह्यर्थः—बाह्यः, बुद्ध्यारूढश्च । तत्र बाह्ये न परमार्थतोऽभिधानं शब्दैः, केवलं तदध्यवसायिविकल्पोत्पादादुपचारादुक्तम्—शब्दोऽर्थानाहेति । उपचारस्य च [G. 333] प्रयोजनम्—जात्यभिधाननिराकरणमिति समुदायार्थः ।

अवयवार्थस्तूच्यते—अन्यान्यत्वेनेति । अन्यस्मादन्यत्वम् = व्यावृत्तिः, तेनान्यान्यत्वेन हेतुना करणेन वा वृक्षादयो भावा विशिष्टा निश्चिताः । अन्यतो व्यावृत्ताः, निश्चिता इति यावत् । एतेनार्थान्तरनिवृत्तिविशिष्टानित्यत्र पदे 'निवृत्त्या' इति तृतीयार्थो व्याख्यातः । ध्वान इति । शब्दः ॥ १०६८–१०६९ ॥

यस्तु बुद्ध्यारूढोऽर्थः, तस्य मुख्यत एव शब्दैरभिधानमिति दर्शयति—बुद्धावित्यादि । अयमिति ध्वानः । अथार्थान्तरनिवृत्तिविशिष्टत्वं कथमेषां योजनीयम् ? इत्याह—निवृत्त्या चेत्यादि । अनन्तरमिति[1] "अन्यान्यत्वेन" (तत्त्व० १०६८) इत्यादिना । तेषामपि बुद्धिसमारूढानामर्थानामन्यतो व्यावृत्तया प्रतिभासनात्[2] ॥ १०७० ॥

ननु यदि न कश्चिदेव वस्त्वंशः शब्देन प्रतिपाद्यते, तत् कथमुक्तमाचार्येण "अर्थान्तरनिवृत्त्या कश्चिदेव वस्तुनो भागो गम्यते" इति ? अत आह—अर्थान्तरपरावृत्त्येत्यादि ॥ १०७१ ॥

---

१. अन्तरमिति—जै० । २. प्रतिपादनात्—पा०, गा० ।

अर्थान्तरपरावृत्तवस्तुदर्शनसंश्रयात्
आगतेस्तत्र चारोपात् तस्य भागोऽपदिश्यते ॥ १०७२ ॥
हेत्वर्थः करणार्थश्च पूर्ववत् तेन चात्मना[1]।
यदि वस्तु विजातीयान्न स्याद् भिन्नं न तत्तथा ॥ १०७३ ॥
अगोनिवृत्तिरन्यत्वं तस्य चात्मगतैव सा।
भेदोक्तावप्यभावस्तु केवलो न निवर्त्तनम्[2] ॥ १०७४ ॥
तद्विशेषणभावेऽपि वस्तुधीर्न विहीयते।
कल्पनानिर्मितं चेदमभेदेऽपि विशेषणम् ॥ १०७५ ॥

---

ननु बुद्धिधर्मत्वात् प्रतिबिम्बस्य कथं वस्तुभागत्वमुपपद्यते ? इत्यत आह— अर्थान्तरपरावृत्तेत्यादि। अर्थान्तरपरावृत्तवस्तुदर्शनद्वारायातत्वात् तत्रार्थान्तरपरावृत्ते वस्तुनि भ्रान्तैस्तादात्म्येनारोपितत्वात् तदेव प्रतिबिम्बकमुपचाराद् वस्तुनो भाग इति व्यपदिश्यते ॥ १०७२ ॥

अत्रापि 'अर्थान्तरपरावृत्त्या' इति तृतीयार्थं योजयन्नाह— हेत्वर्थ इत्यादि। पूर्ववदिति। यथा 'अर्थान्तरनिवृत्तिविशिष्टानाह' इत्यत्र 'अन्यान्यत्वेन' इत्यादिना दर्शितम्, [3]तथात्रापि योजनीयमित्यर्थः। अथ वा—सर्वत्रैवेत्थम्भूतलक्षणा तृतीयेयमिति [G. 334] दर्शयति—तेन चात्मनेति[4]। ननु "[5]चार्थान्तरनिवृत्तिर्बाह्यवस्तुगतो धर्मः, सा[6] कथं प्रतिबिम्बाधिगमे हेतुभावं करणभावं वा प्रतिपद्यत इति ? अत्राह— यदि वस्तु विजातीयादित्यादि। यदि हि विजातीयात् पदार्थाद्व्यावृत्तं वस्तु न स्यात्, तदा न तत्प्रतिबिम्बात्मक तथा विजातीयपरावृत्तवस्त्वात्मना व्यवसीयेत। तस्मादर्थान्तरपरावृत्तेर्हेतुभावः, करणभावश्च युज्यत इति भावः ॥ १०७३ ॥

"न चान्यरूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम्" (तत्त्व० ९४८) इत्यादावाह—अगोनिवृत्तिरन्यत्वमित्यादि। यदि ह्यन्यव्यावृत्तिर्भावरूपा वस्तुनो विशेषणत्वेनाभिप्रेता स्यात्, तदैतत् सर्वं दूषणमुपपद्यते, यावता वस्तुस्वरूपैवान्य-

---

१. वात्मना—पा०, गा०। २. निवर्तते—पा०, गा०।
३. तत्रापि—पा०। ४. वात्मनेति—पा०, गा०।
५. बाधान्तर०—पा०, गा०। ६. निवृत्तिरित्यर्थः।

सोऽपकृष्य[1] ततो धर्मः स्थापितो भेदवानिव ।
येन दण्डादिवत् तस्य जायते हि विशेषणम् ॥ १०७६ ॥
प्रतिभासश्च शब्दार्थ इत्याहुस्तत्त्वचिन्तकाः ।
दृश्यकल्पाविभागज्ञो लोको बाह्यं तु मन्यते ॥ १०७७ ॥

---

निवृत्तिर्विशेषणत्वेनोपादीयते, तेन विशेषणानुरूपैव विशेष्यबुद्धिर्भवत्येव । तथा हि—अगोनिवृत्तिर्या गोरभिधीयते साऽश्वादिभ्यो गोर्यदन्यत्वं तत्स्वभावैव, नान्या । ततश्च यद्यप्यसौ व्यतिरेकेणागोनिवृत्तिर्गोरित्यभिधीयते भेदान्तरप्रतिक्षेपमात्रजिज्ञासायाम्, तथापि परमार्थतस्तस्य गोरात्मगतैव सा, यथा—अन्यत्वम् । न ह्यन्यत्वं नामान्यस्माद् वस्तुनोऽन्यत्, अपि तु तदेव; अन्यथा तद्वस्तु ततोऽन्यन्न[2] सिद्ध्येत । तत् = तस्मात्, विशेषणभावेऽप्यन्यव्यावृत्तेर्विशेष्ये वस्तुधीर्भवत्येव ।

स्यादेतद्—व्यतिरिक्तमेव हि विशेष्याद्विशेषणं लोके प्रसिद्धम्, यथा—दण्डः पुरुषस्य; व्यावृत्तिश्चाव्यतिरिक्ता वस्तुनः, तत्कथमसौ तस्य विशेषणं युज्यते ? इत्याह—कल्पनेत्यादि । न हि परमार्थेन न किञ्चित् कस्यचिद्विशेषणं युक्तम्; अनुपकारकस्य विशेणत्वायोगात्, उपकारकत्वे चाङ्गीक्रियमाणे कार्यकाले कारणस्यानवस्थानादयुगपत्कालभाविनोर्न विशेषणविशेष्यभावो युक्तः, युगपत्कालभावित्वे तु तदानीं सर्वात्मना परिनिष्पत्तेर्न परस्परमुपकारोऽस्तीति न युक्तो विशेषणविशेष्यभावः । तत्तस्मात् सर्वभावानां स्वस्वभावस्थितत्वेनायःशलाकाकल्पत्वात् केवलं कल्पनयाऽमीषां [G. 335] मिश्रीकरणम् । तेन परमार्थतो यद्यपि व्यावृत्तितद्वतोरभेदः, तथापि कल्पनारचितं भेदमाश्रित्य विशेष्यविशेणभावो भविष्यति ॥ १०७४–१०७६ ॥

यच्चोक्तम्—"यदा [3]चाशब्दवाच्यत्वान्न व्यक्तीनामपोहता" (तत्त्व० ९५४) इत्यादि । तत्राह–प्रतिभासश्चेत्यादि । 'व्यक्तीनामवाच्यत्वात्' इत्यसिद्धम् । तथा हि—यद्व्यक्तीनामवाच्यत्वमस्माभिर्वर्णितं तत् परमार्थचिन्तायाम्, न

---

१. सापकृष्य—जै० । २. ०न्यस्मिन्न—पा०, गा० ।
३. चाशब्द०—पा०, गा० ।

तस्यातोऽध्यवसायेन व्यक्तीनामेव वाच्यता ।
तत्त्वस्तु[1] न शब्दानां वाच्यमस्तीति साधितम् ॥ १०७८ ॥
इत्थं च शब्दवाच्यत्वाद् व्यक्तीनामस्त्यपोह्यता ।
सामान्यस्य तु नापोहो न चापोहेऽपि वस्तुता ॥ १०७९ ॥
नाभावोऽपोह्यते ह्येवं नाभावोऽभाव इत्ययम् ।
भावस्तु न तदात्मेति तस्येष्टैवमपोह्यता ॥ १०८० ॥
यो नाम न यदात्मा हि स तस्यापोह उच्यते ।
न भावोऽभावरूपश्च तदपोहे न वस्तुता ॥ १०८१ ॥

---

पुनः संवृत्त्यापि । संवृत्त्या तु व्यक्तीनामेव वाच्यत्वमविचाररमणीयतया प्रसिद्धमित्यसिद्धो हेतुः । दृश्यः = बाह्यः स्वलक्षणात्मा, [2]कल्पः = विकल्प्यो विकल्पज्ञानपरिवर्त्ती प्रतिभासः । अथ पारमार्थिकमवाच्यत्वं हेतुत्वेनोपादीयते, तदाऽपोह्यत्वमपि व्यक्तीनां परमार्थतो नेष्टमित्यतः सिद्धसाध्यता ? इति दर्शयति—तत्त्वतश्चेत्यादि ॥ १०७७–१०७८ ॥

इत्थमित्यादिना हेतोरसिद्धतामेव निगमयति । यच्चोक्तम्—"तदापोह्येत[3] सामान्यं तस्यापोहाच्च वस्तुता" (तत्त्व० ९५४) इति, तत्रापि 'अपोह्यत्वात्' इत्यस्य हेतोरसिद्धत्वमनैकान्तिकत्वं चेति दर्शयति—सामान्यस्येत्यादिना । अपोह इति । व्यक्तीनामेवापोहस्य प्रतिपादितत्वात् । न चापोहेऽपि वस्तुतेति । साध्यविपर्यये हेतोर्बाधकप्रमाणाभावादिति भावः ॥ १०७९ ॥

यच्चोक्तम्—"नापोह्यत्वमभावानाम्" (तत्त्व० ९५४) इत्यादि, तत्राह—नाभाव इत्यादि । 'अभावो नाभावः' इत्येवमभावो नापोह्यते, येनाभावरूपतायास्त्यागः स्यात्, किं तर्हि ? भावः, यः स विधिरूपत्वादभावरूपविवेकेनावस्थित इति सामर्थ्यादपोह्यत्वं तस्याभावस्येष्टम् ॥ १०८० ॥

[ G. 336 ] एनमेव[4] स्पष्टीकुर्वन्नाह—यो नामेत्यादि । तदपोह इति । तस्याभावस्यैवमपोहे सति न वस्तुता प्राप्नोति ॥ १०८१ ॥

---

१. तत्त्वतश्च—पा०, गा० । २. जै०, पा० पुस्तयोर्नास्ति । ३. तदापोह्यो न—पा०, गा० । ४. एतदेव—पा०, गा० ।

प्रकृतीशादिजन्यत्वं वस्तूनां नेति चोदिते ।
प्रकृतीशादिजन्यत्वं न हि वस्तु प्रसिद्ध्यति ॥ १०८२ ॥
नातोऽसतोऽपि भावत्वमिति क्लेशो न कश्चन ।
तस्य सिद्धौ च सत्ताऽस्ति सा चासत्ता प्रसिध्यति ॥ १०८३ ॥
अगोतो विनिवृत्तिश्च गौर्विलक्षण इष्यते ।
भाव एव ततो नायं गौरगोर्मे प्रसज्यते ॥ १०८४ ॥

---

अत्रोभयपक्षप्रसिद्धोदाहरणोपदर्शनेनानैकान्तिकतामेव स्फुटयन्नाह—प्रकृतीशादिजन्यत्वमित्यादि । तथा हि—प्रकृतीश्वरकालादिकृतत्वं भावानां भवद्भिर्मीमांसकैरपि नेष्यत एव; तस्य च प्रतिषेधे सत्यपि यथा न वस्तुत्वमापद्यते, तथा अगोत्वेऽप्यभावस्य वस्तुत्वापत्तिर्न भविष्यतीत्यनेकान्तः ॥ १०८२ ॥

यदुक्तम्—"तत्रासतोऽपि [1]भावत्वमिति क्लेशो महान् भवेत्" ( तत्त्व० ९५८ ) इति । तदप्यनेनैवानैकान्तत्वप्रतिपादनेन प्रतिविहितमिति दर्शयति—नातोऽसतोऽपीत्यादि । "तदसिद्धौ न सत्तास्ति न चासत्ता प्रसिद्ध्यति" ( तत्त्व० ९५८ ) इत्यत्राह–तस्य सिद्धौ च सत्ताऽस्तीत्यादि । तस्याभावस्य यथोक्तेन प्रकारेण सिद्धौ सत्यामपि च[2] भावस्य सत्ता सिद्ध्यत्येव; तस्य स्वस्वभावव्यवस्थितत्वात् । या चाभावस्य यथोक्तेन प्रकारेण सिद्धिः सैवासत्तेति प्रसिद्ध्यति । एतच्च प्रतिसमाधानस्य समानत्वादिति कृत्वा अत्रैव प्रतिविहितम् ॥ १०८३ ॥

इदानीं यथानुक्रममेव प्रतिसमाधानमाह । तत्र यदुक्तम्—"अभावस्य च योऽभावः" ( तत्त्व० ९५६ ) इत्यादि, तत्राह—अगोत इत्यादि । 'भाव एव [3]भवेत्' इत्येतन्नानिष्टत्वापादनम्; इष्टत्वात् । तथा हि—अगोरूपादश्वादेर्गोर्भावविशेषरूप एव विलक्षण इष्यते, नाभावात्मा, तेन भाव एव भवेत् । अगोतश्च गोर्वैलक्षण्यस्येष्टत्वादगोर्न गोत्वप्रसङ्गः ॥ १०८४ ॥

---

१. वस्तुत्व०—पा०, गा० । २. पा०, गा० पुस्तकयोर्नास्ति ।
३. स[?]चेदि०—पा०, गा० ।

अवस्तुविषयेऽप्यस्ति चेतोमात्रविनिर्मिता ।
विचित्रकल्पनाभेदरचितेष्विव वासना ॥ १०८५ ॥
ततश्च वासनाभेदाद् भेदः सद्रूपतापि च ।
प्रकल्प्यते ह्यपोहानां कल्पनारचितेष्विव ॥ १०८६ ॥
यादृशोऽर्थान्तरापोहो वाच्योऽयं प्रतिपादितः ।
शब्दान्तरव्यपोहोऽपि तादृगेवावगम्यताम् ॥ १०८७ ॥
वस्त्वित्यध्यवसायत्वान्नावस्तुत्वमपोहयोः ।
प्रसिद्धं सांवृते मार्गे तात्त्विके त्विष्टसाधनम् ॥ १०८८ ॥

---

[G. 337] यच्चोक्तम्—"न ह्यवस्तुनि वासना[1]" (तत्त्व० ९५९) इति, तदसिद्धम्, अनैकान्तिकं चेति दर्शयन्नाह—अवस्तुविषयेऽप्यस्तीत्यादि ।

अवस्तुविषयं चेतो नास्तीत्येतदसिद्धम् । तथा हि—[2]उत्पाद्यकत्वाविषयसमुद्भूतवस्त्वाकारसमारोपेण प्रवर्त्तत एव चेतः, तच्चानागतसजातीयविकल्पोत्पत्तयेऽनन्तरचेतसि वासनामाधत्त एव; यतः पुनरपि सन्तानपरिपाकवशात् प्रबोधकं प्रत्ययमासाद्य तथाविधमेव चेतः समुपजायते । तद्वदपोहानामपि परस्परतो भेदः, सद्रूपता च कल्पनावशाद् भविष्यतीत्यनैकान्तिकता । अवयवार्थस्तु सुबोधत्वान्न विभक्तः ॥ १०८५-१०८६ ॥

यच्चोक्तम्—"भवद्भिः शब्दभेदोऽपि तन्निमित्तो न लभ्यते" (तत्त्व० ९६०) इति, तत्राह—यादृश इत्यादि । यादृश इति प्रतिबिम्बात्मा । तस्य च प्रतिबिम्बान्तराद् भेदः स्फुटतरमेव संवेद्यत इति । अतो विस्तरेण यदुक्तं तत् सर्वमसङ्गतमिति भावः ॥ १०८७ ॥

"न गम्यगमकत्वं स्यात्" (तत्त्व० ९६३) इत्यादप्रयोगे प्रातविधानमाह—वस्त्वित्यादि । यदि 'अवस्तुत्वात्' इति सामान्येनोपादीयते तदाहेतुर सिद्धः; यतः प्रतिबिम्बात्मनोर्वाच्यवाचकापोहयोर्बाह्यवस्तुत्वेन भ्रान्तैरध्यवसितत्वात् सांवृतं वस्तुत्वमस्त्येव ॥ १०८८ ॥

---

1. सा मता--पा०, गा० । 2. उत्पाद्यकत्वाल्पविषय०—गा० ।

न वाच्यं वाचकं वापि परमार्थेन किञ्चन।
क्षणभङ्गिषु भावेषु व्यापकत्ववियोगतः ॥ १०८९ ॥
तद् गम्यगमकत्वं चेत् सांवृतं प्रतिषिध्यते।
तात्त्विकीं समुपाश्रित्य विनिवृत्त्योरवस्तुताम् ॥ १०९० ॥
तथापि व्यभिचारित्वं दुर्वारमनुषज्यते।
कल्पनानिर्मितैरर्थैः[1] शब्दैस्तद्वाचकैरपि ॥ १०९१ ॥
न हि तेष्वस्ति सामान्यं वाच्यं तस्य च वाचकम्।

---

अथ पारमार्थिकमवस्तुत्वमाश्रित्य हेतुरभिधीयते, तदा सिद्धसाध्यता; न हि परमार्थतोऽस्माभिः किञ्चिद्वाच्यं वाचकं चेष्यते। एतदेव दर्शयति—न वाच्यमित्यादि। [G. 338] व्यापकत्ववियोगत इति। क्षणिकत्वेन सङ्केतव्यवहाराप्तकालव्यापकत्वाभावात् स्वलक्षणस्येत्यर्थः। स्यादेतत्—नास्माभिस्तात्त्विको वाच्यवाचकभावो निषिध्यते, किं तर्हि ? तात्त्विकीमपोहयोरवस्तुतामाश्रित्य सांवृतमेव गम्यगमकत्वं निषिध्यते, न भाविकम्, तेन न हेतोरसिद्धता, नापि सिद्धसाध्यता प्रतिज्ञादोषो भविष्यति ॥ १०८९ ॥

द्वयोरपि हि[2] सांवृतत्वे तात्त्विकत्वे चाश्रीयमाणे स्यादेतद्दोषद्वयम् ? इत्यत आह—तद्गम्यगमकत्वं चेत्यादि। एवं सति हेतोरनैकान्तिकता; कल्पनारचितेषु महाश्वेतादिष्वर्थेषु तद्वाचकेषु च शब्देषु परमार्थतो वस्तुत्वाभावेऽपि सांवृतस्य वाच्यवाचकभावस्य दर्शनात्। तद् दर्शयति—'कल्पनानिर्मितै'रित्यादि ॥ १०९०-१०९१ ॥

स्यादेतत्—तत्रापि महाश्वेतादिषु सामान्यं वाच्यं वाचकं च परमार्थतोऽस्त्येव, ततो न तैर्व्यभिचारः ? इत्याशङ्क्याह—न हीत्यादि। सामान्यपरीक्षायां सामान्यस्य विस्तरेण निरस्तत्वान्न तेषु सामान्यं वाच्यं वाचकं चास्तीत्यनैकान्तिकता हेतोः। तस्येति सामान्यस्य। 'वाचकम्' इत्यत्रापि सामान्यमिति प्रकृतेन सम्बध्यते।

---

१. विकल्परचितैरर्थैः—पा०, गा०। २. पा, गा० पुस्तकयोर्नास्ति।

न वाचकं[1] च[1] शब्दस्य क्षणभङ्गि स्वलक्षणम् ॥ १०९२ ॥
तस्मात् तद्द्वयमेष्टव्यं प्रतिबिम्बादि सांवृतम् ।
तेषु तद्व्यभिचारित्वं दुर्निवारमवस्थितम् ॥ १०९३ ॥
विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते ।
तदाभं जायते चेतः शब्दादर्थावसायि हि ॥ १०९४ ॥
स्वार्थाभिधाने शब्दानामर्थादन्यनिवर्त्तनम् ।
तद्युक्तौ[2] व्यतिरेकोऽपि मम तत्पूर्वको ह्यसौ ॥ १०९५ ॥

---

स्यादेतद्—यद्यपि तत्र वस्तुभूतं नास्ति वाच्यम्, वाचकं तु महास्त्रेतादिशब्दस्वलक्षणमस्त्येव ? इत्यत आह—न वाचकं च शब्दस्येत्यादि । सर्वपदार्थव्यापिनः क्षणभङ्गस्य प्रतिपादितत्वान्न शब्दस्वलक्षणस्य वाचकत्वम्; क्षणभङ्गित्वेन तस्य सङ्केतासम्भवात्, व्यवहारकालानन्वयाच्चेति प्रतिपादितम् ॥ १०९२ ॥

तस्मादित्यादिनोपसंहरति । द्वयमिति वाच्यं वाचकं च । प्रतिबिम्बादीत्यादिशब्देन निराकारज्ञानाभ्युपगमेऽपि [G. 339] स्वगतमन्यत् किञ्चित् प्रतिनियतमनर्थेऽर्थाध्यवसायिरूपस्य विज्ञानस्यावश्यमङ्गीकर्त्तव्यमिति दर्शयति—तेष्विति । कल्पनोपरचितेष्वर्थेषु । तदिति तस्मात् । तस्य वा हेतोर्व्यभिचारित्वं तद्व्यभिचारित्वम्[3] ॥ १०९३ ॥

"विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते" ( तत्त्व० ९६५ ) इत्यत्राह—विधिरूपश्चेत्यादि । न ह्यस्माभिः सर्वथा विधिरूपः शब्दार्थो नाभ्युपगम्यते, येनैतद् भवताऽनिष्टप्रसङ्गापादनं क्रियते; यावता शब्दार्थाध्यवसायिनश्चेतसः समुत्पादात् सांवृतो विधिरूपः शब्दार्थोऽभीष्यत एव । तत्त्वतस्तु न किञ्चिद्वाच्यमस्ति शब्दानामिति विधिरूपस्तात्त्विको निषिध्यते । तेन सांवृतस्य विधिरूपस्य शब्दार्थस्येष्टत्वात् स्वार्थाभिधाने विधिरूपे सत्यन्वयव्यतिरेकस्य सामर्थ्याद‍धिगतेर्विधिपूर्वको युज्यत एव ॥ १०९४-१०९५ ॥

---

१–१. वाचकत्वं—पा०, गा० । २. तद्योगो—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।

असम्भवो विधेरुक्तः सामान्यादेरसम्भवात् ।
शब्दानां च विकल्पानां वस्तुनो विषयत्वतः ॥ १०९६ ॥
नीलोत्पलादिशब्देभ्य एक एवावसीयते ।
अनीलानुत्पलादिभ्यो व्यावृत्तं प्रतिबिम्बकम् ॥ १०९७ ॥
न त्वन्यापोहवद् वस्तु वाच्यमस्माभिरिष्यते ।
व्यावृत्तादन्यतोऽभावान्नान्याद् व्यावृत्तिरस्ति नः ॥ १०९८ ॥
तत् पारतन्त्र्यदोषोऽयं जाताविव न संगतः ।

---

स्यादेतद्—यदि विधिरूपः शब्दार्थोऽभ्युपगम्यते, कथं तर्हि हेतुमुखे[1] लक्षणकारेण "असम्भवो विधेः" इत्युक्तम्? इत्यत आह—असम्भव इत्यादि। सामान्यलक्षणादेर्वाच्यस्य वाचकस्य च परमार्थतोऽसंम्भवाच्छब्दानां विकल्पानां च वस्तुतः परमार्थतो विषयासम्भवात् परमार्थमाश्रित्य विधेरसम्भव उक्त आचार्येणेत्यविरोधः ॥ १०९६ ॥

"अपोहमात्रवाच्यत्वम्" (तत्त्व० ९६६) इत्यादावाह—नीलोत्पलादीत्यादि । एकमेवानीलानुत्पलव्यावृत्तमर्थाकारमुभयरूपं प्रतिबिम्बकं नीलोत्पलशब्दो वदति, नाभावमात्रम्; अतः शबलार्थाभिधायित्वमध्यवसायवशान्नीलोत्पलादिशब्दानामस्त्येवेति तदनुरोधात् सामानाधिकरण्यमुपपद्यत एव ॥ १०९७ ॥

[G. 340] यदुक्तम्—"अथान्यापोहवद्वस्तु वाच्यमित्यभिधीयते" (तत्त्व० ९७१) इति, अत्राह—न त्वन्यापोहवदित्यादि । यदि हि व्यावृत्ताद्भावाद् व्यावृत्तिर्नामान्या भवेत्, तदा स्यात् तद्वत् पक्षोदितदोषप्रसङ्गः, यावताऽन्यतो व्यावृत्ताद् भावान्नास्माकमन्या व्यावृत्तिरस्ति, अपि तु व्यावृत्त एव भावो भेदान्तरप्रतिक्षेपमात्रजिज्ञासायां तथाभिधीयते । तेन यथा जातौ प्राधान्येन वाच्यायां पारतन्त्र्येण तद्वतोऽभिधानात्तद्गतभेदानाक्षेपात् तेन[2] सह सामानाधिकरण्यादेरभावप्रसङ्ग उक्तः, तद्वदपोहपक्षे नावतरति; व्यतिरिक्तान्यापोहवतोऽनभिधानात् । तद्दर्शयति—तत्पारन्त्र्यदोषोऽयमित्यादि । तदिति तस्मात् ।

---

1. एतन्नामकेग्रन्थे इत्यर्थः ।
2. [illegible]तैः—इति जै०पुस्तके पाठान्तरम् ।

अवदातमिति प्रोक्ते शब्दस्यार्थेऽपृथक्त्वतः ॥ १०९९ ॥
विशेषणविशेष्यत्वसामानाधिकरण्ययोः ।
तस्मादपोहे शब्दार्थे व्यवस्था न विरुध्यते ॥ ११०० ॥
केवलान्नीलशब्दादेर्विशिष्टं प्रतिबिम्बकम् ।
कोकिलोत्पलभृङ्गादौ प्लवमानं प्रवर्त्तते ॥ ११०१ ॥
पिकाञ्जनाद्यपोहेन विशिष्टविषयं पुनः ।
तदिन्दीवरशब्देन स्थाप्यते परिनिश्चितम् ॥ ११०२ ॥
सामानाधिकरण्यादिरेवमस्मिन्न बाधितः ।
परपक्षे तु सर्वेषां तद्व्यवस्थाऽतिदुर्घटा ॥ ११०३ ॥

---

अवदातमिति प्रोक्त इति। विशुद्धधियाऽऽचार्यदिङ्नागेन प्रोक्तेऽपोहलक्षणे[1] शब्दार्थे । अत्र कारणमाह—अपृथक्त्वत इति। तस्यान्यापोहलक्षणस्य शब्दार्थताऽन्यापोढात् पदार्थादपृथक्त्वाद्, अव्यतिरेकादिति यावत्। विशेषण-विशेष्येत्यादि। सुबोधम् ॥ १०९८-११०० ॥

यथा च न विरुध्यते सामानाधिकरण्यादि, तथा दर्शयन्नाह -- केवला-दित्यादि। तथाहि—नीलमित्युक्ते पीतादिव्यावृत्तान्यपदार्थव्यवसायिभ्रमरकोकिलाञ्ज-नादिषु संशय्यमानरूपं विकल्पप्रतिबिम्बकमुदेति । तच्चोत्पलशब्देन कोकिलादिभ्यो [G. 341] व्यवच्छेद्यानुत्पलव्यावृत्तवस्तुविषये व्यवस्थाप्यमानं परिनिश्चितात्मकं प्रतीयते । तेन परस्परं यथोक्तबुद्धिप्रतिबिम्बकापेक्षया व्यवच्छेद्यव्यवच्छेदक-भावान्नीलोत्पलशब्दयोर्विशेष्यविशेषणभावो न विरुध्यते। द्वाभ्यां वाऽनीलानुत्पल-व्यावृत्तैकप्रतिबिम्बात्मकवस्तुप्रतिपादनादेकार्थवृत्तितया सामाधिकरण्यं च भवतीति समुदायार्थः ।

अवयवार्थस्तूच्यते – प्लवमानमिति । अलभमानप्रतिष्ठम्, संशयरूपमिति यावत्। पिकशब्दः कोकिलपर्यायः। शेषं सुबोधम्। स्यादेतद् – अस्मत्पक्षेऽपि सामानाधिकरण्यादिरविरुद्ध एव ? इत्येत आह – परपक्षे त्वित्यादि । तद्व्य-वस्थेति। तस्य सामानाधिकरण्यादेर्व्यवस्था तद्व्यवस्था ॥ ११०१-११०३ ॥

---

१. प्रोक्तापोहलक्षणे—जै०।

तथा ह्येकेन शब्देन सर्वथोक्तं स्वलक्षणम् ।
तथा चाभिहिते तस्मिन् कस्माद् भेदान्तरेऽमतिः ॥ ११०४ ॥
यदर्थमपरः शब्दः प्रयुज्येतात्र वस्तुनि[1] ।
सर्वथाऽभिहिते नो चेत् तदनेकं प्रसज्यते ॥ ११०५ ॥
नीलजातिर्गुणो वाऽपि नीलशब्देन चेद् गतः ।
अन्येन्दीवरजातिस्तु व्यवसेयोत्पलश्रुतेः ॥ ११०६ ॥

---

कथं दुर्घटेत्याह—तथा हीत्यादि । विधिशब्दार्थवादिपक्षे नीलादिशब्देनैवैकेनोत्पलादिस्वलक्षणेऽभिहिते किमुत्पलम्, आहोस्विदञ्जनम्—इत्येवमज्ञानं विशेषान्तरे न प्राप्नोति; सर्वात्मना तस्य वस्तुनः प्रतिपादितत्वात् । एकस्यैकदैकप्रतिपत्रपेक्षया ज्ञाताज्ञातत्वविरोधात् । तद् दर्शयति—कस्माद् भेदान्तरेऽमतिरिति । अमतिः = अज्ञानम् । कुत्सिता वा[2] मतिरमतिः । संशयः, विपर्यासश्चेति यावत् ।

ततश्च संशयविपर्यासाभावादुत्पलादिशब्दान्तरप्रयोगाकाङ्क्षा प्रयोक्तुश्च न प्राप्नोतीति दर्शयति—यदर्थमित्यादि । यदर्थमिति, यस्या अमतेर्निवृत्त्यर्थमित्यर्थः । अथापि स्यात्—तद्वस्त्वेकदेशेनाभिहितं न सर्वात्मना, तेन स्वभावान्तराभिधानायापरः शब्दोऽन्वेष्यत एव ? इत्यत आह—सर्वथेत्यादि । न ह्येकस्य वस्तुन एकदेशाः सन्ति, येनैकदेशेनाभिधानं स्यात्, एकत्वानेकत्वयोः परस्परपरिहारस्थितलक्षणत्वात् । ततश्च यावन्तस्ते[3] [3]एकदेशास्तावन्त्येव केवलं भवता वस्तूनि प्रतिपादितानीति नैकमनेकं सिध्येत् ॥ ११०४–११०५ ॥

स्यादेतत्—न नीलशब्देन द्रव्यमभिधीयते, किं तर्हि ? नीलाख्यो गुणः, तत्समवेता वा नीलत्वजातिः, उत्पलशब्देनाप्युत्पलजातिरेवोच्यते, न द्रव्यम्, तेन भिन्नार्थाभिधानादुत्पलशब्दान्तराकाङ्क्षा युज्यत एव ? इत्यत आह—नीलजातिरित्यादि । [G 342] अन्येन्दीवरजातिस्त्विति । अन्या चासाविन्दीवरजातिश्चेति समासः । व्यवसेयेति व्यवसातव्या । उत्पलश्रुतेरिति पञ्चम्यन्तम् ।

---

१. वस्तुतः—पा०, गा० ।   २. या—पा०, गा० ।
३–३. यावन्तश्चैक०—पा०, गा० ।

एवं सति तयोर्भेदाद् बकुलोत्पलशब्दवत् ।
सामानाधिकरण्यादिः सुतरां नोपपद्यते ॥ ११०७ ॥
गुणतज्जातिसम्बद्धं द्रव्यं चेत् प्रतिपाद्यते ।
नीलशब्देन यद्येवं व्यर्था स्यादुत्पलश्रुतिः ॥ ११०८ ॥
ताभ्यां यदेव सम्बद्धं तदेवोत्पलजातिमत् ।
नीलश्रुत्यैव तत् प्रोक्तं[1] व्यर्था नीलोत्पलश्रुतिः ॥ ११०९ ॥

---

अस्मिन् पक्षे सुतरामेव सामानाधिकरण्यमनुपपन्नम्; बकुलोत्पलशब्दयोरिवैकस्मिन्नर्थे नीलोत्पलशब्दयोर्वृत्त्यभावात् । न हि भवति—बकुलमुत्पलमिति ॥ ११०६–११०७ ॥

स्यादेतत्—नीलशब्दो यद्यपि जातिगुणविशेषवचनः, तथापि तद्द्वारेण नीलगुणतज्जातिभ्यां सम्बद्धं द्रव्यमपि तेनाभिधीयते; तथोत्पलशब्देनापि जातिद्वारेण तदेव द्रव्यमभिधीयते—इत्यतस्तयोरेकार्थवृत्तिसम्भवात् सामानाधिकरण्यं भविष्यति, न बकुलोत्पलशब्दयोः ? इत्यत आह—**गुणतज्जाती**त्यादि । गुणश्च नीलाख्यः, तज्जातिश्च नीलत्वाख्येति गुणतज्जाती, ताभ्यां सम्बद्धमिति विग्रहः । **व्यर्था स्यादुत्पलश्रुति**रिति । नीलशब्देनैव तस्य द्रव्यस्य प्रतिपादितत्वात् । एतदेव दर्शयति—**ताभ्या**मित्यादि । ताभ्यामिति गुणतज्जातिभ्याम् ।

स्यादेतत्—यद्यपि नीलशब्देन गुणतज्जातिमद् द्रव्यमभिधीयते, तथापि तस्य नीलशब्दस्यानेकार्थवृत्तिदर्शनात् प्रतिपत्तुरुत्पलार्थे निश्चितरूपा न बुद्धिरुपजायते, कोकिलादेरपि नीलत्वात् । अतोऽर्थान्तरसंशयव्यवच्छेदायोत्पलश्रुतेः[2] प्रयोगः सार्थक एवेति ? तदसम्यक्; प्रकृतार्थानभिज्ञतयाऽभिधानात् । विधिशब्दार्थपक्षे हि सामानाधिकरण्यादि नोपपद्यत इत्येतदत्र प्रकृतम् । यदि चोत्पलशब्दः संशयव्यवच्छेदायैव व्याप्रियते, न द्रव्यप्रतिपत्तये, न तर्हि विधिः शब्दार्थः स्यात्; उत्पलशब्देन भ्रान्तिसमारोपिताकारव्यवच्छेदमात्रस्यैव प्रतिपादनात् । परस्परविरुद्धं चेदमभिधीयते—नीलशब्देनोत्पलादिकं द्रव्यमभिधीयते,

---

१. तत्रोक्तं—पा०, गा० । २. ०च्छेदादुत्पल०—पा०, गा० ।

गुणतज्जातिसम्बद्धादन्यदुत्पलजातिमत् ।
यदि भिन्नाश्रये स्यातां पुनर्नीलोत्पलश्रुती ॥ १११० ॥
अथोत्पलत्वसम्बन्धिरूपत्वेन न चोदयेत्
गुणतज्जातिसम्बद्धं द्रव्यं नीलमिति ध्वनिः ॥ ११११ ॥
स्यान्नामोत्पलतायोगिरूपत्वमतदात्मकम् ।

---

अथ च प्रतिपत्तुस्तत्र निश्चयो न जायत इति। [G. 343] न हि यत्र संशयो जायते स शब्दार्थो युक्तः; अतिप्रसङ्गात्। नापि निश्चयेन विषयीकृते वस्तुनि संशयोऽवकाशं लभते; निश्चयारोपमनसोर्बाध्यबाधकभावात्।

स्यादेतत्—यद्यपि नीलोत्पलशब्दयोरेकस्मिन्नर्थे वृत्तिर्नास्ति, तदर्थयोस्तु गुणजात्योरेकस्मिन् द्रव्ये वृत्तिरस्तीत्यतोऽर्थद्वारकमनयोः सामानाधिकरण्यं भविष्यतीति ? तदेतदयुक्तम्; अतिप्रसङ्गात्। एवं हि रूपरसशब्दयोरपि सामानाधिकरण्यं स्यात्; तदर्थयो रूपरसयोरेकस्मिन् पृथिव्यादिद्रव्ये वृत्तेः।

किञ्च – 'नीलमुत्पलम्' इत्येकार्थविषया बुद्धिर्न प्राप्नोति; एकद्रव्यसमवेतयोर्गुणजात्योर्द्वाभ्यां पृथक् पृथगभिधानात्, न चैकार्थविषयज्ञानानुत्पादे शब्दयोः सामानाधिकरण्यमस्तीत्यलं बहुना ॥ ११०८-११०९ ॥

स्यादेतत्—न यदेव नीलगुणतज्जातिभ्यां सम्बद्धं वस्तु तदेवोत्पलशब्देनोच्यते, किं तर्हि? अन्यदेव, तेनोत्पलश्रुतिर्व्यर्था न भविष्यति ? इत्यत आह—गुणतज्जातिसम्बद्धादित्यादि। यदीत्यवच्छेदः। भिन्नाश्रये स्यातामिति। व्यधिकरणे स्यातामित्यर्थः ॥ १११० ॥

अथापि स्यात्—यद्यपि तदेव द्रव्यं नीलशब्देनोच्यते, उत्पलशब्देनापि तदेव; तथापि नीलशब्दो नोत्पलजातिसम्बन्धिरूपेण द्रव्यमभिधत्ते, किं तर्हि ? नीलगुणतज्जातिसम्बन्धिरूपेणैव, तेनोत्पलत्वजातिसम्बन्धिरूपत्वमस्याभिधातुमुत्पलश्रुतिः प्रवर्त्तमाना नानर्थिका भविष्यतीति ? तदेतदाशङ्क्य परिहरति—अथोत्पलत्वेत्यादि। अथ नीलमिति ध्वनिरुत्पलत्वसम्बन्धिरूपत्वेन गुणतज्जातिसम्बद्धं द्रव्यं न चोदयेदिति सम्बन्धः ॥ ११११ ॥

उत्पलत्वेन सम्बद्धं त्वाभ्यां सम्बद्धमेव तत् ॥ १११२ ॥
नीलश्रुत्या च तत्प्रोक्तं शाब्द्यात्र विषयीकृतम् ।
बुद्धया सर्वात्मना नांशैस्तदनर्थोत्पलश्रुतिः ॥ १११३ ॥
न चेद् भेदविनिर्मुक्ते कात्स्न्र्यभेदविकल्पनम् ।
न वाक्यार्थापरिज्ञानादिदं ह्यत्र विवक्षितम् ॥ १११४ ॥
प्रथमेनैव शब्देन सर्वथा तत् प्रकाशितम् ।
नात्मा कश्चित् परित्यक्तो यादृशं तत् तथोदितम् ॥ १११५ ॥

---

[ G. 344 ] तदेतदसम्यक् । न हि नीलगुणतज्जातिसम्बन्धिरूपत्वादन्यदेवोत्पलजातिसम्बन्धिरूपत्वम्, येन [1]नीलतज्जातिसम्बन्धिरूपत्वाभिधाने द्रव्यस्योत्पलत्वजातिसम्बन्धिरूपत्वाभिधानं न भवेत्, यावतैकस्माद् द्रव्यात् द्वयोरपि सम्बन्धिरूपत्वयोरव्यतिरेकात् तद्वत् तयोरप्येकत्वमेव—इत्ययुक्तमेकरूपाभिधानेऽपररूपानभिधानम् ।

किञ्चाभ्युपगम्योच्यते—भवतु नामोत्पलत्वसम्बन्धिरूपत्वं नीलतज्जातिसम्बन्धिरूपत्वादन्यत्, तथाप्युत्पलश्रुतिरनर्थिकैव । तथा हि—यत्तदनंशं वस्तूत्पलजात्या सम्बद्धं तदेवाभ्यां नीलगुणतज्जातिभ्यां सम्बध्यते, नान्यत्, तच्चानंशत्वात् सर्वात्मना नीलश्रुत्यैवाभिहितं शाब्द्या च बुद्धया व्यवसायात्मिकया विषयीकृतमिति किमपरमनभिहितमस्य स्वरूपमस्ति, यदभिधानायोत्पलश्रुतिः सार्थिका भवेत् ! ॥ १११२–१११३ ॥

उद्द्योतकरस्त्वाह—"निरंशे वस्तुनि सर्वात्मना विषयीकृतं नांशेनेत्येष विकल्पो नावतरति; सर्वशब्दस्यानेकार्थविषयत्वात्, एकशब्दस्य चावयववृत्तित्वात्" (                    ) इति, तदेतदाशङ्क्य परिहरति—न चेदित्यादि । भेदविनिर्मुक्त इति । निरवयवे वस्तुनीत्यर्थः । कात्स्न्र्यभेदविकल्पनमिति । सर्वात्मना विषयीकृतम्, नैकदेशेनेत्येवं[2] कात्स्न्र्यभेदाभ्यां विकल्पनम् । तदेतद् वाक्यार्थापरिज्ञानादुक्तम् । तथा हि—'प्रथमेनैव नीलशब्देन सर्वात्मना तत्प्रकाशितम्' इत्यस्यायमर्थो विवक्षितः—यादृशं तद्वस्तु तादृशमेवाभिहितम्, न तस्य कश्चित् स्व-

---

१. नीलोत्पलादिसम्बन्धि०—पा०, गा० । २. नैकदेशे०—पा०, गा० ।

एतेनैव प्रकारेण नान्येषामप्युदीदरणम् ।
सफलं तत्र शब्दानामुक्तौ पर्यायता ध्रुवम् ॥ १११६ ॥
अस्माकं तु न शब्देन बाह्यार्थः प्रतिपाद्यते ।
शब्दान्न चापि विज्ञानं बाह्यार्थविषयं मतम् ॥ १११७ ॥
यतः सर्वात्मना ताभ्यां विषयीकरणात् परम् ।
शब्दज्ञानान्तरं तत्र पर्यायत्वं प्रयास्यति ॥ १११८ ॥
प्रतिबिम्बं तु शब्देन क्रमेणैवोपजन्यते ।
एकत्वेन च तद्भाति बाह्यत्वेन च विभ्रमात् ॥ १११९ ॥

---

भावस्त्यक्तो यदभिधानायोत्पलश्रुतिर्व्याप्रियेत; निरंशत्वात्तस्य वस्तुन इति । अतो वाक्छलमेतत् ॥ १११४–१११५ ॥

एवं [1]यथोत्पलश्रुतिरनर्थिका, तथान्येषामप्यनित्यादिशब्दानां प्रयोगोऽनर्थकः प्राप्नोति, सति प्रयोगे पर्यायत्वमेव स्यात्, तरुपादपादिशब्दवदित्यतिदेशं कुर्वन्नाह—एतेनैवेत्यादि । [ G. 345 ] उदीरणमिति प्रयोगः । उक्ताविति उच्चारणे । तदुक्तम्—

"अन्यथैकेन शब्देन व्याप्त एकत्र वस्तुनि ।
बुद्ध्या वा नान्यविषय इति पर्यायता भवेत्" ॥

( द्र०–प्र० वा० ३.५० ) इति ॥ १११६ ॥

स्यादेतत्—भवत्पक्षेऽप्येकेन शब्देनाभिहिते वस्तुनि भेदान्तरे संशयविपर्यासाभावप्रसङ्गः, शब्दान्तराप्रवृत्तिप्रसङ्गश्च कस्मान्न भवति ? इत्यत आह—अस्माकं त्वित्यादि । ताभ्यामिति शब्दज्ञानाभ्याम् । परमिति उत्तरकालम् ॥ १११७–१११८ ॥

अथ सांवृत्ते शब्दार्थे कस्मादेष सामानाधिकरण्याभावे दोषो न भवति ? इत्यत आह—प्रतिबिम्बं त्वित्यादि । नीलशब्देन हि प्रथमतरमनीलपदार्थव्यावृत्तमुत्पलादिषु प्लवमानरूपतया तेषामप्रतिक्षेपकमध्यवसितबाह्यरूपं विकल्प-

---

१. यथा चो०—पा०, गा० ।

सामानाधिकरण्यादि प्रतिबिम्बानुरोधतः ।
परमार्थेन शब्दास्तु मता निर्विषया इमे ॥ ११२० ॥
लिङ्गसङ्ख्यादियोगस्तु व्यक्तीनामपि नास्त्ययम् ।
इच्छारचितसंकेतनिर्मित्तो न हि वास्तवः ॥ ११२१ ॥
तटी[1] तटं [1]तटश्चेति त्रैरूप्यं[2] न च वस्तुनः ।
शबलाभासताप्राप्तेः सर्वेषां तत्र चेतसाम् ॥ ११२२ ॥

---

प्रतिबिम्बकमुपजन्यते, पुनरुत्पलश्रुत्या तदेवानुत्पलव्यावृत्तमारोपितबाह्यैकवस्तुस्वरूपमुपजन्यते, तदेवं क्रमेणानीलानुत्पलव्यावृत्तमध्यवसितबाह्यैकरूपं भ्रान्तं विकल्पप्रतिबिम्बकमुपजन्यत इति तदनुरोधात् सांवृतं सामानाधिकरण्यादि युज्यत एव । परमार्थतस्तु कस्मान्न युज्यते ? इत्याह—परमार्थेनेत्यादि ॥ १११९–११२० ॥

यदुक्तम्—"लिङ्गसङ्ख्यादिसम्बन्धो न चापोहस्य विद्यते" ( तत्त्व० ९७२ ) इति, अत्राह—लिङ्गसङ्ख्यादीत्यादि । वस्तुधर्मत्वमेषां लिङ्गसङ्ख्यादीनामसिद्धम्; स्वतन्त्रेच्छाविरचितसङ्केतमात्रभावित्वात् । [ G. 3-6 ] व्यक्तीनामपीति अपिशब्दादपोहस्यापि । प्रयोगः—यो यदन्वयव्यतिरेकौ नानुविधत्ते, नासौ तद्धर्मः, यथा–शीतत्वमग्नेः । नानुविधत्ते च लिङ्गसङ्ख्यादि वस्तुनोऽन्वयव्यतिरेकाविति व्यापकानुपलब्धिः ॥ ११२१ ॥

न चायमसिद्धो हेतुरिति दर्शयन्नाह—तटी तटमित्यादि । यदि हि लिङ्गं वस्तुगतो धर्मः स्यात्, तदैकस्मिंस्तटाख्ये वस्तुनि तटी, तटः, तटमिति लिङ्गत्रययोगिशब्दप्रवृत्तेरेकस्य वस्तुनस्त्रैरूप्यप्रसङ्गः स्यात् । न चैकस्य स्त्रीपुन्नपुंसकाख्यं स्वभावत्रयं युक्तम्; एकत्वहानिप्रसङ्गात् । विरुद्धधर्माध्यासितस्याप्येकत्वे सर्वं विश्वमेकमेव वस्तु स्यात्, ततश्च सहोत्पत्तिविनाशप्रसङ्गः । किञ्च—सर्वस्यैव[3] वस्तुन [3]एकशब्देन शब्दान्तरेण वा लिङ्गत्रयप्रतिपत्तिदर्शनात् तद्विषयाणां सर्वचेतसां मेचकादिरत्नवच्छबलाभासताप्रसङ्गः ॥ ११२२ ॥

---

१–१. तटश्चेति—पा०, गा० । २. त्रैरूप्यं—पा०, गा० ।
३–३. सर्वस्यवक०—पा०, गा० ।

विवक्षानुगतत्वे वा न स्युस्तद्विषयाणि ते ।
तद्वशादेकरूपाणि नैकरूपं च वस्तु तत् ॥ ११२३ ॥
स्थितिप्रसवसंस्त्यानसंश्रया लिङ्गसंस्थितिः ।
यदि स्यादविभागेन त्रिलिङ्गत्वं[1] प्रसज्यते ॥ ११२४ ॥
अभावो निरुपाख्यत्वं तुच्छतेति यदुच्यते ।
तत्र स्थित्यादिसम्बन्धः कोऽसत्सु परिकल्प्यते ॥ ११२५ ॥
उत्पादः प्रसवश्चैषां नाशः संस्त्यानमिष्यते ।

---

अथापि स्यात्—सत्यपि लिङ्गत्रययोगित्वे सर्ववस्तूनां यदेव रूपं वक्तुमिष्टं प्रतिपादकेन तन्मात्रावभासान्येव विवक्षावशाच्चेतांसि भविष्यन्तीति, न शबलाभासानि ? इत्यत आह—विवक्षानुगतत्वे वेत्यादि । विवक्षानुगतत्वे वा चेतसामिति शेषः । यदि हि विवक्षावशादेकरूपाणि चेतांसि भवन्तीत्यङ्गीक्रियते, तदा तानि चेतांसि त्र्यात्मकवस्तुविषयाणि न प्राप्नुवन्ति, तदाकारशून्यत्वात्, चक्षुर्विज्ञानवच्छब्दविषयम् । तद्वशादिति विवक्षावशात् ॥ ११२३ ॥

योऽपि मन्यते—"संस्त्यानप्रसवस्थितिषु [2]यथाक्रमं [2]स्त्रीपुन्नपुंसकत्वव्यवस्था" इति, तस्यापि [3]तन्न युक्तमित्यादर्शयन्नाह—स्थितीत्यादि । लिङ्गसंस्थितिर्यदि स्यादित्यत्र छेदः । यदि हि स्थित्याद्याश्रया लिङ्गस्थितिर्लिङ्गव्यवस्था स्यात्[4], तदा तटश्रृङ्खलादिवत् सर्वपदार्थेष्वविभागेन त्रीणि लिङ्गानि प्राप्नुवन्ति, सर्वत्र तटादिवत् स्थित्यादेर्विद्यमानत्वात्; अन्यथा तटः, तटी, तटमित्यादावपि लिङ्गत्रयं न स्यात्; विशेषाभावात् । तस्मादतिव्यापिता लक्षणदोषः ॥ ११२४ ॥

[G. 347] व्यभिचारदर्शनाच्चाव्यापितेति दर्शयन्नाह—अभाव इत्यादि । असत्यपि हि स्थित्यादिके शशविषाणादिष्वसद्रूपेष्वभावो निरुपाख्यत्वं तुच्छत्वमित्यादिभिः शब्दैर्लिङ्गत्रयप्रतिपत्तिदर्शनादव्यापिनीयं लिङ्गव्यवस्था ॥ ११२५ ॥

इतश्चाव्यापिनी; तेष्वेव स्थित्यादिषु प्रत्येकं लिङ्गत्रययोगिशब्दप्रवृत्तिदर्शनात् । तथा हि—प्रसव उत्पाद उच्यते, संस्त्यानं विनाशः, आत्म-

---

१. त्रिलिङ्गत्वं—पा०, गा० ।
२–२. यथोक्तस्त्री०—पा०, गा० ।
३. न—पा०, गा० ।
४. पा०, गा० पुस्तकयोर्नास्ति ।

आत्मरूपं तु भावानां स्थितिरित्यभिधीयते ॥ ११२६ ॥
तत्रोत्पादे न नाशोऽस्ति तत् किमुत्पत्तिरुच्यते ।
नात्माकारा स्थितिश्चास्ति तत् कथं जन्म गीयते ॥ ११२७ ॥
संस्त्याने न द्वयं चान्यत् तत् कथं व्यपदिश्यते ।
तिरोभावश्च नाशश्च तिरोभवनमित्यपि ॥ ११२८ ॥
स्थितौ स्थितिः स्वभावश्च हेतुना केन नोच्यते ।
अथाविभक्तमेवैषां रूपं स्यादेकलिङ्गता ॥ ११२९ ॥
गोत्वादय इवैतेऽपि यदि स्त्रीत्वादयो मताः ।
सामान्यस्य निरासेन तेऽपास्ता एव तादृशाः ॥ ११३० ॥
जातिर्भावश्च सामान्यमिति वा तेषु किं[1] मतम्[1] ।

---

स्वरूपं तु स्थितिः । तत्र प्रसवे स्थितिसंस्त्यानयोरभावात् कथमुत्पादे उत्पत्तिर्जन्मेत्यादेः स्त्रीनपुंसकलिङ्गस्य प्रवृत्तिर्भवेत् । तथा संस्त्याने स्थितिप्रसवयोरभावात् कथं तिरोभावः, विनाशः, तिरोभवनमित्यादिभिः शब्दैर्व्यपदिश्यते । अपिशब्देन 'संस्त्यानम्' इत्यपि स्वशब्देन कथं व्यपदिश्यत इति दर्शयति; तथा स्थितौ संस्त्यानप्रसवयोरसम्भवात् । स्थितिस्वभावश्चेत्यादिभिः शब्दैः सा स्थितिः केन हेतुनोच्यत इति वाच्यम् ।

अथापि स्यात्—एषां स्थित्यादीनां परस्परमविभक्तरूपत्वात् प्रत्येकमेषु लिङ्गत्रययोग्यता भविष्यतीत्यत आह—अथाविभक्तमित्यादि । यदि ह्येषां परस्परमविभक्तं रूपं स्यात्, तदैकमेव परमार्थतो लिङ्गं स्यात्, न लिङ्गत्रयम् ॥ ११२६–११२९॥

अन्यस्त्वाह—"सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव" इति, तं प्रत्याह—गोत्वादय इवेत्यादि । [G. 348] पूर्वं सामान्यपरीक्षायां सामान्यविशेषाणां निरस्तत्वात्, तद्रूपाणां स्त्रीत्वादीनामसम्भवादसम्भविलक्षणम् ॥ ११३०॥

किञ्च—तेष्वेव सामान्यविशेषेष्वन्तरेणाप्यपरं सामान्यविशेषं जातिः, भावः, सामान्यमित्यादि स्त्रीपुन्नपुंसकलिङ्गस्य शब्दस्य प्रवृत्तिदर्शनादव्यापिता च लक्षण-

---

१–१. सम्मतम्—पा०, गा० ।

न सामान्यानि युज्यन्ते सामान्येष्वपराणि हि ॥ ११३१ ॥
अभावो निरुपाख्यत्वं तुच्छतेत्यादि वा कथम् ।
सामयिक्येव तेनैषा लिङ्गत्रितयसंस्थितिः ॥ ११३२ ॥
सङ्ख्याऽपि सामयिक्येव कल्प्यते हि विवक्षया ।
भेदाभेदविवेकेऽपि दारादिविपिनादिवत् ॥ ११३३ ॥

---

स्येति दर्शयति—जातिर्भाव इत्यादि । न सामान्यानि युज्यन्ते सामान्येष्वपराणीति । "निःसामान्यानि सामान्यानि" इति सिद्धान्तात् । एतच्च वैशेषिकसिद्धान्ताश्रयेणोक्तम् ।

यदा तु सामान्येष्वपराणि सामान्यानीष्यन्ते वैयाकरणैः, यथोक्तम्[1]—

"अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।
व्यापारलक्षणा यस्मात् पदार्थाः समवस्थिताः ॥"

( वा० प० ३.१.११ )

न हि शास्त्रान्तरपरिदृष्टा जातिव्यवस्था नियोगतो वैयाकरणैरभ्युपेतव्या । प्रत्ययाभिधानान्वयव्यापारकार्योन्नीयमानरूपा हि जातयः, न हि तासामियत्ता काचित् । अतो यच्चोदितकार्यदर्शनात् सामान्याधारा जातिः सती जातय इत्यस्याः श्रुतेर्निबन्धनमिति । व्यापारलक्षणा इति अभिधानप्रत्ययव्यापारतो व्यवस्थितलक्षणा इत्यर्थः । तदानन्तरोक्तमेव दूषणम्—"सामान्यस्य निरासेन तेऽपास्ता एव यादृशाः" ( तत्त्व० ११३० ) इति ॥ ११३१ ॥

इदं च साधारणं दूषणमाह—अभाव इत्यादि । न ह्यसत्सु शशविषाणादिषु जातिरस्ति, वस्तुधर्मत्वात्तस्य—इत्यतस्तेष्वभावादिशब्दप्रयोगो न प्राप्नोति । तस्मादव्यापिनी लिङ्गव्यवस्था । तेनेच्छारचितसङ्केतमात्रभाविन्येवेयं लिङ्गत्रितयव्यवस्थेति सिद्धम् ॥ ११३२ ॥

सङ्ख्याया अपि वस्तुगतान्वयव्यतिरेकानुविधानाभावं दर्शयन्नाह—सङ्ख्यापीत्यादि । सङ्ख्यापि सामयिक्येव, न वास्तवी; दारादिष्वपि वास्तवे भेदे विवक्षावशेनोपकल्पितत्वात् । [ G. 319 ] अतो नासिद्धो हेतुः । तथा हि—

---

१. भर्तृहरिणेति शेषः ।

कुमारिलोक्ता हेतोरसिद्धता

ननु व्यक्तौ च जातौ च दारादिश्चेत् प्रयुज्यते ।
व्यक्तेरवयवानां वा संख्यामादाय वर्त्तते ॥ ११३४ ॥
वनशब्दः पुनर्व्यक्तीर्जातिसङ्ख्याविशेषिताः ।
बह्वीराहाथ वा जातिं बहुव्यक्तिसमाश्रिताम् ॥ ११३५ ॥

तत्प्रतिविधानम्

ननु चैतेन विधिना सर्वमेकं वचो हृतम् ।
नान्यत्रास्ति विवक्षा चेत् सैवास्त्वस्य निबन्धनम् ॥ ११३६ ॥

---

बहुत्वैकत्वादिसङ्ख्या न वस्तुगतभेदाभेदलक्षणा, तत्र[1] आपः[1], दाराः, सिकता, वर्षा—इत्यादावसत्यपि वस्तुतो भेदे बहुत्वसङ्ख्या परिवर्त्तते । तथा वनम्, त्रिभुवनम्, जगत्, पण्णगरीत्यादिष्वसत्यप्यभेदेऽर्थस्यैकत्वसङ्ख्या व्यपदिश्यत इति । अतो नासिद्धता हेतोः । नाप्यनैकान्तिकः; सर्वस्य सर्वधर्मत्वप्रसङ्गात् । सपक्षे भावाच्च न विरुद्धः ॥ ११३३ ॥

नन्वित्यादिना कुमारिलमतेन हेतोरसिद्धतामाशङ्कते । स ह्याह—दारादिशब्दः कदाचिज्जातौ प्रसज्यते, कदाचिद्व्यक्तौ । तत्र यदा जातौ, तदा व्यक्तिगतां सङ्ख्यामादाय वर्त्तते, व्यक्तयश्च बह्व्यो योषितः । यदा तु[2] व्यक्तौ प्रयुज्यते तदा तद्व्यक्त्यवयवानां पाणिपादादीनां बहुत्वसङ्ख्यामादाय वर्त्तते । वनशब्देन [3]तु [3]धवखदिरपलाशादिविलक्षणव्यक्तयस्तत्समवेतवृक्षत्वजातिगतसङ्ख्याविशिष्टाः प्रतिपद्यन्ते, तेन 'वनम्' इत्येकवचनं भवति; जातिगतैकसङ्ख्याविशिष्टद्रव्याभिधानात् । अथ वा—धवादिव्यक्तिसमाश्रिता जातिरेव वनशब्देनोच्यते, तेनैकवचनं भवति; जातेरेकत्वादिति ॥ ११३४–११३५ ॥

नन्वित्यादिना प्रतिविधत्ते । एतेन = यथोक्तेन विधिना सर्वम् = वृक्षः, घटः[4] इत्याद्येकवचनम्, हृतम् = उत्सन्नं स्यात्; सर्वत्रैवास्य न्यायस्य तुल्यत्वात् । तथा ह्यत्रापि शक्यमेवं वक्तुम्—

---

१–१. पा०, गा० पुस्तकयोर्नास्ति । २. पा०, गा० पुस्तकयोर्नास्ति ।
३–३. त्वाम्र०—पा०, गा० । ४. पा०, गा० पुस्तकयोर्नास्ति ।

वैशेषिकाऽऽशङ्कनम्

जातेरपि न सङ्ख्याऽस्ति भावे वा तद्विशेषिताः ।
कथं सम्बद्धसम्बन्धाद् यदि सम्बन्धतोऽपि वा ॥ ११३७ ॥

तत्प्रतिविधानम्

यद्येवमभिधीयेत वनमेकोऽपि पादपः ।
बहवोऽपि हि कथ्यन्ते सम्बन्धादेव सोऽस्ति च ॥ ११३८ ॥

---

"तत्र व्यक्तौ च जातौ च वृक्षादिश्चेत् प्रयुज्यते" इत्यादि ।

अथ मतम्—अन्यत्र वृक्षादौ, व्यक्तेरवयवानां च सङ्ख्याविवक्षा नास्तीति ? यद्येवम्, न तर्हि वस्तुगतान्वयाद्यनुविधायिनी सङ्ख्या; विवक्षाया एवान्वयव्यतिरेकानुविधानात् । ततश्च सैव विवक्षा 'दाराः' इत्यादिष्वस्य बहुवचनस्य निबन्धनमस्तु, भेदाभावेऽप्येकमपि वस्तु बहुत्वेन विवक्ष्यत इत्यतो नासिद्धता हेतोः ॥ ११३६ ॥

[ G. 350 ] यच्चोक्तम्—'वनशब्दो जातिसङ्ख्याविशेषिता व्यक्तीराह' (तत्त्व० ११३५) इति, तत्राह—जातेरित्यादि । न हि जातेः सङ्ख्यास्ति; द्रव्यसमाश्रितत्वात् तस्याः । अथेयं वैशेषिकप्रक्रिया नाश्रीयते, तदा भावे वा सङ्ख्यायास्तया कथं वा धवादिव्यक्तयो विशेषिताः सिद्ध्यन्ति । स्यादेतत्—सम्बन्धसम्बन्धात्, तत्सम्बन्धाद्वा सिद्ध्यन्ति । तथा हि—यदा जातेर्व्यतिरेकिणी सङ्ख्या तदैकत्वसङ्ख्यासम्बद्धया जात्या धवादिव्यक्तीनां सम्बन्धात् पारम्पर्येण तथा धवादिव्यक्तयो विशेष्यन्ते; यदा तु जातेरव्यतिरिक्तैव सङ्ख्या तदा साक्षादेव सम्बन्धात् तथा विशेष्यन्त इत्यतो जातिसङ्ख्याविशेषिताः सिध्यन्ति ? ॥ ११३७ ॥

यद्येवमित्यादिना प्रतिविधत्ते । यदि सम्बन्धसम्बन्धतो वा धवादिव्यक्तिषु वनशब्दस्य प्रवृत्तिः, तदैकोऽपि पादपः 'वनम्' इत्येवमुच्यते; प्रवृत्तिनिमित्तस्य विद्यमानत्वात् । तथा हि—बहवोऽपि धवादयो जातिसङ्ख्यासम्बन्धादेव 'वनम्' इत्युच्यन्ते, नान्यतः, स च सम्बन्ध एकस्मिन्नपि पादपेऽस्तीति किमिति न तथोच्येत ! ॥ ११३८ "

बहुव्यक्त्याश्रिता या च सैवैकस्यामपि स्थिता ।
तन्निमित्तस्य तुल्यत्वात् तत्रापि वनधीर्भवेत् ॥ ११३९ ॥
अन्वयव्यतिरेकाभ्यामेकादिवचसस्ततः ।
नियमोऽयं विवक्षातो नार्थात् तद्व्यभिचारतः ॥ ११४० ॥

क्रियाकालादिसम्बन्धनिराकरणम्

क्रियाकालादियोगोऽपि पूर्वमेव निराकृतः ।
तस्मात् सांकेतिका एते न व्यक्तिष्वपि भाविनः ॥ ११४१ ॥
व्यक्तिरूपावसायेन यदि वाऽपोह उच्यते ।
तल्लिङ्गाद्यभिसम्बन्धो व्यक्तिद्वारोऽस्य विद्यते ॥ ११४२ ॥

---

"अथ वा जातिं बहुव्यक्तिसमाश्रिताम्" ( तत्त्व० ११३५ ) इत्यत्राह—बहुव्यक्त्याश्रितेत्यादि । अस्मिन्नपि हि पक्षे एकस्यापि तरोः 'वनम्' इत्यभिधानं स्यात् । तथा हि—येनासौ वनशब्देन जातिर्बहुव्यक्त्याश्रिताऽभिधीयते; सैवैकस्यामपि धवादिव्यक्तौ व्यवस्थिता, ततश्च तस्या वनधियो निमित्तस्य सर्वत्र तुल्यत्वात् तत्रैकत्रापि पादपे किमिति वनधीर्न भवेत् ॥ ११३९ ॥

अन्वयव्यतिरेकाभ्यामित्यादिना हेतुत्वमुपसंहरति । तद्व्यभिचारत इति । तस्यार्थस्य व्यभिचारात् ॥ ११४० ॥

[ G. 351 ] "लिङ्गसंख्यादिसम्बन्धो न चापोहस्य विद्यते" ( तत्त्व० ९७२ ) इत्यत्रादिग्रहणेन यः क्रियाकालादिसम्बन्धो निर्दिष्टः, तत्राह—क्रियेत्यादि । पूर्वमेव कर्मकालादिपदार्थनिषेधे क्रियादियोगस्य निराकृतत्वादयुक्तमेषामपि वस्तुधर्मत्वम् । सङ्केते भवाः साङ्केतिकाः ॥ ११४१ ॥

भवतु वा वस्तुधर्मत्वमेषाम्, तथापि प्रतिबिम्बलक्षणस्यापोहस्य भ्रान्तैर्बाह्यव्यक्तिरूपत्वेनावसितत्वाद् अध्यवसायवशाद् व्यक्तिद्वारको लिङ्गसंख्यादिसम्बन्धो भविष्यति, तेन यदुक्तम्—

"व्यक्तेश्चाव्यपदेशत्वात् तद्द्वारेणापि [1]नास्त्यसौ" ( तत्त्व० ९७२ ) इति, तदनैकान्तिकम्, संवृतिपक्षे चासिद्धमिति दर्शयति—[2]व्यक्तिरूपावसा-

---

1. नास्त्यसौ—पा०, गा० । 2. व्यक्तिरूपाध्यवसा०—पा०, गा० ।

अभिप्रेते निवेशार्थं बुद्धेः शब्दः प्रयुज्यते ।
अनभीष्टव्युदासोऽतः सामर्थ्येनैव सिद्धयति ॥ ११४३ ॥
सर्वमेव न चाभीष्टं सर्वार्थानियमास्थितः ।
तत् पचत्यादिशब्दानां विनिवर्त्यं परिस्फुटम् ॥ ११४४ ।
तथा हि पचतीत्युक्ते नोदासीनोऽवतिष्ठते ।
भुङ्क्ते दीव्यति वा नेति गम्यतेऽन्यनिवर्त्तनम् ॥ ११४५ ॥
औदासीन्यमतश्चैवमस्त्यन्यच्च क्रियान्तरम् ।
पर्युदासात्मकापोह्यं नियतं यद् यदिष्यते ॥ ११४६ ॥

---

येनेत्यादि । अपोह उच्यत इति । शब्देनेति शेषः । तदिति तस्मात्; अस्येति अपोहस्य ॥ ११४२ ॥

"आख्यातेषु च नान्यस्य" ( तत्त्व० ९७३ ) इत्यादावाह—अभिप्रेते निवेशार्थमित्यादि । आख्यातेष्वन्यनिवृत्तिर्न सम्प्रतीयत इत्यसिद्धम्, तथा हि—जिज्ञासिते कस्मिंश्चिदर्थे श्रोतुर्बुद्धेर्निवेशाय शब्दः प्रयुज्यते व्यवहर्तृभिः, न व्यसनितया, तेनाभीष्टार्थप्रतिपत्तौ सामर्थ्यादनभीष्टव्यवच्छेदः प्रतीयत एव; अभीष्टानभीष्टयोरन्योन्यव्यवच्छेदरूपत्वात् ॥ ११४३ ॥

सर्वमेवाभीष्टमिति चेत् ? आह—सर्वमेवेत्यादि । यद् सर्वमेवाभीष्टं स्यात्, तदा प्रतिनियतः शब्दार्थो न प्राप्नोति, ततश्च या कस्यचिदर्थपरिहारेण श्रोतुः क्वचिदर्थे शब्दात् प्रवृत्तिः सा न प्राप्नोति । तस्मात् 'सर्वमेवाभीष्टम्' इत्येतदयुक्तम् । [1]तत् = तस्मात्, पचतीत्यादिशब्दानामनभीष्टव्यवच्छेदः सामर्थ्यात् [2]स्फुटतरमवगम्यत एव ॥ ११४४ ॥

[G. 352] तथा हीत्यादिना तमेव सामर्थ्यगम्यमनभीष्टव्यवच्छेदं दर्शयति । तस्मात् पचतीत्येतस्यौदासीन्यमन्यच्च भुङ्क्ते दीव्यति चेत्यादिक्रियान्तरपर्युदासात्मकमपोह्यमस्ति, तेन यदुक्तम्—"न पर्युदासरूपं हि निषेध्यं तत्र विद्यते" ( तत्त्व० ९७३ ) इति तदसिद्धम् । पर्युदासात्मकापोह्यमिति । पर्युदासा-

---

१, पा०, गा० पुस्तकयोर्नास्ति । २. तत्स्फुट०—पा०, गा० ।

पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठति ।
इत्येतच्च भवद्वाक्यं परस्परपराहतम् ॥ ११४७ ॥
अन्यरूपनिषेधोऽयं स्वरूपेणैव तिष्ठति ।
इत्यन्यथा निरर्थं स्यात् प्रयुक्तमवधारणम् ॥ ११४८ ॥
निष्पन्नत्वमपोहस्य निरुपाख्यस्य कीदृशम् ।
गगनेन्दीवरादीनां निष्पत्तिर्न हि काचन ॥ ११४९ ॥
वस्त्वित्यध्यवसायाच्चेत् सोपाख्यत्वेन भात्यसौ ।
ततः किं तुल्यधर्मत्वं वस्तुभिश्चास्य गम्यते ॥ ११५० ॥

त्मकं च तदपोह्यं चेति विग्रहः । नियतं यद्यदिष्यत इति । तस्य तस्यौदासीन्यादिपर्युदासात्मकमपोह्यमस्तीति सम्बन्धः ॥ ११४५–११४६ ॥

यच्चोक्तम्—"पचतीत्यनिषिद्धं तु स्वरूपेणैव तिष्ठति" ( तत्त्व० ९७४ ) इति, तत्र स्ववचनव्याघातं परस्य प्रतिपादयन्नाह—पचतीत्यादि । कथं पुनरेतत् परस्परपराहतम् ? इत्याह—अन्यरूपनिषेधोऽयमित्यादि । पचतीत्येतस्यार्थस्वरूपेणैव तिष्ठतीत्यनेनावधारणेनावधारितरूपं[1] दर्शयता पचतीत्येतस्यान्यरूपनिषेधेनात्मस्थितिरिति दर्शितं भवति । अन्यथा स्वरूपेणैवेत्येतदेवावधारणं भवत्प्रयुक्तमनर्थकं स्यात्; व्यवच्छेद्याभावात् ॥ ११४७–११४८ ॥

यदुक्तम्—"साध्यत्वप्रत्ययश्चात्र" ( तत्त्व० ९७५ ) इत्यादि, तत्राह—निष्पन्नत्वमित्यादि । यद्यपोहो भवता निरुपाख्यस्वभावतया गृहीतः, तत्कथमिदमुच्यते—निष्पन्नत्वादिति, न ह्याकाशोत्पलादीनां काचिदस्ति निष्पत्तिः; सर्वोपाख्याविरहलक्षणत्वात्तेषाम् ।

[G 353] स्यादेतत्—यद्यप्यसौ निरुपाख्यः परमार्थतः, तथापि भ्रान्तैः प्रतिपत्तृभिर्बाह्यवस्तुरूपतया व्यवसितत्वादसावपोहः सोपाख्यत्वेन ख्यातीति[2] ? अत्राह—ततः किमिति । यदि नामासौ सोपाख्यत्वेन भाति, तथापि किमत्र प्रकृतार्थानुकूलं जातमिति ? अत्र पर आह—तुल्यधर्मत्वं वस्तुभिश्चास्य

1. ०दचरित०—पा०, गा० । 2. भातीति—पा०, गा० ।

साध्यत्वप्रत्ययस्तस्मात् तथाभूतादिरूपणम् ।
वस्तुभिस्तुल्यरूपत्वात् तन्निमित्तं प्रसज्यते ॥ ११५१ ॥
विध्यादावर्थराशौ च नास्तितादि निषिध्यते ।
सामर्थ्यान्न तु शब्देन यदेव नं विवक्षितम् ॥ ११५२ ॥
नञश्चापि नञा युक्तावपोहस्तादृशो भवेत् ।
तच्चतुष्टयसद्भावे यादृशः सम्प्रतीयते ॥ ११५३ ॥
नञा योगे नञो ह्यर्थो गम्यते कस्यचिद् विधिः ;
तृतीयेन नञा तस्य विरहः प्रतिपाद्यते ॥ ११५४ ॥
निषेधायापरस्तस्य तुरीयो यः प्रयुज्यते ।

---

गम्यतं इति । तेन यथा वस्तु निष्पन्नरूपं प्रतीयते, तथाऽपोहोऽपि वस्तुभिस्तुल्यधर्मतया ख्यातेः[1] निष्पन्न इव प्रतीयत इति सिद्धम्—'निष्पन्नत्वात्' इति वचनम् ॥ ११४९–११५० ॥

यद्येवम् , भवतैव साध्यत्वप्रत्ययस्य भूतादिप्रत्ययस्य च निमित्तमुपदर्शितमिति, न च वक्तव्यम्—'एतन्निर्निमित्तं प्रसज्यते' इति ? तदेतद्दर्शयन्नाह—साध्यत्वप्रत्ययस्तस्मादित्यादि । तन्निमित्तमिति । वस्तुभिस्तुल्यधर्मत्वावसायनिमित्तम् ॥ ११५१ ॥

यदुक्तम्—"विध्यादावर्थराशौ च नान्यापोहनिरूपणम्" (तत्त्व० ९७६) इति, तत्राह—विध्यादावित्यादि । विध्यादेरर्थस्य निषेधादिव्यावृत्ततयाऽवस्थितत्वात् तत्प्रतिपत्तौ सामर्थ्यादविवक्षितं नास्तितादि निषिध्यत इत्यस्त्येवात्राप्यन्यापोहनिरूपणम् ॥ ११५२ ॥

"नञश्चापि नञा युक्तौ" (तत्त्व० ९७६) इत्यत्राह—नञश्चापीत्यादि । तच्चतुष्टयसद्भाव इति । नञ्चतुष्टयसद्भावे । कीदृशोऽसौ सम्प्रतीयते[2] ? इत्याह—नञा योग इत्यादि । अर्थशब्दो विधिशब्देन सम्बन्धनीयः । तस्य विरह इति । [G. 354] तस्य विधेर्निषेधः । निषेधायापरस्तस्येति ।

---

१. ख्यातो—पा०, गा० । २. प्रतीयते—पा०, गा० ।

तस्मिन् विवक्षिते तेन ज्ञाप्यतेऽन्यनिवर्त्तनम् ॥ ११५५ ॥
नासौ न पचतीत्युक्ते गम्यते पचतीति हि ।
औदासीन्यादियोगश्च तृतीयेन हि गम्यते ॥ ११५६ ॥
तुर्ये तु तद्विविक्तोऽसौ पचतीत्यवसीयते ।
तेनात्र विधिवाक्येन सममन्यनिवर्त्तनम् ॥ ११५७ ॥
समुच्चयादिर्यश्चार्थः कश्चिच्चादेरभीप्सितः ।
तदन्यस्य विकल्पादेर्भवेत् तेन व्यपोहनम् ॥ ११५८ ॥
वाक्यार्थेऽन्यनिवृत्तिश्च सुज्ञातैव तथा ह्यसौ ।

---

तृतीयनञ्प्रतिपादितस्य विधिरहितस्य निषेधायेत्यर्थः । तुरीय इति चतुर्थः । "[1]चतुरश्छयतावाद्यक्षरलोपश्च" ( पा० सू० ५.२.५१ वा० ) इत्यनेन पूरणार्थे यत्प्रत्ययविधानात् । तस्मिन्विवक्षित इति । तस्मिंश्चतुर्थे नञि प्रयुक्ते इत्यर्थः । तेनेति चतुर्थेन नञा । ज्ञाप्यतेऽन्यनिवर्त्तनमिति । तृतीयनञ्प्रतिपादितनिषेध-विवेकेन विधिरूपस्यार्थप्रतिबिम्बकस्य प्रतिपादनात् ॥ ११५३–११५५ ॥

एतदेवोदाहरणेन स्फुटीकुर्वन्नाह—नासौ न पचतीत्यादि । तद्विविक्तोऽसाविति । औदासीन्यादिविविक्तः । विधिवाक्येन सममन्यनिवर्त्तन-मिति । यथा पचतीत्यादौ विधिवाक्ये सामर्थ्यादौदासीन्यविनिवृत्तिर्गम्यते[2], तथा द्वितीयेऽपि नञीति सिद्धमत्राप्यन्यनिवर्त्तनम्[3] । स्पष्टार्थं तु नञ्चतुष्टयोदा-हरणम् ॥ ११५६–११५७ ॥

"चादीनामपि नञ्योगो नैवास्ति ( तत्त्व० ९७७ ) इति, अत्राह-समु-च्चयादिरित्यादि । आदिशब्देन वाशब्दस्य विकल्पोऽर्थः, अपिशब्दस्य पदार्थ-सम्भावनान्ववसर्गादयः, तुशब्दस्य विशेषणम्, एवकारस्यावधारणमित्यादेर्ग्रहणम् । तदन्यस्येति । तस्मात् समुच्चयादेरन्यस्य । तेनेति[4] चादिना ॥ ११५८ ॥

---

१. चतुरस्थयता०—पा०, गा० ।
२. ०त्तिरिष्यते—पा०, गा० ।
३. ०प्यस्य निवर्तनम्—पा०, गा० ।
४. तेन—पा०, गा० ।

पदार्था एव सहिताः केचिद् वाक्यार्थं उच्यते ॥ ११५९ ॥
तेषां च ये विजातीयास्तेऽपोह्याः सुपरिस्फुटाः ।
वाक्यार्थस्यापि ते चैव तेभ्योऽन्यो नैव सोऽस्ति हि ॥ ११६० ॥
चैत्र गामानयेत्यादिवाक्यार्थेऽधिगते सति ।
कर्तृकर्मान्तरादीनामपोहो गम्यतेऽर्थतः ॥ ११६१ ॥
अनन्यापोहशब्दादौ न विधिर्व्यवसीयते ।
परैरभिमतः पूर्वं जात्यादेः प्रतिषेधनात् ॥ ११६२ ॥
किन्तु विध्यवसाय्यस्माद् विकल्पो जायते ध्वनेः ।

---

"वाक्यार्थेऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते" (तत्त्व० ९७७) इत्यत्राह—वाक्यार्थ इत्यादि । सहिता इति । परस्परं कार्यकारणभावेन सम्बद्धा इत्यर्थः । तेषामिति पदार्थानाम् । ननु [1]'पदार्थोऽप्यन्यः, अन्यस्तु वाक्यार्थः'[1], तत् कथमुच्यते—य एव पदार्थानामपोह्या [G. 355] वाक्यार्थस्यापि त एव ? इत्यत आह—तेभ्योऽन्यो नैव सोऽस्तीति । न हि पदार्थव्यतिरिक्तो निरवयवः शबलात्मा वा कल्माषवर्णप्रख्यो वाक्यार्थोऽस्ति; उपलब्धिलक्षणप्राप्तस्य तादृशस्यानुपलब्धेरिति भावः ॥ ११५९–११६० ॥

एतदेवोदाहरणेन स्फुटयन्नाह—चैत्रेत्यादि । न ह्यस्मिन् वाक्ये चैत्रादिपदार्थव्यतिरेकेण बुद्धावन्योऽर्थः प्रतिवर्त्तते । चैत्रे ह्यर्थगते च सामर्थ्यादचैत्रादिव्यवच्छेदो गम्यते; अन्यथा यद्यन्यकर्त्रादिव्यवच्छेदो नाभीष्टः स्यात्, तदा चैत्रादीनामुपादानमनर्थकमेव स्यात् । ततश्च न किञ्चित् कश्चिद् व्याहरेदिति निरीहमेव जगत् स्यात् ॥ ११६१ ॥

"अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते" (तत्त्व० ९७८) इत्यत्राह—अनन्यापोहेत्यादि । न ह्यत्र भवदभिमतो जात्यादिलक्षणो विधिरूपः शब्दार्थः परमार्थतोऽवसीयते, तस्य जात्यादेः पूर्वं सामान्यपरीक्षादौ विस्तरेण निषिद्धत्वात् ॥ ११६२ ॥

---

१–१. पदार्थोऽन्यः अन्यस्त्ववाक्यार्थः—जै० ।

पश्चादपोहशब्दार्थनिषेधे जायते मतिः ॥ ११६३ ॥
स त्वसंवादकस्तादृग्वस्तुसम्बन्धहानितः ।
न शाब्दाः प्रत्ययाः सर्वे भूतार्थाध्यवसायिनः ॥ ११६४ ॥
प्रमेयज्ञेयशब्दादेः[1] कस्यापोह्यं न विद्यते ।
न ह्यसौ केवलोऽकाण्डे प्रेक्षावद्भिः प्रयुज्यते ॥ ११६५ ॥

---

किं तर्ह्यवसीयते ? इत्याह—किन्त्वित्यादि ॥ ११६३ ॥

यद्यपोहशब्दार्थनिषेधे मतिर्जायत इतीष्यते, न तर्ह्यपोहशब्दार्थोऽभ्युपगन्तव्यः, तस्य निषिद्धत्वादित्यत आह—स त्वसंवादकस्तादृगिति । स इति अनन्यापोहशब्दादिः । असंवादक इति न संवदतीत्यसंवादकः, न विद्यते वा संवादोऽस्येत्यसंवादकः । कस्मात् ? वस्तुसम्बन्धहानितः तथाभूतवस्तुसम्बन्धाभावात् । पूर्वं हि जात्यादिलक्षणस्य शब्दार्थस्य वस्तुनो निषिद्धत्वात् । यद्येवम्, कथं तर्ह्यनन्यापोहशब्दादिभ्योऽपोहशब्दार्थनिषेधे मतिर्जायते ? इत्याह—न [G 356] शाब्दा इति । वितथविकल्पाभ्यासवासनाप्रभवतया हि केचन शाब्दाः प्रत्यया असद्भूतार्थाभिनिवेशिनो जायन्त एवेति न तद्वशाद्वस्तूनां सदसत्ता सिद्ध्यति ॥ ११६४ ॥

यदुक्तम्—"प्रमेयज्ञेयशब्दादेः" ( तत्त्व० ९७८ ) इत्यादि, तत्राह—प्रमेयेत्यादि । कस्य प्रमेयादिशब्दस्यापोह्यं नास्तीत्यभिधीयते ? यदि तावदवाक्यस्थं केवलं पदान्तरसम्बन्धरहितं प्रमेयादिशब्दमाश्रित्योच्यते, तदा सिद्धसाध्यता; केवलस्य प्रयोगाभावादेव निरर्थकत्वात् । तद्दर्शयति—न ह्यसौ केवलोऽकाण्ड इति । केवल इति अन्यशब्दरहितः । अकाण्ड इति प्रस्तावमन्तरेण । यतः श्रोतृजनानुग्रहाय प्रेक्षावद्भिः शब्दः प्रयुज्यते, न व्यसनितया, न च केवलेन सता श्रोतुरेकस्मिन् सन्देहविपर्यासनिवृत्तिलक्षणोऽनुग्रहः कृतो भवेत् । तथा हि—यदि श्रोतुः क्वचिदर्थे समुत्पन्नौ संशयविपर्यासौ निवर्त्त्य निःसन्दिग्धं प्रत्ययमुत्पादयेत् प्रतिपादकः, एवं तेनान्यानुग्रहः कृतो भवेत् । न च केवलेन प्रयुक्तेन तथाऽनुग्रहः शक्यते वक्तुम् ॥ ११६५ ॥

---

१. शब्दादौ—पा०, गा० ।

किन्त्वारेकविपर्याससम्भवे सति कस्यचित् ।
क्वचित् तद्विनिवृत्त्यर्थं धीमद्भिः स प्रयुज्यते ॥ ११६६ ॥
निःसन्देहविपर्यासप्रत्ययोत्पादनादतः ।
तेनैव तैः प्रयुक्तेन साफल्यमनुभूयते ॥ ११६७ ॥
यद् तत्र जडचेतोभिराशङ्कास्पदमिष्यते ।
तदेव क्षिप्यते तेन विफलोच्चारणाऽन्यथा ॥ ११६८ ॥
किञ्चिद्ध्याशङ्कमानोऽसौ किमर्थं परिपृच्छति ।
अतत्संस्कारकं शब्दं ब्रुवन् वा स्वस्थधीः कथम् ॥ ११६९ ॥

---

तस्मात् संशयादिनिवर्त्तने निश्चयोत्पादने च श्रोतुरनुग्रहात् शब्दप्रयोगसाफल्यमिति वाक्यस्थस्यैवास्य प्रयोग इति दर्शयति — किन्त्वित्यादि। आरेकः = संशयः । कस्यचिदिति श्रोतुः । क्वचिदिति अर्थे । तद्विनिवृत्त्यर्थमिति । तयोरारेकविपर्यासयोर्विनिवृत्त्यर्थम् । तेनेति ज्ञेयादिपदेन । तैरिति प्रेक्षावद्भिः ॥ ११६६-११६७ ॥

अथ वाक्यस्थमेव ज्ञेयादिशब्दमधिकृत्योच्यते, तदसिद्धमिति दर्शयति— यत्तत्रेति। [ G. 357 ] तत्र हि वाक्यस्थेन प्रमेयादिशब्देन यदेव जडचेतोभिः = मन्दमतिभिराशङ्क्यते, तदेव निवर्त्यत इत्यतोऽसिद्धमेतत् प्रमेयादिशब्दानां निवर्त्त्यं नास्तीति । अन्यथेति । यदि जडधीभिराशङ्कितं न निवर्त्तयेदित्यर्थः ।

स्यादेतत् — नैव[1] श्रोत्रा [2]किञ्चिदाशङ्कितमित्याह— किञ्चिद्धीत्यादि। यदि हि श्रोता न क्वचिदर्थे संशेते तत्किमिति परस्मादुपदेशमपेक्षते, निश्चयार्थं हि परं पृच्छति, अन्यथोन्मत्तः स्यात् । स्यादेतत् — यदि नाम श्रोतुराशङ्कास्थानमस्ति, तथापि तच्छब्देन न निवर्त्यत एव ? इत्याह — अतत्संस्कारकमित्यादि । तस्य श्रोतुरज्ञानादिनिवृत्तिलक्षणसंस्कारः = तत्संकारः, न विद्यते तत्संस्कारो यस्मिन् शब्द इति तदतत्संस्कारकम् । 'शेषाद्विभाषा' ( पा० सू० ५.४.१५४ ) इति कप् । ब्रुवन्निति प्रतिपादकः । स्वस्थधीः कथमिति । उन्मत्तक एव स्यादित्यर्थः । श्रोतृसंस्कारायैव शब्दानां प्रयोगात् ॥ ११६८-११६९ ॥

१. नहि—पा०, गा० । २. किञ्चिच्छङ्कित०—पा०, गा० ।

चक्षुर्ज्ञानादिविज्ञेयं रूपादीति यदुच्यते ।
तेनारोपितमेतद्धि केनचित् प्रतिषिध्यते ॥ ११७० ॥
न चक्षुराश्रितेनैव रूपं नीलादि वेद्यते ।
किन्तु श्रोत्राश्रितेनापि नित्येनैकेन चेतसा ॥ ११७१ ॥
क्षणिकत्वादिरूपेण [1]विज्ञेया इति विभ्रमे ।
सर्वज्ञज्ञानविज्ञेया धर्माश्चैते भवन्ति किम् ॥ ११७२ ॥
अभावा अपि विज्ञेया[1] न ज्ञानं जनयन्ति ये ।
इत्यादिविभ्रमोद्भूतौ विज्ञेयपदमुच्यते ॥ ११७३ ॥

---

अत्र कस्मिन् वाक्ये किं तन्मूढतेराशङ्कास्थानं यन्निवर्त्यते ? इत्याह—चक्षुर्ज्ञानादिविज्ञेयमित्यादि । तेनेति । 'चक्षुर्ज्ञानादिविज्ञेयं रूपादि' इत्यनेन वाक्येन ॥ ११७० ॥

किं तदारोपितम् ? इत्याह—न चक्षुराश्रितेनैवेत्यादि । श्रोत्राश्रितेनापि नित्येन चेतसा नीलादिरूपं वेद्यत इत्येवं यन्मूढधिया[2] सांख्यादिना[2] समारोपितं तत् 'चक्षुर्विज्ञानविज्ञेयं रूपम्' इत्यनेन वाक्येन निषिध्यते । चक्षुराश्रितविज्ञानविज्ञेयमेव रूपम्, न श्रोत्रादिविज्ञानविज्ञेयमित्यर्थः ॥ ११७१ ॥

एवं सर्वधर्माः किं [3]क्षणिकात्मादिरूपेण विज्ञेयाः ? आहोस्विन्न[4] ?, किं वा सर्वज्ञचेतसा ग्राह्याः ? उताहो न ?, अभावा अपि[5] सर्वोपाख्याविरहलक्षणया ये ज्ञानमपि न [G. 358] जनयन्ति ते किं विज्ञेयाः ? – इति संशयोद्भूतौ सत्यामिदमुच्यते—क्षणिकत्वादिरूपेण ज्ञेयाः सर्वधर्माः, ते च सर्वज्ञज्ञानविज्ञेयाः, अभावा विज्ञेया इति । अत्र यदक्षणिकत्वादिना ज्ञेयत्वादिरूपमारोपितं धर्मेषु, तन्निवर्त्यते ॥ ११७२-११७३ ॥

---

१–१. किं ज्ञेया पा०, गा० ।
२–२. यन्मन्दधिया'''—पा०, गा० ।
३. क्षणिकत्वादिरूपेण—पा०, गा० ।
४. आहोस्विदन्यथा—जै०पुस्तके पाठान्तरम् ।
५. हि—पा०, गा० ।

तादृग्ज्ञेयत्वमस्त्येषां क्षणिकत्वादिसाधनात् ।
ज्ञेयोऽभावोऽपि संवृत्त्या स्थापनादमुनाऽऽत्मना ॥ ११७४ ॥
प्रमेयज्ञेयशब्दादेः प्रतिपत्तिनिमित्तताम् ।
इत्थं वाक्यस्थितस्यैव दृष्ट्वा कालान्तरेष्वपि ॥ ११७५ ॥
केवलस्योपलम्भे या प्रतीतिरुपजायते ।
प्लवमानार्थभेदेषु सा तद्वाक्यानुसारतः ॥ ११७६ ॥
घटादिभ्योऽपि शब्देभ्यः सास्त्येव च तथाविधा ।
तस्माद् घटादिशब्देन ज्ञेयादिध्वनयः समाः ॥ ११७७ ॥

---

कथं तद्वचनमात्रेण निवर्त्तयितुं शक्यते ? इत्येतदाह—तादृगित्यादि । तादृगिति क्षणिकत्वादिरूपेण तस्य प्रमाणसिद्धत्वात् । अथाभावस्य कथं ज्ञेयत्वं सिद्धम् ? इत्याह—ज्ञेय इत्यादि । अमुनाऽऽत्मनेति अभावरूपेण । अवस्तूनामपि कथञ्चिद् बुद्ध्या व्यवस्थापनादस्ति ज्ञेयत्वम्, अन्यथा तत्र व्यवहार एव न स्यादिति भावः ॥ ११७४ ॥

ननु च "किमनित्यत्वेन शब्दाः प्रमेयाः ? आहोस्विन्न ?" इति प्रस्तावे 'प्रमेयाः' इति प्रयोगे तत्र यः प्रकरणानभिज्ञस्तस्यापि प्रतिपत्तुः 'प्रमेयाः' इति केवलशब्दश्रवणात् प्लवमानरूपा शब्दादिषु बुद्धिरुपजायत एव, तद्यदि केवलस्य शब्दस्यार्थो नास्त्येव तत् कथमर्थप्रतिपत्तिर्भवतीति ? अत आह—प्रमेयज्ञेयेत्यादि। अयमत्र समुदायार्थः—नैव केवलशब्दश्रवणादर्थप्रतिपत्तिरस्ति, किन्तु वाक्येपूपलब्धस्यार्थवतः शब्दस्य सादृश्येनापहृतबुद्धेः केवलशब्दश्रवणादर्थप्रतिपत्त्यभिमानः । तथा हि—येष्वेव वाक्येषु प्रमेयशब्दमुपलब्धवान् श्रोता, तदर्थेष्वेव सा बुद्धिरप्रतिष्ठितार्था प्लवमानरूपा समुपजायते । तच्च घटादिशब्दानामपि तुल्यम् । तथा हि—'किं घटेनोदकमानयानि, उताञ्जलिना ?'—इति प्रस्तावे 'घटेन' इति प्रयोगे प्रस्तावानभिज्ञस्य यावत्सु वाक्येषु घटेनेति प्रयोगो दृष्टः, तावतामर्थेष्वाकांक्षावती पूर्ववाक्यानुसारादेव प्रतिपत्तिर्भवति[1] ।

---

१. अत्र गा०सम्पादकः 'इति' इत्यधिकं पठति ।

अपोह्यकल्पनायां च वरं वस्त्वेव कल्पितम् ।
इत्येतद् व्याहतं प्रोक्तं नियमेनान्यवर्जनात् ॥ ११७८ ॥
वस्त्वेव कल्प्यते तत्र यदेव हि विवक्षितम् ।
क्षेपो विवक्षितस्यातो न तु सर्वं विवक्षितम् ॥ ११७९ ॥
ज्ञानाकारनिषेधस्तु स्ववेद्यत्वान्न शक्यते ।
विद्यते हि निरालम्बमारोपकमनेकधा ॥ ११८० ॥
ज्ञानस्यात्मगतः कश्चिन्नियतः प्रतिगोचरम् ।
अवश्याभ्युपगन्तव्यः स्वभावश्च स एव च ॥ ११८१ ॥
अस्माभिरुक्त आकारः प्रतिबिम्बं तदाभता ।
उल्लेखः प्रतिभासश्च संज्ञाभेदस्त्वकारणम् ॥ ११८२ ॥

---

तस्माद् यथा[1] घटादिशब्दा[1] विशिष्टार्थवचनाः, तथा प्रमेयादिशब्दा अपीति दर्शयति--तस्मादित्यादि ॥ ११७५-११७७ ॥

[G. 359] यदुक्तम्—"अपोह्यकल्पनायां[2] च" ( ९७९ ) इत्यादि, तत्राह—अपोह्येत्यादि । वस्त्वेवेत्यादि । वस्त्वेव ह्यध्यवसायवशाच्छब्दार्थत्वेन कल्पितमस्माभिर्यदेव हि विविक्षितम्, नावस्तु । तेन तत्प्रतीतौ सामर्थ्यादविवक्षितस्याक्षेपो व्यावृत्तिरवगम्यत एवेति नाव्यापिनी शब्दार्थव्यवस्था । यदेव च मूढमतेराशङ्कास्थानम्, तदेवाधिकृत्योक्तमाचार्येण—"अज्ञेयं कल्पितं कृत्वा तद्व्यवच्छेदेन ज्ञेयेऽनुमानम्" (   ) इति ॥ ११७८-११७९ ॥

'ज्ञानाकारनिषेधाच्च' ( तत्त्व० ९७९ ) इत्यादावाह—ज्ञानाकारेत्यादि । न शक्यत इति । कर्तुमिति शेषः । कथं स्वसंवेद्यत्वं सिद्धं ज्ञानाकारस्य ? इत्याह—विद्यते हीत्यादि । स्वप्नादिष्वर्थमन्तरेणापि निरालम्बनमगृहीतार्थाकारमारोपकं ज्ञानमागोपालमति स्फुटमेव स्वसंवेदनप्रत्यक्षसिद्धम् । न च 'देशकालान्तरावस्थितोऽर्थस्तेन रूपेण संवेद्यते' इति युक्तं वक्तुम्; तस्य तद्रूपाभावात् । न चान्येन रूपेणान्यस्य संवेदनं युक्तम्; अतिप्रसङ्गात् । किञ्च—अवश्यं [3]भवद्भिर्ज्ञानस्यात्मगतः

---

१-१. यथार्थवादिशब्दाः—पा०, गा० । २. नापोह्यकल्प०—जै० ।
३. तद्भवद्भि०—पा०, गा० ।

एवमित्यादिशब्दानां नैवमित्यादि विद्यते।
अपोह्यमिति विस्पष्टं प्रकारान्तरलक्षणम् ॥ ११८३ ॥

उद्द्योतकरखण्डनम्

व्यवहारोपनीते च सर्वशब्देऽपि विद्यते।
व्युदास्यं तस्य चार्थोऽयमन्यापोहोऽभिधित्सितः ॥ ११८४ ॥
सर्वे धर्मा निरात्मानः सर्वे वा पुरुषा गताः।
सामस्त्यं गम्यते तत्र कश्चिदंशस्त्वपोह्यते ॥ ११८५ ॥
केचिदेव निरात्मानो बाह्या इष्टा घटादयः।
गमनं कस्यचिच्चैवं भ्रान्तिस्तद् विनिवर्त्तते ॥ ११८६ ॥

---

कश्चिद् विशेषोऽर्थकृतोऽभ्युपगन्तव्यः, येन बोधरूपतासाम्येऽपि प्रतिविषयम् 'नीलस्येदं[1] संवेदनम्, न पीतस्य' इति विभागेन विभज्यते ज्ञानम्। तदभ्युपगमे च सामर्थ्यात् साकारमेव ज्ञानमभ्युपगतं स्यात्; आकारव्यतिरेकेणान्यस्य स्वभावविशेषत्वेनावधारयितुमशक्यत्वात्। अतो भवता स्वभावविशेष इति स एव शब्दान्तरेणोक्तः, अस्माभिस्त्वाकार उल्लेख इत्यादिना शब्देनेति केवलं नाम्नि विवादः ॥ ११८०-११८२ ॥

"एवमित्यादिशब्दानाम्" ( तत्त्व० ९८० ) इत्यादावाह—एवमित्यादिशब्दानामित्यादि। [ G. 360 ] 'एवमेतत्' 'नैवम्' इति प्रकारान्तरमारोपितमेवमित्यादिशब्दैर्व्यवच्छिद्यमानं स्फुटतरमवसीयत एवेति नाव्यापिता शब्दार्थव्यवस्थायाः ॥ ११८३ ॥

एवं कुमारिलेनोक्तं दूषणं प्रतिविहितम्, इदानीमुद्द्योतकरोक्तं प्रतिविधीयते। तत्र यदुक्तम् "सर्वशब्दस्य कश्चार्थो व्यवच्छेद्यः प्रकल्प्यते" ( तत्त्व० ९८१ ) इति। तत्राह—व्यवहारोपनीते चेत्यादि। अत्रापि ज्ञेयादिपदवत् केवलस्य सर्वशब्दस्याप्रयोगाद् वाक्यस्थस्यैव नित्यं प्रयोग इति यदेव मूढमतेराशङ्कास्थानं तदेव निवर्त्त्यमस्ति। अभिधित्सित इति अभिधातुमिष्टः ॥११८४॥

कोऽसावर्थोऽभिधातुमिष्टः ? इत्याह—सर्वे धर्मा इत्यादि ॥ ११८५ ॥

---

1. नीलस्यैव—पा० गा०।

सर्वाङ्गप्रतिषेधश्च नैव तस्मिन् विवक्षितः।
स्वार्थापोहप्रसङ्गोऽयं तस्मादज्ञतयोच्यते ॥ ११८७ ॥
न भावो नापि चाभावोऽपृथगेकत्वलक्षणः।
नाश्रितानाश्रितोऽपोहो नैकानेकश्च वस्तुतः ॥ ११८८ ॥
तथाऽसौ नास्ति तत्त्वेन यथाऽसौ व्यवसीयते।
तन्न भावो न चाभावो वस्तुत्वेनावसायतः ॥ ११८९ ॥
भेदाभेदादयः सर्वे वस्तुसत्परिनिष्ठिताः।
निःस्वभावश्च शब्दार्थस्तस्मादेते निरास्पदाः ॥ ११९० ॥

---

कोऽसावंशोऽपोह्यत इत्याह—केचिदेवेति ॥ ११८६ ॥

"एकाद्यसर्वमिति चेत्" (तत्त्व० ९८२) इत्यादावाह—सर्वाङ्गप्रतिषेधश्चेत्यादि। यदि हि सर्वस्याङ्गस्य प्रतिषेधस्तस्मिन् व्यवहारोपनीते वाक्यस्थे सर्वशब्दे विवक्षितः स्यात्, तदा स्वार्थापोहः प्रसज्यते; यावता यदेव मूढधिया शङ्कितं तदेव निषिध्यत इति कुतः स्वार्थापवादित्वदोषप्रसङ्गः! एवं द्व्यादिशब्देष्वपि वाच्यम् ॥ ११८७ ॥

यच्चोक्तम्—"किं भावोऽथ वाऽभावः" (तत्त्व० ९८५) इत्यादि, तत्राह—न भाव इत्यादि ॥ ११८८ ॥

[G. 361] कस्माद्भावो न भवति? इत्याह—तथाऽसौ नास्तीत्यादि। बाह्यरूपतयाऽसौ भ्रान्तैरवसीयते, न चासौ तथाऽवस्थित इत्यतो बाह्यरूपत्वाभावान्न भावः। अथाभावः कस्मान्न भवति? इत्याह—न चाभावो वस्तुत्वेनावसायत इति। [1]बाह्यरूपतयावसितत्वान्नैकान्तेनाभाव इत्यपि शक्यं वक्तुम् ॥ ११८९ ॥

अथ पृथक्त्वैकत्वादिलक्षणः कस्मान्न भवति? इत्याह—भेदाभेदादय इत्यादि। भेदाभेदादयः = व्यतिरेकाव्यतिरेकादयः। आदिशब्देनाश्रितत्वादयो गृह्यन्ते, न हि वस्तुगता एव धर्माः, तत्कथमपोहे कल्पनाशिल्पिघटितविग्रहे प्रतिष्ठां लभेरन्! यच्चोक्तम्—"क्रियारूपत्वादपोहस्य विषयो वक्तव्यः" (तत्त्व० ९८८)

---

१. बाह्यरूपतया दर्शितत्वा०—पा०, गा०।

अन्यार्थविनिवृत्तिं च साक्षाच्छब्दः करोति नः ।
कृते स्वार्थाभिधाने तु सामर्थ्यात् साऽवगम्यते ॥ ११९१ ॥
न तदात्मा परात्मेति विस्तरेणोपपादितम् ।
परपक्षानभिज्ञेन तस्मादेतदिहोच्यते ॥ ११९२ ॥
केन ह्यगोत्वमासक्तं गोर्येनैतदपोह्यते ।
इति नैवाभिमुख्येन शब्देनैतदपोह्यते ॥ ११९३ ॥
कतमेन च शब्देन वाच्यत्वं परिपृच्छ्यते ।
अपोहस्य किमेतेन यदि वा किं घटादिना ॥ ११९४ ॥
शब्दार्थः किमपोहो वा विधिर्वेति निरूपणे ।
अपोह इति भात्येतद् यत् तदेवं प्रतीयते ॥ ११९५ ॥
प्रतिबिम्बं हि शब्दार्थं इति साक्षादियं मतिः ।
जात्यादिविधिहानिस्तु सामर्थ्यादवगम्यते ॥ ११९६ ॥

---

इति, तदसिद्धम्; शब्दवाच्यस्यापोहस्य प्रतिबिम्बात्मकत्वात् । तच्च प्रतिबिम्बकमध्यवसितबाह्यवस्तुरूपत्वान्न प्रतिषेधमात्रम् । अत एव—किं गोविषयः, अथागोविषयः'—इत्यस्य विकल्पद्वयस्यानुपपत्तिः; गोविषयत्वेनैव तस्य विधिरूपतयाऽध्यवसीयमानत्वात् ॥ ११९० ॥

यच्चोक्तम्—"केन ह्यगोत्वमासक्तं गोर्येनैतदपोह्यते" ( तत्त्व० ९८८ ) इति, तत्राह—अन्यार्थविनिवृत्तिं चेत्यादि । यदि हि प्रधानेनान्यनिवृत्तिमेव शब्दः प्रतिपादयेत् तदैतत् स्यात्, यावताऽर्थप्रतिबिम्बकमेव यथोक्तं प्रथमतरः शब्दः करोति, तद्गतौ च [1]सामर्थ्यादन्यनिवर्त्तनं गम्यत इति सिद्धान्तानभिज्ञतया यत्किञ्चिदभिहितमेतदिति संक्षेपार्थः । शेषं सुबोधम् ॥ ११९१–११९३ ॥

[ G. 362 ] व्यतिरेकादिविकल्पः पूर्वमेव निरस्तः । यदुक्तम्—"किमयमपोहो वाच्यः" ( तत्त्व० ९९६ ) इत्यादि, तत्राह—कतमेनेत्यादि । तत्रान्यापोहवाच्यत्वविकल्पो यद्यन्योपोहशब्दमधिकृत्याधिक्रियते, तदा विधिरूपेणैवासौ तेन

---

१. सामर्थ्यादेव निवर्तनम्—पा०, गा० ।

घटवृक्षादिशब्दाश्च तदेव प्रतिबिम्बकम् ।
ब्रुवन्ति जननात् साक्षादर्थादन्यत् क्षिपन्ति तु ॥ ११९७ ॥
तस्मान्न विधिदोषोऽस्ति नानिष्टा च प्रसज्यते ।
अवाच्यपक्षदोषस्तु तदनङ्गीकृतेर्न नः ॥ ११९८ ॥
एकत्वनित्यतादिश्च कल्पितो न तु तात्त्विकः ।
तदत्र हासकरणं महाविद्वत्त्वसूचकम् ॥ ११९९ ॥
अवधारणसामर्थ्यादन्यापोहोऽपि गम्यते ।
स्वात्मैव गम्यते यत्र विफलो नियमोऽन्यथा ॥ १२०० ॥

---

शब्देन वाच्य इत्यभ्युपगमान्नानिष्टापत्तिर्युक्ता । तथा हि—किं विधिः शब्दार्थः ? आहोस्विदन्यापोहः ? इति प्रस्तावे 'अन्यापोहः शब्दार्थः' इत्युक्ते प्रतिपत्तुर्यथोक्तप्रतिबिम्बलक्षणान्यपोहाध्यवसायी प्रत्ययः समुपजायते । अर्थात्तु विधिरूपशब्दार्थनिषेधः । अथ घटादिशब्दमधिकृत्य ? तत्रापि यथोक्तप्रतिबिम्बलक्षणापोहः साक्षाद् घटादिशब्दैरुपजन्यमानत्वाद्विधिरूपेण च तैः प्रतिपाद्यते, सामर्थ्यात्त्वन्यनिवृत्तेरधिगम इति नानिष्टापत्तिः । न [1]चाप्यनवस्थादोषः । सामर्थ्यादन्यनिवृत्तेर्गम्यमानत्वादनुवाच्यतयाऽवाच्यपक्षस्यानङ्गीकृतत्वादेव न तत्पक्षभाविदोषोदयावकाश इति दर्शयति—अवाच्यपक्षदोषस्त्विति ॥ ११९४–११९८ ॥

अपि च—एकत्वनित्यत्वेत्यादौ ( तत्त्व० ९९४ ) आह—एकत्वेत्यादि । यदि हि पारमार्थिकमेकत्वाद्युपवर्णनं कृतं स्यात्, तदा हास्यकारणमेव स्याद्भवतः । यदा हि भ्रान्तिप्रतिपत्त्यनुरोधेन काल्पनिकमेतदाचार्येणोपवर्णितम्, तदा कथमिव [G 363] हास्यकारणमवतरति विदुषः । किन्तु भवानेव विवक्षितमर्थमविज्ञाय दूषयन् विदुषामतीव हास्यास्पदमुपजायते ॥ ११९९ ॥

"तस्माद्येष्वेव शब्देषु नञ्योगः" ( तत्त्व० १००१ ) इत्यादावाह—अवधारणसामर्थ्यादित्यादि । न केवलं यत्र नञ्योगस्तत्रान्यनिवृत्त्यंशोऽवगम्यते, यत्रापि हि नञ्योगो नास्ति तत्रापि गम्यत एव—इति स्ववाचैवैतद्भवता प्रतिपादितम् "स्वात्मैव गम्यते" इत्यवधारणं कुर्वता; [2]अन्यथाऽवधारणवैयर्थ्यमेव स्यात् ।

---

१. चाप्यव्यवस्था०—पा०, गा० । २. अन्यथा चाव०—पा०, गा० ।

अपोहशब्दार्थव्यवस्थायां परकृताव्यापितोद्भावनम्

यस्य तर्हि न बाह्योऽर्थोऽप्यन्यथावृत्त इष्यते ।
वन्ध्यासुतादिशब्दस्य तेन क्वाऽपोह उच्यते ॥ १२०१ ॥

तत्प्रतिविधानम्

रूपाभावादभावानां शब्दा जात्यादिवाचकाः ।
नाशङ्क्या एव सिद्धास्ते निर्भासस्यैव सूचकाः ॥ १२०२ ॥
अर्थशून्याभिजल्पोत्थं[1] [1]वासनामात्रनिर्मितम् ।
प्रतिबिम्बं यदाभाति तच्छब्दैः प्रतिपाद्यते ॥ १२०३ ॥
तन्मात्रद्योतकाश्चेमे साक्षाच्छब्दाः ससंशयाः ।
संकेतसव्यपेक्षत्वात् कल्पितार्थाभिधानवत् ॥ १२०४ ॥

---

यस्माद् यत्र स्वात्मैव गम्यते तत्रावधारणसामर्थ्यादन्यापोहोऽपि गम्यत इति स्फुटतरमवसीयते ॥ १२०० ॥

यस्य तर्हीत्यादिना परोऽपोहशब्दार्थव्यवस्थाया अव्यापितामेवोद्भावयति । तथा हि—यस्य वन्ध्यासुतादिशब्दस्य बाह्यसुतादिकं वस्त्वन्यव्यावृत्तमपोहाश्रयो नास्त्येव, तस्य किमधिष्ठानोऽपोहो वाच्य उच्यते। अवश्यं हि वस्तुनाधिष्ठानभूतेनापोहस्य भवितव्यम्; तस्यान्यापोढपदार्थाव्यतिरेकात् ॥ १२०१ ॥

रूपाभावादित्यादिना प्रतिविधत्ते । वन्ध्यासुतादीनामभावानां रूपस्य कस्यचित् स्वभावान्न तद्विषयाः शब्दा जात्यादिवाचकत्वेनाशङ्क्याः, वस्तुवृत्तीनां हि शब्दानां किं रूपमभिधेयम् ? आहोस्वित् प्रतिबिम्बकम् ?—इति शङ्का स्यात्, अभावश्च वस्तुविवेकलक्षण एवेति तद्वृत्तीनां शब्दानां कथमिव वस्तुविषयत्वाशङ्का भवेद् । अतो निर्विषयत्वं स्फुटतरमेव । [2]तत्र शब्दानां प्रतिबिम्बकमात्रोत्पादादवसीयत एवेत्यस्थानमाशङ्कायाः ॥ १२०२ ॥

एतदेव दर्शयति—अर्थेत्यादि । शब्दैरिति वन्ध्यासुतादिशब्दैः ॥१२०३॥

[ G. 364 ] ये पुनर्वस्तुविषयाः शब्दाः, तेषां प्रतिबिम्बकमात्रवाचकत्वसिद्धौ प्रमाणयन्नाह—तन्मात्रेत्यादि । ये सङ्केतसव्यपेक्षास्तेऽर्थशून्याभिजल्पा-

---

१-१. जल्पोत्थवासना०—पा०, गा० । २. तव—पा०; तत्त्व—गा० ।

परोपगतभेदादिविधानप्रतिपादकाः ।
न चैते ध्वनयस्तस्मात् तद्वदेवेति गम्यताम् ॥ १२०५ ॥

परपक्षे दोषोद्भावनम्

संकेतासम्भवो ह्यत्र भेदादौ साधितः पुरा ।
वैफल्यं च न तद्धेत्वोः सन्दिग्धव्यतिरेकिता ॥ १२०६ ॥

( शङ्का )

ननु चापोहपक्षेऽपि कथं संकेतसम्भवः ।
साफल्यं च कथं तस्य न द्वयोः स हि सिद्धयति ॥ १२०७ ॥
वक्तृश्रोत्रोर्न हि ज्ञानं वेद्यते तत् परस्परम् ।

---

हितवासनामात्रनिर्मितविकल्पप्रतिबिम्बकमात्रावद्योतकाः, यथा वन्ध्यापुत्रादिशब्दाः कल्पितार्थाभिधायिनः । सङ्केतसव्यपेक्षाश्च ससंशया विवादास्पदीभूता घटादयः शब्दा इति स्वभावहेतुः ॥ १२०४ ॥

एवं स्वपक्षं प्रसाध्य परपक्षनिषेधाय प्रमाणयन्नाह—परोपगतेत्यादि । भेदः = स्वलक्षणम्, आदिशब्देन जात्यादिपरिग्रहः । तस्मादिति सङ्केतसापेक्षत्वात् । तद्वदेवेति कल्पितार्थाभिधानवत् ॥ १२०५ ॥

द्वयोरपि हेत्वोरनैकान्तिकतां परिहरन्नाह—संकेतासम्भव इत्यादि । अशक्यसमयत्वाद्, अनन्यभाक्त्वाच्चेति पूर्वं स्वलक्षणादौ सङ्केतासम्भवस्य संकेतवैफल्यस्य च प्रसाधितत्वात् । तत् = तस्मात् । हेत्वोर्द्वयोर्न सन्दिग्धविपक्षव्यतिरेकितेति ॥ १२०६ ॥

नन्वित्यादिना परः प्रथमे हेतावनैकान्तिकतामुद्भावयति । यथा हि स्वलक्षणादौ संकेतासम्भवः, वैफल्यं च, तथाऽपोहपक्षेऽपि समानम्, ततश्चाकृतसमयत्वात् तन्मात्रद्योतकत्वमपि शब्दानां न युक्तमित्यनैकान्तिकता हेतोः । साफल्यं च कथमिति । सम्भवतीति शेषः । तस्येति संकेतस्य । कथं पुनस्तत्र संकेतासम्भवः ? इत्याह—न द्वयोः स सिद्धयतीति । हिशब्दो हेतौ । यस्मात् [G. 365] प्रतिबिम्बात्मकोऽपोहः संकेतविषययोर्द्वयोर्वक्तृश्रोत्रोरेको न सिद्धयति ।

संकेते न च तद्दृष्टं व्यवहारे समीक्ष्यते ॥ १२०८ ॥

(समाधानम्)

स्वस्य स्वस्यावभासस्य वेदनेऽपि स वर्त्तते ।
बाह्यार्थाध्यवसाये यद् द्वयोरपि समो यतः ॥ १२०९ ॥

---

कस्मात् ? इत्याह—न हि ज्ञानमित्यादि । प्रत्यात्मसंवेदनीयमेवार्वाग्दर्शनानां ज्ञानम् । न ह्यन्यदीयज्ञानमपरोऽपरदर्शनः संवेदयते । ज्ञानादव्यतिरिक्तश्च परमार्थतः प्रतिबिम्बात्मकलक्षणापोहः, ततश्च वक्तृश्रोत्रोर्द्वयोरपि कस्यचिदेकस्य सङ्केतविषयस्यार्थस्यासिद्धेः कुत्र सङ्केतः क्रियते, गृह्यते वा । न ह्यसिद्धे वस्तुनि वक्ता सङ्केतं कर्तुमीशः[1], नापि[1] श्रोता गृहीतुम्; अतिप्रसङ्गात् । तथा हि—श्रोता यत्प्रतिपद्यते स्वविज्ञानारूढमर्थप्रतिबिम्बकं न तद्वक्त्रा संवेद्यते । यच्च वक्त्रा संवेद्यते न तच्छ्रोत्रा; स्वस्य स्वस्यैवावभासस्य वेदनात् । आनर्थक्यं च प्रतिपादयन्नाह—संकेते न[2] चेत्यादि । यत्संकेतकाले प्रतिबिम्बकमनुभूतं श्रोत्रा वक्त्रा वा, न तद्व्यवहारकालेऽनुभूयते; तस्य क्षणक्षयित्वेन चिरनिरुद्धत्वात् । यच्च व्यवहारकालेऽनुभूयते न तत्सङ्केतकाले दृष्टम्; अन्यस्यैव तदानीमनुभूयमानत्वात् । न चान्यत्र सङ्केतादन्यत्र व्यवहारो युक्तः; अतिप्रसङ्गादिति ॥१२०७–१२०८॥

स्वस्य स्वस्येत्यादिना प्रतिविधत्ते । न हि परमार्थतो ज्ञानाकारोऽपि शब्दानां वाच्यतयाऽभीष्टः, येन तत्र सङ्केतासम्भवश्चोद्यते; यतः सर्व एवायं शाब्दो व्यवहारः स्वप्रतिभासानुरोधेन तैमिरिकद्वयद्विचन्द्रदर्शनवद् भ्रान्त इष्यते; केवलमर्थशून्याभिजल्पवासनाप्रबोधाच्छब्देभ्योऽर्थाध्यवसायिविकल्पमात्रोत्पादात्[3] । तत्प्रतिबिम्बकं शब्दानां वाच्यमित्यभिधीयते जननात्, न त्वभिधेयतया । तत्र यद्यपि स्वस्य स्वस्यैवावभासस्य वक्तृश्रोतृभ्यां परमार्थतः संवेदनम्, तथापि तैमिरिकद्वयस्येव भ्रान्तिबीजस्य तुल्यत्वाद् द्वयोरपि वक्तृश्रोत्रोर्बाह्यार्थाध्यवसायस्तुल्य एव; तथापि वक्तुरयमभिमानो वर्त्तते—'यमेवाहमर्थं प्रतिपद्ये तमेवायं प्रतिपद्यते' इति । एवं श्रोतुरपि योज्यम् । एकार्थाध्यवसायित्वं कथमनयोर्वक्तृश्रोत्रोः परस्परं विदित-

---

१–१. कर्तुमीशानोऽपि—गा०, गा० । २. जै० पुस्तके नास्ति ।
३. ०ऽर्थावसायि०—पा० गा० ।

तिमिरोपहताक्षो हि यथा प्राह शशिद्वयम् ।
स्वसमाय तथा सर्वा शाब्दी व्यवहृतिर्मता ॥ १२१० ॥
व्यापकत्वं च तस्येदमिष्टमाध्यवसायिकम् ।
मिथ्यावभासिनो ह्येते प्रत्ययाः शब्दनिर्मिताः ॥ १२११ ॥

## प्रत्यक्षलक्षणपरीक्षा

### प्रमाणे परेषां विप्रतिपत्तिनिराकरणम्

प्रत्यक्षमनुमानं च यदुपाधिप्रसिद्धये ।
परैरुक्तं न तत्सिद्धमेवंलक्षणकं हि तत् ॥ १२१२ ॥

---

मिति चेत्? यदि नाम परमार्थतो न विदितम्, तथापि भ्रान्तिबीजस्य तुल्यत्वाद-स्त्येव परमार्थतः स्वप्रतिभासानुरोधेन तैमिरिकद्वयवद् भ्रान्त एवायं व्यवहार इति निवेदितमेतत् । तेनैकार्थाध्यवसायवशात् संकेतकरणमुपपद्यत एव ॥ १२०९ ॥

[G 366] अत्र दृष्टान्तमाह— तिमिरोपहताक्षो हीत्यादि । स्वसमायेति । आत्मतुल्याय, अपरस्मै तैमिरिकायेत्यर्थः ॥ १२१० ॥

न चाप्यानर्थक्यं संकेतस्येति दर्शयति—व्यापकत्वं चेति । संकेतव्यवहारासकालव्यापकत्वं च वक्तृश्रोतृभ्यामध्यवसितार्थप्रतिबिम्बकस्यावसायवशादेवेष्टम्, न परमार्थतः; व्यवहारकालेऽपि वक्तृश्रोत्रोः पूर्वापरकालदृष्टयोरर्थयोरैक्याभिमानात् । अथ परमार्थतः कस्मान्नेष्टम्? इत्याह—मिथ्यावभासिन इत्यादि ॥ १२११ ॥

इति शब्दार्थपरीक्षा

---

तत्र प्रमाणे स्वरूपफलगोचरसङ्ख्यासु परेषां विप्रतिपत्तिश्चतुर्विधा । तन्निराकरणेन स्पष्टं प्रमाणलक्षणमादर्शयितुम् "स्पष्टलक्षणसंयुक्तप्रमाद्वितयनिश्चितम्" (तत्त्व० ३) इत्येतत्समर्थनार्थमाह—प्रत्यक्षमित्यादि । उपाधिप्रसिद्धय इति । गुणद्रव्यक्रियाजातिसमवायाद्युपाधिप्रसिद्धये । परैरिति वैशेषिकादिभिः । एवमिति वक्ष्यमाणम् ॥ १२१२ ॥

प्रत्यक्षलक्षणम्

प्रत्यक्षं कल्पनापोढमभ्रान्तम्;

कल्पनायाः स्वरूपम्

अभिलापिनी ।

प्रतीतिः कल्पना, क्लृप्तिहेतुत्वाद्यात्मिका न तु ॥ १२१३ ॥

शब्दार्थघटनायोग्या वृक्ष इत्यादिरूपतः ।

या वाचामप्रयोगेऽपि साभिलापेव जायते ॥ १२१४ ॥

---

तत्र सविकल्पकमज्ञानस्वभावं वा चक्षुरादिकं प्रत्यक्षं प्रमाणमिति प्रत्यक्षस्वरूपविप्रतिपत्तिः, तन्निराकरणेन तल्लक्षणमाह – प्रत्यक्षं कल्पनापोढमभ्रान्तमिति ।

तत्र ज्ञानस्य कल्पनापोढत्वमभ्रान्तत्वं चानूद्य प्रत्यक्षत्वं विधीयते, सर्वत्रैव लक्ष्यस्य विधीयमानत्वात् । यथा – यः कम्पते सोऽश्वत्थ इति । लक्ष्यमत्र प्रत्यक्षम् ; तल्लक्षणस्यैव प्रस्तुतत्वात् । न तु[1] कल्पनापोढाभ्रान्तलक्षणं प्रकृतम्, येन तद्विधीयत [ G. 367 ] इदि स्यात् । कल्पनाप्रतिषेधाच्च ज्ञानस्य सामर्थ्यलब्धत्वात् 'अवत्सा धेनुरानीयताम्' इति यथा वत्सप्रतिषेधेन गोधेनोरिति, अतो ज्ञानमिति नोक्तम् । का पुनरत्र कल्पनाऽभिप्रेता, यदपोढं ज्ञानं प्रत्यक्षम् ? इत्याह – अभिलापिनी प्रतीतिः कल्पनेति । अथ यस्यां क्लृप्तिहेतुत्वाद्यात्मिकायां शङ्करस्वामिप्रभृतयो विस्तरेण दोषमुक्तवन्तः, सापि किं गृहीतव्या ? उत न ? इत्याह – क्लृप्तिहेतुत्वाद्यात्मिका न त्विति । गृह्यत इति शेषः । तेन तदाश्रयेण ये दोषाः परेणोक्ता, ते तत्पक्षानङ्गीकारादेव नावतरन्तीत्युक्तं भवति । क्लृप्तिः = व्यपदेशः, तद्धेतुत्वं जात्यादीनामिति बोद्धव्यम्; यतो जात्यादिविशेषमन्तरेण न व्यपदेशोऽस्ति । आदिशब्देन शब्दसंसर्गिचौदारिकसूक्ष्मताहेतू वितर्कविचारौ, तथा ग्राह्यग्राहककल्पनेत्येवमादि ग्रहीतव्यम् । अभिलापः = वाचकः शब्दः, स च सामान्याकारः, स विद्यते यस्याः प्रतिभासतः सा तथोक्ता ॥ १२१३ ॥

कुतः पुनरीदृशी प्रतीतिः सिद्धा ? इत्याह – शब्दार्थेत्यादि । वृक्ष इत्यादिरूपतो या वाचामप्रयोगेऽपीति सम्बन्धः । यदि वा – पूर्वेण शब्दार्थघटनायोग्या

---

१. ननु—जै० ।

अतीतभवनामार्थभावनावासनान्वयात् ।
सद्योजातोऽपि यद्योगादितिकर्त्तव्यतापटुः ॥ १२१५ ॥
चिन्तोत्प्रेक्षादिकाले च विस्पष्टं या प्रवेद्यते ।
अनुविद्धेव सा शब्दैरपह्नोतुं न शक्यते ॥ १२१६ ॥
तस्याश्चाध्यवसायेन भ्रान्ता शब्दार्थयोः स्थितिः ।
अन्यायोगादसत्त्वेऽस्याः [1]सदृश्यपि न सम्भवेत् ॥ १२१७ ॥

---

वृक्ष इत्यादिरूपत इति सम्बन्धः । अनेन प्रत्यक्षत एव कल्पनायाः सिद्धिमादर्शयति; सर्वप्राणभृतामनुसिद्धत्वाद् विकल्पस्य ॥ १२१४ ॥

तथा ह्याबालमसावितिकर्त्तव्यताहेतुतया सिद्धैवेति दर्शयति — अतीतेत्यादि । अतीतो भवः = अतीतं जन्म, तत्र नामार्थभावना = शब्दार्थाभ्यासः, तेनाहिता या वासना = सामर्थ्यम्, तस्या अन्वयः = अनुगमो यतो बालस्याप्यस्ति, तेनाभिलापिनी प्रतीतिस्तस्यापि भवत्येव । यस्याः = कल्पनाया योगात्, इतिकर्त्तव्यतायाम् = स्मितरुदितस्तनपानप्रहर्षादिलक्षणायाम्, पटुः = चतुरो भवति, अतोऽनया कार्यभूतया यथोक्ता कल्पना बालस्याप्यनुमीयत एव । यथोक्तम् —

"इतिकर्त्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते" ॥ (वा० प० १.१२१) इति ।

सा पुनः सन्मूर्च्छिताक्षराकारध्वनिविशिष्टमन्तर्मात्राविपरिवर्त्तिनमर्थं बहिरिवादर्शयन्ती तेषां समुपजायते, यया पश्चात् सङ्केतग्रहणकुशला भवन्ति ॥ १२१५ ॥

[G. 368] चिन्तेत्यादिना भूयः प्रत्यक्षतः कल्पनासिद्धिमाह ॥ १२१६ ॥

तस्याश्चेत्यादिना शाब्दव्यवहाराख्यकार्यलिङ्गतोऽपि सिद्धिमाह । यतस्तात्त्विकी शब्दार्थव्यवस्था [2]पूर्वं [2]निषिद्धा, भ्रान्तेति च व्यवस्थापिता । यदि चास्याः कल्पनाया असत्त्वं स्यात्, तदा सा = शब्दार्थव्यवस्था, ईदृश्यपि = भ्रान्तापि, न सम्भवेत्; तदभिप्रायवशात् तस्याव्यवस्थानात्, अन्येषां च स्वलक्षणादीनां बाह्यानां वाच्यत्वेनायोगस्य प्रतिपादितत्वात् ॥ १२१७ ॥

---

१. सेदृश्यपि—पा०, गा० २–२. पूर्वैर्निषिद्धा—पा०, गा० ।

जात्यादियोजनायोग्यामप्यन्ये कल्पनां विदुः ।
सा जात्यादेरपास्तत्वाददृष्टेश्च न सङ्गता ॥ १२१८ ॥
जात्यादीनामदृष्टत्वात् तद्योगाप्रतिभासनात् ।
क्षीरोदकादिवच्चार्थे घटना घटते कथम् ॥ १२१९ ॥
हेयोपादेयविषयकथनाय द्वयोक्तितः ।
परापरप्रसिद्धेयं कल्पना द्विविधोदिता ॥ १२२० ॥

लक्षणकारमतम्

नामादियोजना चेयं स्वनिमित्तमनन्तरम् ।

---

ननु चान्येऽपि न केवलमभिलापिनीं प्रतीतिं कल्पनां वर्णयन्ति, किन्तु जातिगुणक्रियादिसम्बन्धयोग्यामपि, सा कस्मान्न गृह्येत ? इत्याह—जात्यादीत्यादि । अदृष्टेश्चेति । जात्यादेरिति सम्बन्धः । अयं चाभ्युपगम्य जात्यादीन् परिहार उक्तः ॥ १२१८ ॥

जात्यादीनामित्यादिना तदेवादृष्टत्वं समर्थयते । क्षीरोदकादिवच्चेति । यथा क्षीरोदकादेर्मिश्रीभूतस्य विवेकेनाप्रतिभासनान्न घटना शक्यते कर्तुम्, तद्वज्जात्यादीनां सत्त्वेऽपि विवेकेनाश्रयादप्रतिभासनान्न शक्यते तदाश्रयेण सहेत्यर्थः ॥ १२१९ ॥

यदि तर्हि जात्यादियोजना कल्पना न युक्तैव, तत्कथं लक्षणकारेणोक्तम्—"नामजात्यादियोजना कल्पना" इति ? आह—हेयेत्यादि । तत्र हेया जात्यादियोजना परप्रसिद्धा कल्पना, उपादेया स्वप्रसिद्धा नामयोजनाकल्पना—इति दर्शनाय द्विप्रकाराऽपि कल्पना निर्दिष्टा । कथमवगम्यते ? इत्याह—[G 369] द्वयोक्तितः । यस्मान्नाम च जात्यादयश्च नामजात्यादयस्तेषां योजना—इत्येवं वर्गद्वयमुक्तम्; अन्यथा नामादियोजना, यदि वा जात्यादियोजना—इत्येव वाच्यं स्यात् । न चेदं परिगणनम्, आदिशब्दवैफल्यप्रसङ्गात् ॥ १२२० ॥

ननु च कल्पना ज्ञानधर्मः, तद्विरहप्रतिपादनमेव प्रकृतम्; प्रत्यक्षाधिकारात्, नार्थधर्मविरहप्रतिपादनम् । नामजात्यादीनां च या योजना तद्वद्भिः, साऽर्थगतो धर्मः, न ज्ञानस्य; ततश्चाप्रस्तुताभिधायित्वं लक्षणकारस्य ? इति चोद्यमाशङ्क्याह—

आक्षिप्य वर्त्तते येन तेन नाप्रस्तुताभिधा ॥ १२२१ ॥
नामजात्यादयः सर्वे योज्यन्ते वाऽनयेति सा ।
तयोक्ता कल्पना प्रोक्ता प्रतीतिरभिलापिनी ॥ १२२२ ॥

वृत्तिग्रन्थसङ्क्रमनम्

यद्वा स्वमतसिद्धैव केवला कल्पनोदिता ।
सर्वत्र नाम्ना युक्तोंऽर्थं उच्यत इति योजनात् ॥ १२२३ ॥

---

नामादियोजना चेयमिति । अनन्तरम् = अव्यवहितं निमित्तं यत्, तस्याः कारणम् । तत् पुनराविष्टाभिलापा प्रतीतिः । सा च वस्तुद्वयानुसन्धानाकारोत्पत्तितस्तथा योजनेति व्यपदिश्यते । नैव तु कश्चित् कञ्चिद्योजयति; निर्व्यापारत्वात् सर्वधर्माणाम् । तस्याक्षेपो द्वाभ्यां प्रकाराभ्याम् । नामादीनां[1] योजना यतो भवति सा तयोक्ता । गमकत्वाद् वैयधिकरण्येऽपि च बहुव्रीहिः । कारणे कार्योपचाराद्वा । उपचारस्य च प्रयोजनम्—तदन्यकारणेभ्यो विशिष्टकार्यकारिणः स्वभावख्यापनम् ॥ १२२१ ॥

अथ वा—योज्यतेऽनयेति योजना, नामजात्यादीनां योजनेति समासं कृत्वाऽभिलापिन्येव कल्पना निर्दिष्टेत्यदोष इति दर्शयति—नामजात्यादय इत्यादि ॥ १२२२ ॥

यद्वेत्यादिना परिहारान्तमाह—यद्येवम्, कथमयमाचार्यीयो वृत्तिग्रन्थो नीयते ? तद्यथा—"यदृच्छाशब्देषु नाम्ना विशिष्टोऽर्थ उच्यते—डित्थ इति, जातिशब्देषु—जात्या गौरिति, गुणशब्देषु—गुणेन शुक्ल इति, क्रियाशब्देषु—क्रियया पाचक इति, द्रव्यशब्देषु—द्रव्येण दण्डी विषाणी" (        ) इति । अनेन हि ग्रन्थेन जात्यादिविशेषणयुक्तस्याप्यर्थस्योच्यमानत्वं पृथक्प्रकाशितमित्यत आह—सर्वत्रेत्यादि । सर्वत्रेति जात्यादिशब्देष्वपि । एतदुक्तं भवति—यथा [ C. 370 ] यदृच्छाशब्देषु नाम्ना विशिष्टोऽर्थ उच्यते, एवं जात्यादिशब्देषु गौरित्यादिषु नाम्ना विशिष्टोऽर्थ उच्यते—इत्येतत् सर्वत्र ग्रन्थे योजनीयमिति ॥ १२२३ ॥

---

१. ताभ्यां—पा०, गा० ।

**तैस्तु करणविभक्त्या साफल्यमनुभूयते ।**
**नाम्नो जात्यादिभिः सेयमित्यर्थोऽध्यवतिष्ठते ।। १२२४ ।।**
**यदृच्छाशब्दवाच्याया जातेः सद्भावतो न च ।**

---

कथं तर्हि जात्या गुणेन क्रियया द्रव्येण वेत्येतदपरं तृतीयान्तं योजनीयम् ? इत्याह—तैस्त्वित्यादि । जात्या करणभूतया नाम्ना विशिष्टोऽर्थ उच्यते गौरिति, तथा गुणादिभिः—इत्येवं तैर्जात्यादिभिः करणविभक्त्या सम्बन्धात् साफल्यमनुभूयते ।

यद्येवम्, 'नामजात्यादियोजना' इत्यत्र सूत्रे कथं सम्बन्धः कार्यः ? इत्याह—**नाम्नो जात्यादिभिरिति** । योजनेति शेषः । **सेयमिति** । अनेन समासार्थलभ्यां कल्पनामेव निर्दिशति । जात्यादिभिर्योजना जात्यादियोजना, नाम्नो जात्यादि-योजना सेयं नामजात्यादियोजनेत्ययं समासार्थोऽध्यवतिष्ठत इति यावत् ॥१२२४॥

यद्येवम्, यदृच्छाशब्देषु जात्यादीनां प्रवृत्तिनिमित्तानामभावादव्यापिनी व्यवस्था भवेत् ? इत्याशङ्क्याह—**यदृच्छाशब्दवाच्याया** इति । एतदुक्तं भवति—येऽप्येते डित्थादयः शब्दा यदृच्छाशब्दत्वेन प्रतीताः, तेऽपि जन्मनः प्रभृत्यामरणक्षणादनुवर्त्तमानाः प्रतिक्षणभेदभिन्नमसाधारणभेदेन वस्तु गमयितुमशक्ताः कालप्रकर्षमर्यादावच्छिन्नवस्तुसमवेतां जातिमभिधेयत्वेनोपाददते, अन्यथा हि बालाद्यवस्थाभेदपरिच्छिन्नवस्तुभागविषयतया निरूढाः कथं वृद्धाद्यवस्थोपहित-भेदमपि वस्तु प्रतिपादयेयुः !

येषामपि "न क्षणिको देहः, किं तर्हि ? कालान्तरावस्थायी" इति दर्शनम्, तेषामपि यथाकालमपचीयमानावयसम्बन्धाद्, अवयवापचयाद्वा, अन्यद् द्रव्यम-वस्थाभेदेष्विति सिद्धम् ।

परिणतिदर्शनेऽपि यदवस्थाभेदसम्बद्धं वस्तु तच्छब्दवाच्यतया प्रतिज्ञातम्, ततश्चावस्थान्तरं समाश्रयेत, तदेव वस्तु तेन शब्देन नाभिधीयेत । यथा पयसि विनिश्चिताभिधानशक्तिः क्षीरशब्दो न दध्नि प्रवर्त्तते, तथा शरीरेऽपि नावस्था-न्तरे प्रवर्त्तेतेति जातिरवश्यमभ्युपगन्तव्या[1] ।

---

१. अवश्याभ्युप०—पा०, गा० ।

अव्याप्तिरस्य मन्तव्या प्रसिद्धेस्तु पृथक्श्रुतिः ॥ १२२५ ॥

परमतम्

नन्वन्यापोहवाच्यत्वाज्जातिशब्दस्तु केवलः ।
विवक्षापरतन्त्रत्वाद् [1]यदृच्छाशब्द एव वा ॥ १२२६ ॥

तत्खण्डनम्

सत्यं लोकानुवृत्त्येदमुक्तं[2] न्यायविदेदृशम् ।
इयानेव हि शब्दोऽस्मिन् व्यवहारपथं गतः ॥ १२२७ ॥
ते तु जात्यादयो नेह लोकवद् व्यतिरेकिणः ।

---

अथ वा–मा भूद् वस्तुभूता जातिः, तथाऽपि नाव्यापिनी व्यवस्था । तथा हि—त एव भेदा [ G. 371 ] अविवक्षितभेदाः सामान्यमिति, भेदा[3] एव[3] सर्वत्र जातिशब्दैरुपादीयन्त इति यदृच्छाशब्दा अपि[4] जात्यभिधायिनः सन्तु । तथा चोक्तम्—

"जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत् ।
शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः ॥" (वा. प. ३.१.१२) इति ।

किमर्थं तर्हि यदृच्छाशब्दा[4] जातिशब्देभ्यः पृथग्लक्षणकारेण निर्दिष्टाः ? इत्याह—प्रसिद्धेस्त्विति । गवादयो हि शब्दा लोके जातिशब्दतया प्रतीताः, चित्राङ्गदादयस्तु संज्ञाशब्दत्वेनेति पृथग्वचनम् ॥ १२२५ ॥

नन्वित्यादिना[5] परश्चोदयति ॥ १२२६ ॥

सत्यमित्यादिना प्रतिविधत्ते । इयानेव हीति । पञ्चप्रकारः संज्ञाजातिगुणक्रियाद्रव्यशब्दभेदेन ॥ १२२७ ॥

ननु यदि स्वमतसिद्धैव कल्पनाऽभिमेता, किमर्थं तर्हि "अन्ये तु–अर्थशून्यैः शब्दैरेव विशिष्टोऽर्थ उच्यते" (        ) इत्यनेन ग्रन्थेन पृथक्स्वमतसिद्धा कल्पना पश्चादुपवर्णिताऽऽचार्येण ? इत्याह—ते तु जात्यादय इति । एतदुक्तं भवति—न शाबलेयादिव्यक्तिव्यतिरिक्ता जात्यादयः परमार्थिकाः सन्ति

---

१. विवक्षाशब्द—पा०, गा० ।    २. ०दमव्यक्तं—जै० ।
३–३. पा० गा० पुस्तकयोर्नास्ति ।    ४–४. पा०, गा० पुस्तकयोर्नास्ति ।
५. नन्वित्यादि—पा०, गा० ।

इत्येतत्प्रतिपत्त्यर्थमन्यें त्वित्यादिवर्णितम् ॥ १२२८ ॥
जात्यादियोजनां येऽपि कल्पनां समुपाश्रिताः ।
तैरभ्युपेया नियतं प्रतीतिरभिलापिनी ॥ १२२९ ॥
अन्यथा योजनाभावाद् युक्तयोरिव भावयोः ।
स्वातन्त्र्येण परिच्छेदात् कल्पना नैव कल्प्यते ॥ १२३० ॥
एवं वा व्यवहार्यं स्यात् सर्वं विश्वमिदं ततः ।
जात्यादिरूपसंसृष्टं व्यवहार्यमिदं मतम् ॥ १२३१ ॥
जात्यादियोजना शब्दयोजनाऽव्यभिचारिणी ।
एवं चोच्यत इत्येतत् फलवज्जायते वचः ॥ १२३२ ॥
तस्मात् समस्तसिद्धान्तसंस्थितानां प्रवादिनाम् ।
अविवादादयत्नेन[1] साध्येयं कल्पना मया ॥ १२३३ ॥

---

सांवृतास्त इत्यस्यार्थस्य प्रतिपादनार्थमुक्तमिदं लक्षणकारेण, नतु पृथगपरां कल्पनां दर्शयितुमिति । अन्य इति बौद्धाः । अर्थशून्यैरिति । जात्यादिनिरपेक्षैरपोहमात्रगोचरैः शब्दैः । इत्याचार्यग्रन्थस्यार्थः ॥ १२२८–१२२९ ॥

न केवलमस्माभिरियमभिलापिनी प्रतीतिः कल्पनाऽभ्युपगता, परैरप्यवश्यमभ्युपगन्तव्या[2]; अन्यथा जगदव्यवहार्यमेव स्यादिति दर्शयन्नाह— **जात्यादियोजनां येऽपीति** । [ G. 372 ] जातिगुणक्रियाद्रव्ययोजनायामपि कल्पनायां परैरभ्युपगतायां नामयोजनैव कल्पना । तथा हि—तत्र जात्यादिव्यवच्छिन्नं वस्तु नाम्नैव विशिष्टं गृह्यते, अन्यथा हि स्वातन्त्र्येणानेकपदार्थग्रहणवद् योजनाभावात् कथं कल्पना भवेत्, ततश्च मूकमेव जगत् स्यात् । अत एव च दण्डयुक्तं पुरुषं पश्यन्नपि न तावद् दण्डीति योजयति यावन्न नामभेदं स्मरति; यत एव शब्दयोजनया सर्वा योजना व्याप्ता । अत एव चाचार्यीयम् "जात्या विशिष्टोऽर्थ उच्यते—गौः" इत्यादिषु यद् 'उच्यते' इति वचनम, तत् सफलं भवेत् । अन्यथा विना नाम्ना कथम् 'उच्यते' इति स्यात्; अभिधानक्रियायाः शब्दधर्मत्वात् ॥ १२३०–१२३२ ॥

---

१. अविवादानयत्नेन—जै० । २. ०वश्याभ्युप०—पा०, गा० ।

लक्षणकाराभिप्रायवर्णनम्

एतदागूर्यं सकलं नामजात्यादिवर्णनम् ।
मतयोः स्वान्ययोरित्थमुपादानमिहाकरोत् ॥ १२३४ ॥
तेभ्योऽस्माकमियानेव भेद इत्येवमब्रुवन् ।
अन्ये त्वित्यादिकं वाक्यमनन्तरमदो जगौ ॥ १२३५ ॥

न्यायमुखसङ्गमनम्

एवं न्यायमुखग्रन्थो व्याख्यातव्यो दिशाऽनया ।
ज्ञानमित्यभिसम्बन्धात् प्रतीतिस्तत्र चोदिता ॥ १२३६ ॥

---

तस्मादित्यादिना कल्पनासिद्धिमुपसंहरति ॥ १२३३ ॥

यद्वा[1]—लक्षणकारस्य कल्पनां सिद्धिरूपां निर्दिशतोऽभिप्रायमाह—एतदागूर्येति । हेयोपादेयविषयकथनं जात्यादियोजना[2] नामयोजनां विना भावि-नीत्यादि पूर्वोपवर्णितम् । नामजात्यादिवर्णनमिति । अकरोदिति सम्बन्धः । स्वान्ययोस्तु मतयोरुपादानं हेयोपादेयविषयकथनाय ॥ १२३४–१२३५ ॥

न्यायमुखग्रन्थस्तर्हि कथं नेयः ? इत्याह—एवमित्यादि । तत्रायं न्याय-मुखग्रन्थः—"यत् ज्ञानार्थरूपादौ विशेषणाभिधायकाभेदोपचारेणाविकल्पकं तद-क्षमक्षं प्रति वर्त्तत इति प्रत्यक्षम्" ( ) इति । विशेषणं जात्यादि, अभिधायकं नाम, तयोरभेदोपचारो जात्यादिमद्भिः संज्ञिना च । अभेदोपचारग्रहणमुपलक्षणम् । [G. 373] यत्रापि भेदेन ग्रहणम्—अस्य गोत्वमस्येदं नामेति, तत्रापि कल्पनेष्यत एव ।

ननु चानुप्रतीतिः कल्पनेति नोक्तम्, तत् कथं तथोक्तकल्पना लभ्यते ? इत्याह—ज्ञानमित्यभिसम्बन्धादिति । एतदुक्तं भवति—कल्पनावैपरीत्येन ज्ञानमेव प्रत्यक्षत्वेन दर्शयता ज्ञानधर्मत्वं कल्पनाया दर्शितम् । तथा चायमर्थो भवति—यज्ज्ञानं नामाद्यभेदोपचारेणाविकल्पकम्, तत् प्रत्यक्षम्; यत्तु ज्ञानं तथा-विकल्पकं तत्कल्पनात्मकत्वान्न प्रत्यक्षमिति सामर्थ्यादभिलापिनी प्रतीतिः कल्पनेति प्रत्यक्षवैपरीत्येन सिध्यति । एवं परमतसङ्ग्रहो दर्शित इति ॥ १२३६ ॥

---

१. पा० गा० पुस्तकयोर्नास्ति । २. जात्यादियोजनां विना—पा०, गा० ।

आचार्यमतम्

यद्वा विशेषणं भेदो येनान्यापोहकृच्छ्रुतिः ।
जात्यादीनां व्यवच्छेदमनेन च करोत्ययम् ॥ १२३७ ॥
एवं प्रतीतरूपा च यदेवं कल्पना मता ।
तादात्म्यप्रतिषेधश्च प्रत्यक्षस्योपवर्ण्यते ॥ १२३८ ॥
तदाऽध्यक्षादिशब्देन वाच्यत्वेऽपि न बाध्यते ।
कल्पनाविरहोऽध्यक्षे न हि सा शब्दवाच्यता ॥ १२३९ ॥
अन्यथा रूपगन्धादेः सविकल्पकता भवेत् ।
अतो नास्पदमेवेदं यदाहुः कुधियः परे ॥ १२४० ॥
यदि प्रत्यक्षशब्देन प्रत्यक्षमभिधीयते ।
कथं तत् कल्पनापोढमयुक्तं गम्यते कथम् ॥ १२४१ ॥

---

यद्वा—स्वमतोपवर्णनमेव केवलमाचार्येण कृतमित्यादर्शयति—यद्वे-त्यादि । भेदो विशेषणं व्यावृत्तिरित्यर्थः । तस्याभिधायकम्, न जात्यादीनाम्; तस्याभेदोपचार इति विग्रहः ॥ १२३७ ॥

ननु च यदि प्रतीतिरभिलपिनी कल्पना, सा धर्मिणी, न च धर्म्यन्तरे धर्म्यन्तरस्य प्रसङ्गः, येन तन्निषेधस्तद्धर्मतया क्रियत इत्यसम्बन्धाभिधानम्; तथा यदि प्रत्यक्षं कल्पनापोढम्, [1]कथं तत् प्रत्यक्षशब्देनोच्यत इति ?—'अनभिधेयार्थः किल कल्पनापोढार्थः' इति मन्वानाः परे [2]भर्गभारद्वाजप्रभृतयश्चोदयन्ति, एतच्च सर्वं परिहृतमेवेति योजयन्नाह—एवं प्रतीतिरूपा चेत्यादि । तादात्म्यप्रतिषेध इति । "यत्रैषा कल्पना नास्ति तत्प्रत्यक्षम्" इत्यनेन ग्रन्थेन लक्षणकारस्तादात्म्यप्रतिषेधं करोति । एवम्भूतं कल्पनात्मकं यज्ज्ञानं न भवतीत्यर्थः । [G. 374] न त्वाधेयनिषेधमिति प्रथमं तावदचोद्यम् । द्वितीयमप्यचोद्यमेव; यतो नानभिधेयार्थः कल्पनापोढार्थो वर्णितः, किं तर्हि ? अविकल्पकार्थः । अविकल्पकमपि ज्ञानं यद्यप्यभिधीयते, शब्देनाध्यवसायानुरोधात्; तथापि रूपादिवत्स विकल्पकतां यास्यतीति यत्किञ्चिदेतत् ॥ १२३८–१२४१ ॥

---

१. कत्वं—पा० गा० । २. भर्तृ०—जै० पुस्तके पाठान्तरम् ।

प्रत्यक्षस्य कल्पनापोढत्वम्

प्रत्यक्षं कल्पनापोढं वेद्यतेऽतिपरिस्फुटम् ।
अन्यत्रासक्तमनसाऽप्यक्षैर्नीलादिवेदनात् ॥ १२४२ ॥
नासावेव विकल्पो हि तमर्थं प्रतिपद्यते ।
अतीताद्यभिधात्यागात् तन्नामघटनाप्तितः ॥ १२४३ ॥
तदा तन्नामसंसर्गी विकल्पोऽस्त्यपरो न च ।
दृश्यस्याप्रतिसंवित्तेरनिष्टेश्चं द्वयोः सकृत् ॥ १२४४ ॥
विकल्पकमतो ज्ञानसहभाव्यनुभूयते ।
तस्मादिन्द्रियविज्ञानमकल्पनमिदं स्फुटम् ॥ १२४५ ॥
क्रमेणैवोपजायन्ते विज्ञानानीति चेन्मतम् ।

---

स्यादेतत्—भवत्वेवं यथोपवर्णिता कल्पना, कल्पनापोढं तु कथं सिद्धम् ? इत्याह—प्रत्यक्षमित्यादि । अनेन स्वसंवित्त्या प्रत्यक्षतः कल्पनाविरहः सिद्धः—इत्यादर्शयति ॥ १२४२ ॥

स्यादेतत्—असावेव विषयान्तरव्यासक्तो विकल्पः पुरोऽवस्थं[1] नीलादि प्रतिपद्यत इत्याह—नासावेवेत्यादि । यदि हि स एव विकल्पस्तमर्थं प्रतिपद्येत, तदाऽतीताद्यर्थाभिधानत्यागेन तस्यैव नीलादेर्नाम योजयेत् ; एकत्राभिलापद्वयसंसर्गप्रतीतेरतीताद्यभिधात्यागादित्युक्तम् । तस्याभिमुखीभूतस्य नाम = तन्नाम, तस्य घटना = योजना, तस्या आप्तिः = प्राप्तिः । प्रसङ्ग इति यावत् ॥१२४३॥

स्यान्मतम्—अन्य एव तर्हि विकल्पस्तदा तमर्थं प्रतिपद्यत इत्येवं कस्मान्न विज्ञायते ? इत्याह—तदा तन्नामेत्यादि । अनेन यथाक्रमं प्रत्यक्षविरोधम्, अभ्युपगमविरोधं च सकृद्विकल्पद्वयप्रतिज्ञायामाह—द्वयोरिति । विकल्पयोरिति शेषः ॥ १२४४ ॥

विकल्पेत्यादिनोपसंहरति ॥ १२४५ ॥

विकल्पसहभावित्वमसिद्धमिति कदाचित्परो ब्रूयात्, अतस्तदाशङ्कयन्नाह—क्रमेणेत्यादि । [ G. 375 ] यदि क्रमेणोपजायन्ते कथं युगपत् प्रवेद्यन्ते ? इत्याह—

---

१. पुरस्थं—पा०, गा० ।

सकृद्भावाभिमानस्तु शीघ्रवृत्तेरलातवत् ॥ १२४६ ॥

पूर्वपक्षप्रतिक्षेपः

न तदाऽभिमुखीभूतभावानामनुषङ्गवान् ।
विकल्पो विद्यते दृश्य 'इत्यत्रोक्तं न किञ्चन' ॥ १२४७ ॥
भ्रान्तिस्तदभिमानश्च तद्वयक्तं च निरन्तरम् ।
तदेव चार्थविज्ञानयौगपद्यमतः स्फुटम् ॥ १२४८ ॥
नर्त्तकीदृष्टयवस्थादावखिलं वेद्यते सकृत् ।

---

सकृद्भावाभिमानस्त्विति । अलात इवालातवत् । यथाऽलाते शीघ्रभ्रमणात् सकृच्चक्राकारा प्रतीतिः, तद्दर्शनानां घटनाद्; एवं ज्ञानानां शीघ्रोत्पत्तितः सकृद्भावाभिमान इति । अथ वा—अलातशब्देन विषयिणि ज्ञाने विषयोपचारात् तद्विषयाणि ज्ञानान्युच्यन्ते । पूर्ववद्वृत्तिः ॥ १२४६ ॥

नेति पूर्वपक्षं प्रतिक्षिपति । एवं मन्यते—न सकृद्भावप्रसाधनमत्र प्रकृतम्, किं तर्हि ? धियः कल्पनाविरहः । स च अन्यत्रगतचित्तस्याप्यभिमुखीभूतपदार्थानुभवकाले तन्नामसंसर्गिणो विकल्पस्योपलब्धिलक्षणप्राप्तस्यानुपलब्ध्या सिध्यतीति नात्र किञ्चिद् दूषणमुक्तम् । तथा हि—यदि नाम क्रमेण ज्ञाने संवेद्येते, न तु विकल्पः संवेद्यत इति न प्रकृतस्य व्याघातः ॥ १२४७ ॥

न चायं सकृद्भावाभिमानोऽपि भ्रान्त इत्यादर्शयन्नाह—भ्रान्तिरित्यादि । 'भ्रान्तिर्न'—इति प्रकृतं सम्बन्धनीयम् । तदभिमान इति । तस्य—सकृद्भावस्याभिमान इति विग्रहः । बाधकप्रमाणवशाद् विभ्रान्तिव्यवस्थानम्, न चात्र बाधकमस्ति, येन भ्रान्तिः स्यात् । कथं नास्ति ? इत्याह—तद्व्यक्तं च निरन्तरमिति । तदित्यभिमुखीभूतार्थसंवेदनं निरन्तरविषयान्तरासक्तचित्तसमकालं स्पष्टमनुभूयते । तदेव चेदृशमर्थविज्ञानं प्रत्यक्षमुच्यत इति कुतो भ्रान्तिः । ॥ १२४८ ॥

न केवलं सकृद्भावस्य भ्रान्तत्वव्यवस्थां प्रति न किञ्चित् साधकमस्ति, प्रत्युत बाधकमस्तीति दर्शयन्नाह—नर्त्तकीत्यादि । [G. 376] एकैका धीः पञ्च-

---

१-१. इत्येवोक्तं न···ना—पा०, गा० ।

बहुभिर्व्यवधानेऽपि भ्रान्तिः[1] सा चाशुवृत्तितः[1] ॥ १२४९ ॥
लतातालादिबुद्धीनामत्यर्थं लघु वर्त्तनम् ।
सकृद्भावाभिमानोऽतः[2] किमत्रापि न वर्त्तते ॥ १२५० ॥
शुद्धे च मानसे कल्पे व्यवसीयेत न क्रमः ।
तुल्या[3] च सर्वबुद्धीनामाशुवृत्तिश्चिरास्थितेः ॥ १२५१ ॥
अतः सर्वत्र विषये न क्रमग्रहणं भवेत् ।
सकृद्ग्रहणभासस्तु भवेच्छब्दादिबोधवत् ॥ १२५२ ॥
अलातेऽपि सकृद् भ्रान्तिश्चक्राभासा प्रवर्त्तते ।
न दृशां प्रतिसन्धानाद् विस्पष्टं प्रतिभासनात् ॥ १२५३ ॥

---

मिर्धीभिर्व्यवधीयमानाऽपि नर्त्तकीदर्शनावस्थायामव्यवहितेव प्रतिभाति । तथा हि—यदैव नर्त्तकीमुत्पश्यति तदैव गीतादिशब्दं शृणोति, कर्पूरादिरसमास्वादयति, नासिकापुटविन्यस्तकुसुमामोदं जिघ्रति, व्यजनानिलादिस्पर्शं च स्पृशति, वस्त्राभरणादिदानादि च चिन्तयति; ततश्च यदि बहुभिर्व्यवधानेऽपि बुद्धीनां सकृद्भावभ्रान्तिराशूत्पत्तिबलादुपजायते, तदा लता तालः, सरो रसः—इत्येवमादवेकैकज्ञानव्यवधानाद् वर्णश्रुतीनामत्यर्थं लघुवर्त्तनमस्तीति सकृद्वर्णप्रतिभासः प्राप्नोति । ततश्च सरो रस इत्यादौ शब्दे श्रूयमाणे श्रुतिभेदः, अर्थप्रतीतिभेदश्च न स्यात् ।

किञ्च—बुद्धेर्विजातीयचक्षुरादिविज्ञानाव्यवहिते नानाविधार्थचिन्तारूपे विकल्पे समुत्पद्यमाने शीघ्रवृत्तिरस्तीति न क्रमव्यवसायः प्राप्नोति । सर्वासां च बुद्धीनां क्षणिकत्वेन चिरानवस्थानादाशुवृत्तिरस्तीति कस्यचिदर्थस्य न क्रमवती प्रतीतिः स्यात् । शब्दादिबोधवदिति । नर्त्तकीप्रेक्षावस्थायां शब्दादिसंवेदनवत् ॥ १२४९–१२५२ ॥

यश्चायमलातवदिति दृष्टान्तः स साध्यविकल इति दर्शयन्नाह—अलातेऽपीत्यादि । यतो नेयं मानसी भ्रान्तिः क्रमवर्त्तिनी दर्शनानि घटयन्ती समुपजायते, किं

---

१–१. भ्रान्तिश्चेदाशु०—गा० । २. ०भवाभि०—पा०, गा० ।
३. अल्पा—पा०, गा० ।

तथा हि प्रतिसन्धानं स्मृत्यैव क्रियते न तु ।
दर्शनेन व्यतीतस्य विषयस्यानवग्रहात् ॥ १२५४ ॥
यश्चास्या विषयो नासौ विनष्टत्वात् परिस्फुटः ।
ततः परिस्फुटो नायं चक्राभासः प्रसज्यते ॥ १२५५ ॥
यदि चाप्यस्य भावस्य यद्रूपस्थितिकारणम् ।
न विद्यते न तत्त्वेन स व्यवस्थाप्यते बुधैः ॥ १२५६ ॥
अविद्यमानसास्नादिर्यथा कर्को गवात्मना ।
विशेषणविशिष्टार्थग्रहणं[1] न च विद्यते ॥ १२५७ ॥
सविकल्पकभावस्य स्थितेराक्षे निबन्धनम् ।
विपक्षः शाबलेयादिरन्यथाऽतिप्रसज्यते ॥ १२५८ ॥

---

तर्हि ? सकृदेकैवेन्द्रियजा चक्राकारा भ्रान्तिः सामग्रीविशेषबलादुत्पद्यते; विस्पष्टप्रतिभासत्वात् । न हि विकल्पानुबद्धस्य स्पष्टप्रतिभासित्वं युक्तम् । तथा हि—घटना [ G. 377 ] क्रियमाणा स्मृत्यैव क्रियते, नेन्द्रियज्ञानेन; तस्य वस्तुसन्निधानबलभाविनोऽतीतार्थग्रहणासामर्थ्यात् । यश्चास्याः स्मृतेर्विषयः, नासौ परिस्फुटः; कस्मात् ? विनष्टत्वात् । तस्मादस्पष्टाभत्वप्रसङ्गान्नेयं मानसी भ्रान्तिः, किं तर्हि ? इन्द्रियजा—इति साध्यविकलो दृष्टान्तः ॥ १२५३-१२५५ ॥

एवं प्रत्यक्षतो धियः कल्पनाविरहं प्रतिपाद्य साम्प्रतमनुमानतः प्रतिपादयति—यदि चेत्यादि । प्रयोगः —यस्य यद्रूपं व्यवस्थितौ निमित्तं नास्ति, न तत् तथा प्रेक्षावद्भिर्व्यवहर्तृभिर्व्यवस्थाप्यते, तद्यथा —अविद्यमानगोप्रज्ञप्तिनिमित्तभूतककुदादिसमुदायः कर्को गोत्वेन । नास्ति च प्रत्यक्षस्य नीलाद्यसाधारणविषयबलेनोत्पद्यमानस्य सविकल्पकभावव्यवस्थितौ विशेषणविशिष्टार्थग्रहणं निमित्तमिति कारणानुपलब्धिः । वैधर्म्येण शाबलेयबाहुलेयादयः । सर्वथा सर्वस्य व्यवस्थानप्रसङ्गो व्यवस्थापयितुश्चाप्रेक्षापूर्वकारितांप्रसङ्गो बाधकं प्रमाणमिति संक्षेपार्थः । कर्कः = शुक्लोऽश्वः । जात्यादेरिति । विशेषणस्येति शेषः । सन्तु नाम वस्तुभूता जात्या-

---

1. ०विशिष्टार्थे ग्रहणं—पा०, गा० ।

न चाप्रसिद्धता हेतोर्जात्यादेः प्रतिषेधतः ।
भेदेन चापरिच्छेदान्न चास्त्येवं विशेषणम् ॥ १२५९ ॥
नामापि वाचकं नैव यच्छब्दस्य स्वलक्षणम् ।
स्वलक्षणस्य वाच्यत्ववाचकत्वे हि दूषिते ॥ १२६० ॥
अध्यारोपितमेवातो वाच्यवाचकमिष्यते ।
अनारोपितमर्थं च प्रत्यक्षं प्रतिपद्यते ॥ १२६१ ॥
स्वलक्षणस्य सद्भावे सद्भावात् तदभावतः ।
व्यवधानादिभावे च तस्यापि व्यतिरेकतः ॥ १२६२ ॥

प्रमाणान्तरम्

अशक्यसमयो ह्यात्मा नीलादीनामनन्यभाक् ।

---

दयः, तथाऽपि नासिद्धतेति दर्शयन्नाह—भेदेन[1] चापरिच्छेदादिति[1] । विशेष्यत्वे-नाभिमताद्रूपादेरित्यध्याहार्यम् । यदि नाम भेदेनापरिच्छेदो जातः, तथापि विशेषणं कस्मान्न भवति ? इत्याह—न चास्त्येवमिति । भेदेनापरिच्छिन्नम् । तस्माद्विशेषण-विशिष्टार्थग्रहणं न विद्यत इत्यस्य हेतोर्नासिद्धता ॥ १२५६–१२५९ ॥

स्यादेतत्—मा भूज्जात्यादिकं विशेषणम्, शब्दस्वरूपमेव तु विशेषणं भविष्यति ? इत्याह—नामापीत्यादि । [ G. 378 ] न हि स्वलक्षणे[2] संकेतः, नापि शब्दस्वलक्षणे; तयोर्व्यवहारकालेऽनन्वयात् । न च स्वलक्षणव्यतिरेकेणान्य-च्छब्दस्वरूपमस्ति । न चासंकेतितोऽर्थः शब्देन योज्यते; अतिप्रसङ्गात् । नापि शब्दयोजनमन्तरेण विकल्पः । तस्मादध्यारोपित एव वाच्यवाचकभावः, न पारमार्थिकः । स्यादेतद्—आरोपितमेवार्थं तर्हि प्रत्यक्षं प्रतिपद्यमानं सविकल्पकं भविष्यति ? इत्याह—अनारोपितमित्यादि । तदभावत इति । तस्यापि व्यतिरेकत इति सम्बन्धः । तस्य स्वलक्षणस्याभावात्, तस्यापि प्रत्यक्षस्य व्यतिरेकतोऽभावादिति यावत् । कदा स्वलक्षणस्याभावः ? इत्याह—व्यवधाना-दीति । आदिशब्देन देशकालविप्रकर्षादिः ॥ १२६०–१२६२ ॥

अशक्यसमय इत्यादिना प्रमाणान्तरमप्याह—

---

१–१. भेदेनापरि०—पा०, गा० । १. अर्थस्वलक्षण इत्यर्थः ।

तेषामतश्च संवित्तिर्नाभिर्जल्पानुषङ्गिणी ॥ १२६३ ॥

दिगम्बरसुमतिमतम्

ननु नामादिकं मा भूत् तस्य ग्राह्यं विशेषणम् ।
तथाऽप्यसिद्धता हेतोर्नैव व्यावर्त्तते यतः ॥ १२६४ ॥
अर्थान्तरव्यवच्छिन्नरूपेणाग्रहणं यदि ।
अर्थमात्रग्रहो वा स्यादग्रहो वा घटे यथा ॥ १२६५ ॥

---

नीलादीनामात्मा = स्वभावः, अशक्यसमयः = अशक्यसंकेतः । कथमिति प्रश्ने कारणमाह–अनन्यभागिति । अनन्यभाक् = असाधारणः । व्यवहारकाला-प्रत्युपस्थायीति यावत् । व्यवहारार्थत्वात् समयस्येति नात्र शब्दसंकेतः ।

किञ्च – विषयीकृते चायं समयो भवति नाविषयीकृते; न तावदनुत्पन्नं प्रत्यक्षं नीलाद्यात्मानं विषयीकरोति, उत्पन्नं चाभिलापमादाय योजयेत्। उत्पत्तिकालेऽभि-लापग्रहणकाले च क्षणिकत्वान्न विषयेणापि प्रत्यक्षं विषयीति केन कुत्र योजन-मित्यतोऽप्यशक्यसमयो नीलादीनामात्मा । तेषामिति नीलादीनाम् । नाभि-जल्पानुषङ्गिणीति नाविष्टाभिलापा । तत्र प्रयोगः—यद् यत्रागृहीतसमयं न तत् तत्र सविकल्पकं भवति, तद्यथा—चक्षुर्विज्ञानं गन्धे । अगृहीतसमयं च प्रत्यक्षं नीलाद्यात्मनीति व्यापकविरुद्धोपलम्भः ॥ १२६३ ॥

[ G. 379 ] नन्वित्यादिना प्रथमे हेतौ सुमतेर्दिगम्बरस्य मतेनासिद्धता-माशङ्कते । स हि सामान्यविशेषात्मकत्वेनोभयरूपं सर्वं वस्तु वर्णयति । सामान्यं च द्विरूपम्—१. विशेषेणावच्छिन्नं यथा गोत्वादि, २. अनवच्छिन्नं यथा सत्तावस्तु-त्वादि । तत्र यदनवच्छिन्नमेकरूपं तदालोचनमात्रस्य निर्विकल्पकप्रत्यक्षस्य गोचरः; इतरत् पुनः सविकल्पकस्य – इत्येषा तस्य[1] प्रक्रिया । कुमारिलस्तु – आलोचनाज्ञानं निर्विकल्पकं व्यक्तिस्वलक्षणविषयं वर्णयति । सामान्यविषयं तु सविकल्पकं प्रत्यक्षम् । तत्र सुमतिः कुमारिलाद्यभिमतालोचनमात्रप्रत्यक्ष-विचारणार्थमाह –

---

१. सुमतेरित्यर्थः ।

घटान्तर व्यवच्छिन्नरूपेणाग्रहणं यदि ।
घटमात्रग्रहो वा स्यादग्रहो वा घटस्य वै ।। १२६६ ।।

तत्प्रतिविधानम्

ग्राह्यान्तरव्यवच्छिन्नं भावेन ग्राहि चेन्मतम् ।
सविकल्पकविज्ञानं भवेद् वृक्षादिबोधवत् ।। १२६७ ।।

सुमतिमुखेन कुमारिलमतम्

विशेषोऽस्पृष्टसामान्यो न च कश्चित्र विद्यते ।

---

तद्वादीदं प्रष्टव्यः–किं तदिन्द्रियस्य पुरःस्थितमर्थमात्रं स्वेन रूपेणार्थान्तराऽसम्भविना विशिष्टं गृह्यते ? उत नेति ? यद्यसौ ब्रूयात्–नेति, अत्रोच्यते—अर्थान्तरव्यवच्छिन्नरूपेणाग्रहणं यदि = विवक्षितादर्थाद् यदर्थान्तरम्, ततो व्यवच्छिन्नम् = तत्राविद्यमानं विवक्षितार्थस्थं रूपम् = स्वभावः, तेन विशिष्टस्य यदि तस्यार्थस्याग्रहणमिष्यते, तदा तदर्थमात्रग्रहो वा स्यात्, यत्तदर्थमात्रमर्थान्तरासम्भवि = स्वभावरहितं तस्यैव ग्रहणं स्यात्। अथ तदपि न गृह्यते, तदा अग्रहो वा = अग्रहणमेव स्यात ।

घटे यथेति निदर्शनमुक्तम्, तच्श्लोकान्तरेण व्याचष्टे—घटान्तरेत्यादि । अवधीकृतघठासम्भविना रूपेण यदि तस्य घटस्याग्रहणम्, तदा घटमात्रग्रहो वा स्यात् = केनचिद्राजतताम्रादिना विशेषेणाविशिष्टस्य घटमात्रस्य ग्रहणं स्यात । अथ[1] घटमात्रस्यापि ग्रहणं न भवति, तदा कस्यचिदप्यभिमतस्यापि न ग्रहणं स्यादित्यग्रहो वा घटस्य वै । एवमत्रापि दार्ष्टान्तिके विशेषाग्रहणेऽर्थमात्रग्रहणं न ग्रहणं वा स्यादित्येकान्तः ॥ १२६४–१२६६ ॥

अथ पूर्वकः पक्षः, अत्राह — ग्राह्यान्तरेत्यादि । [G. 380] यदि परत्रासम्भविना स्वरूपेण विशिष्टार्थग्राहीन्द्रियज्ञानमभिप्रेतम्, तदा सविकल्पकं प्राप्नोति; केनचिद्रूपेण विशिष्टार्थग्राहित्वात्, वृक्षोऽयमित्यादिबोधवत् ॥१२६७॥

स्यान्मतम्—"नार्थमात्रं नाम किञ्चिदस्ति यत् स्वरूपेण विशिष्य गृह्यते, किं. तर्हि ? यत्तद्विशिष्टं रूपं तव मम विशेषाभिमतं तदेवास्ति, गृह्यते

---

१. पा०, गा० पुस्तकयोर्नास्ति ।

ग्रहणे चेत् तदस्पष्टं विभावत्वान्न गृह्यते ॥ १२६८ ॥
विशिष्टविषयो बोधः कल्पना नेति साहसम् ।
न विशेषणसम्बन्धादृते वैशिष्ट्यसम्भवः ॥ १२६९ ॥

तत्प्रतिविधानम्

सजातीयविजातीयव्यावृत्तार्थग्रहान्मतः ।
विशिष्टविषयो बोधो न विशेषणसङ्गतेः ॥ १२७० ॥

---

च[1]" इति, अत आह[2]—विशेषोऽस्पष्टसामान्यो न च कश्चन विद्यत इति । अत्र मात्रं नाम सामान्यमुच्यते, यत्तत् सत्तेत्याख्यायते, तन्निरपेक्षो न कश्चिद्विशेषो विद्यते, यो गृह्यते तत्र । एतत् स्यात्—त्वन्मत्या यद्यपि तदस्ति सामान्यम्, ग्रहणकाले तु तन्न स्पृश्यते ? इत्याह—ग्रहणे चेत्तदस्पष्टं विभावत्वान्न गृह्यत इति । ग्रहणकाले यदि तत् सामान्यं सत्ताख्यम् इन्द्रियज्ञानेन न स्पृश्यते, विशेषमात्रमेवं गृह्यते, तदा तद्विशेषमात्रं गृह्यमाणं भावरहितं सत्ताख्यस्वभावविकलं निःस्वभावं प्राप्तमिति नेन्द्रियज्ञानग्राह्यं स्यात्, विभावत्वात् = विगतभावत्वात्, वियत्पुष्पवदिति ॥ १२६८ ॥

तस्माद् विशिष्टविषयो बोधोऽथ च कल्पना नास्तीति साहसमेतद्भवतां प्रमाणबाधितमभ्युपगच्छतामित्युपसंहारः । अत्रैवोपपत्तिमाह—न विशेषणेत्यादि । न हि दण्डसम्बन्धमन्तरेण तद्वान् भवति, तद्वद् विशिष्टोऽपि विशेषसम्बन्धमन्तरेण न युक्त इति भावः । तस्माद् यद्विशेषणसम्बन्धग्रहणम्, तत् सविकल्पकमिति । प्रयोगः—विवादास्पदीभूतं विशिष्टविषयं ज्ञानं सविकल्पकम्; विशिष्टविषयत्वात्, पटोऽयमित्यादिज्ञानवदिति ॥ १२६९ ॥

सजातीयेत्यादिना प्रतिविधत्ते[3] । यदत्र यदि व्यतिरिक्तविशेषणसम्बन्धात्[4] 'विशिष्टविषयत्वात्' इति हेत्वर्थः, तदा न सिद्धो हेतुः । तथा हि – न बौद्धस्य विशेषणं नाम किञ्चिदस्ति, येन [ G. 381 ] तत्सम्बन्धग्रहणाद् विशिष्टविषयो

---

१. कुमारिलस्येदं मतम् ।
२. सुमतिरिति शेषः ।
३. आचार्यः शान्तरक्षित इति शेषः । ४. ०इति—गा० ।

भेदो वैशिष्ट्यमुक्तं हि न विशेषणसङ्गतिः ।
भिन्नमित्यपि तद्वाचा नानुविद्धं प्रतीयते ॥ १२७१ ॥
स्वभावापरनिःशेषपदार्थव्यतिरेकिणि ।
गृहीते सति तस्मिंस्तु विकल्पो जायते तथा ॥ १२७२ ॥
विशेषणानवच्छिन्नं परैः सामान्यमिष्यते ।
निर्विकल्पकविज्ञानग्राह्यं तत्राप्यतः समम् ॥ १२७३ ॥

---

बोधः स्यात्, किं तर्हि ? सजातीयविजातीयेभ्यो व्यावृत्तस्यार्थमात्रस्य ग्रहात् = ग्रहणान्मतः = इष्टः[1], विशिष्टविषयो बोधः ॥ १२७० ॥

कथं तर्हि विशिष्टत्वमस्य, वैशिष्ट्यमस्य—इत्यादि व्यपदेशो व्यतिरेकीव ? इत्याह—भेद इत्यादि । भेदः = सजातीयविजातीयेभ्यो व्यावृत्तिः; सा च नान्या व्यावृत्ताद् भावात् । भाव एव हि भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां तथोच्यते ।

स्यादेतत्—यदि विजातीयसजातीयेभ्यो भिन्नस्य वस्तुनो ग्रहणम्, नियमेन तर्हि सविकल्पकं ग्रहणं प्राप्तम्; 'भिन्नमेतद्' इत्येवमाकारप्रवृत्तत्वात्, अन्यथा कथं तद्विषयं स्याद्, यद्यन्याकारप्रवृत्तं भवेत् ! न ह्यन्याकारप्रवृत्तं तद्विषयं युक्तम्; अतिप्रसङ्गात् ? इत्याशङ्क्याह—भिन्नमित्यपि तदित्यादि ॥ १२७१ ॥

कथं तर्हि भिन्नमित्यभिधीयते ? इत्याह—स्वभावापरेत्यादि । स्वभावादपरे ये निःशेषाः पदार्थास्तेभ्यो व्यतिरेकिणि = व्यावृत्ते गृहीते सत्यसाधारणनीलाद्याकारप्रतिभासनात् पश्चाद् भेदाध्यवसायी शब्दाकारानुस्मृतो भिन्नमित्यभिलपन्नुत्पद्यते विकल्पः । न चेदस्त्वभिलापस्वभावं तत्संसृष्टात्मतत्त्वं वा, येन 'भिन्नम्' इति, 'अभिन्नम्' इति नाम्ना संयोज्यग्रहणे [2]सत्यगृहीतं स्यात् । तस्मादसिद्ध एव हेतुः ॥ १२७२ ॥

अथ व्यावृत्तिवशाद्विशिष्ट इति कृत्वा 'विशिष्टविषयत्वात्' इति हेत्वर्थः, नार्थान्तरविशेषणसम्बन्धात्, तदाऽपि स्वतो नैकान्तिको हेतुरिति दर्शयन्नाह—विशेष-

---

१. पा०, गा० पुस्तकयोर्नास्ति । २. सति गृहीतं—पा०, गा० ।

विशेषाद्धि विशिष्टं तत् सामान्यमवगम्यते ।
तद्ग्राहकमतः प्राप्तं विज्ञानं सविकल्पकम् ॥ १२७४ ॥

सुमतेराशङ्कनम्

निर्विशेषं गृहीतश्चेद् भेदः सामान्यमुच्यते ।
ततो विशेषात् सामान्यविशिष्टत्वं न युज्यते ॥ १२७५ ॥
वैषम्यसमभावेन ज्ञायमाना इमे किल ।
प्रकल्पयन्ति सामान्यविशेषस्थितिमात्मनि ॥ १२७६ ॥

---

णेत्यादि । द्विरूपं हि सामान्यम्, विशेषणावच्छिन्नरूपम्, अनवच्छिन्नरूपं च । तत्र यदनवच्छिन्नरूपं तन्निर्विकल्पकविज्ञानग्राह्यमिष्टम् । तत्रापि = सामान्ये । अत[1] एतद्विकल्पकविज्ञानग्राह्यत्वं तुल्यम् ॥ १२७३ ॥

[ G. 382 ] कथम् ? इत्याह—विशेषाद्धीत्यादि । [2]यस्माद् विशेषाद् विशिष्टम् = व्यावृत्तम्, तत् सामान्यं प्रतीयते; अन्यथा सामान्यमेव न स्यात्, ततो यदि न व्यावर्त्तेत । ततश्चास्यापि सामान्यस्य विशेषाद्व्यावृत्तस्य ग्राहकं विज्ञानं सविकल्पकं प्राप्नोति; विशिविष्टविषयत्वात् । न च भवति त्वन्मतेन । तस्मात् स्वतोऽनैकान्त इति ॥ १२७४ ॥

अत्र किल तेनैव सुमतिना स्वयमाशङ्क्य सामान्येन हेतोरनैकान्तिकत्वं परिहृतम्, तदेवादर्शयति—निर्विशेषमित्यादि । न हि सामान्यं किञ्चिदस्ति विशेषेभ्यो व्यतिरिक्तस्वरूपम्, यत् स्वरूपेण विशिष्टं गृह्यमाणं सविकल्पकविज्ञानगोचरं स्यात्, किन्तु निर्विशेषं गृहीता भेदा एव सामान्यमित्युच्यन्ते । प्रतिनियतस्वरूपनिरपेक्षाः प्रतीयमानाः सामान्यशब्दाभिधेया इति यावत् । ततश्च कुतस्तस्माद्विशेषात् सामान्यस्य विशिष्टत्वम्, येन तद्ग्राहकस्य सविकल्पना भवेत् ॥ १२७५ ॥

कथं तर्हि सामान्यविशेषयोरसङ्कीर्णा व्यवस्था ? इत्याह—वैषम्येत्यादि । एत एव हि भेदाः समविषयतया सम्प्रज्ञायमाना यथाक्रमं सामान्यविशेषाभिधानाभिधेयतामनुभूय सामान्यविशेषव्यवहारयोर्विषयभेदं प्रकल्पयन्ति ॥१२७६॥

---

१. अद—जै० । २. यद्व्यस्यात्—पा०, गा० ।

तत्प्रतिविधानम्

वैषम्यसमभावोऽयं प्रविभक्तो यदीष्यते ।
सामान्यस्य विशिष्टत्वं तदवस्थं विशेषतः ॥ १२७७ ॥
अथाविभक्त एवायमसङ्कीर्णा स्थितिः कथम् ।
अन्योऽन्यपरिहारेण[1] स्थितेर्गत्यन्तरं न च ॥ १२७८ ॥
विशेषात्मातिरेकेण नापरं भेदलक्षणम् ।
तद्रूपास्पर्शने तेषु ग्रहणं कथमुच्यते ॥ १२७९ ॥
तद्रूपस्पर्शने चापि भेदान्तरविभेदिनः ।
गृहीता इति विज्ञानं प्राप्तमेषु विकल्पकम् ॥ १२८० ॥

---

वैषम्यसमभावोऽयमित्यादिना प्रतिविधत्ते । प्रविभक्त इति अमिश्रः । अन्यदेव सामान्यम्, अन्य एव विशेष इति यावत् । [ G. 383 ] सामान्यस्य विशेषतो विशिष्टत्वमित्युपलक्षणम् । तथा विशेषस्यापि सामान्यतो विशिष्टत्वमेव; द्वयोरपि परस्परस्वभावविवेकेन प्रतिभक्तत्वात् । असङ्कीर्णा स्थितिरिति अमिश्रीभूता । यथोक्तं तेनैव सुमतिना—"सत्त्वादिसामान्यस्वभावानुविद्ध एव विशेषः साक्षात्क्रियते नान्यथा, ततो विकल्पविषयत्वमेव[2] विशेष्यस्य युक्तं रूपम् । सामान्यं पुनरशेषविशेषनिरपेक्षं साक्षात्कर्तुं शक्यत इत्यविरुद्धमस्याविकल्पविषयत्वम्—इतीयमसङ्कीर्णा स्थितिर्न स्यात् । न प्रविभक्तो नाप्रविभक्त इष्यते" (    ) इति चेदाह—अन्योऽन्येत्यादि । अन्योऽन्यपरिहारस्थितिलक्षणानामेकस्वभावनिषेधस्यापरविधिनान्तरीयकत्वान्न राश्यन्तरमस्ति ॥ १२७७-१२७८ ॥

अपि च निर्विशेषं गृहीता भेदा इति परस्परव्याहतमिति दर्शयन्नाह—विशेषात्मातिरेकेणेत्यादि । भेदेभ्यो हि नान्यो विशेषः, तस्य च विशेषस्य सामान्यग्राहिणा ज्ञानेनासंस्पर्शे कथं भेदास्तेन गृहीता भवेयुः, अगृहीतस्वभावाव्यतिरेकात्तेऽप्यगृहीता एवेति भावः । अथ गृहीता इति मतम् ? तदा तद्रूपसंस्पर्शने = भेदरूपसंस्पर्शने ग्रहणे, गृहीताव्यतिरेकाद् गृहीतस्वभाववद् विशेषोऽपि

---

१. अन्योन्यापरि०—पा०, गा० ।
२. विशिष्टविष०—पा०, गा० ।

निरुपाख्याच्च सामान्यं विशिष्टं[1] सम्प्रतीयते ।
अतो विकल्पकज्ञानग्राह्यं तदपि ते भवेत् ॥ १२८१ ॥
नासतस्तद्विशिष्टं चेत् किमिदानीं तदात्मकम् ।
नो चेत् तथापि वैशिष्ट्यं तस्मादस्य न किं मतम् ॥ १२८२ ॥
अतदात्मकमेवेदं वैशिष्ट्यं वस्तुनोऽपि हि ।

---

गृहीत एवेति, एषु = भेदेषु, यत् सामान्यविषयत्वेनाभिमतं ज्ञानं तद्विकल्पकं प्राप्तम् ॥ १२७९-१२८० ॥

किञ्च—मा भून्नाम सामान्यस्य विशेषाव्यतिरेकात् ततो विशिष्टत्वम्, तथापि शशविषाणादेर्निरूपाख्यात् तस्य विशिष्टत्वमस्त्येति विकल्पज्ञानग्राह्यं स्यात्, न च भवति, तस्मादनैकान्तिकत्वमेवेति दर्शयन्नाह—निरुपाख्याच्चेत्यादि ।

स्यादेतत्—सामान्यस्याभावतो न विशेषः सम्भवति, नापि सादृश्यम् । तथा हि [ G. 384 ] यन्न किञ्चित् सोऽभावः कल्प्यते, तच्च तादृशं सामान्यतो नैव विशिष्टम्, नापि समम्; भावत्वप्रसङ्गात् । तथा हि—यदि तच्छून्यं सामान्यतो विशिष्टं स्यात्, तदपि वस्त्वेव स्यात् । न ह्यवस्तुनो विशेषाख्यस्वभावः सम्भवति, न च विशेषाख्यं स्वभावमन्तरेण विशिष्टं शक्यं वक्तुम्, नापि समम्; वस्तुत्वप्रसङ्गात् । न ह्यवस्तुनः केनचित् समानं रूपं भवति, न च सामानरूपमन्तरेण समं युक्तम्; अतिप्रसङ्गात् । तस्मात् सामान्यस्य शून्यमवधिं कृत्वा समत्वं विशिष्टत्वं वा युक्तम् । तथा हि—यो यमवधिं कृत्वा समो विशिष्टो वा भवति, तेन सोऽप्यवधिः समो विषमश्च दृश्यते । यदि हि सोऽवधिस्तेन समो विषयो वा न दृश्येत, इतरोऽप्यवधिमान् समो विषमो वा न दृश्येत ॥ १२८१-१२८२ ॥

किञ्च—नाभावो नाम कश्चिद्भावव्यतिरिक्तोऽस्ति, भाव एव तु भावान्तरं न भवतीत्यभाव आख्यायते, तत्कुतोऽस्य वैशिष्ट्यमित्येतत्सर्वं सुमतिनोक्तमागूर्याऽऽह—अतदात्मकमेवेदमित्यादि । वस्तुनोऽपि हि सकाशाद् यदवस्तुनो विशि-

---

1. विशेषं—पा०, गा० ।

नासद्रूपं च सामान्यं तद्विशिष्टं न ते कथम् ॥ १२८३ ॥

प्रमाणफलोपसंहारः

तस्मात् स्वलक्षणे ज्ञानं यत् किञ्चित् सम्प्रवर्त्तते ।
वाक्पथातीतविषयं सर्वं तन्निर्विकल्पकम् ॥ १२८४ ॥

कौमारिलमतम्

अस्ति ह्यालोचनाज्ञानमाद्यं चेन्निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ १२८५ ॥

---

ष्टत्वं तत् खलु नान्यत् किञ्चित्, किं तर्हि ? तत्त्वनिषेधः, अतदात्मत्वमेव, लक्षणभेद इति यावत्। तच्चासतोऽपि शशविषाणादेः सकाशात् सामान्यस्य तुल्यमेव। तथा हि—असच्छशविषाणादि सर्वार्थक्रियाविरहलक्षणम्, सामान्यं तु न तथेष्टमिति विस्पष्टमस्य ततो वैशिष्ट्यम्। ततश्चासतोऽपि सकाशाद् वैशिष्ट्यं स्यात्, न च वस्तुत्वप्रसङ्गोऽसत इति यत्किञ्चिदेतत्।

यदुक्तम्—"नाभावो नामान्य एव" ( ) इत्यादि, तत्र तेन स्वाभाषितस्यैवार्थो न विवेचितः। तथा हि—'भाव एव तु भावान्तरं न भवति' इत्युक्ते भावान्तरात् तस्य विशेष उक्तो भवति, ततो व्यावृत्तिसंवर्णनात्[1]। तदेतद्व्यान्ध्यविजृम्भितमित्यलं प्रसङ्गेन।

तस्मादित्यादिना प्रमाणफलोपसंहारः ॥ १२८३-१२८४ ॥

अस्ति ह्यालोचनाज्ञानमित्यादिना कौमारिलमतोपदर्शनेन 'यस्य यद्रूपव्यवस्थितौ निमित्तं नास्ति' इत्यादौ प्रयोगे हेतोः पक्षैकदेशासिद्धत्वमाशङ्कते।

[G. 385] तथा हि—सर्वं प्रत्यक्षं पक्षीकृतम्, तत्र च सर्वत्र प्रत्यक्षाख्ये धर्मिणि सविकल्पकव्यवस्थितौ नास्ति च विशेषणविशिष्टार्थग्रहणं निमित्तमित्यस्य हेतोरसिद्धिः; आलोचनाज्ञानव्यतिरेकेणान्यत्र प्रत्यक्षे सामान्यादिविशेषणविशिष्टार्थग्रहणस्य विद्यमानत्वात्। अथालोचनाज्ञानमेव पक्षीकृत्य हेतुरभिधीयते, तदा सिद्धसाध्यतेति मन्यते [2]परः। बालमूकादिविज्ञानसदृशमिति। बालविज्ञान-

---

१. ०त्तिसङ्कीर्तनात्—पा, गा० ।
२. मीमांसक इत्यर्थः ।

विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावसीयते ॥ १२८६ ॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन सम्मता ॥ १२८७ ॥
पुनः पुनर्विकल्पेऽपि यावानधिगमो भवेत् ।
तत्सम्बन्धानुसारेण सर्वं प्रत्यक्षमिष्यते ॥ १२८८ ॥
न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गम्यन्ते नेन्द्रियैः पुनः ॥ १२८९ ॥

---

सदृशम् मूकादिविज्ञानसदृशम् । आदिशब्देन सम्मूर्छितादिपरिग्रहः[1] । अभिलापविशेषरहितत्वमात्रेण साम्यम् ॥ १२८५ ॥

शुद्धत्वं पुनर्वस्तुनः; सामान्यद्वयविविक्तत्वात् । तदेव द्वितीयेन श्लोकेन स्पष्टयति—न विशेष इत्यादि । विशेष इति अवान्तरसामान्यं गोत्वादि । सामान्यमिति महासामान्यं वस्तुत्वादि । तयोराधारभूतेति । अनेन शुद्धं वस्तु दर्शितम् ॥ १२८६ ॥

ततः परमित्यादिना तामेव पक्षैकदेशासिद्धतां हेतोरभिव्यनक्ति । ततः परमिति शुद्धवस्तुग्रहणोत्तरकालम् । यया बुद्ध्या वस्तु व्यवसीयते जात्यादिभिर्विशेषणैः, सापि प्रत्यक्षत्वेन सम्मतेति योज्यम् । जात्यादिभिरित्यनेन विशेषणविशिष्टार्थग्रहणं दर्शयति । अनेन चानधिगतार्थाधिगन्तृत्वं हेतोश्चासिद्धतोक्ता भवति ॥ १२८७ ॥

पुनः पुनरिति तृतीयादौ क्षणे । यावानिति । अनधिगतार्थाधिगन्तेति शेषः । तत्सम्बन्धानुसारेणेति तस्याक्षस्य सम्बन्धानुसारेण ॥ १२८८ ॥

स्यादेतत्—यदि प्रथमतोऽक्षव्यापारकाले सकलजात्यादिधर्मसमन्वितं[2] वस्तु भासते, तत् तदुत्तरकालमपि न भासेत; अविशेषात ? इत्याह—न हि प्रविष्टमात्राणामित्यादि । [G. 386] उष्णादिति प्रभास्वरात् । प्रविष्ट-

---

१. सम्मूर्छितपरि०—पा०, गा० ।
२. ०सद्धर्म०—जै० पाठा० ।

यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात् तत्र विबुद्धचन्ते तथा जात्यादिधर्मतः ॥ १२९० ॥
यदि त्वालोच्य सम्मील्य नेत्रे कश्चिद्विकल्पयेत् ।
न स्यात् प्रत्यक्षता तस्य सम्बन्धाननुसारतः ॥ १२९१ ॥
( श्लो० वा० प्र० सू० ११२-११३, १२०, १२५-१२७ )

कौमारिलमतखण्डनम्

तदयुक्तं यदि ज्ञानं तत् प्रवृत्तं स्वलक्षणे ।
अनाविष्टाभिलापं तज्जात्यादिग्रहणेऽपि हि ॥ १२९२ ॥

---

मात्राणामिति योज्यम् । गम्यन्ते नेन्द्रियैरिति । अपि तु गम्यन्त एवेति काका दर्शयति ॥ १२८९ ॥

एवं दृष्टान्तं प्रसाध्य दार्ष्टान्तिके उपसंहरन्नाह—यथेत्यादि । यथा गर्भगृहे आभासमात्रं गृहीत्वा पश्चाद्विशेषतो नीलमित्यादिना जानाति, एवं स्वरूपतः पूर्वं ज्ञात्वा पश्चाज्जात्यादिधर्मतः प्रत्यक्षवान् भविष्यतीत्यदोषः ॥ १२९० ॥

एवं तर्हि यद्यालोचनाज्ञानादूर्ध्वं पुनः पुनर्यावानधिगमस्तस्य प्रामाण्यम्, तदाऽऽलोचनाज्ञानेन यदि कश्चिदालोच्य पश्चादक्षिणी निमील्य जात्यादिधर्मतो विकल्पयति, तदास्यापूर्वाधिगमोऽस्तीति तस्यापि प्रत्यक्षता स्यात् ? इत्याह यदि त्वित्यादि । आलोच्येति आलोचनाज्ञाने ज्ञात्वा । नेत्रे इति । सम्मील्येति सम्बन्धः । सम्बन्धाननुसारत इति । अक्षसम्बन्धद्वारेणानुत्पत्तेः । यथोक्तं तेनैव कुमारिलेन—

"एवं समानेऽपि विकल्पमात्रे[1] यत्राक्षसम्बन्धफलानुसारः ।
प्रत्यक्षता तस्य तथा च लोके विनाप्यदो लक्षणतः प्रसिद्धम् ॥
( श्लो० वा०, प्रत्य० सू० २५४ ) इति ॥ १२९१ ॥

तदित्यादिना प्रतिविधत्ते । जात्यादिग्रहणेऽपीत्यपिशब्दोऽभ्युपगमे । एकदा तावज्जात्यादीनां निरस्तत्वान्न सन्त्येव त इति कुतस्तद्ग्रहणे प्रामाण्यम् । सन्तु

---

१. विकल्पमार्गे—इति तत्रस्थः पाठः ।

तथा [1]चावाच्यमेवेदं साधितं प्राक् स्वलक्षणम् ।
तस्मिन् वृत्तं च विज्ञानं नियतं निर्विकल्पकम् ॥ १२९३ ॥
जातिमात्रग्रहे तु स्यादेकान्तेन विभिन्नता ।
विशेषणस्य नैतच्च परैरिष्टं यथोदितम् ॥ १२९४ ॥
यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद्विशेषणम् ।

---

नाम, तथापि तद्ग्रहणे आलोचनाज्ञानवदुत्तरकालभाविनां ज्ञानानां स्वलक्षणविषयत्वादविकल्पतैव, जात्यादीनां स्वलक्षणादव्यतिरेकस्याभ्युपगतत्वादिति भावः । प्रयोगः—यत् स्वलक्षणग्राहि तदविकल्पकम्, [G. 387] यथा—आलोचनाज्ञानम् । स्वलक्षणग्राहि चोत्तरप्रत्यक्षत्वेनाभिमतं ज्ञानमिति स्वभावहेतुः । प्रसङ्गसाधनं चेदम् । न चानैकान्तिकता हेतोः; यतोऽवाच्यमेवेदं स्वलक्षणमिति प्रागन्यापोहे प्रसाधितम् । नापि विरुद्धता; सपक्षे भावात् ॥ १२९२-१२९३ ॥

स्यादेतत्—जातिमात्रविषयत्वादसिद्धो हेतुः ? इत्याह—जातिमात्रेत्यादि । एकान्तेन विभिन्नता विशेषणस्येति । विशेष्यादिति शेषः । नैतच्च परैरिष्टमिति[2] । एकान्तेन विशेषणविशेष्ययोर्विभिन्नत्वम् । कथं नेष्टम् ? इत्याह—यथोदितमिति । तेनैवेति शेषः ॥ १२९४ ॥

किं तत् ? इत्याह—यदीत्यादि । पर्यायेण भेदस्याप्यभ्युपगतत्वादेकान्तत इत्याह । तथा हि—भिन्नाभिन्नस्वभावा जात्यादयस्तस्येष्टा नैकान्ततो भिन्नाः नाप्यभिन्नाः । तथा चाह—

"बुद्धिभेदान्न चैकत्वं रूपादीनां प्रसज्यते ।
एकानेकत्वमिष्टं वा सत्तारूपादिभेदतः ॥"
(श्लो० वा०, प्रत्य० सू० १५८) इति ।

पुनश्चोक्तम्—
"स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥"
(श्लो० वा० प्रत्य० सू० १४१) इति ।

---

१. वाच्यमे०—पा० ।
२. परैरस्येति—जै० ।

स्वानुरूपां तदा बुद्धिं विशेष्ये जनयेत् कथम् ॥ १२९५ ॥
स्वसामान्यात्मनोर्युक्तं[1] ज्ञानं चैकं न वेदकम् ।
सविकल्पान्यथाभावे प्राक्तनापरविन्न हि ॥ १२९६ ॥
ऐकान्तेनान्यताभावाज्जात्याद्याद्येन चेद् गतम् ।
विज्ञातार्थाधिगन्तृत्वात् स्मार्त्तज्ञानसमं परम् ॥ १२९७ ॥

---

परत्वमिति अन्यत्वम् । स्वानुरूपामिति । विशेषणस्वरूपोपरक्ताम् । यतो विशेषणोपरक्तं विशेष्यं ग्राहयद् विशेषणमुच्यते, अन्यथा [2]विशेषणस्यानुपपन्नत्वादिति भावः । यथोक्तम्—

"स्वबुद्ध्या येन रज्येत विशेष्यं तद्विशेषणम्" ( ) इति ॥ १२९५ ॥

अथापि स्यात्—स्वसामान्यलक्षणविषयत्वेनोभयविषयत्वात् केवलस्वलक्षणमात्रविषयत्वमसिद्धमेवोत्तरेषां ज्ञानानाम् ? इत्याह—स्वसामान्यात्मनोरित्यादि । स्वलक्षणसामान्यलक्षणयोर्नैकं ज्ञानं वेदकं युक्तम् । तथा हि— तदेकं ज्ञानं सविकल्पकं वा स्याद्, अविकल्पकं वा; तत्र सविकल्पकभावे = सविकल्पकत्वे सति, प्राक्तनस्य = पूर्वोक्तस्य स्वलक्षणस्य, वित् = वेदनम्, न प्राप्नोति । अन्यथाभाव इति । निर्विकल्पकपक्षे । अपरस्येति सामान्यात्मनः, वित् = वित्तिर्न स्यात् ॥ १२९६ ॥

[ G. 388 ] एवं तावत् स्वलक्षणविषयत्व इतरेषां ज्ञानानामविकल्पता प्राप्नोतीति साधितम् । इदानीं भवतु नाम सविकल्पत्वम्, तथापि गृहीतग्राहित्वान्न तेषां प्रामाण्यमेव[3] युक्तमिति प्रतिपादयन्नाह—एकान्तेनेत्यादि ।

तथा हि— जात्यादेर्व्यक्तितो नैवान्यत्वमेकान्तेनेष्टम् । यथोक्तम्—"स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः" (श्लो० वा० प्र० सू० १४१) इति । ततश्चाद्येनैवालोचनाज्ञानेन जात्यादि गृहीतमिति स्मार्त्तज्ञानवदधिगतार्थाधिगन्तृत्वात् परं जात्यादिधर्मनिश्चयज्ञानमप्रमाणमेव युक्तमिति । प्रयोगः—यद् गृहीतग्राहि

---

१. स्वासामान्या०—जै० । २. विशेषणत्वस्या०—गा० ।
३. प्रामाण्यं—पा०, गा० ।

गृहीतग्राहित्वाद् ज्ञानानामप्रामाण्यम्

सम्मुग्धानेकसामान्यरूपेणाधिगमे सति ।
नैव चेन्निश्चितं वस्तु निश्चयस्तूत्तरोत्तरः ॥ १२९८ ॥
समारोपे[1] व्यवच्छेदविषयाद्धि[1] यथाऽनुमा ।
समारोपव्यवच्छेदविषयो निश्चयस्तथा ॥ १२९९ ॥

तत्प्रतिविधानम्

न समारोपविच्छेदविषयत्वेन मानता ।
अनुमायाः प्रमाणत्वप्रसंगेन स्मृतेरपि ॥ १३०० ॥
प्रत्यक्षानन्तरोद्भूतसमारोपनिवारणात्[2] ।

ज्ञानं न तत्प्रमाणम्, यथा—स्मृतिः । गृहीतग्राही च प्रत्यक्षपृष्ठभावी विकल्प इति व्यापकविरुद्धोपलब्धिः ॥ १२९७ ॥

तदत्र यदि समारोपविषयव्यवच्छेदेन गृहीतमिति हेत्वर्थः, तदा हेतोरसिद्धता, अथ यथाकथञ्चिद् गृहीतत्वादिति हेत्वर्थः, तदाऽनुमानेनानेकान्त इति दर्शयन्नाह—सम्मुग्धेत्यादि । तथा हि—प्रथमं सम्मुग्धरूपेणालोचनाज्ञानेनाधिगतम्, न हि निश्चितरूपेण; उत्तरोत्तरस्तु निश्चयः प्रमाणम्, समारोपव्यवच्छेदविषयत्वादनुमानवत् । यथा प्रत्यक्षेण गृहीते शब्दादौ धर्मिणि कृतकत्वादिनाऽनित्यत्वनिश्चयो भवन् प्रमाणं भवति, तथा समारोपव्यवच्छेदविषयो निश्चयो भविष्यति । तथा हि भवतामत्राविवादः—समारोपव्यवच्छेदविषयो निश्चय इति । यथोक्तम्—

"निश्चयारोपमनसोर्बाध्यबाधकभावतः ।
समारोपविवेकेऽस्य प्रवृत्तिरिति गम्यते" ( प्र० वा० ३.४८ ) इति ॥

१२९८-१२९९ ॥

नेत्यादिना प्रतिविधत्ते । [ G. 389 ] प्रवृत्तसमारोपव्यवच्छेदेनानुमानस्य प्रामाण्यम्, न तु पुनः समारोपविषयव्यवच्छेदमात्रेण; स्मृतेरपि प्रामाण्यप्रसङ्गात् ।

१–१. समारोपव्यवच्छेदविषयत्वाद्—पा०, गा० ।
२. ०समारोपणवारणात्—पा०, गा० ।

इष्टं तु लैङ्गिकं ज्ञानं प्रमाणं न तदस्ति त ॥ १३०१ ॥
गौः शुक्लश्चलतीत्यादौ प्रत्यक्षानन्तरं न हि ।
समारोपोऽत्र विज्ञाने वेद्यते यन्निषेध्यते[1] ॥ १३०२ ॥
तत्त्वान्योभयात्मानः सन्ति जात्यादयो न च ।
यद्विकल्पकविज्ञानं प्रत्यक्षत्वं प्रयास्यति ॥ १३०३ ॥
अन्वयासत्त्वतो भेदाद् भेदेनाप्रतिभासनात् ।
अन्योऽन्यपरिहारेण स्थितेश्चान्यत्वतत्त्वयोः ॥ १३०४ ॥

---

न च तत् प्रत्यक्षसमनन्तरभाविनो गौः शुक्लश्चलतीत्यादेर्विकल्पस्य प्रवृत्तसमारोपनिवारणमस्ति; अन्तरा समारोपस्यानुत्पन्नत्वात् । कथमनुत्पन्नत्वमिति चेद्? आह—गौरित्यादि । न हि विकल्पोऽसंविदित उत्पद्यत इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्ध्या सिद्धमनुत्पन्नत्वं समारोपस्य ॥ १३००–१३०२ ॥

एवं तावदेतत् सर्वं जात्यादिकमभ्युपगम्योक्तम्, इदानीं जात्यादयः परमार्थतो न सन्त्येव, कुतस्तद्विषयतया प्रत्यक्षस्य सविकल्पता भविष्यतीति दर्शयन्नाह—तत्त्वेत्यादि । व्यक्तिभ्यो हि जात्यादयः कदाचिदव्यतिरिक्ताः, व्यतिरिक्ता वा, व्यतिरिक्ताव्यतिरिक्तत्वेनोभयात्मानो वा । न तावदाद्यः पक्षः; अन्वयासत्त्वतः = अन्वयाभावात् । अनेकवस्त्वनुगतं हि रूपं सामान्यमुच्यते, न चैवं व्यक्तयः परस्परमन्वाविशन्ति, येन ता एव सामान्यं भवेयुः । अन्वावेशे वा विश्वमेकमेव रूपं जातमिति सामान्यस्यैवाभावप्रसङ्गः, अनेकाधारत्वात् तस्य । नापि द्वितीयः पक्षः; भेदाद्भेदेनाप्रतिभासनात् । भेदादिति व्यक्तेः । न चाप्रतिभासमानं प्रत्यक्षीभवति । यथोक्तम्—

"व्यक्तयो नानुयन्त्यन्यदनुयायि न भासते ।
ज्ञानादव्यतिरिक्तं वा[2] कथमर्थान्तरं व्रजेत्" ॥

(प्र० वा० ३. ७०) इति ।

नापि तृतीयः पक्षः; अन्योऽन्यपरिहारेण स्थितेरन्यत्वतत्त्वयोः, पक्षयोः । यौ हि परस्परपरिहारेण स्थितलक्षणौ, तयोर्य एकः प्रतिषेधः सोऽपर-

---

१. यन्निषिध्यते—पा०, गा० ! २. च—पा०, गा० ।

**अविकल्पमपि[1] ज्ञानं विकल्पोत्पत्तिशक्तिमत् ।**
**निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः ॥ १३०५ ॥**

---

विधिनान्तरीयकः । परस्परपरिहारेण वाऽन्यत्वतत्त्वे व्यवस्थिते; अन्यतर-स्वभावव्यवच्छेदेनान्यतरस्य परिच्छेदात् । तस्मान्नास्ति तृतीयराशिसम्बन्धः ॥ १३०३–१३०४ ॥

ननु च यद्यविकल्पं प्रत्यक्षम्, कथं तेन व्यवहारः, तथा हि—'इदं सुख-साधनम्', 'इदं [ G. 390 ] दुःखस्य' इति यदि निश्चिनोति, तदा तयोः प्राप्ति-परिहाराय प्रवर्त्तते। किञ्च—अनुमानानुमेयव्यवहाराभावश्च प्राप्नोति। तथा हि—अनुमानकालेऽवश्यं धर्मी धर्मो वा प्रमाणान्तरेण निश्चितो गृहीतव्यः, स च न प्रत्यक्षेणानिश्चयात्मकेन निश्चितो गृहीतुं शक्यते। नाप्यनुमानेन; अनवस्थादोषात् । न चान्यत् प्रमाणान्तरमस्तीति सर्वव्यवहारोच्छेदः प्राप्नोति । तस्मादनुमानादि-व्यवहारप्रवृत्तितो लिङ्गादनुमानबाधितेयमविकल्पकप्रतिज्ञा १ – इति यश्चोदयेत्, तं प्रत्याह – **अविकल्पमपीत्यादि** ।

**तद्द्वारेणेति** । विकल्पद्वारेणाविकल्पकमपि निश्चयहेतुत्वेन सकलव्यवहाराङ्गं भवति । तथा हि—प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तमनलादिक-मर्थं तदाकारनिर्भासोत्पत्तितः परिच्छिन्दद्दुत्पद्यते । तच्च नियतरूपव्यवस्थित-वस्तुग्राहित्वाद् विजातीयव्यावृत्तवस्त्वाकारानुगतत्वाच्च तत्रैव वस्तुनि विधिप्रति-षेधावाविर्भावयति —'अनलोऽयम्, नासौ कुसुमस्तबकादिः' इति । तयोश्च विकल्पयोः पारम्पर्येण वस्तुनि [2]प्रतिबन्धाद् [2]विसंवादित्वेऽपि न प्रामाण्यमिष्टम्; दृश्यविकल्पयोरेकत्वाध्यवसायेन प्रवृत्तेरनधिगतवस्तुरूपाधिगमाभावात् ।

अत एव विकल्पद्वयहेतुत्वात् तृतीयप्रकाराभावसूचनायापि निमित्ततां प्रतिपद्यते । तथा हि— यद्यत्र क्वचित् प्रवृत्तं [3]तत्प्रतिभासित्वात् तत् परिच्छिनत्ति, तदन्यस्य तत्रानुपलम्भात् ततस्तद्व्यवच्छिनत्ति । सर्वभावानां च दृश्यतदन्यत्वेन द्वैराश्ये व्यवस्थापनात् प्रकारान्तराभावं च सूचयति। यद्येवम्—प्रत्यक्षेणैव

---

१. विकल्पकमपि—जै० । २–२. ०बन्धादसंवादि०—पा०, गा० ।
३. तत्तत्प्रति०—पा०, गा० ।

भाविविक्तादिमतम्

नाविकल्पं विकल्पे [1]चेच्छक्तं विषयभेदतः ।
अकल्पत्वाच्च रूपादिज्ञानवच्चक्षुरादिवत् ॥ १३०६ ॥

तन्मते दोषोद्भावनम्

तदत्र न विरोधोऽस्ति विकल्पेन सहानयोः ।
न चापि विषयो भिन्नस्तदर्थाध्यवसायतः ॥ १३०७ ॥

---

शब्दादौ धर्मिणि गृहीतत्वादनित्यत्वादेः तत्रानुमानविकल्पः प्रवर्त्तमानः प्रमाणं न प्राप्नोति ? नैष दोषः; प्रत्यक्षमुत्पन्नमपि यत्रांशेऽध्यवसायं जनयति स एवांशो व्यवहारयोग्यो गृहीत इत्यभिधीयते । यत्र तु भ्रान्तिनिमित्तवशात् समारोपप्रवृत्तेर्न व्यवसायं जनयितुमीशम्, स व्यवहारायोग्यत्वाद् गृहीतोऽप्यगृहीतप्रख्य इति तत्रानुमानस्य प्रवृत्तसमारोपव्यवच्छेदाय प्रवर्त्तमानस्य प्रामाण्यं भवति, न पुनः प्रत्यक्षानन्तरभाविविकल्पस्य; तस्य प्रवृत्तसमारोपव्यवच्छेदाभावात् ।

किं पुनः कारणम् – सर्वतो भिन्ने वस्तुरूपे अनुभवोत्पत्तावपि तथैव न स्मार्त्तो निश्चयो भवति ? उच्यते; कारणान्तरापेक्षत्वात् । न ह्यनुभूत इत्येव निश्चयो भवति; तस्याभ्यासार्थित्वपाटवादिकारणान्तरापेक्षत्वात् । यथा जनकाध्यापकाविशेषेऽपि पितरमायान्तं दृष्ट्वा 'पिता मे आगच्छति, नोपाध्यायः' इति निश्चिनोति ॥ १३०५ ॥

[ G. 391 ] अत्र भाविविक्तादयो विकल्पोत्पादद्वारेणापि व्यवहाराङ्गत्वं विघटयन्तो यत् प्रमाणयन्ति, तद्दर्शयति—नाविकल्पमित्यादि । नेन्द्रियविज्ञानं सविकल्पकमनोविज्ञानकारणम्; भिन्नविषयत्वात्, रूपस्पर्शादिज्ञानवत्, निर्विकल्पकत्वाच्च, चक्षुरादिवदिति । विषयभेदत इत्यत्र हेतौ दृष्टान्तो रूपादिज्ञानवदिति । [2]अकल्पत्वादित्यत्र तु चक्षुरादिवदिति ॥ १३०६ ॥

तदत्रेत्यादिना दूषणमाह—उभयोरपि हेत्वोरनैकान्तिकता; साध्यविपर्ययेण सह हेत्वोर्विरोधानुपदर्शनात् । अनयोरिति । हेत्वोः । न चापि विषयो

---

१. च शक्तं—गा० ।  २. अविकल्पकत्वा०—जै० ।

वस्तुस्तु निरालम्बो विकल्पः सम्प्रवर्त्तते ।
तस्यास्ति विषयो नैव यो विभिद्येत कश्चन ॥ १३०८ ॥
रूपशब्दादबुद्धीनामस्त्येवान्योऽन्यहेतुता
ततोऽप्रसिद्धसाध्योऽयं दृष्टान्तः समुदीरितः ॥ १३०९ ॥
अग्निधूमादिबुद्धीनां कार्यकारणभावतः ।
व्यभिचारोऽपि विस्पष्टमेतस्मिन्नुपलभ्यते ॥ १३१० ॥
केशोण्ड्रकादिविज्ञाननिवृत्त्यर्थमिदं कृतम् ।
अभ्रान्तग्रहणं तद्धि भ्रान्तत्वान्नेष्यते प्रमा ॥ १३११ ॥

---

भिन्न इत्यनेन सत्यपि सविषयत्वे विकल्पस्य 'विषयभेदतः' इत्यस्य हेतोरसिद्धतामाह ॥ १३०७ ॥

परमार्थतस्तु निर्विषयो विकल्पः, तदापि सुतरामसिद्धतेति दर्शयन्नाह—वस्तुतस्त्वित्यादि ॥ १३०८ ॥

रूपशब्दादीत्यादिना 'रूपादिज्ञानवत्' इत्यस्य दृष्टान्तस्य साध्यविकलतामाह । रूपशब्दादिज्ञानानां परस्परसमनन्तरप्रत्ययभावेन कारणत्वस्य विद्यमानत्वात् ॥ १३०९ ॥

पुनरपि 'विषयभेदतः' इत्यस्य हेतोर्विपक्षे सद्भावोपदर्शनेनानैकान्तिकतामाह—अग्निधूमादीत्यादि । एतस्मिन्निति 'विषयभेदतः' इत्यत्र हेतौ । यथाग्न्यादिलिङ्गिबुद्धेर्धूमादिलिङ्गबुद्धिर्विषयभेदेऽपि कारणम्, तथात्रापि भविष्यतीति हेतोरनैकान्तिकत्वम् ॥ १३१० ॥

[G. 392] एवं कल्पनापोढत्वं प्रत्यक्षस्य प्रसाध्याभ्रान्तग्रहणे प्रयोजनमाह—केशोण्डूकेत्यादि । अभ्रान्तमत्राविसंवादित्वेन द्रष्टव्यम्, न तु यथाऽवस्थितालम्बनाकारतया । अन्यथा हि योगाचारमतेनालम्बनासिद्धेरुभयनयसमाश्रयेणेष्टस्य प्रत्यक्षलक्षणस्याव्यापिता स्यात् । अविसंवादित्वं चाभिमतार्थक्रियासमर्थार्थप्रापणशक्तिः[1], न तु प्रापणमेव; प्रतिबन्धादिसम्भवात् ।

---

१. °शक्तिकत्वम्—पा०, गा० ।

मानसं तदपीत्येके नैतदिन्द्रियभावतः ।
भावात् तद्विकृतावस्य विकृतेश्चोपलम्भतः ॥ १३१२ ॥
सर्पादिभ्रान्तिवच्चेदमनष्टेऽप्यक्षविप्लवे ।
निवर्त्तेत मनोभ्रान्तेः स्पष्टं च प्रतिभासनात् ॥ १३१३ ॥

परकीयं दूषणम्

तद्भावभाविता साक्षादसिद्धा व्यभिचारिणी ।
पारम्पर्येण सा तस्यां स्मृतिबुद्धौ समन्वयात् ॥ १३१४ ॥

---

यद्येवम्, अभ्रान्तग्रहणमेवास्तु, किं कल्पनापोढग्रहणेनेति ? न; अनुमान-विकल्पस्यापि प्रत्यक्षत्वप्रसङ्गात् ॥ १३११ ॥

मानसं तदपीत्येक इति । न तदर्थमभ्रान्तग्रहणं युक्तं कर्तुमिति तेषामभिप्रायः ।

ननु च भवतु नाम मानसम्, तथाप्यभ्रान्तग्रहणं कर्त्तव्यमेव, न ह्यनेनेन्द्रियज्ञानस्यैव प्रत्यक्षलक्षणं कर्तुमारब्धम्, किं तर्हि ? मानसस्यापि योगिज्ञानादेः, तत्र च स्वप्नान्तिकस्यापि निर्विकल्पकत्वमस्ति; स्पष्टप्रतिभासित्वात्, न त्वभ्रान्तत्वमिति तन्निवृत्त्यर्थमभ्रान्तग्रहणं युक्तमेव ? सत्यमेतत्; किन्त्विन्द्रियभ्रान्तिरपि सम्भवति, अतोऽयमयुक्त एषां पक्ष इतीन्द्रियजत्वप्रतिपादनायाह—नैतदित्यादि । इन्द्रियभावे सति भावादिन्द्रियविकारे चोपघातलक्षणे विकारस्योपहतिलक्षणस्योपलम्भात् तदन्येन्द्रियबुद्धिवदिन्द्रियजेयं केशोण्डूकादिबुद्धिः । किञ्च—यदि मनोभ्रान्तिः स्यात, ततो मनोभ्रान्तेरेव कारणान्निवर्त्तेतानिवृत्तेऽप्यक्षविप्लवे । सर्पादिभ्रान्तिवदिति दृष्टान्तः । स्पष्टप्रतिभासा च न प्राप्नोतीत्ययमपरः प्रसङ्गः । न हि विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासिता; सामान्योल्लेखेनैव तस्य प्रवृत्तेः ॥ १३१२–१३१३ ॥

तद्भावेत्यादिना परकीयं दूषणमाशङ्कते । [ G. 393 ] अत्र यदि साक्षात्तद्भावभावित्वं हेतुः, तदाऽन्यतरासिद्धता हेतोः । न हि परस्य साक्षादिन्द्रियादुत्पत्तिर्भ्रान्तेः सिद्धा; तस्या एव साध्यत्वात् । अथ सामान्येन तद्भावभावित्वं

तद्विकारविकारित्वं पारम्पर्योद्भवेष्वपि ।
कार्येषु दृश्यते लोके व्यक्तं वेगसरादिषु ॥ १३१५ ॥
मानस्यो भ्रान्तयः सर्वा निवर्त्तन्ते विचारतः ।
इत्यस्मिन् व्यभिचारित्वं भावसामान्यबुद्धिभिः ॥ १३१६ ॥
वस्तुस्वलक्षणे नैताः प्रवर्त्तन्ते स्वभावतः ।
एवं तद्विनिवृत्तिश्चेत् तुल्यं चन्द्रद्वयादिषु ॥ १३१७ ॥
न सत्ताविनिवृत्तिश्चेत् समं सामान्यबुद्धिभिः ।
न चेश्वरादिभ्रान्तीनां तन्मताभिनिवेशिनाम् ॥ १३१८ ॥
युक्तिकोटिश्रवेऽप्यस्ति निवृत्तिः प्रत्युत स्वयम् ।
नैता युक्तय इत्येवं ते वदन्ति जडाः पुनः ॥ १३१९ ॥

---

हेतुः, तदाऽनैकान्तिकता; स्मृतिबुद्धौ विपक्षभूतायामपि तद्भावभावित्वस्य [1]समन्वयात्, विद्यमानत्वात् ।

यच्च तद्विकारविकारित्वम्; तदपि साक्षादसिद्धम् । पारम्पर्येणाप्युपादीयमानमनैकान्तिकमेव; यतोऽश्वायां गर्दभेन जातस्य वेगसरस्य कललाद्यवस्थाव्यवधानेऽपि गर्दभरूपानुकारेण तद्विकारित्वस्य पश्चाद् दर्शनाद्, अतो नास्मात् साक्षादुत्पत्तिः सिध्यति ।

'मानसी च भ्रान्तिर्विचारान्निवर्तते' इत्यत्राप्यनैकान्तिकत्वं भावसामान्यबुद्धिभिः । न हि भवतां युक्त्या सामान्याभावमवगच्छतामपि भावेषु घटादिषु—भाव इति वा, सामान्यमिति वा सामान्याकारो विकल्पो निवर्त्तते ।

अथ मन्यसे—निवर्त्तन्त एव युक्त्या विचारयतः सामान्यबुद्धयः 'स्वलक्षणे नैताः प्रवर्त्तन्ते' इत्यनेनाकारेणेति ? तदेतदप्यनुत्तरम्; चन्द्रद्वयादिबुद्धयोऽपि युक्त्या विचारयतः 'स्वलक्षणे नैताः प्रवर्त्तन्ते' इत्यनेनाकारेण निवर्त्तन्त एव । न च तावता मानस्यो भवन्ति ।

सत्ता तासां न निवर्त्तत इति चेत् ? तत् तुल्यं सामान्यबुद्धिभिः । न हि तासामपि स्वभावो निवर्त्तते ॥ १३१४–१३१९ ॥

---

1. समन्धयाद्—पा०; पारम्पर्यात्–गा० ।

तत्प्रतिविधानम्

तद्भावभाविता साक्षान्न सिद्धाऽभ्रान्तचेतसा ।
व्यवधानं न सिद्धं हि न हि तद्वेद्यतेऽन्तरा ॥ १३२० ॥
अन्यार्थासक्तचित्तोऽपि द्विचन्द्रादि समीक्षते ।
अविच्छिन्नमतो नास्ति पारम्पर्यसमुद्भवः ॥ १३२१ ॥
भावसामान्यबुद्धीनां प्रतिसंहारसम्भवे ।
निवृत्तिः सम्भवत्येव स्वेच्छयेशमतेरपि ॥ १३२२ ॥

स्वयूथ्यानां मतोपस्थापनम्

पीतशङ्खादिबुद्धीनां विभ्रमेऽपि प्रमाणता[1] ।
अर्थक्रियाऽविसंवादादपरे सम्प्रचक्षते ॥ १३२३ ॥

---

तद्भावभावितेत्यादिना प्रतिविधत्ते । [ G. 394 ] नासिद्धा, अपि तु सिद्धैव; कस्मात् ? अभ्रान्तेनैकचन्द्रचेतसा व्यवधानासिद्धेः । तस्योपलभ्यस्यान्तरालेऽनुपलभ्यमानत्वात् ।

एतदेवान्यार्थेत्यादिना स्पष्टीकुरुते । अविच्छिन्नं द्विचन्द्रादीति सम्बन्धनीयम् । अत एव तद्विकारविकारित्वस्याप्यव्यभिचारः । न हि तदपि व्यवहितम्, येन वेगसरादिभिर्व्यभिचारः स्यात् । भावसामान्यबुद्धीनामपि यदेच्छया संहारं कुरुते, तदा निवृत्तिरस्त्येव । न तु केशोण्डूकादीनां संहारः सम्भवतीति नानैकान्तिकता । इन्द्रियज्ञानस्यापि चक्षुषीच्छया निमीलिते निवृत्तिरिच्छावशात् सम्भवतीति चेत् ? न हि समनन्तरमिच्छानिवृत्तौ निवर्त्तते चक्षुर्विज्ञानम्, किं तर्हि ? चक्षुर्निमीलनं तावदिच्छावशाद् भवति, ततो निवृत्ते चक्षुषि तज्ज्ञानं निवर्त्तते, मानसी तु भ्रान्तिः साक्षादिच्छावशान्निवर्त्तत इति न समानम् । इत्थं चैतदवसेयम्—यतः प्रणिहिते चक्षुषि द्रष्टुमनिष्यमाणोऽप्यर्थो दृश्यत एव, अतो नेच्छायाश्चक्षुरादिज्ञाने साक्षात् सामर्थ्यम् ॥ १३२०–१३२२ ॥

केचित्तु स्वयूथ्या[2] एवाभ्रान्तग्रहणं नेच्छन्ति; भ्रान्तस्यापि पीतशङ्खादिज्ञानस्य प्रत्यक्षत्वात् । तथा हि—न तदनुमानम्; अलिङ्गजत्वात् । प्रमाणं च; अविसंवादित्वात् । अत एवाचार्यदिङ्नागेन लक्षणे न कृतमभ्रान्तग्रहणम् । 'भ्रान्तिः

---

१. प्रमाणताम्—पा०, गा० । २. आचार्यदिङ्नागादय इत्यर्थः ।

तत्प्रतिविधानम्

तन्नाध्यवसिताकारप्रतिरूपा न विद्यते ।
तत्राप्यर्थक्रियावाप्तिरन्यथाऽतिप्रसज्यते ॥ १३२४ ॥
केशादिप्रतिभासे च ज्ञाने संवादभावतः[1] ।
आलोकादेरतस्तस्य दुर्निवारा प्रमाणता ॥ १३२५ ॥
न वर्णव्यतिरिक्तं च संस्थानमुपपद्यते ।
भासमानस्य वर्णस्य न च संवाद ईक्ष्यते[2] ॥ १३२६ ॥
यद्याकारमनादृत्य प्रामाण्यं च प्रकल्प्यते ।
अर्थक्रियाऽविसंवादात् तद्रूपो ह्यर्थनिश्चयः ॥ १३२७ ॥

---

संवृत्तिः सा ज्ञानमनुमानम्" ( ) इत्यादिना प्रत्यक्षाभासनिर्देशादविसंवादि कल्पनापोढमित्येवंविधमिष्टमाचार्यस्य लक्षणम् । सतैमिरमिति तु तिमिरशब्दोऽयमज्ञानपर्यायः । "तिमिरघ्नं च मन्दानाम्" इति यथा । तिमिरे भवं तैमिरम्, विसंवादकमित्यर्थः ॥ १३२३ ॥

तन्नेत्यादिना प्रतिविधत्ते । [ G. 395 ] प्रामाण्यं हि भवद् द्वाभ्यासमाकाराभ्यां भवति – यथाप्रतिभासमविसंवादाद्, यथाध्यवसायं वा । तत्रेह न यथाप्रतिभासमविसंवादः; पीतस्य प्रतिभासनात् तस्य [3]तथाभूतस्याप्राप्तेः । नापि यथाध्यवसायमविसंवादः; पीतस्यैव विशिष्टार्थक्रियाकारित्वेनाध्यवसायात्, न च तद्रूपार्थक्रियाप्राप्तिरस्ति । न चानध्यवसितार्थाविसंवादेनापि प्रामाण्यम्; अतिप्रसङ्गात् । केशादिज्ञानेऽपि ह्यनध्यवसिताऽऽलोकादिप्राप्तेः ॥ १३२४-१३२५ ॥

अथ मन्यसे––यद्यपि वर्णोऽध्यवसितो न प्राप्यते, संस्थानं तु प्राप्यत एव ? इत्यत आह––न वर्णेत्यादि । सुबोधम् ॥ १३२६ ॥

यद्याकारमित्यादिनोपचयमाह । नैव ह्यर्थक्रियाऽविसंवादित्वमात्रेणाकारमनपेक्ष्य प्रामाण्यं कल्पनीयम्; विषयाकारस्याप्रामाण्यप्रसङ्गात् । तद्रूप इति ज्ञानस्थाभासरूपः । आदिशब्देन "यथा यथा ह्यर्थस्याकारः शुक्लादित्वेन सन्निविशते

---

१. संवादिभावतः––पा०, गा० । २. इष्यते––पा०, गा० ।
३. यथाभूत०––गा० ।

इत्यादि गदितं सर्वं कथं न व्याहतं भवेत् ।
वासनापाकहेतूत्थस्तस्मात् संवादसम्भवः ॥ १३२८ ॥

सुखादेः मानसप्रत्यक्षनिरूपणम्

मानसेन्द्रियविज्ञाननिर्विकल्पत्वसाधने ।
यो न्यायः स सुखादीनामविकल्पत्वसाधकः ॥ १३२९ ॥

वैशेषिकमतम्

अवेदकाः परस्यापि स्वविद्भ्राजः कथं नु ते ।
एकार्थाश्रितविज्ञानवेद्यास्त्वेते भवन्ति चेत् ॥ १३३० ॥

तत्प्रतिविधानम्

नैरन्तर्यप्रवृत्ते हि बाह्यवस्तूपलम्भने ।

---

तद्रूपः स विषयः प्रमीयते" ( ) इत्यादिकमाचार्यीयं वचनं विरुध्यत इति दर्शयति । अर्थक्रियासंवादस्तु पूर्वार्थानुभववासनापरिपाकादेव प्रामाणान्तराद् भवतीत्यवसेयम् । पीतशङ्खज्ञानस्य वासनापरिपाकहेतुः शुक्ल एव शङ्खः; तदाधिपत्येन तत्परिपाकात् । वासनापरिपाकहेतुतः समुत्थानं यस्याविसंवादस्य स तथोक्तः ॥ १३२७-१३२८ ॥

सुखादीनां कथं संवेदनप्रत्यक्षता ? इत्याह—मानसेत्यादि । यो न्याय इति । अशक्यसमयत्वादिः । मानसस्य यद्यपि नोक्तो न्यायः, तथापि [ G. 396 ] य इन्द्रियज्ञाने न्यायः—अशक्यसमयत्वम्, स तस्यापि तुल्य एव । यद्वा—योगिज्ञानमिह मानसम्, तच्च वक्ष्यमाणम् । सिद्धान्तप्रसिद्धत्वान्मानसस्यात्र न लक्षणं कृतम् । प्रमाणेनाबाधितत्वमाचार्येणैव प्रतिपादितमिति न प्रतिपाद्यत इति भावः ॥ १३२९ ॥

अवेदका इत्यादिना वैशेषिकमतमाशङ्कते । न केवलं स्वसंवेदना न भवन्ति, बाह्यस्याप्यर्थस्यावेदकाः । न ज्ञानस्वभावा इति यावत् । एकस्मिन्नात्मनि समवेतेन तु ज्ञानेन वेद्यन्त इति तेषां सिद्धान्तः ॥ १३३० ॥

नैरन्तर्येत्यादिना प्रतिविधत्ते । अनेन प्रतिज्ञायाः प्रत्यक्षविरुद्धतामाह । [1]यतो बाह्यवस्त्ववलम्बनज्ञानसमकालं सुखादयोऽनुभूयन्ते; तदा कतमेनैकार्थाश्रयिणा

---

१. यदा—पा०. गा० ।

सुखादि वेद्यते कस्मात् तस्मिन् काले निरन्तरम् ॥ १३३१ ॥
मानसेनैव [1]तद्वेद्यमिष्यते चेतसा न च ।
तत्काले तस्य सद्भावः क्रमजन्मोपवर्णनात् ॥ १३३२ ॥
जन्मैव यौगपद्येन नेष्यते न पुनः स्थितिः ।
इति चेन्न स्थितिस्तस्य क्षणभङ्गप्रसाधनात् ॥ १३३३ ॥
आशुवृत्तेः सकृद् भ्रान्तिरिति चेत् साऽप्यपाकृता ।
विस्पष्टप्रतिभासो हि न स्यात् स्मरणगोचरे ॥ १३३४ ॥
शाताशातादिरूपा च सा भ्रान्तिर्यदि कल्प्यते ।
तदा प्राप्ता सुखादीनां सत्ता तन्मात्रलक्षणा ॥ १३३५ ॥
यदा च योगिनोऽन्येषामध्यक्षेण सुखादिकम् ।
विदन्ति तुल्यानुभवात् तद्वत्तेऽपि स्युरातुराः ॥ १३३६ ॥

---

ज्ञानेन वेद्येरन्, न तावत् तेनैव बाह्यालम्बनेन [ G 397 ] चक्षुरादिज्ञानेन, तस्य बाह्यालम्बनत्वात्, अन्तःसंवेद्यमानत्वाच्च सुखादीनां मानसेनैव चेतसा वेद्यत्वेनेष्टत्वात्। न च तस्मिन् काले मानसस्य चेतसः सम्भवः, क्रमेणैव ज्ञानान्युत्पद्यन्त इत्यभ्युपगम्यते। अथापि स्यात्—जन्मैव ज्ञानानां क्रमेणाभ्युपगतम्, न स्थितिरिति ? एतच्चासम्यक्; सर्वजन्मिनां क्षणिकत्वस्य प्रसाधितत्वात्। आशुवृत्त्या सकृद्भ्रान्तिरपि या, साऽपास्तैव पूर्वम्।

किञ्च—[2]आह्लादपरितापादिरूपेण स्पष्टः प्रतिभासो न प्राप्नोति; विकल्पविषयत्वे सति सुखादीनां मानसेनैव चेतसा वेद्यत्वेनाभ्युपगमात्, तस्य च सविकल्पकत्वात्। न च विकल्पानुबद्धस्य स्पष्टार्थप्रतिभासिता। अस्माभिस्तु स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन जनितस्यैव प्रत्यक्षत्वेनाभ्युपेतत्वात्।

अपि च—ग्राह्यत्वे सति सुखादीनां विच्छिन्नप्रतिभासिता स्यान्नीलादिवत्। न च ज्ञानाद्विच्छिन्नस्य शातादिरूपस्योपलब्धिः। ज्ञानाभेदेन शातादिरूपस्य ग्रहणं भ्रान्तिरिति चेत् ? एवं तर्हि सिद्धा सुखादीनां सत्ता स्वसंविद्रूपाः शातादिरूपमात्रलक्षणत्वात् सुखादीनाम्। तद्रूपता चेज्ज्ञानस्य सिद्धा, सिद्धा ज्ञानस्वभावाः

१. यद्वेद्य०—गा०। २. ०परितापिरूपेण—पा०, गा०।

स्वस्मिन्नपि हि दुःखस्य सत्तैवानुभवो न ते ।
किन्तु तद्विषयं ज्ञानं तच्चास्ति परसन्ततौ ॥ १३३७ ॥
परदुःखानुमाने च तुल्यमेतत् तथा हि तव ।
एकदुःखादि[1] विषयं[1] वर्ण्यते न त्वगोचरम् ॥ १३३८ ॥

शङ्करस्वामिमतम्

सुखादीत्येव गम्यन्ते सुखदुःखादयो न तु ।
ज्ञानमित्येव गम्यन्ते तन्न ज्ञानं घटादिवत् ॥ १३३९ ॥

---

सुखादयः । व्यतिरिक्तानां त्वसिद्धत्वाद् भ्रान्त्यसिद्धेः । शातेत्यनुकूला, तद्विपरीता त्वशाता । आदिशब्देनोपेक्षा गृह्यते ।

यदि च स्वसन्तानोत्पत्तिलक्षणैव या[2] सुखादीनां सत्ता सा एव तेषामनुभव इति नाभ्युपगम्यते, किन्तु तद्विषयज्ञानोत्पत्तिः; तदा योगिनां परकीयं सुखादि गृह्णतां तदनुभविनामिव तुल्यातुरावस्था स्यात् । भिन्नसन्तानवर्त्तित्वान्न तुल्याव-स्थेति न वक्तव्यम्; न हि स्वसन्तानवर्त्तित्वं तेषामनुभवोऽभ्युपगतः[3], किं तर्हि ? तद्विषयज्ञानोत्पत्तिः । सा च परसन्तानग्राहिणामप्यस्तीति समानः प्रसङ्गः ।

अथोभयमनुभवे सुखादीनां कारणमङ्गीक्रियते ? तदा स्वसन्तानवर्त्तित्वेनानुभवे सिद्धं सुखादीनामात्मसंवेदनम् । एवं हि स्वसन्तानवर्त्तित्वं निमित्तं परसन्तान-वर्त्तिभ्यश्च विशेषकं भवति, यदि स्वसंविद्रूपा भवन्ति । येषां तर्हि न योगिनः सिद्धा मीमांसकादीनाम्, तेषां कथं तैः प्रसङ्गः ? इत्याह—परेत्यादि । न हि बौद्धानामिव परेषां निर्विषयं परमार्थतोऽनुमानम्, ततश्च परदुःखानुमाने तुल्यो-ऽनुभवोऽनुमातुरपि स्यात् ॥ १३३१–१३३८ ॥

[G. 398] शङ्करस्वामी[4] प्राह[4]—न ज्ञानस्वभावाः सुखादयः, ज्ञान-मित्यव्यपदेश्यत्वात्, घटादिवदिति ॥ १३३९ ॥

---

१–१. अनु[illegible]ानं सविषयं—गा०; ''''विषयं—पा० ।
२. पा०, गा० पुस्तकयोर्नास्ति ।
३. ०मनुगमोऽभ्यु०—पा०, गा०
४–४. ०स्वाम्याह—गा०, गा० ।

शङ्करस्वाम्युक्तदूषणनिराकरणम्

यद्येवम्, समयान्यत्वे ज्ञानमित्यपि नो गतिः ।
चेतस्यस्ति ततः प्राप्ता तत्राप्यज्ञानता तदा ॥ १३४० ॥
व्यक्तं प्रकाशरूपत्वान्नो चेदेवं प्रसज्यते ।
सुखदःखादिके तुल्यं ननु[1] सर्वमिदं न किम् ॥ १३४१ ॥
भूतार्थभावनोद्भूतं कल्पनाभ्रान्तिवर्जितम् ।
वक्ष्यामो योगिविज्ञानं साधनैर्विमलैरलम् ॥ १३४२ ॥

प्रमाणफलविप्रतिप्रत्तिनिराकरणम्

विषयाधिगतिश्चात्र प्रमाणफलमिष्यते ।
स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यतापि वा ॥ १३४३ ॥

---

यद्येवमित्यादिना दूषणमाह । यदि सङ्केतान्यत्वेन स्वभावान्यत्वं स्यात्, एवं सति यदा ज्ञानेऽपि कश्चिदज्ञानमिति समयं कुर्यात्, तदा ज्ञानमित्यपि चेतसि व्यपदेशो नास्तीति प्राप्ता ज्ञानेऽप्यज्ञानता भवतः ॥ १३४० ॥

अथ प्रकाशात्मकं ज्ञानं स्पष्टमनुभूयत इति नाज्ञानता स्यात्? एवं सति सुखादिष्वपि सर्वमेतत् समानम् । हेतुश्चानेनैव [2]व्यभिचारीति न किञ्चिदेतत् । तं[3] वक्ष्याम इति । सर्वज्ञसिद्धौ ॥ १३४१-१३४२ ॥

प्रमाणफलविप्रतिपत्तिनिराकरणायाह—विषयेत्यादि । बाह्येऽर्थे प्रमेये विषयाधिगमः प्रमाणफलम्, सारूप्यं तु प्रमाणम् । स्वसंवित्तावपि सत्यां यथाकारमस्य प्रथनात् । ज्ञानात्मनि तु प्रमेये स्वसंवित्तिः फलम्, योग्यता प्रमाणम् । सव्यापारप्रतीततामुपादाय ज्ञानस्यैव सा तादृशी योग्यता, येन तदेवात्मानं वेदयते न घटादय इति । योग्यतया कारणभूतयैवात्मप्रकाशकं लक्ष्यते ज्ञानमिति योग्यतायाः स्वसंवेदने प्रामाण्यम् । तदुक्तम्—

"तत्राप्यनुभवात्मत्वात्[4] ते योग्याः स्वात्मसंविदः ।

---

१. तच्च—पा०, गा० ।
२. व्यभिचारी—पा० ।
३. पा०, गा० पुस्तकयोर्नास्ति ।
४. ०नुभयात्म०—गा० ।

कौमारिलाशङ्कनम्

छेदने खदिरप्राप्ते पलाशे न छिदा यथा ।
तथैव परशोर्लोके छिदया नैकतेति चेत् ॥ १३४४ ॥

तदुत्तरम्

न व्यवस्थाश्रयत्वेन साध्यसाधनसंस्थितिः ।
निराकारे तु विज्ञाने सा संस्था न हि युज्यते ॥ १३४५ ॥

---

इति सा योग्यता मानमात्मा मेयः फलं स्ववित् ॥"

( प्र०वा० २.३६६ ) इति ॥ १३४३ ॥

छेदन इत्यादिना कौमारिलचोद्यमाशङ्कते । [ G. 399 ] भिन्नप्रमाणफलवादिनं प्रति बौद्धेनोक्तम्—"यदि प्रमाणफलयोर्भेदोऽभ्युपगम्यते, तदा भिन्नविषयत्वं स्यात्प्रमाणफलयोः, न चैतद्युक्तम्; न हि परश्वादिके छेदने खदिरप्राप्ते सति पलाशे छेदो भवति । तस्मात् प्रमाणफलयोरेकविषयत्वादभेदः" इति । अत्रोक्तं कुमारिलेन—

"विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोर्भेदो लौकिकस्तेन बाधितः ॥
छेदने खदिरप्राप्ते न पलाशे छिदा यथा ।
तथैव परशोर्लोके छिदया सह नैकता ॥"

( श्लो० वा०, प्रत्य० सू० ७४–७५ ) इति ।

छेद्यतेऽनेनेति छेदनम् ॥ १३४४ ॥

नेत्यादिनोत्तरमाह । नीलास्पदं संवेदनं न पीतस्येति विषयावगतिव्यवस्थाया अर्थसारूप्यमेव निबन्धनम्, नान्यत्— इति व्यवस्थाप्यव्यस्थापकभावेन साध्यसाधनव्यवस्था, नोत्पाद्योत्पादकभावेन; यस्मान्न पारमार्थिकः कर्तृकरणादिभावोऽस्ति, क्षणिकत्वेन निर्व्यापारत्वात् सर्वधर्माणाम् । ज्ञानं हि विषयाकारमुत्पद्यमानं विषयं परिच्छिन्ददिव सव्यापारमिवास्तीति[1] । अयमेवार्थप्रापणव्यापारो ज्ञानस्य, न त्वविनाभावित्वमात्रम् । न हि बीजाद्यविनाभाविनोऽङ्कुरादयो न भवन्ति । येन[2] ज्ञानमेव प्रमाणं

---

१. ०वाभाति—पा०, गा० । २. ये—पा० ।

अत उत्प्रेक्षितो भेदो विद्यते धनुरादिवत् ।
उत्पाद्योत्पादकत्वेन व्यवस्थेयं तु नेष्यते ॥ १३४६ ॥
विश्लिष्यमाणसन्धौ च दार्वादौ परशुच्छिदा ।
प्रविशन्नुच्यते तेन तत्रैकत्वमवस्थितम् ॥ १३४७ ॥
व्यवस्थायां तु जातायां कल्प्यतामन्यथापि हि ।
उत्पाद्योत्पादकत्वेन संस्थानविधिरुच्यते ॥ १३४८ ॥

---

स्यात् । तस्मात् साकारमेव ज्ञानं प्रमाणम्, न निराकारम्—इति व्यवस्थया प्रामाण्येन प्रदर्श्यते । व्यवस्था च तत्पृष्ठलब्धेन विकल्पेन वेदितव्या ॥ १३४५ ॥

अत उत्प्रेक्षित इत्यादिना लोकप्रसिद्ध्यबाधामाह । धनुरादिवदिति । धनुर्विध्यति, धनुषा विध्यति, धनुषो निःसृत्य शरो विध्यतीति यच्चैकस्य धनुषः कर्तृत्वादयः कल्पिता न विरुध्यन्ते, तथेहापीति ॥ १३४६ ॥

परशुना च वृक्षादेश्छिदा निरूप्यमाणा छेद्यद्रव्यानुप्रवेशलक्षणैवावतिष्ठते । स चानुप्रवेशः परशोरात्मगत एव धर्म इति परमार्थतश्छिदया सहैकत्वमिति नास्ति विरोधः ॥ १३४७ ॥

[ G. 400 ] व्यवस्थायामित्यादिनैतद्दर्शयति । यथा कुमारिलेन "परिच्छेदफलत्वेन" (श्लो. वा. प्र. सू. ७८) इत्यादिना ग्रन्थेनोत्पाद्योत्पादकभावेन प्रमाणफलव्यवस्था कृता, तथाऽस्माकमप्यविरोधिन्येव । यथोक्तमाचार्येण—"तत्रापि हि प्रत्यक्षत्वोपचारोऽविरुद्धश्चक्षुरादिषु तत्कारणेषु" (   ) इति । एतावत्तु ब्रूमः—अवश्यमादौ व्यवस्थाद्वारेणैव साध्यसाधनसंस्था कर्त्तव्या, न ह्यव्यवस्थाप्य संविद्भेदं विषयभेदेन नियमेन प्रवृत्तिर्युक्ता, संविद्भेदव्यवस्थायाश्च सारूप्यमेव निबन्धनमिति सामर्थ्यादेवायातं सारूप्यस्य साधकतमत्वम्, सारूप्यादेव च ज्ञानस्य प्रवर्त्तकत्वम् । प्रवर्त्तकस्य च प्रमाणत्वं प्रवृत्तिकामेन निरूप्यते, न व्यसनितया । यथोक्तम्—"अर्थक्रियार्थं हि सर्वः प्रमाणमप्रमाणं चान्वेषते प्रेक्षावान्" (   ) इति । यतो येनैवांशेन प्रवर्त्तकत्वं ज्ञानस्य भवति स एव दर्शनीयः, न चोत्पाद्योत्पादकभावेन प्रमाणफलव्यवस्थायां प्रवर्त्तकांशः सारूप्यं गम्यते; ततश्च निष्फलमेवोत्पाद-

कौमारिलं फलव्यवस्थानम्

परिच्छेदफलत्वेन प्रवृत्तस्यान्तरस्य[1] हि ।
कारणत्वं मतं ज्ञाने प्रमाणे तु फलं परम् ॥ १३४९ ॥
स्वसंवित्तिफलत्वं चेन्निषेधान्नैव युज्यते ।
माने च विषयाकारे भिन्नार्थत्वं प्रसज्यते ॥ १३५० ॥

तत्प्रतिविधानम्

सर्वार्थवित्तिप्रसंगेन सा निषेद्धुं न शक्यते ।
भिन्नार्थत्वं न चेहास्ति स्ववविदप्यर्थविन्मता ॥ १३५१ ॥

शङ्करस्वामिमतम्

स्वातिरिक्तक्रियाकारि प्रमाणं कारकत्वतः ।
वास्यादिवच्चेद् वैफल्यमन्यद्धयपि फलं मतम् ॥ १३५२ ॥

---

द्वारेण प्रमाणव्यवस्थानं स्यात् । अत एवाचार्येणैतद्द्वारेण प्रमाणव्यवस्थानं न प्रवृत्त्यङ्गमिति मत्वैवोपचार आश्रितः । तस्माज्ज्ञातायां तु व्यवस्थायां साऽन्यथाऽप्युत्पाद्योत्पादकभावेन कल्प्यताम् । तथाऽप्यदोष एवेति ॥ १३४८ ॥

परिच्छेदेत्यादिना तदेव कौमारिलं फलव्यवस्थानं दर्शयति । वृत्तस्येति । प्रवृत्तस्य चक्षुरादेरित्यर्थः । फलं परमिति । हानोपादानोपेक्षाबुद्धिलक्षणम् । इदमपरमुक्तं कुमारिलेनैव—"स्वसंवेदनस्य निषेधात् तस्य प्रमाणफलत्वमयुक्तम् । विषयाकारस्य च प्रामाण्ये सति प्रमाणफलयोर्भिन्नविषयत्वं प्रसज्यते । तथा हि—विषयाकारो बाह्यविषयः, स्वसंवेदनं तु ज्ञानस्वरूपविषयम्" ( ) इति ॥ १३४९–१३५० ॥

[G. 401] सर्वेत्यादिना प्रतिविधत्ते । "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" ( ) इति सर्वार्थप्रत्यक्षत्वप्रसङ्गान्न शक्यते स्वसंवित्तिर्निषेद्धुम् । नापि भिन्नविषयत्वप्रसङ्गो युक्तः; यतः स्वसंवित्तिरप्यर्थसंवित्तिरिष्टा; तत्कार्यत्वात्, न तु तन्मयत्वेन । स्वसंवित्तिस्तु ताद्रूप्यादिति न विरोधः ॥ १३५१ ॥

स्वातिरिक्तेत्यादिना शङ्करस्वामी प्रमाणयति । आत्मव्यतिरिक्तक्रियाकारि

---

1. वृत्तस्यानन्तरस्य—पा०, गा० ।

उक्तन्यायेन वास्यादेरन्यदस्ति फलं न च।
कारकत्वं च नो सिद्धं जनकत्वविवक्षया ॥ १३५३ ॥
स्थापकत्वविवक्षाया न विरोधोऽस्ति कश्चन।
तेनानैकान्तिको हेतुर्विरोधाप्रतिपादनात् ॥ १३५४ ॥
ग्राह्यसाधारणाकारं यस्माज्ज्ञात्यन्तरत्वतः।
रसरूपादिवज्ज्ञानं नैव चेदुपपद्यते ॥ १३५५ ॥

तन्मते स्वीकृतिः

न्यायानुसरणे सर्वमस्माभिरुपवर्णितम्।
इदमन्यच्च विस्पष्टं ग्राह्यग्रहविवेचने ॥ १३५६ ॥
सर्वात्मना हि सारूप्ये ज्ञानमज्ञानतां व्रजेत्।
साम्यं केनचिदंशेन सर्वं स्यात् सर्ववेदकम् ॥ १३५७ ॥

---

प्रमाणं कारकत्वाद्, वास्यादिवदिति। वैफल्यमित्यादिना दूषयति। विफलम्; सिद्धसाध्यतादोषात्। यतोऽन्यदपि जन्यं फलं परिच्छेदेत्यादिना कथितम्। हिशब्दो हेतौ। 'वास्यादिवत्' इति च साध्यविकलो दृष्टान्तः; छिदया सहैकत्वस्य प्रतिपादितत्वात्। 'कारकत्वात्' इति च जन्यजनकत्वविवक्षायामसिद्धो हेतुः; स्थापकत्वेनैवेष्टत्वात्। साधनस्य स्थापकत्वविवक्षायामप्यनैकान्तिकः; विरोधाभावात्। सामान्यविवक्षायामनैकान्तिक एव; विरोधस्यानुपदर्शितत्वात् ॥ १३५२–१३५४ ॥

ननु च यदि विषयाकारं ज्ञानं स्यात्, तदा भवेद्विषयसारूप्यस्य प्रामाण्यम्; यावता ग्राह्यविषयसमानाकारं समानस्वभावं ज्ञानमुपपद्यते, नैव तथा, ग्राह्याज्ज्ञात्यन्तरत्वाद्रूपरसयोरिव? इत्याह—ग्राह्येत्यादि। [G. 102] विज्ञानवादन्यायानुसारिभिरस्माभिरेतदिष्टमेवेति न किञ्चित् क्षीयते। तथा हि—यत् किञ्चिदिदमस्पष्टं भवता ग्राह्यदूषणमभिहितम्, इदं तु स्पष्टं ग्राह्यविवेचनाय साधनमभिधीयतेऽस्माभिः। ग्राह्ये ग्रहः = अभिनिवेशः; तस्य विवेचनम् = अपनयनम् ॥ १३५५–१३५६ ॥

अर्थसारूप्यस्य प्रामाण्यम्

किन्तु बाह्यार्थसद्भाववादे सारूप्यसम्भवः।
ध्रुवमभ्युपगन्तव्य इत्यर्थं स प्रकाशितः ॥ १३५८ ॥
निर्भासिज्ञानपक्षे हि ग्राह्याद् भेदेऽपि चेतसः।
प्रतिबिम्बस्य ताद्रूप्याद् भाक्तं स्यादपि वेदनम् ॥ १३५९ ॥

---

किं तत् स्पष्टं साधनम्? इत्याह—सर्वेत्यादि। यावद्भ्यो विजातीयेभ्यो व्यावृत्तः, तावद्भ्य एव ज्ञानमपीतीदं सर्वात्मना सारूप्यम्। कतिपयपदार्थव्यावृत्तितस्त्वंशेन सारूप्यम् ॥ १३५७ ॥

कथं तर्ह्यर्थसारूप्यस्य प्रामाण्यमुक्तम्? इत्याह—किन्त्वित्यादि। स इति सारूप्यसम्भवः, आकारो वा। निर्भासः = विषयसारूप्यम्, तद्यस्यास्ति तन्निर्भासि। ग्राह्यादिति बाह्यादर्थात्। प्रतिबिम्बस्येति ज्ञानाकारस्य। ताद्रूप्यादिति विषयसारूप्यात्। भाक्तमिति उपचरितम्। वेदनमिति। अर्थस्येति शेषः। भाजनम् = आश्रयः। विषयविप्रतिपत्तिस्तु सामान्यस्य वस्तुभूतस्य निराकरणाद् वस्तुविषयत्वेनेष्टस्य प्रत्यक्षस्य नान्यः स्वलक्षणाद् विषयोऽस्तीति सामर्थ्यादुपदर्शितत्वान्न पृथङ् निराकृता।

ये त्वाहुः—"अयुक्तमेवेदं प्रत्यक्षलक्षणम्, लक्षणं हि प्रमाणस्य प्रणीयते—अपि नाम तेन रूपेणोपलक्ष्य प्रमाणं ततः परेषां प्रवृत्तिः स्यादिति, न तु व्यसनितया; न च कल्पनापोढत्वादिनोपलक्षितस्यापि प्रवर्त्तकत्वं निवर्त्तकत्वं वा समस्ति लोके" इति? तदसम्यक्; न हि स्वेच्छया वस्तूनां स्वभावव्यवस्थानं कर्तुं लभ्यम्, येनान्यथा प्रणीयेत लक्षणम्; अपि तु यथावस्थितमेव वस्तुस्वरूपमनूद्य प्रसिद्धस्वभावमप्रसिद्धस्वभावविशेषप्रतिपिपादयिषया[1] [G. 403] लक्षणं प्रणयन्ति तद्विदः, यथा—पृथिव्याः खक्खटत्वम्[2]। अन्यथा ह्यसम्भवितादोषेण दुष्टं स्यात्। न च प्रत्यक्षस्य कल्पनापोढाभ्रान्तत्वाभ्यामन्यल्लक्षणमुपलक्षकमस्ति। तथा हि—तदवश्यमभ्रान्तमङ्गीकर्त्तव्यम्; प्रमाणत्वात्। कल्पनापोढं च; साक्षात् स्वलक्षण-

---

१. प्रसिद्धस्वभावविशेष०—पा०, गा०। ०प्रतिपिपादविषया—जै०।
२. ०खटत्वम्—पा०; खरत्वम्—गा०।

येन त्विष्टं न विज्ञानमर्थसारूप्यभाजनम् ।
तस्यायमपि नैवास्ति प्रकारो बाह्यवेदने ॥ १३६० ॥

---

विषयत्वात । स्वलक्षणस्य चाशक्यसमयत्वेन तत्संवित्तेरनभिजल्पत्वस्य प्रसाधितत्वात् । अतो न्यायानुयातमेव लक्षणमेव तदाचक्षते कुशलाः ।

न चाप्यतो लक्षणात् प्रेक्षावतां प्रवृत्तिनिवृत्ती न भवतः । तथा हि — घटोत्क्षेपणसामान्यसङ्ख्यादिज्ञानस्य प्रत्यभिज्ञाप्रत्ययस्य च तथा पीतशङ्खादिज्ञानस्य परैः प्रत्यक्षत्वेनोपकल्पितस्य यथायोगं सविकल्पकत्वेन भ्रान्तत्वेन [1]चाप्रत्यक्षत्वमवधार्य तद्विषयत्वेनोपकल्पितस्य सङ्ख्यादेर्वस्तुत्वाभिनिवेशान्निवर्तन्ते । यच्च निर्देश्यं नीलादि स्वलक्षणं तदेव वस्त्वित्यवसाय तत्र प्रवर्त्तन्ते । यथा च निर्विकल्पस्यापि प्रत्यक्षस्य प्रवर्त्तकत्वम्, तथा प्रागुक्तमेव ।

यद्येवम्, कल्पनापोढत्वमेवैकं लक्षणं कर्तुं युक्तम्, न त्वभ्रान्तमिति । तथा हि — प्रवृत्तेः प्राग्यदेव सिद्धं रूपं तदेव प्रवृत्तिकामानां लक्षणत्वेन गणेतुं युक्तम्, नाप्रसिद्धम्; असत्तुल्यत्वात् तस्य । न चाभ्रान्तत्वनिश्चयोऽर्थक्रियासंवादात् प्रागस्ति, न ह्यर्वाग्दर्शनास्तत्कार्याधिगममन्तरेण यथार्थतां ज्ञानस्य ज्ञातुमीशते; तेषां नित्यं पदार्थशक्तेः कार्यानुमेयत्वात् । यथोपदर्शितार्थप्रापणसामर्थ्यलक्षणत्वाच्च यथार्थतायाः । न चोत्तरकालं यथार्थतावधारणेऽपि साफल्यमस्ति, ततः पुनरप्रवृत्तेः ? तदेतदचोद्यम्; तथा हि—केशोण्डूकादिबुद्धीनामपि प्रामाण्यप्रसङ्गान्मा भूदतिव्यापिता लक्षणदोषः—इत्यतोऽवश्यकरणीयमभ्रान्तग्रहणमित्युक्तम् ।

यश्चापि प्रवृत्तेः प्रागनिश्चयहेतुरर्वाग्दर्शित्वमुच्यते, सोऽप्यनैकान्त एव । को ह्यत्र प्रतिबन्धो यदर्वाग्दर्शिभिर्न क्वचित् सामर्थ्यं निश्चेतव्यमिति । एवं हि न किञ्चित्तैर्निश्चेयमिति प्राप्तम् । ततश्चाचेतनत्वमेव तेषामापतत्; यावता पशुशिशवोऽप्यभ्यासबलादुद्भूतभूतज्ञानवासनावृत्तयः 'सुखस्य साधनमेतद्, एतदसुखस्य' इति प्रवृत्तेः प्रागपि निश्चित्य प्रपातादि परिहरन्तः स्तनादि चोपाददानाः सन्दृश्यन्त एव । तथा हि—अभूतमपि भावयतां कामशोकभयाद्युपप्लुतचेतसामनपेक्षितसाधर्म्यादिस्मृतेरभ्यासस्य स्फुटप्रतिभासस्य ज्ञानोत्पादनसामर्थ्यमुपलभ्यत एव ।

---

१. वा०—पा०, गा० ।

# अनुमानपरीक्षा

## अनुमानस्य लक्षणम्, विभागश्च

स्वपरार्थविभागेन त्वनुमानं द्विधेष्यते ।
स्वार्थं त्रिरूपतो[1] लिङ्गादनुमेयार्थदर्शनम् ॥ १३६१ ॥

---

यत्र तु पुनर्नाभ्यासस्तत्र तेषां कार्यानुमेयैव शक्तिः, न तु सर्वत्र । एतेन धूमादिलिङ्गनिश्चयोऽपि व्याख्यातः; यतस्तत्रापि तत्कार्यस्य[2] धूमादेः प्रकृत्या परस्परमत्यन्तविविक्तस्वभावत्वात्, तद्विवेकनिश्चयस्य चाभ्यासादिहेतुत्वाल्लिङ्ग-निश्चयसम्भवात् । अतो नानुमानप्रतिक्षेपः ।

[G 404] नन्वाद्यायां प्रवृत्तौ सत्यामभ्यासः सिध्यति, यावता सैव कथं भवतीति वक्तव्यम् ? उच्यते; संशयात् । संशयहेतोः प्रत्यक्षस्य कथं तत्र प्रामाण्यमिति चेत् ? निश्चयहेतोरपि कथं प्रामाण्यम् । अवसायोत्पादनादर्थिन-स्तत्र प्रवर्त्तनादिति चेत् ? तदेतत् संशयहेतोरपि तुल्यम् । यद्यपि तत्र प्रतीयमाना-र्थिताथाकारविपरीतो व्यवसायः, तथापि न तेनाकारेण तस्य प्रत्यक्षस्य प्रवर्त्त-कत्वम्, तथाऽवसितस्यानर्थितत्वात् । नापि निवर्त्तकत्वम्, प्रतीयमानप्रार्थितार्थाध्य-वसायहेतुत्वेनार्थिनः प्रवर्त्तनात् । अन्यथा हि संशयहेतोः प्रत्यक्षादर्थी न प्रव र्तेत, नापि निवर्तेतेति प्राप्तम्, न चैवं भवति, अपि तु—अर्थिनामसम्भावितानर्थोद-यानामर्थितया प्रवृत्तेरेव बलीयस्त्वम् । अनेन चांशेन निश्चयहेतोः प्रत्यक्षादस्य न कश्चिद् विशेषः । यत्र त्वेकान्तेन प्रतीयमानार्थविपरीताकारावसायहेतुत्वमेव, अवसा-यानुत्पादकत्वं वा; तत्र तस्य सर्वथार्थिनोऽप्रवर्तनादप्रामाण्यमेवेति युक्तं वक्तुम्, नान्यत्रेत्यलम् ॥ १३५८-१३६० ॥

इति प्रत्यक्षलक्षणपरीक्षा

---

अनुमानस्येदानीं लक्षणमाह—स्वपरेत्यादि । अनुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थं यत् त्रिरूपाल्लिङ्गात् पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाच्च

---

१. स्वरूपतो— जै० । २. तदतत्०— पा०, तदेतत्०—गा० ।

त्रिरूपलिङ्गवदनं[1] परार्थं पुनरुच्यते ।
एकैकद्विद्विरूपोऽर्थो लिङ्गाभासस्ततो मतः ॥ १३६२ ॥

पात्रस्वामिमतम्

अन्यथाऽनुपपन्नत्वे ननु दृष्टा सुहेतुता ।
नासति त्र्यंशकस्यापि तस्मात् क्लीबास्त्रिलक्षणाः ॥ १३६३ ॥
अन्यथाऽनुपपन्नत्वं यस्यासौ हेतुरिष्यते ।
एकलक्षणकः सोऽर्थश्चतुर्लक्षणको न वा ॥ १३६४ ॥

---

सर्वतो व्यावृत्तिः—इत्येवंलक्षणादनुमेयार्थविषयं ज्ञानं तदात्मकं बोद्धव्यम् । परार्थं तु—यथोक्तत्रिरूपलिङ्गप्रकाशकवचनात्मकं द्रष्टव्यम् । अथानुमानाभावस्य किं लक्षणं नोक्तम् ? इत्याह—एकैकेत्यादि । नित्यः शब्दः कृतकत्वान्मूर्त्तत्वादप्रमेयत्वात्—इत्येकैकरूपो यथाक्रमं पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्तिमात्रस्य विद्यमानत्वात् । तत्र द्विद्विरूपो यथा—ध्वनिरनित्यश्चाक्षुषत्वाच्छ्रावणत्वादमूर्तत्वात्—इति यथाक्रमं[2] पक्षधर्मत्व-सपक्षसत्त्व-विपक्षव्यावृत्तिमात्राभावात् । तदुक्तम्—

"कृतकत्वाद् ध्वनिर्नित्यो मूर्त्तत्वादप्रमेयतः ।
अमूर्त्तश्रावणत्वाभ्यामनित्यश्चाक्षुषत्वतः ॥"

( ) इति ॥ १३६१-१३६२ ॥

[G. 405] अन्यथेत्यादिना पात्रस्वामिमतमाशङ्कते । स ह्याह—"अन्यथाऽनुपपन्नत्व एव शोभनो हेतु, नः तु पुनस्त्रिलक्षणः । तथा हि—असत्यन्यथानुपपन्नत्वे त्र्यंशकस्यापि तत्पुत्रत्वादेर्न दृष्टा सुहेतुता । तस्मात् क्लीबाः = असक्ताः, त्रिलक्षणा हेतवः" इति । अन्यथेति । साध्येन विनाऽनुपपन्नत्वम्, हेतोः साध्य एव सत्त्वमित्यर्थः ॥ १३६३ ॥

अन्यथेत्यादिना सविस्तरमन्वयव्यतिरेकसन्दर्शनेनान्यथानुपपन्नत्वमेवैकलक्षणं[3] हेतुं समर्थयते । एकं लक्षणमन्यथाऽनुपपन्नत्वं यस्यास्ति स एकलक्षणः । स एव लौकिकैः परीक्षकैर्वा हेतुरिष्यते, नान्यः । अर्थापत्त्या तु पक्षधर्मत्वादि-

---

१. ०वचनं—पा०, गा० । २. पक्षसत्त्व०—पा०, गा० ।
३. ०नुपपन्नत्वैक०—पा०, गा० ।

यथा लोके त्रिपुत्रः सन्नेकपुत्रक उच्यते ।
तस्यैकस्य सुपुत्रत्वात् तथेहापि च दृश्यताम् ॥ १३६५ ॥
अविनाभावसम्बन्धस्त्रिरूपेषु न जातुचित् ।
अन्यथाऽसम्भवैकाङ्गहेतुष्वेवोपलभ्यते ॥ १३६६ ॥
अन्यथानुपपन्नत्वं यस्य तस्यैव हेतुता ।
दृष्टान्तौ द्वावपि स्तां वा मा वा तौ हि न कारणम् ॥ १३६७ ॥
अन्यथानुपपन्नत्वं[1] यत्र तत्र त्रयेण किम् ।
नान्यथाऽनुपपन्नत्वं[2] यत्र तत्र त्रयेण किम् ॥ १३६८ ॥

---

त्रयमनेनैवाक्षिप्यत इति चतुर्लक्षणकोऽपि वा भवतु । न वा चतुर्लक्षणः; यस्मात् क्वचिदेकलक्षणो द्विलक्षणस्त्रिलक्षणोऽपि वा न्याय्यः । तस्मादन्यथानुपपत्तिरेकं लक्षणम्, तेनैकलक्षण इति व्यपदिश्यते; अन्यथाऽनुपपत्तिसहितां सजातीयसिद्धतां विजातीयव्यावृत्तिं चाभिसमीक्ष्य द्विलक्षणः; अन्यथानुपपन्नत्वं सजातीयवृत्तिः, साध्यविपक्षाच्च व्यावृत्तिरिति त्रिलक्षणः । न तु पक्षधर्मत्वादिलक्षणधर्मत्रययोगात्त्रिलक्षणहेतुरिष्यते । तस्य सम्यग्ज्ञानं प्रति हेतुत्वादुपपत्तेः ॥ १३६४ ॥

अथ वा—प्राधान्यादन्यथाऽनुपपत्तिनामधेयेनैवैकलक्षणव्यपदेशः, न तु पक्षधर्मत्वादिभिस्तेषामप्राधान्यादकिञ्चित्करत्वाद्वेत्येतद्दर्शयन्नाह—यथेत्यादि ॥१३६५॥

ननु चाविनाभावसम्बन्धात् त्रिरूपस्यैव सुहेतुता[3] युक्तेत्याह—अविनेत्यादि । अन्यथासम्भाव एकमङ्गं येषां ते तथोक्तास्ते च ते हेतवश्चेत्यन्यथासम्भवैकाङ्गहेतवः ॥ १३६६ ॥

[G. 406] अन्यथेत्यादिना यथोक्तमेवार्थं निगमयति । दृष्टान्ताविति साधर्म्यवैधर्म्यलक्षणौ । न कारणमिति । साध्यप्रतिपत्तेः । 'अन्यथाऽनुपपन्नत्वं यत्र' इत्यस्यानन्तरम् 'नान्यथानुपपन्नत्वम्' इत्यस्यार्द्धस्य पाठः कर्त्तव्यः ॥ १३६७–१३६८ ॥

---

१. नान्यथानुप०–पा०, गा० । २. अन्यथानुप०–पा०, गा० ।
३. हेतुता–पा०, गा० ।

स श्यामस्तस्य पुत्रत्वाद् दृष्टा श्यामा यथेतरे ।
इति त्रिलक्षणो हेतुर्न निश्चित्यै प्रवर्त्तते ॥ १३६९ ॥
तत्रैकलक्षणो हेतुर्दृष्टान्तद्वयवर्जितः ।
कथञ्चिदुपलभ्यत्वाद् भावाभावौ सदात्मकौ ॥ १३७० ॥
चन्द्रत्वेनापदिष्टत्वान्नाचन्द्रः शशलाञ्छनः ।
इति द्विलक्षणो हेतुरयं चापर उच्यते ॥ १३७१ ॥
पतत्कीटकृतेयं मे वेदनेत्यवसीयते ।
पतत्कीटकसंस्पर्शप्रतिलब्धोदयत्वतः ॥ १३७२ ॥
चक्षू रूपग्रहे कार्ये सदाऽतिशयशक्तिमत् ।

---

त्रिरूपेऽविनाभावसम्बन्धाभावं दर्शयन्नाह—स श्याम इत्यादि ॥१३६९॥

तत्रैकेत्यादिनैकलक्षणस्यैव हेतोः सामर्थ्यं दर्शयत्युदाहरणप्रपञ्चेन । भावाभावौ कथञ्चित् सदात्मकौ; कथञ्चिदुपलभ्यत्वात् । अत्र न साधर्म्यवैधर्म्यदृष्टान्तौ बहिर्भूतौ, प्रयोगात्मकावर्थात्मकौ वा विद्येते; भावाभावात्मकस्य सर्वपदार्थराशेः पक्षीकृतत्वात्, तद्व्यतिरिक्तस्य चान्यस्याभावात् । पक्षधर्मस्यान्यथानुपपन्नत्वाद-व्यतिरेकाच्चैकलक्षण एवायम् । कथञ्चिदिति । ज्ञेयत्वादिना केनचित् पर्यायेणेत्यर्थः । सदात्मकाविति । अत्रापि 'कथञ्चित्' इति सम्बन्धनीयम् । तेनायमर्थो भवति—कथञ्चिदुपलभ्यत्वात् कथञ्चित् सदात्मकाविति ॥ १३७० ॥

इदानीं द्विलक्षणस्य हेतोरुदाहरणान्याह । [G. 407] नाचन्द्रः शशी, चन्द्रः शशीति वा पक्षः, लोके सम्प्रदायप्रसिद्धचन्द्रव्यपदेशाच्चन्द्रत्वेनापदिष्टत्वादिति वा हेतुः । वैधर्म्येण लोष्टादि ।

अयं चापरो द्विलक्षण उच्यते—पतत्कीटककृतेयं मम वेदना पतत्कीटकसंस्पर्शप्रतिलब्धोदयत्वात् । पततः कीटकस्य = पतङ्गस्य स्पर्शेन प्रतिलब्ध उदयः = उत्पादो यथेत्यर्थः । सामान्यविवक्षा चात्रान्यपदार्थे द्रष्टव्या, तेन टाब्न भवति ।

विद्यमानरूपग्रहणसाधकतमशक्तिकं चक्षुः, अनुपहतत्वे सति रूपदिदृक्षायां प्रेक्षापूर्वकारिणा करणत्वेन व्यापार्यमाणत्वात्, रूपपरिच्छेदनदर्शनाद्वा ।

तस्मिन् व्यापार्यमाणत्वाद् यदि वा तस्य दर्शनात् ॥ १३७३ ॥
कथञ्चिदसदात्मानो यदि वाऽऽत्मघटादयः ।
कथञ्चिन्नोपलभ्यत्वात् खरसम्बन्धिशृङ्गवत् ॥ १३७४ ॥
कथञ्चन सदात्मानः शशशृङ्गादयोऽपि च ।
कथञ्चिदुपलभ्यत्वाद् यथैवाऽऽत्मघटादयः ॥ १३७५ ॥
त्वदीयो वापि तत्रास्ति वेश्मनीत्यवगम्यते ।
भावत्कपितृशब्दस्य श्रवणादिह सद्मनि ॥ १३७६ ॥
अन्यथाऽनुपपत्त्यैव शब्ददीपादिवस्तुषु ।
अपक्षधर्मभावेऽपि दृष्टा ज्ञापकताऽपि च ॥ १३७७ ॥
तेनैकलक्षणो हेतुः प्राधान्याद् गमकोऽस्तु नः ।
पक्षधर्मादिभिस्त्वन्यैः किं व्यर्थैः परिकल्पितैः ॥ १३७८ ॥

---

वैधर्म्येण श्रोत्रादि । तस्येति रूपस्य । अत्र त्रिष्वपि[1] हेतुषु सपक्षाभावाद्[1] द्विरूपत्वम् ।

आत्मघटादयः कथञ्चिदसदात्मानः; कथञ्चिदनुपलभ्यमानत्वात्, खरविषाणवत् । अत्र वैधर्म्यदृष्टान्तो न विद्यते । घटादिः सर्वो भावात्मको राशिः कथञ्चिद-सदात्मकत्वेन प्रतिज्ञातः, अभावश्च साधर्म्यदृष्टान्तत्वेनोपन्यस्तः । न च भावा-भावव्यतिरिक्तं तृतीयमस्ति, यत्र साध्यव्यवच्छेदपूर्वकः साधनव्यवच्छेदो निर्दिश्येत । खरविषाणादयो वा कथञ्चित् सदात्मकाः; कथञ्चिदुपलभ्यमानत्वात्, आत्मघटादिवत् । अत्रापि पूर्वकयैव युक्त्या वैधर्म्यदृष्टान्ताभावो योजनीयः ।

प्रतिपद्यमानत्वदीयपितृकमिदं गृहम्, श्रूयमाणत्वदीयपितृकस्वरत्वात् । अत्र किल साधर्म्यदृष्टान्तो नास्तीति द्विरूपता ।

तथा शब्ददीपादीनां धूमादिलिङ्गवज्ज्ञापकत्वं दृष्टमसत्यपि पक्षधर्मत्वे, न हि शब्ददीपादयो घटाद्यर्थगता धर्माः । अथ च प्रतीयते शब्दादेः सकाशादर्थ इति विपक्षभावोऽन्यथानुपपन्नत्वं[2] चेति द्विरूपो हेतुः ॥ १३७१-१३७८ ॥

१-१. हेतुष्वसत्याषु साधर्म्यदृष्टान्ताभा०—पा०, गा० ।
२. ०नुपपन्नं—जै० ।

पात्रस्वामिमतखण्डनम्

तदिदं लक्षणं हेतोः किं सामान्येन गम्यते।
जिज्ञासितविशेषे वा धर्मिण्यथ निदर्शने॥ १३७९॥
सामान्येन गते तस्मिन्नेवं चेत् साध्यधर्मिणि।
हेतोः सत्त्वं प्रकाश्येत न विवक्षितसिद्धिभाक्॥ १३८०॥
तद्यथा चाक्षुषत्वस्य नाशेनाव्यभिचारिता।
सामान्येन गता तच्च ध्वनौ तस्य न साधनम्॥ १३८१॥
तस्य धर्मिणि सद्भावः ख्याप्यते चेत् तथा सति।
सैव त्रिरूपताऽऽयाता भवतामपि दर्शने॥ १३८२॥
अन्यथाऽनुपपत्त्या हि[1] व्यतिरेकान्वयौ गतौ।
तस्य धर्मिणि सद्भावात् पक्षधर्मत्वसंश्रयः॥ १३८३॥

---

[G. 408] तदित्यादिना प्रतिविधत्ते। तत्र साध्येनाविनाभावित्वं हेतोः सामान्येन वा स्याद्, [2]धर्मिविशेषापरिग्रहाद् विशेषेण वा स्यात्, धर्मिविशेषपरिग्रहाद् विशेषेऽपि, जिज्ञासितविशेषसाध्यधर्मिणि वा स्याद्, दृष्टान्तधर्मिणि वा--इतीयन्तः पक्षाः सम्भाव्यन्ते॥ १३७९॥

तत्र प्रथमे पक्षे दोषमाह--सामान्येनेत्यादि। न ह्यविनाभावित्वमात्रेणैव विना पक्षधर्मत्वं शब्दे धर्मिणि चाक्षुषत्वमनित्यत्वस्य गमकं दृष्टमित्ययुक्तः प्रथमः पक्षः। न विवक्षितसिद्धिभागिति। साध्यधर्मिणि न विवक्षितां सिद्धिं भजेदित्यर्थः॥ १३८०॥

कथम्? इत्याह--तद्यथेति। तच्चेति चाक्षुषत्वम्। तस्येति नाशस्य। साधनम् = गमकम्। अथ मा भूद् यथोक्तदोष इति तस्य हेतोः साध्यधर्मिणि सद्भाव आश्रीयते? एवं सति तदेव त्रिरूपत्वं हेतुलक्षणमस्मदीयं भवद्दर्शनेऽपि जातम्॥ १३८१-१३८२॥

---

१. दि—पा०।

२. धर्मिविशेषणपरि० पा०, गा०।

ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुरितीदृशम् ।
आचार्यैरपि निर्दिष्टमीदृक्संक्षेपलक्षणम्[1] ॥ १३८४ ॥
अथेदं लक्षणं हेतोर्धर्मिण्येवावगम्यते ।
यतः प्रमाणात् तत्सिद्धिः[2] साध्यस्यापि ततो न तु ॥ १३८५ ॥
साध्यस्याप्रतिपत्तौ हि हेतोरपि न निश्चयः ।
अतो निरर्थको हेतुरन्यतः साध्यसिद्धितः ॥ १३८६ ॥

---

कथम्? इत्याह—अन्यथेत्यादि। [3]अन्वयः = सपक्षे सत्त्वम्, व्यतिरेकः = विपक्षासत्त्वम्[3], संश्रयणम् = संश्रयः, परिग्रह इति यावत् ॥ १३८३ ॥

[G. 409] ग्राह्यधर्म इति। ग्राह्यस्य साध्यधर्मिणो धर्मः पक्षधर्म इति यावत्। आचार्यैरित्यनेन तन्मताविरोधं प्रतिपादयति ॥ १३८४ ॥

अथेति द्वितीयं पक्षमाह। अथ साध्यधर्मिण्येव साध्याविनाभावित्वं हेतोर्यत्, तदेव हेतुलक्षणम्। यथाह—

"विना साध्याददृष्टस्य दृष्टान्ते हेतुतेष्यते ।
परैर्मया पुनर्धर्मिण्यसम्भूष्णोर्विनाऽमुना ॥
अर्थापत्तेश्च शाबर्या भैक्षवाश्चानुमानतः ।
अन्यदेवानुमानं नो नरसिंहवदिष्यते ॥" ( )

धर्मिणीति साध्यधर्मिणि। अमुना साध्यधर्मेण विना साध्यधर्मिण्यसम्भवनशीलस्येत्यर्थः। एवं तर्हि यत एव प्रमाणाद्धेतुः साध्याविनाभूतः साध्यधर्मिणि सिद्धः, तत एव साध्यमपि सिद्धमिति व्यर्थो हेतुः।

अथ साध्यं न सिद्धम्, तदा हेतुरपि न सिद्ध एव; यस्मात् साध्यधर्मिणि साध्याविनाभाविता हेतुलक्षणम्, तच्चाविनाभावित्वं साध्यासिद्धौ न सिद्धमित्यसिद्धो हेतुः; उभयसिद्धिनान्तरीयकत्वादविनाभावित्वस्य। अन्यतः प्रमाणात्

---

१. पा० गा० पुस्तकयोः 'आचार्यैः' इत्यादिकारिकार्धतः पूर्वम् 'ग्राह्यधर्मः' इत्यादिकारिकार्धं स्थापितम्, एतत्क्रमेणैव चास्य पञ्जिकापि स्थापितेति ध्येयम्।
२. नासिद्धिः—पा०, गा०।
३–३. पाठोऽयं जै० पुस्तके 'यावत्' इत्यस्यानन्तरं विद्यते।

अन्योऽन्याश्रयदोषश्च हेतोः साध्यस्य निश्चये।
द्वयोरन्यतरासिद्धावन्यस्याप्यविनिश्चितः[1] ॥ १३८७ ॥
निदर्शनेऽपि तत्सिद्धौ न स्याद् धर्मिणि साध्यधीः।
न हि सर्वोपसंहारात् तस्य व्याप्तिर्विनिश्चिता ॥ १३८८ ॥
योऽप्ययं हेतुरत्रोक्तः कथञ्चिदुपलम्भतः।
इति नास्त्येव विषयः सन्दिग्धोऽस्येति निष्फलः ॥ १३८९ ॥
भावस्य हि तदात्मत्वं सर्वैरेव विनिश्चितम्।

---

साध्यसिद्धौ हेतुः सिद्ध इति चेत्? किं तदानीं हेतुना, साध्यस्य सिद्धत्वात्! हेतोः सकाशात् साध्यस्य निश्चये कर्त्तव्येऽन्योन्याश्रयदोषश्च स्यात्। कथम्? इत्याह—द्वयोरित्यादि। हेतुसिद्धिपूर्विका साध्यसिद्धिः, तदर्थत्वाद्धेतोः। हेतोश्च साध्याविनाभाविलक्षणस्य[2] साध्यसिद्धिपूर्विका सिद्धिरिति व्यक्तमितरेतराश्रयत्वम् ॥ १३८५-१३८७ ॥

तृतीयपक्षमाह—निदर्शनेऽपीति [G. 410] निदर्शने = साध्यधर्मिव्यतिरिक्ते दृष्टान्तधर्मिणीत्यर्थः। तत्सिद्धाविति हेतुसिद्धौ। एतदुक्तं भवति—यदि साध्यधर्मिव्यतिरेकेणान्यत्रैव दृष्टान्तधर्मिणि हेतोरविनाभावित्वमिष्यते, न तु सर्वोपसंहारेण सह साध्यधर्मिणा, तत् कथं साध्यधर्मिणि हेतोः सकाशात् साध्यप्रतिपत्तिः स्यात्! कथं च न स्यात्? इत्याह—न हीत्यादि ॥ १३८८ ॥

योऽपीत्यादिना साम्प्रतमुदाहरणानि दूषयते। योऽयम् 'कथञ्चिदुपलम्भतः' इति हेतुरुक्तः, असौ निष्फलः; सन्दिग्धस्य विषयस्याभावात्। सिद्धसाध्यत्वादिति यावत्। न हि सिद्धो विषयो हेतोरिष्यते, किं तर्हि? सन्दिग्धः। तथा हि—सन्दिग्धे हेतुवचनात् [3]व्यस्तवत् सिद्धोऽपि हेतोरनाश्रय एव; सिद्धत्वात् साध्यस्येति ॥ १३८९ ॥

अथ स्यात्—सन्दिग्ध एव हेतोरत्रापि विषयोऽस्तीति, अत आह—भावस्येत्यादि। कथञ्चित् सदात्मकत्वं भावस्य सर्वैर्यदा निश्चितमेव, तदा भवता

---

१. ०प्यविनिश्चये—पा०, गा०। २. ०भावलक्षणस्य—पा०, गा०।
३. प्रत्यक्षादिनिराकृतपक्षवदित्यर्थः।

कथञ्चित् तस्य साध्यत्वं किमित्थमभिधीयते ॥ १३९० ॥
सर्वभावैक्यवादेऽपि विकारात्मादिभेदतः ।
केनचिद्द विशदात्मत्वमात्मना सम्प्रकाश्यते ॥ १३९१ ॥
सर्वभावगतं येऽपि निःस्वभावत्वमाश्रिताः ।
तेऽपि तत्त्वत इत्यादि विशेषणमुपाश्रिताः ॥ १३९२ ॥
कथञ्चिदुपलभ्यत्वमन्यथा न हि सिध्यति ।
व्यवहारस्य साध्यत्वे प्रसिद्धं स्यान्निदर्शनम् ॥ १३९३ ॥
चन्द्रत्वेनापदिष्टत्वं सपक्षेऽप्यनुवर्त्तते ।

---

किमित्थमभिधीयते—कथञ्चित् सदात्मको भाव इति। तदात्मत्वमिति सदात्मत्वम् । भावस्येत्युपलक्षणमभावस्यापि। कथञ्चित्—प्रमेयादिरूपेण सदात्मत्वं निश्चितमेवेति व्यर्थो हेतुः ॥ १३९० ॥

अथ साङ्ख्यादीनामसिद्धम्, अतः साध्यते ? इत्याह—सर्वेत्यादि । सर्वभावानामैक्यवादः साङ्ख्यीयो यस्मिन् वादे स्थितः, तैरेव साङ्ख्यैः केनचिदात्मना स्वभावेन तदात्मत्वं सम्प्रकाश्यत एव। कथम् ? इत्याह—विकारात्मादिभेदत इति। विकारात्मा = विकारस्वभावः । आदिशब्देन प्रकृतिरसङ्कीर्णा सुखदुःखादिस्वभावा, [ G. 411 ] पुरुषाश्च परस्परतः प्रकृतेश्च भिन्ना गृह्यन्ते । येऽपीति । माध्यमिकाः । तेऽपि तत्त्वत इति सविशेषणं सर्वभावानां निस्स्वभावत्वमाश्रिताः, न तु सर्वथा; [1]यथादर्शनमुत्पादादीनामभ्युपगमाच्च । तत्त्वत इति न्यायतः । आदिशब्दात् 'परमार्थतः' इत्यादेर्ग्रहणम् । अवश्यं चैतदभ्युपगन्तव्यम्—सर्वैरेव भावस्य कथञ्चित् सदात्मत्वं निश्चितमिति ॥ १३९१–१३९२ ॥

अन्यथैवमनिष्यमाणे 'कथञ्चिदुपलभ्यमानत्वात्' इत्ययं हेतुरपि न सिध्यति । पूर्वं सिद्धसाध्यता हेतुदोष उक्तः । इदानीं त्वसिद्धतोक्ता । अथ व्यवहारः साध्यते ? तदा यत्र पूर्वं व्यवहारः कृतस्तत्प्रसिद्धं निदर्शनं सम्भवतीति त्रिरूप एव स्यात् । अन्यथा निदर्शनाभावे सोऽपि व्यवहारो न सिद्ध्येत ॥ १३९३ ॥

---

1. दर्शनमु०—पा०; दर्शनसमु०—गा० ।

क्वचिन्माणवके यद्वा कर्पूररजतादिके ॥ १३९४ ॥
चन्द्रत्वसाधने हेतावसाधारणता भवेत् ।
प्रसिद्धिव्यतिरेके च वस्तुरूपसमाश्रये ॥ १३९५ ॥
पतत्कीटकृतत्वस्य न विशेषः समीक्ष्यते ।

---

द्वितीयप्रयोगे दूषणमाह—चन्द्रेत्यादि । माणवक इति पुरुषे ॥ १३९४ ॥

ननु च यदि चन्द्रप्रसाधनाय त्रिरूपो हेतुः सम्भवति, कथं तर्हि योऽचन्द्रत्वं शशिनि प्रतिजानीते, तं प्रति चन्द्रसाधनाय लोकस्य ब्रुवतोऽनुमानाभाव आचार्येणोक्तः "यत्राप्यसाधारणत्वादनुमानाभावे शाब्दे[1] प्रसिद्धेन[1] विरुद्धेनार्थेनापोह्यते, यथा—अचन्द्रः शशी सत्त्वादिति नासौ पक्षः" (     ) इत्येतेन ग्रन्थेन ? इत्याशङ्कयाह—चन्द्रत्वसाधन इति । वस्तुरूपसमाश्रय इति । वस्तुसदसत्तानुरोधिनि साधने, अत्रासाधारणतोक्ता, न तु प्रसिद्धिलक्षणे हेतौ । तस्येच्छानुरोधित्वादस्त्येवान्वयः; यस्मादसौ विप्रतिपन्नः सर्वप्रतीत्यपलापी न शक्यते प्रसिद्धिलक्षणेन चन्द्रत्वं प्रतिपादयितुम् । न चान्यल्लिङ्गमस्ति वस्तुबलप्रवृत्तम्, येन चन्द्रत्वं शशिनि प्रतिपाद्येत; चन्द्रादिव्यपदेशस्येच्छामात्रानुरोधित्वेनावस्तुधर्मत्वादिति तं प्रत्यदृष्टान्तकमनुमानमुक्तम् । यथोक्तम्—

"चन्द्रतां शशिनोऽनिच्छन् कां प्रतीतिं स वाञ्छति । [G. 412]
इति तं प्रत्यदृष्टान्तं तदसाधारणं मतम् ॥" (प्र० वा० ४.१२०) इति ।

अचन्द्रसाधन इति क्वचित् पाठः । तत्रैवमिति सम्बन्धः—पूर्वपक्षवादिना य उक्तः 'अचन्द्रः शशी सत्त्वात्' इति हेतुः, तस्मिन्नचन्द्रसाधनहेतौ पूर्वपक्षवादिना प्रोक्ते सति चन्द्रत्वसाधनाय तं प्रति प्रवृत्तस्योत्तरपक्षवादिनोऽसाधारणताऽनुमानाभावे कारणमाचार्येणोदितम् "यत्राप्यसाधारणत्वादनुमानाभावे" (     ) इत्यादिना प्रसिद्धिव्यतिरिक्तं वस्तुबलप्रवृत्तं लिङ्गमाश्रित्येति ॥ १३९५ ॥

तृतीयेऽपि हेतावाह—पतदित्यादि । न विशेषः समीक्ष्यत इति । हेतुप्रतिज्ञयोः । प्रतिज्ञार्थैकदेशो हेतुरिति यावत् । तथा हि—अत्र विशिष्टकीट-

---

१–१. शाब्दप्रसिद्धेन—पा०, गा० ।

पतत्कीटकसंस्पर्शप्रतिलब्धोदयस्य च ॥ १३९६ ॥
पततोऽस्येति कार्यं हि ध्रुवं हेतोर्विशेषणम् ।
अन्यथा व्यभिचारित्वं दुर्निवारं प्रसज्यते ॥ १३९७ ॥
कार्यताव्यवहारस्तु तस्य विस्मरणे सति ।
यदि साध्यस्त्रिरूपः स्यात् पूर्वसिद्धनिदर्शनात् ॥ १३९८ ॥
चक्षुषो धर्मिरूपस्य सत्ता तावदनिश्चिता ।
तस्याश्च साधनं युक्तं नासिद्धयादिप्रसङ्गतः ॥ १३९९ ॥

---

हेतुत्वं वेदनायाः साध्यत्वेनेष्टम्, तदेव च शब्दान्तरेण [1]हेतुत्वेनोक्तमिति न विशेषो हेतुप्रतिज्ञयोः ॥ १३९६ ॥

अथ मतम्—यदा 'पततः' इत्येतद्विशेषणं नोपादीयते, 'प्रतिलब्धोदयत्वात्' इत्येव तु सामान्यं हेतुरुच्यते, तदा न प्रतिज्ञार्थैकदेशता ? इत्याह—पतत इत्यादि । कीटान्तरकृतया वेदनया व्यभिचारो मा भूदिति विशेषणं कार्यम् ॥ १३९७ ॥

अथ कार्यकारणव्यवहारो विस्मृतं प्रति साध्यते, तथा सति त्रिरूपो हेतुः स्यात्; अग्निधूमादेः प्रसिद्धकार्यकारणस्य दृष्टान्तत्वेन विद्यमानत्वात् ॥१३९८॥

"चक्षू रूप" ( तत्त्व० १३७३ ) इत्यादावाह—चक्षुष इत्यादि । तस्याश्च साधनं युक्तं नेति छेदः । असिद्धयादीत्यादिशब्देन व्यभिचारविरोधयोर्ग्रहणम् । सत्तायां साध्यायां सर्वो [2]हेतुत्रयीं दोषजातिं[2] नातिवर्त्तते । तथा हि—भावे धर्मे हेतावसिद्धता, उभयधर्मेऽनैकान्तिकता, अभावधर्मे विरुद्धता । यथोक्तम्—

"नासिद्धेर्भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ॥ [G. 413]
धर्मो विरुद्धोऽभावस्य[3] सा सत्ता साध्यते कथम् ।"

( प्र० वा० ३. १९०, १९१ ) इति ।

अथ चक्षुषि धर्मिणि चक्षुर्विज्ञानोत्पादनशक्तिः साध्यते, तदापि शक्तिः, सत्ता – इत्यादेः पर्यायत्वात् तत्साधने सत्तासाधनप्रसङ्गः । व्यतिरेकेऽपि [4]तस्या

---

१. हेतुनोक्त०—पा०, गा० ।
२–२. हेतुर्दोषत्रयं—पा०, गा० ।
३. भावश्च—जै०, पा०, गा० ।
४. सत्तातोऽभेदेऽपि शक्तेरित्यर्थः ।

किन्तु रूपादिभावेऽपि चक्षुर्ज्ञानं न जायते ।
कदाचित् तेन तन्मात्रं न हेतुरिति गम्यते ॥ १४०० ॥
स्वहेतुनियतोद्भूतिरंकुरादिश्च विद्यते ।
तस्मिन् दृष्टान्त एवं च वैलक्षण्यमतिस्फुटम् ॥ १४०१ ॥
कथञ्चिदसदात्मत्वसाधने च घटादिषु ।
पूर्ववद्धेतुवैफल्यमप्रसिद्धिश्च दृश्यते ॥ १४०२ ॥

---

अतीन्द्रियत्वेनासिद्धत्वादाश्रयासिद्धो हेतुः स्यात् । एवं 'रूपग्रहणात्' इत्ययमप्यपक्षधर्मत्वादसिद्धो द्रष्टव्यः ॥ १३९९ ॥

कथं तर्हि भवतामपि चक्षुरादीन्द्रियसिद्धिः ? इत्याह—किन्त्वित्यादि । कदाचिदिति । निमीलितलोचनावस्थायाम् । न ह्यस्माभिराहत्य चक्षुरादीदन्तया साध्यते, अपि तु ज्ञानं केषुचिद्रूपादिषु सत्स्वन्वयव्यतिरेकावनुभवद् दृश्यते, तस्य कारणान्तरापेक्षिता तन्मात्रासम्भविता च साध्यत इति तदेव ज्ञानं धर्मीति नासिद्ध्यादिदोषः । यत्तत् कारणान्तरं तच्चक्षुरिति व्यवह्रियते । सिद्धान्ताश्रयस्तु भेदव्यवहारः ॥ १४०० ॥

स्यादेतत्—भवतु यथोक्तया नीत्या विज्ञानस्य धर्मित्वम्, तथापि त्रिरूप एव हेतुः ? इत्याह—स्वहेत्विति । स्वहेतुनियता = स्वहेतुप्रतिबद्धा[1], उद्भूतिर्यस्यासौ स तथोक्तः । एवम्भूताः स्वकारणायत्तजन्मानोऽङ्कुरादयः कादाचित्का दृष्टान्तत्वेन सम्भवन्तीति यावत् । एवं च प्रयोगः कार्यः—यत्सन्निधानेऽपि[2] कादाचित्काः, ते न [3]तन्मात्रासम्भविनः, कारणान्तरसव्यपेक्षकाश्च; तद्यथा—सत्स्वपि क्षित्यादिषु बीजसन्निधानासन्निधानाभ्यामन्वयव्यतिरेकिणोऽङ्कुरादयः । सत्स्वपि रूपादिषु कादाचित्कं चक्षुर्ज्ञानं निमीलितानिमीलितावस्थायामिति व्यापकविरुद्धोपलब्धिः प्रतिषेधे । विधौ तु स्वभावहेतुः ॥ १४०१ ॥

"कथञ्चित्" (तत्त्व० १३७४) इत्यादावाह—कथञ्चिदिति । अत्रापि सिद्धसाध्यता; केनचित् प्रकारेण घटादीनामसत्त्वस्य सिद्धत्वात् । अथ न [ G. 414 ]

---

१. हेतुप्रतिबद्धा—पा०, गा० । २. यत्सन्निधाने—पा०, गा० ।
३. तन्मात्रसम्भविनः—पा०, गा० ।

अस्ति चात्रापि विस्पष्टं वैधर्म्येण निदर्शनम् ।
तदेव तेषां स्वं रूपं प्रयाति हि विपक्षताम् ॥ १४०३ ॥
कथञ्चन सदात्मत्वसाधनेऽपि निरात्मसु ।
इष्टसिद्धिरसिद्धिश्च [1]वैधर्म्याप्तिस्तथैव च ॥ १४०४ ॥
पितृशब्दश्रुतेर्याऽपि वेश्मनः प्रतिपाद्यते ।
पितृसम्बन्धिता तत्र व्यक्तो हेतुस्त्रिलक्षणः ॥ १४०५ ॥
क्वचिद् विप्रतिसम्बद्धः स्वरः प्रागुपलक्षितः ।
तस्याननुभवे पूर्वं दुर्द्धरा हेत्वसिद्धता ॥ १४०६ ॥
यस्मिन् प्रागुपलब्धश्च नोपलब्धश्च यत्र सः ।
अन्वयो व्यतिरेको वा विस्पष्टं तत्र दृश्यते ॥ १४०७ ॥

---

सिद्धम्, 'अनुपलभ्यमानत्वात्' इत्ययं हेतुरपि न सिध्यतीत्यसिद्धो हेतुरिति पूर्ववद् वाच्यं दूषणं यथा सदात्मसाधने हेतावुक्तम् ॥ १४०२ ॥

यदुक्तम्—'विपक्षाभावाद् वैधर्म्यदृष्टान्तो नास्ति" इति, अत्राह—अस्ति चेत्यादि । येन रूपेणोपलभ्यन्ते घटादयस्तेन रूपेण सदात्मत्वं तेषामिष्टमेव यदा, तदा स एव स्वभावस्तेषां वैधर्म्यदृष्टान्तो भवेदेव; तस्मिन् स्वभावेऽनुपलभ्यमानत्वस्य हेतोर्निवृत्तत्वात्। एवं 'कथञ्चन' इत्यत्रापि प्रयोगे तुल्या इष्टसिद्ध्यादयः । निरात्मस्विति अभावेषु। वैधर्म्याप्तिरिति । वैधर्म्यस्य साध्यनिवृत्तिलक्षणस्य साधनाभावेनाप्तिर्व्याप्तिः। तथैवेति। स्वभावस्य वैधर्म्यसम्भवेन ॥१४०३-१४०४॥

"त्वदीय" (तत्त्व० १३७६) इत्यादावाह—पितृशब्देत्यादि। तस्येति पितृसम्बद्धस्य । अन्यत्र क्वचित् प्रदेशेऽननुभवे सत्यसिद्धो हेतुः स्यात् ॥१४०५-६॥

यस्मिन्नित्यादिना तदेव त्रैरूप्यमादर्शयति। [G. 415] शब्दस्य बाह्यार्थापेक्षयाऽन्यथानुपपन्नत्वमसिद्धमिति तं प्रत्यलिङ्गत्वम्; इच्छामात्रावृत्तित्वात्तस्य। अथ [2]बुद्धिविपरिवर्त्तिनमर्थमपेक्ष्य ? तदा त्रैलक्षण्यमस्त्येव धूमस्येव; यतो विवक्षाया असम्मुखीभावे शब्दस्याप्रयोगात् तत्कार्यत्वाद् धूमवज्जातवेदसो[3] गमक इष्ट एव,

---

१. वैधर्मास्ति०—गा० । २. बुद्धिपरि०—पा०; गा० ।
३. ०जातवेदसे—पा०, गा० ।

शब्दस्तु ज्ञापयत्यर्थं नैव बाह्यं कथञ्चन।
अन्यथासम्भवाभावाद् विवक्षागमकस्त्वसौ ॥ १४०८ ॥
तस्यां च प्रतिपाद्यायां वैलक्षण्यमतिस्फुटम्।
विवक्षासम्मुखीभावे न हि शब्दः प्रयुज्यते ॥ १४०९ ॥
दीपस्तु ज्ञापको नैव नीलादेर्लिङ्गभावतः।
ज्ञानोत्पादनयोग्यस्य जननात्तु तथोच्यते ॥ १४१० ॥
ज्ञापके लिङ्गरूपे च पक्षधर्मादि चिन्त्यते।
अन्यथा चक्षुरादीनां कस्मादेतन्न चोद्यते ॥ १४११ ॥
अन्यथानुपपत्त्याऽपि चाक्षुषत्वं न साधकम्।
पक्षधर्मवियोगेन क्लीबास्तेनैकलक्षणाः ॥ १४१२ ॥
एकरूपतयोक्तानां द्वैरूप्यं चोपलक्षितम्।
द्विरूपत्वेन चोक्तानां त्रैरूप्यं पक्षधर्मतः ॥ १४१३ ॥

---

न तु वाचकरूपेण। प्रदीपस्तु लिङ्गद्वारेण धूमवन्न ज्ञापक इष्टः, किं तर्हि? विज्ञानजननयोग्यघटाद्युत्पादनेन ज्ञापको रूढः, न तु लिङ्गत्वेन—इति [1]तस्य लिङ्गभूतस्य पक्षधर्मत्वादिचिन्ता न युक्तैव; अन्यथा चक्षुरादीनामपि पक्षधर्मत्वादि चोदनीयं स्यात्।

अन्यथेत्यादि प्रकृतार्थोपसंहारः। यतश्चाक्षुषत्वमनित्यत्वाविनाभाव्यपि शब्दे तदनित्यत्वं न साधयति, यतश्चावश्यं सर्वत्र पक्षधर्मत्वमाश्रयणीयम्; अतः पक्षधर्मत्वाश्रयणादेकरूपतयोक्तानां द्वैरूप्यमावश्यकम्, द्विरूपतया चोक्तानां त्रैरूप्यम्, तत एव पक्षधर्मत इत्येकलक्षणा एव क्लीबा हेतवः। न चैतद्वक्तव्यम्-अन्यथानुपपत्त्यैवं पक्षधर्मादय आक्षिप्ता, अतः पृथक् स्वातन्त्र्येण न तेषां लक्षणत्वमिति; यतः पक्षधर्मत्वमन्तरेणाप्यन्यथानुपपन्नत्वमस्तीति स्वयमेवोक्तम्—

"अन्यथानुपपत्त्यैव [2]शब्ददीपादिवस्तुषु।
अपक्षधर्मभावेऽपि दृष्टा ज्ञापकतापि च ॥" (तत्त्व० १३७७) इति।

---

१. तस्या—जै०। २. शब्दादिवस्तुषु—पा०, गा०।

अन्यथाऽनुपपत्त्यैव चाक्षेपादिति चेन्न तत् ।
शब्दादावन्यथापीष्टे चाक्षुषत्वेन[1] [1]चास्त्यसौ ॥ १४१४ ॥
तत्पुत्रत्वादिहेतूनां सन्दिग्धव्यतिरेकतः ।
न त्रैलक्षण्यसद्भावो विजातीयाविरोधतः ॥ १४१५ ॥
कर्माहारादिहेतूनां सर्वथापि विशेषतः ।
सम्भाव्यतेऽन्यथाभावस्तत्पुत्रत्वेऽपि तस्य हि ॥ १४१६ ॥
नायं स्वभावः कार्यं वा दृश्यस्यादृष्टिरेव वा ।
न च तद्व्यतिरिक्तस्य भवत्यव्यभिचारिता ॥ १४१७ ॥

---

चाक्षुषत्वे [2]चानित्यत्वान्यथानुपपन्नोऽसौ पक्षधर्मो नास्तीत्यनेकान्त एव ॥ १४०७-१४१४ ॥

यदुक्तम्—'स श्यामस्तत्पुत्रत्वादित्येष [3]त्रिलक्षणोऽपि न निश्चित्यै प्रवर्त्तते' ( तत्त्व० १३६९ ) इति, अत्राह—तत्पुत्रेत्यादि । [G. 416] तत्पुत्रश्च भविष्यति न च श्याम इति नात्र कश्चिद् विरोध इति सन्दिग्धविपक्षव्यावृत्तिकत्वान्नायं त्रिलक्षण इत्यसिद्धो दृष्टान्तः ॥ १४१५ ॥

स्यादेतत् – अस्त्येव विरोधः, कारणभेदे सति यदि कार्यं भिद्येत निर्हेतुकं स्यात् ? इत्याह – कर्मेत्यादि । शुभादिकर्मविशेषादुष्णीशताद्याहारावस्थाभेदाच्चान्यथाभावो गौरादित्वं सम्भाव्यत इति कुतो विरोधः, [4]कारणभेदस्यासिद्धत्वात् ! अपि च तत्पुत्रत्वादिति नायं स्वभावहेतुः; यथा कृतकत्वम्; न हि कृतकत्वस्यान्यत्तत्त्वमस्ति मुक्त्वाऽनित्यत्वम् । नन्वेवं तत्पुत्रत्वस्यान्यः स्वभावो नास्ति; यतः पञ्चोपादानस्कन्धात्मकस्य कञ्चिदपेक्ष्य 'तत्पुत्रः' इति व्यपदेशः, न तु श्यामत्वस्य । नापि कार्यहेतुः; कार्यकारणभावासिद्धेः । नाप्यनुपलब्धिः; विधिविषयत्वात् । विरोधाभावाच्च न श्यामेतरवर्णाभावसिद्धिः । न चैतद्व्यतिरिक्तं लिङ्गमस्त्यन्यत्र प्रतिबन्धाभावात् । न

---

१-१. ०ऽथ ना०—पा०, गा० ।
२. ०नुपपन्नेऽप्यसौ—पा०, गा० ।
३. त्रिलक्षणे०—पा०, गा० ।
४. ०भेदस्य सिद्ध०—पा०, गा० ।

ननु चाव्यभिचारित्वमन्येषामपि दृश्यते ।
कुमुदानां विकासस्य वृद्धिश्च जलधेर्यथा ॥ १४१८ ॥
लिङ्गं चन्द्रोदयो दृष्ट आतपस्य च भावतः ।
छायायाः परभागेषु सद्भावः सम्प्रतीयते ॥ १४१९ ॥
तमस्युल्मुकदृष्टौ च धूम आरात् प्रतीयते ।
कृत्तिकोदयतश्चापि रोहिण्यासत्तिकल्पना ? ॥ १४२० ॥
तदत्र हेतुधर्मस्य तादृशोऽनुमतिर्यतः[1] ।
जातास्तदेककालास्ते सर्वे बोधादयोऽपरे ॥ १४२१ ॥

---

च प्रतिबन्धमन्तरेण गमकत्वम्; अतिप्रसङ्गात्। तस्मान्नायं हेतुः, नापि त्रिलक्षण इति कुतो व्यभिचारः[2] । दृश्यस्यादृष्टिरुपलब्धिलक्षणप्राप्तानुपलब्धिः ॥ १४१६-१४१७ ॥

ननु चेत्यादिनाऽव्यापितां लक्षणदोषमाह—यथा चन्द्रोदयात् कुमुदविकास-समुद्रवृद्ध्योरनुमानम् । आदिग्रहणात् सूर्योदयात् पद्मविकासस्य । आतपसद्भावात् पर्वतादिषु परभागे च्छायानुमितिः, एवं दूरात्तमस्युल्मुकमर्द्धदग्धकाष्ठखण्डकं दृष्ट्वा धूमप्रतीतिः, तथा कृत्तिकानक्षत्रोदयाद् रोहिणीनक्षत्रस्यासन्नत्वं [ G. 417 ] प्रतीयते; यतोऽश्विनीमारभ्य यथापाठं क्रमेणैव नक्षत्राणामुदय इति प्रसिद्धम्। न चास्य सर्वस्य हेतुत्रयान्तर्भावोऽस्तीति तत्किमुच्यते—न तद्व्यतिरिक्तस्य भवत्य-व्यभिचारितेति ॥ १४१८-१४२० ॥

अत्रोत्तरमाह—तदत्रेत्यादि । यस्मात् कारणात्ते बोधादयः = कुमुदविका-सादयो जाताः = उत्पन्नाः । किंविशिष्टाः ? तदेककालाः = तैश्चन्द्रोदयातपोल्मु-कैरेककालाः, तादृशस्य हेतुधर्मस्य = हेतुविशेषस्यानुमितैर्मताः ।

एतदुक्तं भवति—यदेव कारणं चन्द्रोदयादीनां कुमुदबोधादिसमानकालो-त्पन्नानाम्, तदेव कुमुदबोधादिषु सहकारिकारणतां प्रतिपद्यत इति ते चन्द्रोद-यादयस्तथाभूतं स्वकारणमनुमापयन्तोऽर्थान् समानकालभावीन्यपि कुमुदबोधादी-न्यनुमापयन्ति, न तु साक्षात्—इत्येवंविधं कार्यहेतावेवान्तर्भवतीति। अवश्यं चैतद्

---

१. ०नुमितिर्मता—पा०, गा० । २. ऽव्यभिचारः—गा० ।

कार्यात् कारणसंसिद्धिरियमेवंविधानतः ।
सम्बन्धानुपपत्तौ च सर्वस्यापि गतिर्भवेत् ॥ १४२२ ॥
प्रभञ्जनविशेषश्च कृत्तिकोदयकारणम् ।
यः स एव हि सन्तत्या रोहिण्यासत्तिकारणम् ॥ १४२३ ॥
हेतुधर्मप्रतीतिश्च तत्प्रतीतिरतो मता ।
तत्प्रतीतिः स्वतन्त्राऽस्ति न तु काचिदिहापरा ॥ १४२४ ॥
लिङ्गाच्च प्रतिबिम्बाख्यादनुमानं प्रवर्त्तते ।
यद्बिम्बविषयं युक्तं [1]तन्नान्यत् कार्यलिङ्गजात् ॥ १४२५ ॥
सहैकत्र द्वयासत्त्वान्न वस्तुप्रतिबिम्बकम् ।
तत् कथं कार्यता तस्य युक्ता चेत् पारमार्थिकी ॥ १४२६ ॥

---

बोद्धव्यम्—यदि पुनरप्रतिबन्धादेव गमयन्ति तदा यत्किञ्चिद् गमयेयुः; अप्रतिबद्धत्वेनाविशिष्टत्वात् । तस्मादत्रापि प्रतिबन्धो वाच्यः । स च यथोक्तकार्यकारणभावलक्षण एव भवति ॥ १४२१–१४२२ ॥

रोहिण्यासत्त्या तर्हि कृत्तिकोदयस्य कः प्रतिबन्धः ? इत्याह—प्रभञ्जनेत्यादि । प्रभञ्जनः = वायुः । अत्राप्येकसामग्र्यधीनत्वाद्धेतुधर्मानुमानादनुमितिः[2] । यथोक्तम्—

"एकसामग्र्यधीनस्य[3] रूपादे रसतो[3] गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥"

( प्र० वा० ३.८ ) इति ॥ १४२३–१४२४ ॥

अथ प्रतिबिम्बाद् बिम्बस्य या गतिस्तस्या न क्वचिदन्तर्भावोऽस्ति; अवस्तुत्वात् प्रतिबिम्बस्य, तस्मादव्यापि लक्षणमित्याशङ्कयाह—लिङ्गाच्चेत्यादि ॥ १४२५ ॥

[ G. 418 ] सहैकत्रेत्यादिना चोदकाभिप्रायमाशङ्कते । अवस्तुत्वे हेतुः—सहैकत्र द्वयासत्त्वादिति । यत्रैव प्रदेशे आदर्शरूपं दृश्यते प्रतिबिम्बकं च तत्रैव । न ह्येकत्र प्रदेशे रूपद्वयस्यास्ति सहभावः; सप्रतिघत्वात् । अतः

---

१. तत्रान्यत्—पा०, गा० । २. ०नुमानमिति—पा०, गा० ।
३–३. ०धीनत्वं स्वरूपादेस्सतो—पा०, गा० ।

मूर्त्तस्य प्रतिबिम्बस्य यद्यप्यस्य न वस्तुता।
तदाभासं तु विज्ञानं केनावस्तु भविष्यति ॥ १४२७ ॥
तस्यैव चात्र लिङ्गत्वं कार्यं चेष्टं तदेव हि।
बिम्बाधिपत्यादेतद्धि निरालम्बं प्रवर्त्तते ॥ १४२८ ॥

परार्थानुमानलक्षणे पराभिमतानुवादः

प्रतिज्ञादिवचोऽप्यन्यैः परार्थमिति वर्ण्यते।

प्रतिज्ञाया असाधनाङ्गत्वम्

असाधनाङ्गभूतत्वात् प्रतिज्ञाऽनुपयोगिनी ॥ १४२९ ॥

---

सहैकत्र द्वयो रूपयोः सत्त्वं न प्राप्नोति। वस्तुत्वे[1] सति भवति च[1]। तस्माद् भ्रान्तिरियम्।

अथ वा—सहैकत्रद्वयासत्त्वादिति। कतमस्य द्वयस्य ? आदर्शतलस्य, चन्द्रप्रतिबिम्बस्य च। अन्यत्रैव देशे आदर्शतलं भवति, अन्यत्रैवान्तर्गतं चन्द्रप्रतिबिम्बकं दृश्यते, कूप इवोदकम्। अन्यत्र चोत्पद्यमानं किमित्यन्यत्रोपलभ्यते! अतो नास्त्येव किञ्चिद्वस्तुभूतं प्रतिबिम्बकं नाम। सामग्र्यास्तु तस्यास्तादृशः प्रभावो यत्[2] तथा तद्दर्शनम्। अचिन्त्या हि धर्माणां शक्तिप्रभेदा इति ॥ १४२६ ॥

मूर्त्तेत्यादिना परिहरति। ज्ञानमेवात्र तथाभूतं कार्यं लिङ्गमभिप्रेतम्, न तु बाह्यं प्रतिबिम्बाख्यं वस्तु ॥ १४२७–१४२८ ॥

कथमुक्तम्—"त्रिरूपलिङ्गवचनं परार्थं पुनरुच्यते" (तत्त्व० १३६२) इति, यावता पक्षनिगमोपनयवचनमप्यन्यैः परार्थमनुमानं कीर्त्तितम्। एतदेव दर्शयन्नाह—प्रतिज्ञेत्यादि।

असाधनेत्यादिना प्रतिविधत्ते। सिद्धिः साधनम्, प्रमेयाधिगतिरिति यावत्, तस्याङ्गभूतम् = कारणम्, तस्य प्रतिषेधोऽसाधनाङ्गभूतत्वम्। तस्मादसाधनाङ्गभूतत्वादनुपयोगिनी न प्रयोक्तव्येत्यर्थः। [3]अन्यथानुपयोगिनी = अकारणभूतेति व्याख्याने प्रतिज्ञार्थैकदेशः स्यात् ॥ १४२९ ॥

---

१–१. पा०, गा० पुस्तकयोर्नास्ति।
२. अयं—पा०, गा०।
३. अनुपयोगिनी—पा०, गा०।

असम्बन्धान्न साक्षाद्धि सा युक्तार्थोपपादिका ।
असक्तसूचनान्नापि पारम्पर्येण युज्यते ॥ १४३० ॥
साध्यसाधनधर्मस्य विषयस्योपदर्शनात् ।
दृष्टान्तपदवत्त्वेषा[1] साधनांगं यदीष्यते ॥ १४३१ ॥
अभ्यनुज्ञादिवाक्येन नन्वत्र व्यभिचारिता ।
निष्फलं च तदाप्यत्र[2] विषयस्योपदर्शनम् ॥ १४३२ ॥

---

[G. 419] कथमसाधनाङ्गम् ? इत्याह — असम्बन्धादित्यादि । असक्तसंसूचकत्वं तु साध्यस्यैवाभिधानात् । एतदुक्तं भवति — शब्दानामर्थेन सह सम्बन्धाभावान्न तावत् साक्षादुपयुज्यते, नापि हेतुवचनवत् पारम्पर्येण; सक्तासंसूचकत्वादिति । यथोक्तम् —

"तत्पक्षवचनं [3]वक्तुरभिप्रायनिवेदने ।
[4]प्रमाणं संशयोत्पत्तेस्ततः साक्षान्न साधनम् ॥
साध्यस्यैवाभिधानेन पारम्पर्येण नाप्यलम् ॥"

(प्र० वा० ४. १६-१७) इति ।

केचिन्मन्यन्ते — "साध्यसाधनधर्मयोर्विषयोपदर्शनार्थमनवयवभूताऽपि सती दृष्टान्तपदवत् प्रतिज्ञा प्रयोक्तव्येति; 'यतो रूपद्वयं शेषं दृष्टं तेन प्रदर्श्यते' ( ) इति वचनात्, दृष्टान्तपदं पृथगनवयवभूतमपि पक्षधर्मव्यतिरिक्तरूपद्वयप्रदर्शनार्थमेव प्रयुज्यते" इति । तान् प्रत्याह — दृष्टान्तेत्यादि । अभ्यनुज्ञावाक्यम् — एवं कुरु शब्दमनित्यं साधयेति । आदिशब्देनाऽऽज्ञाऽभ्यर्थनावाक्यं गृह्यते । एवम्भूतस्यापि वाक्यस्य प्रयोगनिर्देशार्थं निर्देशः स्यात्, न ह्येभिरपि विनाऽकाण्ड एव साधनस्य प्रवृत्तिः सम्भवतीति । निष्फलमिति । विनापि तेन साध्यप्रतीतेः । तथा हि — यत् कृतकं तत् सर्वमनित्यम् । 'कृतकश्च शब्दः' इत्येतावन्मात्रे प्रोक्ते 'अनित्यः शब्दः' इति प्रतीतिर्भवत्यन्तरेणापि प्रतिज्ञावचनम् ॥ १४३०–१४३२ ॥

---

१. ०त्वेष—पा०, गा० । २. तदा यत्र—पा०, गा० ।
३. चक्षु०—पा०, गा० । ४. प्रापणं—पा०, गा० ।

सपक्षादिव्यवस्था चेत् कथं पक्षाप्रयोगतः ।
नातस्त्रैरूप्यमप्यस्ति तदपेक्षानिबन्धनम् ॥ १४३३ ॥
न साधनाभिधानेऽस्ति सपक्षादिविकल्पना ।
शास्त्रे तु प्रविभज्यन्ते व्यवहाराय ते तथा ॥ १४३४ ॥
प्रकृतार्थाश्रया साऽपि यदि वा न विरुध्यते ।
न वाद्यकाण्ड एवाह परस्यापि हि साधनम् ॥ १४३५ ॥
जिज्ञासितविशेषे हि वर्त्तनात् पक्षधर्मता ।
सपक्षस्तत्समानत्वाद् विपक्षस्तदभावतः ॥ १४३६ ॥

---

सपक्षादिव्यवस्था तर्हि कथम्? तथा हि—साध्यधर्मसामान्येन समानोऽर्थः सपक्ष इत्युच्यते, तदभावः प्रसाधितश्चासपक्ष इति । असति हि प्रतिज्ञानिर्देशे तदपेक्षानिबन्धनं सपक्षाश्रयनिबन्धनं त्रैरूप्यमपि नास्तीति सर्वमाल्नविशीर्णं[1] स्यादिति ॥ १४३३ ॥

नेत्यादिना प्रतिविधत्ते । [G. 420] तथा हि—अव्युत्पन्नसपक्षादिव्यवहारो भटादिरपि 'यत्र धूमस्तत्र वह्निर्धूमश्चात्र' इत्येतावन्मात्रमुक्तोऽवधारितान्वयव्यतिरेकः सपक्षादिव्यवहारमन्तरेणैव वह्निं प्रतिपद्यत एव, तस्मान्न साधनकाले सपक्षादिव्यवस्थाऽस्ति । कुत्र तर्हि सपक्षादिव्यवहारः ? इत्याह—शास्त्रे त्विति ॥१४३४॥

यदि वा साधनाभिधानकालेऽपि तद्व्यवस्था क्रियमाणा न विरोधिनीति प्रतिपादयति—प्रकृतेत्यादि । यद्यपि साधनाभिधानकाले प्रतिज्ञाप्रयोगो नास्ति तथापि प्रकृतमर्थं साध्यधर्मिणं समाश्रित्य सा व्यवस्था क्रियमाणा न विरुध्यत एव । न चैतद्वक्तव्यम्—साधनकाले प्रकृत एवार्थो नास्तीति; यतो न, सकाण्ड एव = अप्रस्ताव एव, परस्यापि = प्रतिज्ञाप्रयोगवादिनः, वादी साधनमाह ॥ १४३५ ॥

भवतु नाम जिज्ञासितविशेषो धर्मी प्रकृतः, तथापि सा क्रियमाणा व्यवस्था प्रकृतं धर्मिणमाश्रित्य कथं कर्त्तव्या? इत्याह—जिज्ञासितेति । सुबोधम् ॥१४३६॥

---

1. विस्तीर्णं—पा०, विकीर्णं—गा० ।

भाविविक्तादिमतनिराकरणम्
( उपनयस्यासाधनाङ्गत्वम् )

प्रतिज्ञानभिधाने च कारणानभिधानतः ।
कर्त्तव्योपनयस्योक्तिर्न सद्भावप्रसिद्धये ॥ १४३७ ॥
प्रागुक्ते भावमात्रे च पश्चाद् व्याप्तेः प्रकाशनात् ।
विवक्षितार्थसंसिद्धेर्विफलं प्रतिबिम्बकम् ॥ १४३८ ॥

---

"उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः" इत्युपनयलक्षणम् । तत्र "उपनयवचनं न साधनम्; उक्तहेत्वर्थप्रकाशकत्वात्, द्वितीयहेतुवचनवत्" ( ) इत्याचार्यदिङ्नागपादैः प्रमाणिते, भाविविक्तादयो हेत्वसिद्ध्यर्थमाहुः—"न खलु पक्षधर्मत्वं प्रतिज्ञानन्तरभाविना हेतुवचनेन प्रकाश्यते, कारणमात्राभिधानात् । अनित्यः शब्दो भवति कृतकत्वात्, तत् पुनः कृतकत्वं किं शब्देऽस्ति नास्तीति चेति तस्यास्तित्वमुपनयात् प्रतीयते ।

अथ वा—प्रतिबिम्बनार्थमुपनयनम्, पूर्वं हि हेतुवचनेन निर्विशेषं कृतकत्वं शब्दे निर्दिष्टम्, तेन दृष्टान्ते प्रदर्शि साध्याविनाभावित्वस्य कृतकत्वस्योपनयेन प्रतिबिम्बनमुपनयाद्[1] दर्श्यते—तथा च कृतकः शब्द इति । तस्माद् विशेषद्योतनान्न पुनरुक्तता" ( ) इति । अत्राह—प्रतिज्ञेत्यादि ।

[G. 421] सद्भावप्रसिद्धय इति । हेतोर्धर्मिणीति शेषः । अयमत्रार्थः—प्रतिज्ञाप्रयोगस्य यथोक्तया नीत्या निषिद्धत्वात् तत्समनन्तरभाविकृतकत्वादिकारणाभिधानं नास्त्येव । ततश्च कारणाभिधानपूर्वस्योपनयस्योक्तिर्न कर्त्तव्यैव । अथोपनयस्योक्तिः पक्षधर्मत्वप्रसाधानाय क्रियते ? तदा कारणाभिधानस्य फलमन्यद्वक्तव्यम् । तत्रैतत् स्यात्—कारणत्वप्रतिपादनमेव फलमिति ? तन्न; तेनैव तावत् प्रतिपादितेन कोऽर्थः, यतोऽन्यथाऽपि साध्यसिद्धिर्भवत्येवेति दर्शितमेव । तस्मात् पक्षधर्मत्वप्रतिपादनं मुक्त्वा नान्यत् फलं शक्यते हेतुवचनस्य वक्तुम् । तदा प्रथमतस्तेनैव हेतुवचनेन पक्षधर्मित्वे[2] प्रतिपादिते तत्प्रतिपादनायोपनयनमुपादीयमानं स्फुटतरमेव पुनरुक्ततां प्रकाशयतीति कुतोऽसिद्धता हेतोः ।

---

१. ०नं चुपनमाद०—जै० । ०नमपनसाद०—पा० । २. पक्षधर्मत्वे—पा०, गा० ।

## उद्द्योतकरादिमतखण्डनम्
## ( निगमनस्याप्यसाधनाङ्गत्वम् )

त्रिरूपहेतुनिर्देशसामर्थ्यादेव सिद्धितः ।
न विपर्ययशङ्कास्ति व्यर्थं निगमनं ततः ॥ १४३९ ॥

---

प्रतिबिम्बनमपि व्यर्थमेव; यतस्तस्मिन् पक्षधर्ममात्रे हेतुवचनेन प्रागुक्ते सति साध्यधर्मेण च तस्य व्याप्तौ कथितायां विवक्षितार्थसंसिद्धेरुच्यमानं स्फुटतरमेव पुरुक्ततामावहतीति कुतोऽत्राप्यसिद्धता हेतोः ॥ १४३७–१४३८ ॥

तत्र "हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" इति निगमनलक्षणम्। हेत्वपदेशादिति[1] तस्मादनित्य इत्यादौ तस्मादित्यनेन हेतोः सामर्थ्यमुदाहरणप्रसिद्धमपदिश्य यत् प्रतिज्ञार्थस्य[2] पुनर्वचनं क्रियते तन्निगमनम् । निगम्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनया एकार्थतया समर्थ्यन्ते सम्बध्यन्त इति निगमनम् । तत्र प्रतिज्ञाप्रयोग एव तावन्नास्ति, कुतस्तदनुवादात्मकस्य निगमनस्य—इत्यतो निगमनं न साधनावयवः ।

तत्राचार्यदिङ्नागपादैरुक्तम्—"निगमनं पुनरुक्तत्वादेव न साधनम्" ( ) इति । अत्रोद्द्योतकरादयः प्राहुः—"न पौनरुक्त्यमत्र, यस्मात् साध्यनिर्देशः प्रतिज्ञा, निगमनं तु सिद्धनिर्देशः । [3]पुनःशब्दः सादृश्ये, तेन 'प्रतिज्ञासदृशं वचनम्' इत्युक्तं भवति[3] । न च निगमनेन विना सिद्धिरस्ति । तथा हि—तेन विना तदन्यावयवोक्तावपि शङ्का न निवर्त्तते—किमनित्यः शब्द इति, अतस्तदाशङ्कानिवृत्त्यर्थं वाच्यं निगमनं पृथग्" इति ।

तदत्राह—त्रिरूपेत्यादि । [ G. 422 ] अनित्यत्वेन प्रदर्शिताविनाभावि कृतकत्वं यदा धर्मिणि निश्चितम्, कुतस्तत्र विपर्ययस्य नित्यत्वस्य शङ्का, न हि ज्वलज्ज्वलनज्वालाकलापपरिगते परिनिश्चितात्मनि भूतले[4] शैत्याशङ्का कर्तुं युक्ता स्वस्थचेतसः । नापि निगमनाद् वचनमात्रान्निर्युक्तिकात्तु सा विनिवर्त्तते ॥ १४३९॥

---

१. पा०, गा० पुस्तकयोर्नास्ति ।
२. प्रतिज्ञार्थं—पा०, गा० ।
३–३. पा०, गा० पुस्तकयोर्नास्ति ।
४. भूतत्त्वे—पा०, गा० ।

अविद्धकर्णखण्डनम्

सम्बद्धैरेव वचनैरेकोऽर्थः प्रतिपाद्यते ।
नातः सम्बन्धसिद्ध्यर्थं वाच्यं निगमनं पृथक् ॥ १४४० ॥

कुमारिलमतानुवादः

द्वैविध्यमनुमानस्य केचिदेवं प्रचक्षते ।
विशेषदृष्टसामान्यपरिदृष्टत्वभेदतः ॥ १४४१ ॥
प्रत्यक्षदृष्टसम्बन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतद्देशविशेषादिमतिः कृता ॥ १४४२ ॥

---

अविद्धकर्णस्त्वाह—

"विप्रकीर्णैश्च वचनैर्नैकार्थः प्रतिपाद्यते ।

तेन सम्बन्धसिध्यर्थं वाच्यं निगमनं पृथक् ।" ( ) इति ।

अत्राह—सम्बद्धैरिति । हेतोः साध्येन तादात्म्यतदुत्पत्तिलक्षणे सम्बन्धे प्रतिपादितेऽर्थद्वारेण सम्बद्धैरेव पक्षधर्मान्वयव्यतिरेकवचनैरेकोऽर्थः सामर्थ्याद् यथासमीहितः प्रतिपाद्यत इति यद्यपि विप्रकीर्णानि वचनानि, तथापि सम्बद्धान्येवैकार्थोपसंहारेणेति न तत्सम्बन्धसिद्धये पृथग्निगमनं वाच्यम् ॥ १४४० ॥

केचिदिति कुमारिलादयः। ते हि—"द्विविधमनुमानम्—विशेषतोदृष्टम्, सामान्यतोदृष्टं च" इति वर्णयन्ति ॥ १४४१ ॥

तत्र विशेषतोदृष्टं कतरत् ? इत्याह—प्रत्यक्षेत्यादि। अयमर्थः—पूर्वं कश्चित् क्वचित् प्रदेशविशेषे वह्निधूमविशेषौ प्रत्यक्षेण गृहीत्वा कालान्तरेण दूरं गतो वा यदा पुनःपुनस्तमेव धूमविशेषं दृष्ट्वा तमेव च[1] वह्निं पूर्वं परिगृहीतमनुमिमीते, [G. 423] तद्विशेषतोदृष्टमनुमानम्; पूर्वप्रत्यक्षगृहीतविशेषविषयत्वात् । न च गृहीतग्राहित्वादप्रमाणम्; यतः किं वह्निरास्ते परिनिवृत्तो वा—इति सन्देहविनिवृत्तेरधिकाया विद्यमानत्वात् । इति पिण्डार्थः ।

अवयवार्थस्तूच्यते—प्रत्यक्षदृष्टसम्बन्धमिति । कः सम्बन्धः ? अत्रोच्यते; शबरस्वामिनाऽनुमानलक्षणमुक्तम्—"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेक-

---

१. पा०, गा० पुस्तकयोर्नास्ति ।

तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।
यदाऽग्निं बुध्यते तस्य पूर्वबोधात् पुनः पुनः ॥ १४४३ ॥
सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४४४ ॥

---

देशान्तरेऽसन्निकृष्टे बुद्धिः । तद् द्विविधम्—प्रत्यक्षदृष्टसम्बन्धम्, सामान्यतोदृष्टसम्बन्धं च । प्रत्यक्षदृष्टसम्बन्धं[1] यथा—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्[2] । सामान्यतोदृष्टं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्याऽऽदित्यस्य गतिस्मरणम्" ( मी० द० शा० भा० १.१.५ ) इति ।

तत्र कुमारिल एतत्प्रत्यक्षतोदृष्टसम्बन्धमनुमानं व्याचिख्यासुराह—प्रत्यक्षेत्यादि । प्रत्यक्षे दृष्टसम्बन्धमनुमानमेवं प्रचक्षत इति सम्बन्धः । यतः पूर्वस्मिन्ननन्तरश्लोके "तस्मादेवं[3] प्रचक्षते" (श्लो० वा०, अनु० १४०) इति प्रकृतम् । ययोरिति । ययोरेवाग्निधूमविशेषयोर्विषयभूतयोर्गोमयेन्धनविशेषबुद्धिः कृता = उत्पादिता, पुरुषेण—'गोमयेन्धनप्रभवावेतावग्निधूमौ' इति; तथा पर्वतादिदेशविशेषमतिः कृता—'एतत्पर्वतादिदेशविशेषस्थावेतावग्निधूमौ' इति । गोमयमिन्धनं ययोरग्निधूमयोस्तौ गोमयेन्धनौ, स देशो ययोस्तौ तद्देशौ गोमयेन्धनौ च तौ तद्देशौ चेति विग्रहः । तावेव विशेषौ तावादी येषां सर्जसरलसल्लकीवनप्रभृतीनां वह्न्यादिविशेषान्तराणां तानि गोमयेन्धनतद्देशविशेषादीनि, तेषु मतिरिति "सप्तमी" ( पा० सू० २.१.४० ) इति[4] योगविभागात् समासः । सा = एवम्भूता प्रत्यक्षा मतिर्येन प्रमात्रा कृता = उत्पादिता, स तद्देशस्थेन तेनैव धूमादिना लिङ्गेन तमेवाग्निं कालान्तरेण यदा बुध्यते । पुनः पुनरिति सम्बन्धः । तदा तस्य बोधस्य पूर्वबोधात् = प्रत्यक्षात्मकात् प्रमाणता = प्रमाणान्तरतेत्यर्थः । अथ वा—पूर्वबोधात् कारणात्तमेव वह्निं बुध्यत इति सम्बन्धः । 'किमास्ते वह्निः, आहोस्विन्निवृत्तः' ? —इत्येवं सन्दिह्यमानः सद्भावो यस्य वस्तुनस्तत्तथा, तच्च तद्वस्तु चेति तत्तथा, तस्य बोध इति विग्रहः ।

---

१. ०सम्बन्धो—पा०, गा० । २. ०कृतेर्विज्ञानम्—पा०, गा० ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४. जै०, पा० पुस्तकयोर्नास्ति ।

अग्निधूमान्तरत्वे तु वाच्ये सामान्यतो मितौ ।
सामान्यदृष्टमेकान्ताद् गन्तेत्यादित्य उच्यते ॥ १४४५ ॥
(श्लो० वा०, अनु० १४१-१४३, १४५)

कुमारिलमते दूषणोपन्यासः

तदत्र क्षणभङ्गस्य व्यापिनः प्रतिपादनात् ।
प्राक्तनस्यैव तेनैव नानुमानस्य सम्भवः ॥ १४४६ ॥
कल्पितं चेत् तदेकत्वं प्रबन्धैक्यविवक्षया[1] ।
न तस्यावस्थितिः काचिद् वस्तुत्वं न च भाविकम् ॥ १४४७ ॥

---

एतच्च यथोक्तं प्रत्यक्षदृष्टसम्बन्धमनुमानम्, विशेषतोदृष्टमनुमानम्—इत्येवं विन्ध्यवासिना गदितम् ।

सामान्यतोदृष्टमाह—अग्निधूमेत्यादि । अस्य सम्बन्धः—भाष्यकारेण हि सामान्यतोदृष्टानुमाने देशान्तरप्राप्त्याऽऽदित्यगतिस्मरणमुदाहृतम्, तत्रेदं चोद्यं भवति—ननु चाग्न्यन्तरे धूमान्तरे च सामान्यधर्मसमाश्रयेण यदाऽनुमितिः क्रियते, तदा सामान्यतोदृष्टमनुमानमग्निधूमयोरस्त्येव, किमिति भाष्यकारेणाग्निधूमौ बुद्धौ विपरिवर्त्तमानत्वेन प्रत्यासन्नावुत्सृज्याऽऽदित्य एव सामान्यतोदृष्टावुदाहृतः ?—इत्येतच्चोद्यमाशङ्क्य कुमारिलो भाष्याकाराभिप्रायं वर्णयन्नाह—अग्निधूमान्तरत्व इति । [G. 424] सामान्यतोऽनुमितौ = सामान्यतोदृष्टानुमाने उदाहरणत्वेनाग्निधूमान्तरत्वे वाच्ये यद् भाष्यकारेणादित्योदाहरणं कृतम्, तत् सर्वकालमादित्यगतेरप्रत्यक्षत्वादेकान्तेन । अत्र 'आदित्यगतौ सामान्यतोदृष्टमेवानुमानं सम्भवति, न विशेषतोदृष्टम्'—इति मन्यमानेनासङ्कीर्णविषयं दर्शयितुमादित्य एवोदाहरणत्वेनोच्यते, न पुनरग्निधूमौ; तयोः सामान्यतोदृष्टानुमानाभावादिति[2] ॥ १४४२–१४४५ ॥

तदत्रेत्यादिना दूषणमाह । व्यापिन इति । अग्निधूमादिसकलपदार्थव्यापकस्य । सत्यपि क्षणिकत्वे प्रबन्धैकत्वादेकत्वमिति चेद् ? आह—कल्पितमिति । तदा कल्पितमेकत्वं न पारमार्थिकम्, परमार्थतस्तु न कस्यचिदवस्थितिः । ततश्च

---

१. प्रबन्धैक०—जै० ।
२. ०दृष्टस्यैवानुमानस्याभा०—पा०, गा० ।

न च निर्विषयं ज्ञानं युष्माभिरनुमन्यते ।
विकल्पितार्थतायां च व्यक्तं निर्विषयं भवेत् ॥ १४४८ ॥
व्यक्तिरूपस्य नाशेऽपि, तिष्ठत्येवाकृतिस्तयोः ।
यदि न क्षणभंगाप्तेर्भावे तस्या अपि ध्रुवम् ॥ १४४९ ॥
प्रत्यक्षदृष्टः सम्बन्धो ययोरेव विशेषयोः ।
इत्ययं नियमश्चोक्तो युष्माभिः केन हेतुना ॥ १४५० ॥
दृष्टं कदानुमानेन तस्यैव ह्यनुमा पुनः ।
प्रमाणं नेष्यते कस्मात् को विशेषो हि पूर्वके ॥ १४५१ ॥
विज्ञातार्थाधिगन्तृत्वान्न प्रमाणमिदं यदि ।
स्मार्त्तवत् प्राक्तनोऽप्येतत् समानं किं न वीक्ष्यते ॥ १४५२ ॥
अन्तरालप्रवृत्तस्य सन्देहस्य निवर्त्तनात् ।
आधिक्यं तत्र चेदेतदत्रापि सदृशं न किम् ॥ १४५३ ॥

तद्देशस्थेन तेनैवेत्येतन्न प्रयुज्यते[1] । नापि कल्पितस्य वस्तुत्वम्, ततश्च सन्दिह्यमान सद्भाववस्तुबोधादित्यसम्बद्धं स्यात् ॥ १४४६–१४४७ ॥

अथापि स्यात्—कल्पनासमारोपितमेवैक्यमाश्रित्य विशेषतोदृष्टमाख्यातम्, न भाविकम्? इत्याह—न चेत्यादि। स्यादेतद्—यद्यपि व्यक्तिर्विनाशिनी, जातिस्त्वनपायिनी विद्यते, ततश्च भाविकमेकत्वं भविष्यति, न च निर्विषयत्वम्? इत्याह—व्यक्तिरूपेत्यादि । [G 425] आकृतिः = जातिः । यदीति अभ्युपगमे । जातिव्यक्त्योः परेणैक्यस्येष्टत्वात् कुतो व्यक्तिविनाशे जातेरवस्थानं सम्भवति। अन्यथा भिन्नयोगक्षेमत्वादेकान्तेन तयोर्भेदोऽभ्युपगन्तव्यः स्यात । भाव इति । अयमभ्युपगमवाद एव । एकदा तावज्जातिर्विस्तरेण निरस्तैवेति कुतस्तस्याः सत्त्वम् । भावेऽपि = सत्त्वेऽपि । तस्या अपि क्षणभङ्गः प्राप्नोति; व्यापिनः क्षणभङ्गस्य प्रसाधनात । अपि च—यदाऽनुमानपरिच्छिन्नं पुनरपि तत एव लिङ्गात् तमेव वह्निं परिच्छिनत्ति, तदाऽपि विशेषतोदृष्टं किं न वर्णितम्, येन

---

१. युज्यते—पा०, गा० ।

तस्मात् किमस्ति नास्तीति सन्देहविनिवृत्तिकृत् ।
स एवेति निराकांक्षमेतत् सामान्यदर्शनम् ॥ १४५४ ॥

अनुमानाप्रामाण्ये बार्हस्पत्यादिमतम्

न प्रमाणमिति प्राहुरनुमानं तु केचन ।
विवक्षामर्थयन्तोऽपि[1] वाग्भिराभिः कुदृष्टयः ॥ १४५५ ॥
त्रिरूपलिंगपूर्वत्वात् स्वार्थं मानं न युज्यते ।
इष्टघातकृताज्जन्यं मिथ्याज्ञानं यथा किल ॥ १४५६ ॥
भावादननुमानेऽपि न चानुमितिकारणम् ।

---

प्रत्यक्षतोदृष्ट इति विशेषणमिष्टम् । अधिगतार्थाधिगन्तृत्वादिति चेत् ? न; प्रत्यक्षदृष्टेऽपि तत्तुल्यम् । अन्तरालवर्त्तिसन्देहनिवर्त्तनमधिकं प्रत्यक्षदृष्टेऽस्तीति चेत् ? न; अनुमानदृष्टेऽपि समानमाधिक्यम् । तस्मात् सर्वत्रैव सामान्यतोदृष्टमेव क्षणक्षयिषु भावेष्वनुमानम्, न विशेषतोदृष्टं नाम किञ्चिदिति[2] ॥१४४८-१४५४॥

[3]केचनेति ; बार्हस्पत्यादयः । आभिरिति । 'नानुमानं प्रमाणम्' इत्येवंरूपाभिः । अनेन स्ववचनविरोधमाह । तथा हि—'वचनाल्लिङ्गाद्विवक्षा प्रतीयते' इति मन्यमानेन परस्मै स्वाभिप्रायनिवेदनाय व्याहरता दर्शितमनुमानस्य प्रामाण्यम्, न च तत् प्रमाणमिति ब्रुवता तदेव प्रतिषिद्धम्—इतीतरेतरव्याघातः । एतच्च दूषणं [4]पश्चाद्व्यक्तीकरिष्यते ॥ १४५५ ॥

[G. 426] तत्र तावच्चार्वाकाः प्रमाणयन्ति—स्वार्थानुमानं प्रमाणं न भवति; त्रिरूपलिङ्गपूर्वत्वान्मिथ्याज्ञानवत् । परार्थाश्चक्षुरादयः सङ्घातत्वाच्छयनासनाद्यङ्गवत्—इत्येतस्येष्टविघातकृतः किल त्रिरूपत्वान्मिथ्याज्ञानमेतज्जन्यं त्रिरूपलिङ्गजमिति । न च त्रैरूप्यमनुमितिकारणम्; अनुमानेऽपि भावाद्, रूप्यवत् ।

अपि च—सर्वत्र साधनेऽनुमानविरोधः सम्भवति । तद्यथा—विवक्षितसाध्यधर्मो धर्मिविशेषणं न भवति; एतत्समुदायैकदेशत्वाद्धर्मिस्वरूपवत् । अनेन हि सर्वमनुमानं निरनुमानीकृतम् ।

---

१. ०मर्पयन्तः—पा०, गा० । २. पा० गा० पुस्तकयोर्नास्ति ।
३. केचिदिति०—पा०, गा० । ४. १४८०तमकारिकाव्याख्यावसरे इत्यर्थः ।

द्वैरूप्यमिव लिंगस्य त्रैरूप्यं नास्त्यतोऽनुमा ॥ १४५७ ॥
अनुमानविरोधस्य विरुद्धानां च साधने ।
सर्वत्र सम्भवात् किञ्च विरुद्धाव्यभिचारिणः ॥ १४५८ ॥
अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ १४५९ ॥
(वा० प० १. ३२)
निर्ज्ञातशक्तेरप्यस्य[1] तां तामर्थक्रियां प्रति ।
विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ॥ १४६० ॥
(वा० प० १. ३३)

---

सर्वत्र चानुमाने कृते विशेषविरुद्धानां सम्भवः, तद्यथा—अनित्यः शब्दः, कृतकत्वाद्, घटवदिति कृते कश्चिद् विशेषविरुद्धमुद्भावयेत्—यथाऽयं हेतुरनित्यत्वं साधयति, तथाऽऽकाशगुणत्वाभावमपीत्येवमादि ।

सर्वत्र च विरुद्धाव्यभिचारी सम्भवति। तद्यथा—अनित्य शब्दः, कृतकत्वाद्, घटवदिति कृते कश्चिद्विरुद्धाव्यभिचारिणमाह—नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति। एवमादिस्तत्त्वटीकायाम्[2] उदाहरणप्रपञ्चो द्रष्टव्यः ॥१४५६-१४५८॥

तथा भर्तृहरिराह—

अवस्थादेशकालभेदेन पदार्थानां शक्तयो भिन्नाः । अतो न शक्यतेऽनुमानात् तद्भावनिश्चयः कर्तुम्, न ह्येवं शक्यतेऽनुमानात् प्रत्येतुम्—देवदत्तो भारोद्वहनसमर्थो न भवति; देवदत्तत्वाद्, बालावस्थदेवदत्तवदिति । अत्र ह्यवस्थाभेदेन शक्तिभेदसम्भवाद् व्यभिचारः । तथा देशभेदेनामलकीखर्जूरादीनां रसवीर्यविपाकभेदो दृश्यते, तत्र नैवं शक्यते कर्तुम्— सर्वाऽऽमलकी कषायफला, अनुदूयमानामलकीवदिति । तथा कालभेदेन कूपोदकादीनां शीतोष्णादिभेदः सम्भवति, तत्र सर्वा आपः शीता इति [G. 127] न शक्यते निश्चयः कर्तुम् । इत्येवमादि । अवस्थादेशकालानामिति 'भेदात्' इत्येतदपेक्ष्य षष्ठी। 'भावानाम्' इति

---

१. विज्ञानशक्ते०—जै०; विज्ञातशक्ते०—पा०, गा० ।

२. अविद्धकर्णकृतायामिति शेषः ।

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १४६१ ॥
( वा० प० १.३४ )

परार्थमनुमानं तु न मानं वक्त्रपेक्षया ।
अनुवादान्न तेनासौ स्वयमर्थं प्रपद्यते ॥ १४६२ ॥
श्रोतृव्यपेक्षयाऽप्येतत् स्वार्थमेवोपपद्यते ।
श्रोत्रदर्शनमूलायाः को विशेषो हि संविदः ॥ १४६३ ॥
न परार्थानुमानत्वं वचसः श्रोत्रपेक्षया ।
श्रोतृसन्तानविज्ञानहेतुत्वज्ञापकत्वतः ॥ १४६४ ॥
यथेन्द्रियस्य साक्षाच्च नानुमेयप्रकाशनम् ।

प्रसिद्ध्यपेक्षा[1] । तथा तृणादिषु निश्चितदहनसामर्थ्यस्याग्नेरभ्रपटले तत्सामर्थ्यं प्रतिहन्यते, न च तत्रैवमनुमातुं शक्यते—अभ्रपटलमग्निना दह्यते; पार्थिवत्वात्, तृणादिवदिति । तथाऽन्येनान्यथा प्रतिपादितोऽर्थः पुनरभियुक्ततरेणान्येनान्यथा प्रतिपाद्यत इत्यनिष्ठा ॥ १४५९–१४६१ ॥

अन्यः पुनराह—परार्थमनुमानं वक्त्रपेक्षयाऽनुवादत्वान्न प्रमाणम् । श्रोत्रपेक्षया तु स्वार्थमेव, को हि विशेषः श्रोत्रद्वारेण तमर्थं प्रतिपद्यते, दर्शनद्वारेण चेति । यथा दर्शनेन्द्रियस्य व्यापारे सति परार्थव्यपदेशो न भवति, एवं श्रोत्रेन्द्रियव्यापारेऽपि मा भूदिति । दर्शनम् = चक्षुरिन्द्रियम्, दृश्यतेऽनेनेति कृत्वा । संविद इति ज्ञानस्य ।

तथा न श्रोत्रपेक्षया वचनस्य परार्थानुमानत्वम्, श्रोतृसन्तानवर्त्तिज्ञानहेतुत्वात्, ज्ञापकत्वाच्च, इन्द्रियवदिति । श्रोतृसन्तानविज्ञानहेतुत्वं च ज्ञापकत्वं चेति द्वन्द्वेन हेतुद्वयनिर्देशः । यथेन्द्रियस्येति दृष्टान्तनिर्देशः । अयमपरः प्रयोगः—न परार्थानुमानत्वं वचनस्य श्रोत्रपेक्षया, साक्षादनुमेयाऽप्रकाशकत्वात्, अविनाभावसम्बन्धज्ञानवत् । तस्मादिति साक्षादनुमेयाप्रकाशकत्वात् । यस्मात् साक्षादनुमेयाप्रकाशकत्वम्, तस्मान्न श्रोत्रपेक्षया वचसः प्रामाण्यमविनाभावसम्बन्धज्ञानवदिति

1. ०पेक्षया—पा०, गा० ।

तस्मादस्याविनाभावसम्बन्धज्ञानवन्न तत् ॥ १४६५ ॥
अथोच्यते परार्थत्वं [1]परव्यापृत्यपेक्षया ।
तदप्ययुक्तं स्वार्थेऽपि परार्थत्वप्रसङ्गतः ॥ १४६६ ॥

बार्हस्पत्यादिमतप्रतिविधानम्

त्रिरूपलिङ्गपूर्वत्वं ननु संवादिलक्षणम् ।
तल्लक्षणं च मानत्वं तत् किं तस्मान्निषिध्यते ॥ १४६७ ॥

---

वाक्यार्थः । अविनाभावः साध्येन साधनस्य, स एव सम्बन्धः, [2]अविनाभावो वा सम्बन्धः[2] साध्येन यस्य लिङ्गस्य तस्य ज्ञानमिति विग्रहः ।

अथ परव्यापारापेक्षया तदुच्यते 'परार्थम्'[3] इति ? तथाऽप्ययुक्तम्; [ G. 426 ] स्वार्थेऽपि परार्थत्वप्रसङ्गात्, आपेक्षिकत्वात् परत्वस्य, पारावारवत् ॥ १४६३-१४६६ ॥

त्रिरूपलिङ्गेत्यादिना प्रतिविधत्ते । तत्र प्रथमे प्रयोगे 'त्रिरूपलिङ्गपूर्वत्वात्' इत्यस्य हेतोर्विरुद्धतामाह—संवादिलक्षणमिति । संवादित्वमनेन लक्ष्यत इति कृत्वा । यतस्त्रिरूपलिङ्गजनं यज्ज्ञानं तत् पारम्पर्येण वस्तुनि प्रतिबद्धम्, अतोऽविसंवादकं प्रत्यक्षवत् । यथाह—

"लिङ्गलिङ्गिधियोरेवं पारम्पर्येण वस्तुनि ।
प्रतिबन्धात् तदाभासशून्ययोरप्यवञ्चनम् ॥" (प्र० वा० २.८२) इति ।

तल्लक्षणं चेति अविसंवादलक्षणम् । यथाह—"प्रमाणमविसंवादिज्ञानम्" (प्र० वा० १.३) इति । न हि प्रत्यक्षेऽपि तत्प्रमाणवादिनाऽन्यत् प्रमाणव्यवस्थानिबन्धनं शक्यमादर्शयितुम्; अन्यत्राविसंवादात् । स च त्रिरूपलिङ्गजन्येऽप्यस्तीति किमिति तस्मात्त्रिरूपलिङ्गपूर्वत्वादविसंवादित्वहेतोः प्रामाण्यं निषिध्यते ! एतेन साध्यसाधनयोरर्थतो विरोध उक्तः । तथा हि—यत्र त्रिरूपलिङ्गपूर्वत्वं तत्राविसंवादित्वम्, यत्राविसंवादित्वं तत्र प्रमाण्यम्, प्रामाण्याप्रामाण्ययोश्च परस्परपरिहारस्थितलक्षणो विरोध इति सामर्थ्याद् विरुद्धो हेतुर्निर्दिष्टः ॥ १४६७ ॥

---

१. परव्यावृत्त्य०—पा०, गा० । २–२. पा०, गा० पुस्तकयोर्नास्ति ।
३. परार्थं—पा०, गा० ।

मिथ्याज्ञानं समानं च पूर्वपक्षव्यपेक्षया ।
इष्टघातकृताज्जन्यं[1] ज्ञानमुक्तं न वस्तुतः ॥ १४६८ ॥
वस्तुस्थित्या हि तज्ज्ञानमविसंवादि निश्चितम् ।
वादीष्टविपरीतस्य प्रमाणमत एव तत् ॥ १४६९ ॥
अतो विरुद्धता हेतोर्दृष्टान्ते चाप्यसाध्यता ।
एतेनैव प्रकारेण द्वितीये हेत्वसिद्धता ॥ १४७० ॥

---

मिथ्याज्ञानमित्यादिना दृष्टान्तस्य साध्यविकलतामाह । यतो वादीष्टविपरीतसाधनात् तदपि प्रमाणमेव; अन्यथा हि साध्यान्तरमपेक्ष्य सर्वदैव सर्वस्य थद्यप्रामाण्यं व्यवस्थाप्येत, प्रत्यक्षेऽपि प्रसङ्गः स्यात् । पूर्वपक्षापेक्षया तु तन्मिथ्याज्ञानमुक्तम्; न वस्तुस्थित्या । पूर्वस्य = प्रथमवादिनः पक्षः पूर्वपक्षः, तस्य व्यपेक्षेति विग्रहः । यो ह्यनाधेयातिशयैकपरार्थत्वं[2] चक्षुरादीनामिच्छति [G. 429] तदभिप्रायापेक्षया मिथ्याज्ञानमुच्यते; अनित्यानेकविज्ञानादिहेतुत्वेन चक्षुरादीनां सिद्धत्वात् । विरुद्धतेति । त्रिरूपलिङ्गपूर्वत्वस्याप्रमाणे क्वचिदप्यभावात् । प्रमाणे तु तत्रैवेष्टविघातकृताज्जन्ये ज्ञाने भावात् । ननु च लोकायतं प्रति विरुद्धसाधने कर्त्तव्ये दृष्टान्तो न सिद्ध एव, न हीष्टविघातकृज्जन्यं ज्ञानं प्रमाणमिच्छति परः, न चान्यतरासिद्धो दृष्टान्तो भवति, य एव तूभयनिश्चितवाची स एव साधनदूषणमिति न्याय[3] उच्यते । यद्यपि परेणात्र प्रामाण्यं नेष्टं वाचा, तथाप्यसंवादित्वं त्वशक्यापह्नवत्वादिष्टमेव, तदिच्छता सामर्थ्यात् प्रामाण्यमपि तेन वस्तुस्थित्याऽभ्युपगन्तव्यमिति वस्तुबलप्रवृत्त्या विरुद्ध उद्भाव्यते, न पराभ्युपगमनानुरोधेन । अथ वा—विरुद्धहेतुसंसूचनाद्विरुद्धः । तत्र विरुद्धो हेतुः— यदविसंवादि तत् प्रमाणं यथा प्रत्यक्षम्, संवादि च त्रिरूपलिङ्गजन्यं ज्ञानमिति स्वभावहेतुः । न चासिद्धो [4]निःस्वभावत्वनिर्हेतुत्वप्रसङ्गात्, प्रत्यक्षाप्रामाण्यप्रसङ्गाच्चानैकान्तिकः[5] । असाध्यतेति । नात्र साध्यमस्तीत्यसाध्यः, तद्भावो-

---

१. ०कृता जन्यं—पा०, गा० । २. ०पदार्थत्वं—गा० ।
३. न्यायात्—गा० । ४. निःस्वभावत्वानि०—पा०, गा० ।
५. ०प्रसङ्गान्नैका०—पा०, गा० ।

यत्तादात्म्यतदुत्पत्त्या सम्बन्धं परिनिश्चितम् ।
तदेव साधनं प्राहुः सिद्धये न्यायवादिनः ॥ १४७१ ॥
अनुमानविरोधादिरीदृशेऽस्ति[1] न साधने ।
नैव तद्ध्यात्महेतुभ्यां विना सम्भवति क्वचित् ॥ १४७२ ॥
परस्परविरुद्धौ च धर्मौ नैकत्र वस्तुनि ।
युज्येते सम्भवो नातो विरुद्धाव्यभिचारिणः ॥ १४७३ ॥
अभ्यस्तलक्षणानां च सम्यग्लिंगविनिश्चये ।
अनुमावृत्तिरन्या[2] तु नानुमेत्यभिधीयते ॥ १४७४ ॥

---

ऽसाध्यता । साध्यविकलतेति यावत् । द्वितीय इति । न च त्रैरूप्य इत्यादौ । हेत्वसिद्धतेति । अननुमाने क्वचिदप्यभावात् । एतेनैवेति । 'त्रिरूपलिङ्गस्य' इत्यादिना न्यायेन ॥ १४६८-१४७० ॥

"अनुमानविरोधस्य" ( तत्त्व० १४५८ ) इत्यादौ परिहारमाह--यत्तादात्म्येत्यादि । ईदृश इति । तादात्म्यतदुत्पत्तिप्रतिबद्धे । आत्महेतुभ्यामिति । स्वभावेन कारणेन च विना यथाक्रमं तल्लिङ्गं न भवति; निःस्वभावत्वनिर्हेतुत्वप्रसङ्गात् ।

यदुक्तम्—"विवक्षितः साध्यधर्मो न धर्मिविशेषणम्" (तत्त्व० १४५८) इति, तत्र यदि साध्यधर्मो न धर्मिविशेषणम्, तदा समुदाय एव नास्तीति, ततश्च 'एतत्समुदायैकदेशत्वात्' इत्यसिद्धो हेतुः स्यात् ।

यच्चोक्तम्—"सर्वत्रानुमाने विशेषविरुद्धानां सम्भवः" (तत्त्व० १४५८) इति, तदयुक्तम्; यतः साध्यविपर्ययसाधनाद् विरुद्धः इष्यते, न च विशेषः साधयितुमिष्टः । वस्तुबलप्रवृत्तानुमाने [ G. 430 ] विषये न विरुद्धाव्यभिचारी च सम्भवति; एकस्मिन् धर्मिणि परस्परविरुधर्मद्वयप्रसङ्गात् ॥१४७२-१४७३॥

यदुक्तम्—"अवस्थादेशकालानाम्" (तत्त्व० १४५९) इत्यादि, तत्राह—अभ्यस्तेत्यादि । सुपरिनिश्चितं लिङ्गं गमकमिष्यते न सन्दिग्धम्, न हि धूमो वाष्पादिरूपेण

---

१. ०रीदृश्यास्ति—जै० । २. अनुमानवृत्ति०—जै० ।

अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु।
भावानामनुमानेन नातः सिद्धिः सुदुर्लभा ॥ १४७५ ॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
नान्यथा साध्यते सोऽन्यैरभियुक्ततरैरपि ॥ १४७६ ॥
न हि स्वभावः कार्यं वा स्वभावात् कारणादृते।

---

सन्दिह्यमानो वह्नेर्निश्चायको भवति। लिङ्गनिश्चय एव कथमिति चेन्? अभ्यासात्। यथा मणिरूपादिषु तद्विदाम्। तथा हि—विवेचयन्त्येव बाष्पादिभ्यो धूमादीनभ्यस्ततत्स्वलक्षणाः। ततः[1] प्रविवेच्य[1] प्रवृत्ताश्चैते प्राप्नुवन्त्येव वह्निम्। तस्माद्यतः सुविवेचितं लिङ्गं न व्यभिचरति, तेनावस्थादिभेदभिन्नानां सिद्धिर्न दुर्लभा। नापि सुविवेचिताल्लिङ्गात् परिनिश्चितोऽर्थोऽन्यथा शक्यते कर्तुम्। न हि धूमात् सुपरिनिश्चितादनुमितस्य वह्नेरन्यथाभावः शक्यते कर्तुम्; एकस्य विरुद्धस्वभावद्वयायोगात्। यच्चोक्तम्—"न देवदत्तो भारोद्वहनसमर्थः" (तत्त्व० १४५९) इत्यादि, यच्च "अभ्रपटलं वह्निना दह्यते" (तत्त्व० १४५९) इति, तल्लिङ्गमेव न भवति; त्रैरूप्याभावात्। न ह्यदर्शनमात्रेण विपक्षाद्धेतोर्व्यावृत्तिः शक्यते कर्तुम्, यदाह—

"न चादर्शनमात्रेण विपक्षाद्व्यतिरेकिता" (प्र० वा० ३. १२) इति।

किं तर्हि? तादात्म्यतदुत्पत्तिसम्बन्धनियमादविनाभावनियमः। यदाह—

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥"
(प्र० वा० ३. ३०) इति।

न चात्र तादात्म्यतदुत्पत्तिसम्बन्धोऽस्ति ॥ १४७४-१४७६ ॥

स्यादेतत्, सुपरिनिश्चितं लिङ्गं न व्यभिचरतीत्येतदेव कुतः, न ह्यत्र युक्तिरस्ति? इत्याह—न हि स्वभाव इत्यादि। द्विविधमेव हि लिङ्गं यदुत स्वभावः, कार्यमिति। अनुपलब्धेस्तु स्वभावेऽन्तर्भावः। [G. 431] न च स्वभावकारणाख्येन लिङ्गिना विना तयोर्लिङ्गयोः सम्भवोऽस्ति, येन व्यभिचारः स्यात्। कस्मान्न

---

1–1. अविवेच्य—पा०, अथ विवेच्य—गा०।

भेदानिमित्तताप्राप्तेस्ते विनाऽस्ति न चानुभा ॥ १४७७ ॥
त्रिरूपलिंगवचसः सत्कसंसूचकत्वतः ।
यत् परार्थानुमानत्वमुक्तं तच्छ्रोत्रपेक्षया ॥ १४७८ ॥
गौणं सांकेतिकं चैवमनुमानत्वमाश्रितम् ।
सत्कसंसूचकत्वेन तेन नातिप्रसज्यते ॥ १४७९ ॥
नानुमानं प्रमाणं चेद् विफला व्याहृतिस्तव ।
न कश्चिदपि वादो हि विवक्षां प्रतिपद्यते ॥ १४८० ॥

---

सम्भवः ? इत्याह—भेदानिमित्तताप्राप्तेः । भेदश्चानिमित्तता च तयोः प्राप्तिः । स्वभावहेतोर्भेदोऽस्वभावता प्राप्नोति, कार्यहेतोरनिमित्तत्वं निर्हेतुकत्वं प्राप्नोति, न च स्वभावकार्यव्यतिरेकेणान्यल्लिङ्गमिष्टम्, अन्यत्राप्रतिबन्धादविनाभावायोगात् । ते विनेति । स्वभावकार्ये । द्विवचनान्तमेतत् ॥ १४७७ ॥

यदुक्तम् "परार्थमनुमानं तु न[1] मानम्" ( तत्त्व० १४६२ ) इति, तत्राह— त्रिरूपलिङ्गेत्यादि । वचनस्य यत् परार्थानुमानत्वमुक्तं तच्छ्रोत्रपेक्षया, तेन वक्त्रपेक्षाभावी दोषो न भवति । श्रोत्रपेक्षयाऽपि त्रिरूपलिङ्गसूचनादुपचारेणानुमानकारणत्वात् समयाद्वाऽनुमानत्वमुक्तम्; सत्कसंसूचक एवानुमासंज्ञानिवेशात् । तेनेन्द्रियस्याविनाभावित्वसम्बन्धज्ञानस्य च परार्थानुमानत्वप्रसङ्गादतिप्रसङ्गो न भवति; तयो सत्कसंसूचकत्वाभावात् । अत एव दर्शनमूलयोः संविदः सकाशादस्या विशेषः । तथा हि—दर्शनज्ञानेन साक्षाद् धूमादेर्लिङ्गस्य प्रतीतिः, न तु श्रोत्रज्ञानेन । तेन हि शब्द एव साक्षाद् गृह्यते, न च शब्दो धूमवद्वाह्यस्यार्थस्य लिङ्गम्; विवक्षाप्रतिबद्धस्य बाह्येन सम्बन्धासिद्धेः । केवलं तस्य धूमादेर्लिङ्गस्य संसूचकत्वेन सङ्केतवशात् तथाध्यवसायिविकल्पोत्पत्तेर्बाह्यार्थापेक्षया परार्थमिति वर्ण्यते । विवक्षायां तु गम्यायां श्रोत्रपेक्षया स्वार्थमेव भवति । तथा हि—तत्कार्यत्वाद् धूमवद्विवक्षायां गमक[2] इष्यते, न वाचकत्वेन, ततो ज्ञानातीतेः । विफला व्याहृतिरिति । "नानुमानं प्रमाणम्" इत्येषा । तथा हि न

---

1. पा०, गा० पुस्तकयोर्नास्ति । 2. शब्द इत्यर्थः ।

पुरन्दरमतखण्डनम्

लौकिकं लिंगमिष्टं [1]चेत् तत्त्वतः[1] परिकल्पितम् ।
ननु लोकोऽपि कार्यदिर्हेत्वादीनवगच्छति ॥ १४८१ ॥
तत्त्वतस्तु तदेवोक्तं न्यायवादिभिरप्यलम् ।
तल्लौकिकाभ्यनुज्ञाते किं त्यक्तं भवति [2]त्वया ॥ १४८२ ॥
अप्रमाणेन चैतेन परः किं प्रतिपद्यते ।

---

कश्चित् प्रति॰ाद्यस्तद्वचनाद् विवक्षां प्रतिपद्यते । अनेन स्ववचनविरोधमाह । एतच्च पूर्वं वर्णितमेव ॥ १४७८–१४८० ॥

पुरन्दरस्त्वाह—"लोकप्रसिद्धमनुमानं चार्वाकैरपीष्यत एव, यत्तु कैश्चिल्लौकिकं मार्गमतिक्रम्यानुमानमुच्यते तन्निषिध्यते" इति । एतदाशङ्क्य दूषयन्नाह–लौकिकमित्यादि । [ G. 432 ] तत्त्वत[3] इति[3] । हेत्वादीनवगच्छतीति सम्बन्धः । कार्यादेरित्यादिशब्दात् स्वभावग्रहणम् । एवं 'हेत्वादीन्' इत्यत्रापि स्वभावग्रहणमेव । बहुवचनं तु व्यक्तिभेदात् । यत[4] एव लिङ्गात्[4] तादात्म्यतदुत्पत्तिप्रतिबद्धाल्लोकार्थं प्रतिपद्यते, तदेवोक्तं लिङ्गमस्माभिः; तदभ्यनुज्ञाने किं त्यक्तं स्याद्, यस्यानुमानत्वनिषेधो भवेत् ! ॥ १४८१–१४८२ ॥

अथापि स्यात्—नैवास्माकं किञ्चिदनुमानमिष्टम्; किन्तु परेण तत् प्रमाणमिष्टम्, तदभ्युपगमान्मम विफला व्याहृतिर्न भवतीति ? अत्राह—अप्रमाणेनेत्यादि । कुतश्चायं निश्चयो जातः—परेण तत् प्रमाणमभ्युपगतमिति, नहि पराभ्युपगमः प्रत्यक्षः, न चान्यत् तव प्रमाणमस्ति, येन निश्चयः स्यात् ! भवतु नाम निश्चयः, तथाऽपि तेनाप्रमाणेन पराभ्युपगतेन किमिति परः प्रतिपद्यते, न वै व्यसनमेतत् ।

अथापि स्यात्—यथा रिपुहस्तादाच्छिद्य खड्गं तेनैव स एव रिपुर्निपात्यते; एवं परेण यत् प्रमाणत्वेनाभ्युपगतम्, तदेव गृहीत्वा परो निराक्रियते ?

---

१–१. ०न त्वन्यत्–जै०पुस्तके पाठान्तरम् ; न त्वन्यैः—पा०, गा० ।
२. स्वयम्—पा०, गा० । ३–३. ननु लोकोऽपीति—पा०, गा० ।
४–४. यदेव लिङ्गं—पा०, गा० ।

अप्रमाणकृतश्चासौ प्रत्ययः कीदृशो भवेत् ॥ १४८३ ॥

अविद्धकर्णमतम्

अनुमानं प्रमाणं चेद् वक्तुर्न[1] वचनात्मकम् ।
प्रकाशयति तेनायं यथा तद्वदिदं भवेत् ॥ १४८४ ॥

तत्र दूषणम्

अज्ञातार्थाप्रकाशत्वादप्रमाणं तदिष्यते ।
नासक्तसूचकत्वेन तादृशीनं तथा ननु ॥ १४८५ ॥

---

इत्याशङ्क्याह——अप्रमाणकृत इति । एतदुक्तं भवति—यदि मोहात् परेणाप्रमाणमेव प्रमाणमिति कृत्वा संगृहीतम्, कथं तेनाप्रमाणेन परस्य सम्यग्ज्ञानोत्पादनं शक्यते कर्तुम्; सम्यग्ज्ञानफलत्वात् प्रमाणस्य । न हि मोहात् खड्ग इति कृत्वा गृहीतेन येन केनचिच्छेदकेन परश्छेत्तुं शक्यत इति न समानो दृष्टान्तः ॥ १४८३ ॥

अविद्धकर्णस्त्वत्वटीकायामाह——"ननु वा प्रमाणेन किमिति परः प्रतिपाद्यते, उभयसिद्धं हि प्रतिपादकं भवतीति ? तदेतदयुक्तम्; यस्माद् वचनात्मकमनुमानम्, न च वक्तुः प्रमाणम्, अथ च वक्ता तेन परं प्रतिपादयति, परप्रतिपादनार्थत्वात् प्रयासस्य, नावश्यमुभयसिद्धेन प्रयोजनम्" (        ) इति । तदाशङ्कते—अनुमानमित्यादिना [ G. 433 ] अयमिति वक्ता । तेनेति वचनात्मकेन ।

अज्ञातेत्यादिना दूषणमाह । न हि वचनस्य वक्त्रपेक्षया संसूचनादप्रामाण्यमिष्टम्, किं तर्हि ? अज्ञातार्थाप्रकाशनात् । सक्तसूचकत्वमस्यास्त्येव, त्वदीयं त्वनुमानं न सक्तसंसूचकम्——इत्यसमानमेतत्; अन्यथा ह्युभयसिद्धमेव भवेत् । तस्मान्न्यायादनपेतं प्रमाणं सर्वेषां युक्तं प्रत्यक्षवदिति न्याय्यम् ॥ १४८४–१४८५ ॥

इत्यनुमानपरीक्षा

---

१. चक्रुर्न—पा०, पा० ।

# प्रमाणान्तरभावपरीक्षा

## प्रमाणसङ्ख्याविप्रतिपत्तिनिराकरणम्

ननु [1]शब्दोपमानादिप्रमाणान्तरसम्भवात् ।
निर्दिष्टं लक्षणं कस्माद् द्वयोरेव प्रमाणयोः ? ॥ १४८६ ॥
उच्यते; न द्वयादन्यत् प्रमाणमुपपद्यते ।
प्रमाणलक्षणायोगाद् योगे चान्तर्गमादिह ॥ १४८७ ॥

## १. शाब्दविचारः

### शङ्करस्वाम्यभिमतशब्दलक्षणम्

शब्दज्ञानात् परोक्षार्थज्ञानं शाब्दं परे जगुः ।
तच्चाकर्तृकतो वाक्याद् यद्वा[2] प्रत्ययितोदितात्[3] ॥ १४८८ ॥
इदं च किल नाध्यक्षं परोक्षविषयत्वतः ।
नानुमानं च घटते तल्लक्षणवियोगतः ॥ १४८९ ॥

---

इदानीं प्रमाद्वितयनियमसाधनार्थं सङ्ख्याविप्रतिपत्तिनिराकरणार्थमाह[4]—नन्वित्यादि । अनेनाव्यापितां प्रमाणलक्षणस्य दोषम्, 'प्रमाद्वितयनिश्चितम्' इत्यत्र द्वितयावधारणवैफल्यं चाह ॥ १४८६ ॥

उच्यत इत्यादिना परिहरति । अन्तर्गमादिहेति । अस्मिन्नेव प्रमाणद्वये । एतदुक्तं भवति—प्रमाणद्वयादन्यस्य प्रमाणलक्षणमविसंवादित्वं नास्त्येव, सति चात्रैवान्तर्भावात् पृथङ् नोच्यते प्रमाणान्तरमिति ॥ १४८७ ॥

तत्र कथमन्येषामप्रामाण्यम्, प्रामाण्ये वा कथमिहान्तर्भावः—इत्येतद् द्वयं प्रतिपादयति । [5]तत्र शाब्दोपमार्थापत्त्यभावयुक्त्यनुपलब्धिसम्भवैतिह्यप्रातिभाख्यातिप्रमाणान्तराणि परैरभ्युपगतानि । तत्र शाब्दमधिकृत्याह – शब्दज्ञानादित्यादि ।

[G 34] तत्र शबरस्वामी शाब्दलक्षणमाह—"शब्दज्ञानादसन्निकृष्टेऽर्थज्ञानं शाब्दम्" (मी० द० शा० भा० १.१.५) इति । शब्दस्वलक्षणग्रहणादुत्तरकालं

---

१. शब्दप्रमाणादि०—पा०, गा० । २. तथा—पा०, गा० ।
३. प्रत्ययिनोदितात्—गा० । ४. ०विप्रतिकरणार्थं०—गा० ।
५. अत्र—पा०, गा० ।

धर्मी धर्मविशिष्टो हि लिंगीत्येतत् सुनिश्चितम् ।
न [1]तावदनुमानं च यावत् तद्विषयं न तत् ॥ १४९० ॥
यश्चात्र कल्प्यते धर्मी प्रमेयोऽस्य स एव च ।
न चानवधृते तस्मिंस्तद्धर्मत्वावधारणा ॥ १४९१ ॥
प्राक्स चेत् पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानता ॥ १४९२ ॥
अन्वयो न च शब्दस्य प्रमेयेण निरूप्यते ।
व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते ॥ १४९३ ॥

---

ज्ञानं तच्छब्दादागतमिति कृत्वा शाब्दप्रमाणम् । तच्च द्विविधम्—अपौरुषेयशब्दजनितम्, प्रत्ययितपुरुषवाक्यजं च । एतच्च प्रत्यक्षाद् भिन्नम् । परोक्षविषयत्वात् नाप्यनुमानम्; त्रैरूप्याभावात् । तथा हि—साध्यधर्मविशिष्टो धर्मी अनुमेय इष्यते, न केवलः, नापि धर्ममात्रम् । यावच्च तद्धर्मित्वेन धर्मिविषयं लिङ्गं नावधार्यते, न तावदनुमानस्य प्रवृत्तिः सम्भवति । यावत् पक्षधर्मत्वावधारणा न भवति, न तावदनुमानमिति यावत् ॥ १४८८–१४९० ॥

सैव पक्षधर्मत्वावधारणा किं न भवति ? इत्याह—यश्चेति । यश्चात्र शाब्दे कल्प्यते वृक्षादिधर्मी, स एव प्रमेयः; तस्यैव प्रतिपाद्यत्वात् । धर्म्येवात्र प्रमेयः, न धर्मविशिष्टो धर्मीति यावत् । तस्मिन् धर्मिणि अनवधृते = अनिश्चिते कथं तद्धर्मत्वं निश्चीयते ॥ १४९१ ॥

किञ्च—यदि चासौ धर्मी पक्षधर्मत्वनिश्चयात् प्राग् ज्ञातः, तदा निष्फलः पक्षधर्मत्वादिनिश्चये प्रयत्नः । धर्मिप्रतिपत्त्यर्थो हि सर्वः प्रयासः, स चेत् प्रतिपन्नः, किमिदानीं पक्षधर्मत्वादिनिरूपणप्रयासेन ! अभ्युपगम्य चैतदभिहितम् । न च शब्दो वृक्षादेर्धर्मिणो धर्मः; वक्तृदेशेऽवधार्यमाणत्वात् ॥ १४९२ ॥

एवं तावत् पक्षधर्मत्वाभावः प्रतिपादितः, इदानीमन्वयाभावं प्रतिपादयन्नाह—अन्वयो न चेत्यादि । निरूप्यत इति निश्चीयते । व्यापारेणेति

---

१. भवेद०—पा०, गा० ।

यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटम् ।
न त्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चितम् ॥ १४९४ ॥
न तावत् तत्र देशेऽसौ न तत्काले च गम्यते ।
भवेन्नित्यविभुत्वाच्चेत् सर्वशब्देषु तत् समम् ॥ १४९५ ॥
तेन सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः ।
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ १४९६ ॥
तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद् भवेत् ।

---

सद्भावेन, सत्त्वयेति यावत् । एतदुक्तं भवति— विद्यमानस्यैवान्वेतृत्वम्, नाविद्यमानस्येति ॥ १४९३ ॥

[ G. 435 ] एतदेव दर्शयन्नाह—यत्रेत्यादि । यत्र धूमस्तत्रावश्यं ततो वह्निरित्यतोऽसौ वह्निरन्वेता भवति धूमस्य, न त्वेवं शब्दस्यार्थेनान्वयः ॥१४९४॥

कथं नास्तीति प्रतिपादयन्नाह—न तावदिति । न तावत् तत्र शब्दाक्रान्ते देशेऽर्थस्य सद्भावः तथा हि—पिण्डखर्जूरादिशब्दोऽन्यत्र पाटलिपुत्रादौ श्रूयते, न च तत्र देशे पिण्डखर्जूरादिरस्ति । तथा नापि शब्दकालेऽर्थोऽवश्यं सम्भवति; दिलीप-महासम्मतादिशब्दा वर्त्तमानाः, तदर्थस्तु भूतो भविष्यंश्चेति कुतोऽर्थैः शब्दस्यान्वेतृत्वम् !

अथ मतम्—नित्यत्वाच्छब्दानां सर्वकालमवस्थितेरर्थेन सह भिन्नकालता, नापि भिन्नदेशता, व्यापित्वात् सर्वदेशेष्ववस्थितेः; अतो नित्यविभुत्वाद् भवेदन्वयः शब्दानामिति । तत्र सर्वशब्देषु तन्नित्यविभुत्वं तुल्यमिति कृत्वा प्रतिनियतेन शब्देन प्रतिनियतार्थाभिधानं न प्राप्नोति । किं तर्हि ? येन केनचिच्छब्देन सर्वस्यैवार्थस्याभिधानं स्यात्, तेनार्थेन सह सर्वत्र देशे काले वा तस्य[1] शब्दस्य[1] दृष्टत्वात् । व्यतिरेकः = साध्याभावे साधनाभावः, तस्य । अगतेरिति अनुपलम्भात् । नित्यविभुत्वादेव ॥ १४९५–१४९६ ॥

तस्मादित्युपसंहृत्य प्रमाणं दर्शयति । अननुमानत्वं शाब्द इति साध्य-

---

१-१. सर्वशब्दस्य—पा०, गा० ।

त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ १४९७ ॥
अग्निहोत्रादिवचनादकम्प्यज्ञानजन्मतः ।
तत्प्रमाणत्वमप्यस्य निराकर्तुं न पार्यते ॥ १४९८ ॥

प्रथमे शाब्दलक्षणे
असम्भवितादोषोद्भावनम्

तत्राकर्तृकवाक्यस्य सम्भवार्थावसङ्गतौ ।
तस्मादसम्भवि प्रोक्तं प्रथमं शाब्दलक्षणम् ॥ १४९९ ॥

---

निर्देशः । त्रैरूप्यरहितत्वेनेति हेतुः । प्रत्यक्षवदिति दृष्टान्तः । तादृग्विषयवर्जनादिति हेतुसमर्थनम् । यादृशो धूमादिलिङ्गजस्यानुमानस्य विषयो धर्मविशिष्टो धर्मी, तेन तादृशा विषयेण वर्जनात्—रहितत्वादिति यावत् ॥१४९७॥

भवतु नाम त्रैरूप्यरहितत्वादनुमानादन्यत्वम्, प्रामाण्यं त्वस्य शब्दस्य कथम्? इत्याह—अग्निहोत्रेत्यादि । [G. 430] संशयविपर्यासरहितत्वादकम्पम् = निश्चलम् । बाधकप्रमाणाभावात् प्रमाणं प्रत्यक्षादिवदिति यावत् । तथा चाह शबरस्वामी—"न च स्वर्गकामो यजेतेत्यतो वचनात् सन्दिग्धमवगम्यते—भवति वा स्वर्गः, न वा भवतीति । न च निश्चितमवगम्यमानमिदं मिथ्या स्यात् । यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः, न चैष देशान्तरे, कालान्तरे, पुरुषान्तरे, अवस्थान्तरे[1] विपर्येति, तस्मादवितथः । यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषादिन्द्रियविषयं वा, तदवितथमेव । अथाप्रत्ययितादतीन्द्रियविषयं वा तत्पुरुषबुद्धिप्रभवमप्रमाणम्, अशक्यं हि पुरुषमात्रेण ज्ञातुमृते वचनात्" (मी॰ द॰ शा॰ भा॰ १.१.२) इति ॥ १४९८ ॥

तत्रेत्यादिना—"तच्चाकर्तृकतो वाक्यात" (तत्त्व॰ १४८८) इत्येतस्मिन् प्रथमे शाब्दे लक्षणेऽसम्भवितां लक्षणदोषमाह । अकर्तृकस्य हि वाक्यस्य सम्भवो नास्त्येव; व्यापिनः क्षणभङ्गस्य साधितत्वात् । वक्ष्यमाणयुक्त्या वा । सत्यपि वा सम्भवे न तस्यार्थवत्त्वं सम्भवति, अतोऽकर्तृकाद् वचनात् परोक्षोऽर्थोऽयं[2] ज्ञानमित्यस्यासम्भवादसम्भवि प्रमाणलक्षणम् ॥ १४९९ ॥

---

१. जै॰, पा॰, गा॰ पुस्तकेषु नास्ति । २. ज्ञात इत्यस्या॰—पा॰, गा॰ ।

शक्ताशक्तस्वभावस्य सर्वदा ह्यनुवर्त्तनात् ।
तदा तद्भाविविज्ञानं भवेन्नो वा कदाचन ।। १५०० ।।
द्वेषमोहादयो दोषा यथा मिथ्यात्वहेतवः ।
कृपाप्रज्ञादयोऽप्येवं ज्ञाताः सत्यत्वहेतवः ।। १५०१ ।।
तदाश्रयनराभावे न तयोरपि सम्भवः ।
आनर्थक्यमतः प्राप्तं वचस्यपुरुषाश्रये ।। १५०२ ।।

---

कथं पुनरकर्तृकं वाक्यं नास्ति ? इत्याह—शक्तेत्यादि । तत्राकर्तृकं वाक्यं भवत्[1] शक्तं वा स्यात् ज्ञानजनने, कदाचिदशक्तं वा—इति पक्षद्वयम् । प्रथमे पक्षे तस्य शक्तस्य स्वभावस्यानुवर्त्तनान्नित्यं तद्भाविविज्ञानं प्राप्नोति । तत्र प्रयोगः—यदप्रतिबद्धसामर्थ्यं यस्मिन् कर्त्तव्ये, तत्करोत्येव, यथाऽन्त्या कारणसामग्री । अप्रतिबद्धसामर्थ्यं चाकर्तृकं वाक्यं ज्ञानजनने सर्वकालमिति स्वभावहेतुः । अथ वा—यदविकलकारणम्, तद्भवत्येव, यथाऽविकलकारणोऽङ्कुरः । अविकलकारणं चापौरुषेयवाक्यभाविविज्ञानमिति स्वभावहेतुः । द्वितीयेऽपि पक्षे तस्याशक्तस्य स्वभावस्य सर्वकालमनुवर्त्तनात्[2] न कदाचित् तद्भावि विज्ञानं स्यात्, यथा विकलकारणोऽङ्कुरः ॥ १५०० ॥

[ G. 437 ] कथमर्थवत्त्वं न सङ्गच्छते ? इत्याह—द्वेषेत्यादि । द्वाभ्यां प्रकाराभ्यामर्थवत्ता भवति—अविपरीतार्थत्वेन[3], विपरीतार्थत्वेन वा; तृतीयराश्यभावात् । तस्याश्च बुद्धेर्द्विप्रकाराया अप्यर्थवत्ताया गुणदोषौ कारणमित्यन्वयव्यतिरेकाभ्यां निश्चितम् । तथा हि—यथा रागादिदोषपरीतपुरुषो मृषावादी दृष्टः, तथा कृपादिगुणयुक्तः सत्यवाग् दृष्टः । तयोश्च गुणदोषयोः सम्यक्त्व-मिथ्यात्वहेत्वोराश्रयः पुरुषः, ततश्च पुरुषनिवृत्तौ गुणदोषनिवृत्तिः, गुणदोषनिवृत्तौ सम्यक्त्वमिथ्यात्वयोरप्यभावः, तदभावे प्रकारान्तरासम्भवादानर्थक्यमपौरुषेयवचसि प्राप्तम्; कारणाभावात् । न हि कारणमन्तरेण कार्यस्य सम्भवो युक्तः, निर्हेतुत्वप्रसङ्गात् । ततश्च देशकालद्रव्यादिनियमो न स्यात् ।

---

१. पा०, गा० पुस्तकयोर्नास्ति । २. ०नुवर्तनाच्च—पा०, गा ।
३. जै०, पा० पुस्तकयोर्नास्ति ।

अर्थप्रतीतितो नो चेदेषा व्याख्यानतो भवेत् ।
स्वतन्त्रो हि पुमान् दृष्टो व्याचक्षाणोऽर्थमिच्छया ॥ १५०३ ॥
भूतार्थद्योतने शक्तिः प्रकृत्यैव स्थिताऽस्य चेत् ।
अज्ञातसमयस्यापि भवेदर्थगतिस्ततः ॥ १५०४ ॥

---

प्रसङ्गसाधनमेतद् द्रष्टव्यम् । अन्यथा हि स्वातन्त्र्येण साधने दृष्टविरोधः स्यात् । तथा हि—"अग्निहोत्रं जुहुयात् स्वर्गकामः" (     ) इत्यादिवाक्यादर्थप्रतीतिर्भवन्त्युपलभ्यत एव, न च दृष्टमपह्नोतुं शक्यते । न चाकर्तृकत्वमुभयसिद्धमित्यसिद्धश्च हेतुः स्यात् । प्रसङ्गसाधने तु द्वयमप्यदुष्टम् । तथा हि – यद्यपौरुषेयत्वमभ्युपगम्यते वेदस्य, तदाऽऽनर्थक्यमभ्युपगन्तव्यम्; अर्थवत्त्वहेतोः पुरुषस्याभावात् । न चानर्थक्यम्, अतः स्यात् पौरुषेय एवेति प्रसङ्गेन प्रदर्श्यते ॥ १५०१-१५०२ ॥

एतदेव प्रसङ्गसाधनं समर्थयितुं दृष्टविरोधाभावं प्रतिपादयन्नाशङ्कापूर्वकमाह—अर्थेत्यादि । [G. 438] नो चेदिति । आनर्थक्यमिति सम्बन्धः । ततश्च दृष्टविरोधः प्रतिज्ञाया इति भावः । सत्यं स्याद् दृष्टविरोधो यदि वेदादेवार्थप्रतीतिरुपदेशमन्तरेणोपजायेत, यावतैषाऽर्थप्रतीतिर्व्याख्यातुः सकाशात् समयवशाद् भवेत्, न वेदात् केवलात् समयनिरपेक्षात् । तथा हि—वेदार्थं मीमांसकादिः स्वेच्छया व्याचक्षाणो दृष्टः, न च स्वाभाविकस्यार्थस्य पुरुषेच्छानुरोधित्वं युक्तम् । तत्रैतत् स्यात्—न हि पुरुषेणापूर्वोऽर्थः स्वेच्छया कथ्यते, किं तर्हि ? य एव हि स्वाभाविको व्यवस्थितः, स एव पुरुषेण प्रकाश्यते इति तेन भवत्येव दृष्टविरोध इति ।

एवं तर्हि यदि प्रकृत्याऽस्य वेदस्य भूतार्थद्योतने शक्तिः स्थिता, तदा सङ्केतानभिज्ञस्यापि ततो वेदवाक्यादर्थप्रतीतिः प्राप्नोति । सङ्केतसापेक्षो वेदोऽर्थप्रतीतिहेतुः, न केवल इति चेत् ? तन्न; न हि प्रकृत्याऽर्थप्रतीतिहेतवो दीपादयः सङ्केतमपेक्षन्ते । अन्यथा सङ्केतस्यैवान्वयव्यतिरेकाभ्यामर्थप्रतीतौ सामर्थ्यं स्यात्, न स्वाभाविकस्य सम्बन्धस्य ।

प्रकृत्या दीपको दीपो न संकेतमपेक्षते ।
समयान्तरभावे च 'न स्यादर्थान्तरे' गतिः ॥ १५०५ ॥
न हि संकेतभावेऽपि दीपो गन्धरसादिकम् ।
प्रकाशयति विज्ञातुं सा शक्तिर्न च शक्यते ॥ १५०६ ॥
अतोऽर्थप्रत्ययायोगात् तस्य निःकम्पता कुतः ।
स तु सामयिको युक्तः पुंवाग्भूतान्न भिद्यते ॥ १५०७ ॥

---

किञ्च – भवतु नाम सङ्केतसहायादर्थप्रतीतिः, तथापि दोष इत्याह – समयेत्यादि। मीमांसकोपरचितात् समयान्निरुक्तकाराद्युपरचितः समयः समयान्तरम्, तस्य सद्भावे सति प्रकृतादर्थादर्थान्तरे ततः शब्दात् प्रतीतिर्न प्राप्नोति ; न हि प्रदीपोऽप्रकाश्यं गन्धरसादिकं सङ्केतवशात् प्रकाशयितुमीशः । भवतु नामार्थान्तरे वृत्तिः समयवशात्, तथापि प्रामाण्यं न सिध्यतीति प्रतिपादयति— विज्ञातुमिति । पुरुषेच्छावशाद् यद्यर्थान्तरेऽपि शब्दस्य प्रवृत्तिः, तदा साङ्कर्यात् सा भूतार्थद्योतनशक्तिर्निश्चेतुं न शक्यते—इति कथं तत इष्टार्थप्रतिपत्तिर्भवेत् !

अथ वाऽन्यथा व्याख्यायते—यासौ प्रकृत्या भूतार्थद्योतनशक्तिः; सा कदाचिदेकार्थनियता वा स्याद्, अनेकार्थनियता वेति पक्षद्वयम् । तत्रैकार्थनियमपक्षे दोषमाह— समयान्तरभाव इति । द्वितीयेऽप्याह— विज्ञातुं सा शक्तिर्न च शक्यत इति । साङ्कर्यादिति भावः । यथोक्तम्—

"गिरामेकार्थनियमे न स्यादर्थान्तरे गतिः ।
अनेकार्थाभिसम्बन्धे विरुद्धव्यक्तिसम्भवः ॥"

( प्र० वा० ३.२२८ ) इति ॥ १५०३-१५०६ ॥

एवं प्रथमं शाब्दलक्षणमसम्भवीति प्रतिपाद्य "अकम्पज्ञानजन्मतः" ( तत्त्व० १४९८ ) इत्यस्य हेतोरसिद्धतामुपसंहारेण दर्शयन्नाह – अत इत्यादि। [ G. 439 ] अपौरुषेयत्वे सति यथोक्तनीत्याऽर्थप्रतीतिरेव न सम्भवति यदा, तदा कुतस्तस्या अकम्पत्वम् ! यश्चायमर्थप्रत्ययो भवन्नुपलभ्यते वेद-

१–१. तस्मादर्था०—पा०, गा० ।

न्यायज्ञैर्न तयोः कश्चिद् विशेषः प्रतिपद्यते ।
श्रोत्रियाणां त्वकम्पोऽयसज्ञातन्यायवर्त्मनाम् ॥ १५०८ ॥

द्वितीये शाब्दलक्षणेऽप्यसम्भवितादोषः

आप्तानङ्गीकृतेरेव द्वितीयमपि न क्षमम् ।
शाब्दलक्षणमिष्टो वा सोऽयमित्यविनिश्चितः ॥ १५०९ ॥
प्रायः सम्प्रत्ययो दृष्टो यद्वाक्यात् तस्य गृह्यते ।

---

वाक्यात्, स तु साङ्केतिक एव युक्त इति पूर्वं प्रतिपादितम्—"एषा व्याख्यानतो भवेत्" ( तत्त्व० १५०३ ) इत्यादिना ॥ १५०७ ॥

इतश्चायं साङ्केतिक एव युक्त इति; यस्माद् वैदिकं वाक्यं पुंवाग्भूतात् = पुंवाक्त्वप्राप्तात्, न भिद्यते । पौरुषेयवचनात्न[1] भिद्यते इति यावत् ! एतदपि कुतः ? इत्याह—न्यायज्ञैरित्यादि[2] । तयोरिति वैदिकपौरुषेययोः । सर्वप्रकारेण पुरुषैः शक्यकरणत्वान्न कश्चिद् विशेषो वैदिकस्य लौकिकात् । श्रोत्रियाणामित्युपहसति ॥ १५०८ ॥

द्वितीयेऽपि "यद्वा प्रत्ययितोदितात्" (तत्त्व० १४९८) इत्येतस्मिन् शाब्दलक्षणेऽसम्भवितां लक्षणदोषमाह—आप्तेत्यादि । मीमांसकैः क्षीणदोषपुरुषानभ्युपगमादाप्तो नाङ्गीकृत एवेति कुतस्तद्वचनस्य प्रामाण्यं स्यात ! न क्षममिति न युक्तम् । असम्भवीति यावत् । अथाप्याप्त इष्यते, तदा तस्याप्तस्येष्टौ सत्यां श्रृङ्गग्राहिकया 'अयमसौ[3]' इति असावाप्तो[3] न निश्चित इत्यसत्प्रख्य एव । न ह्यन्यगुणदोषनिश्चये प्रमाणमस्ति; तेषामतीन्द्रियत्वात् ! कायवाग्व्यवहाराश्चान्यथाऽपि बुद्धिपूर्वं क्रियन्त इति कुतस्तद्वचनस्य प्रामाण्यम्, असाङ्कर्येणार्वाग्दर्शिभिस्तेषामनवधारणात ॥ १५०९ ॥

अथापि स्याद्—यस्य पुरुषस्याक्षीणदोषस्यापि सतो वाक्याद्बाहुल्येन सम्प्रत्ययो दृष्टः, सोऽस्माभिः प्रत्ययित इष्टो य क्षीणदोषः, तस्मात् तस्य प्रत्ययितस्य वाक्यं

---

१. पौरुषेयत्वाद्वचनान्न—पा०, गा० ।
२. न्यायज्ञ इत्यादि—जै० ।
३–३. ०यमसादित्याप्तो—पा०, गा० ।

परोक्षप्रतिपत्त्यर्थं वाक्यं प्रत्ययतः स चेत् ॥ १५१० ॥
नान्यत्र प्रत्ययाभावात् पूर्वसम्प्रत्ययेऽपि[1] हि ।
एकत्रास्खलिते तत्र सर्वत्र नियमो न हि ॥ १५११ ॥

सामान्यं दूषणम्

वचसां प्रतिबन्धो वा को बाह्येष्वस्ति[2] वस्तुषु ।
प्रतिपादयतां तानि येनैषां स्याद् प्रमाणता ॥ १५१२ ॥

---

गृह्यते; [G. 440] शाब्दलक्षणे तेनासम्भविता न सम्भवतीति ? एतदप्यसम्यक्; न ह्येकत्राविसंवादमात्रोपलम्भात् सर्वत्र तथाभावनियमो युक्तः; व्यभिचारस्य सम्भाव्यमानत्वाद्, अन्यथा व्यभिचारिलक्षणं स्यात् ॥१५१०-१५११॥

एवं तावद् द्विप्रकारमपि शाब्दलक्षणं विशेषेण दुष्टं प्रतिपाद्य सामान्यं दूषणमाह—वचसामित्यादि । न हि वाच्यैर्वस्तुभिः सह कश्चित् तादात्म्यलक्षणः, तदुत्पत्तिलक्षणो वा प्रतिबन्धो वचसामस्ति, येन तानि वस्तूनि प्रतिपादयतामेषां वचसां प्रामाण्यं स्यात् । तत्र तावन्न तादात्म्यलक्षणः प्रतिबन्धोऽस्ति, भिन्नाक्षग्रहणादिभ्यो हेतुभ्यः तत्र भिन्नाक्षग्रहणं भिन्नेन्द्रियेण ग्रहणम् । तथा हि—श्रोत्रेन्द्रियेण शब्दो गृह्यते, अर्थस्तु चक्षुरादिना । आदिशब्देन कालदेशप्रतिभासकारणभेदो गृह्यते ।

कुमारिलस्त्वाह—भिन्नेन्द्रियग्राह्यत्वाद्भिन्नमित्यनैकान्तिकमेतत् । तथाहि—एकं रूपं यदा बहवः पश्यन्ति तदा भिन्नेन्द्रियग्राह्यत्वाद्रूपस्य भेदः प्राप्नोति । अथापि स्यात्—चक्षुरिन्द्रियजातेरभेदादेकेन्द्रियग्राह्यत्वमेवेति ? एवं तर्हि सत्ताया अनेकेन्द्रियग्राह्यत्वेऽपीन्द्रियजातेरभेदादभिन्नेन्द्रियग्राह्यत्वमस्तीति सिद्धमेकत्वम् । तस्माद् बुद्धिभेदाभेदाभ्यां पदार्थभेदाभेदव्यवस्था, नेन्द्रियभेदाभेदाभ्यामिति । आह च—

"न चानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते ।
मा भूद् भिन्नशरीरस्थग्राह्यत्वाद् रूपभिन्नता ॥
जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् ।

---

१. पूर्वमप्रत्ययो०—पा०, गा० ।
२. बाह्येष्वपि—पा०, गा० ।

भिन्नाक्षग्रहणादिभ्यो नैकात्म्यं न तदुद्भवः।
व्यभिचारान्न चान्यस्य युज्यतेऽव्यभिचारिता ॥ १५१३ ॥

शब्दस्यानुमानेऽन्तर्भावः

वचोभ्यो निखिलेभ्योऽपि विवक्षैषाऽनुमीयते।
प्रत्यक्षानुपलम्भाभ्यां तद्धेतुः सा हि निश्चिता ॥ १५१४ ॥

---

तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥"

(श्लो० वा०, प्रत्य० सू० १५६, १५७) इति।

एतच्चासम्यक्; बुद्धिभेदाद् भेदेऽपि साध्ये समानत्वात्। तथा हि—अत्रापि शक्यत एवं वक्तुम्—बुद्धिभेदाद् वस्तुभेद इत्यनैकान्तिकमेतत्। तथा हि—यदा बहव एकं रूपं पश्यन्ति, तदा बुद्धिभेदोऽस्त्येव; अनेकचक्षुर्ज्ञानोत्पत्तेः। न च तदा रूपस्य भेदः; अथ[1] चक्षुर्विज्ञानजातेरभेदादेकत्वं परिकल्प्यते? एवं तर्हि रूपरसादीनामप्येकत्वं प्राप्नोति; सत्यपि तद्बुद्धिभेदे विज्ञानजातेरभेदात्। ततश्च यदुक्तम्—"बुद्धिभेदान्न चैकत्वं रूपादीनां प्रसज्यते"। (श्लो० वा०, प्रत्य० सू० १५८) इति, तद्व्याहन्येत। तस्माज्जात्युत्तरमेतत्।

अथ सत्यपि स्वलक्षणभेदे यादृशो लक्षणभेदे [G. 441] यादृशो लोके भेदाभेदव्यवहारः प्रसिद्धः, एकानेकप्रत्यवमर्शहेतुत्वेन तादृशौ बुद्धिभेदाभेदावुपादीयेते। इन्द्रियेऽपि सर्वं समानमित्यलं प्रसङ्गेन ॥ १५१२ ॥

न तदुद्भव इति। नापि तदुत्पत्तिलक्षणसम्बन्धः; व्यभिचारात्। अर्थाभावेऽपि विवक्षामात्राद् भावात्। न चान्यस्य तदुत्पत्तिरहितस्याव्यभिचारिताऽस्ति; अतिप्रसङ्गात्। तस्मान्न वाच्येऽर्थे शब्दस्य प्रामाण्यम् ॥ १५१३ ॥

यद्येवम्, कथमुक्तम्—

"न प्रमाणान्तरं शाब्दमनुमानात् तथा हि सः[2]।

कृतकत्वादिवत् स्वार्थमन्यापोहेन भाषते" ॥ (   ) इति?

एतदाशङ्क्य यथानुमानेऽन्तर्भावं इष्टः, तथा प्रतिपादयन्नाह—वचोभ्य इत्यादि। निखिलेभ्य इति पौरुषेयत्वेनाप्यभिमतेभ्यः। सा च विवक्षा

---

१. यदि—पा०, गा०। २. तत्—गा०।

भ्रान्तस्यान्यविवक्षायां वाक्यं चेदन्यदीक्ष्यते ।
यथाविवक्षमप्येतत्[1] तस्मान्नैव प्रवर्त्तते ॥ १५१५ ॥
भ्रान्ताभ्रान्तप्रयुक्तानां वैलक्षण्यं परिस्फुटम् ।
विदग्धाः प्रकृतादिभ्यो निश्चिन्वन्ति गिरामलम् ॥ १५१६ ॥
वैलक्ष्यण्येन हेतूनां विशेषं तासु ये न तु ।

---

तत्कार्यत्वाद् वचनात् प्रतीयते, न तु वाच्यतया; यस्मादात्मसन्तानेऽन्वयव्यतिरेकाभ्यां वचसां हेतुः सा विवक्षा निश्चिता । यत्तूक्तम्—'अन्यापोहेन भाषते' इति, तत्र भाषणम् = द्योतनम्, ज्ञापनमिति यावत् । तथा चास्य विवरणम् – "तत्कृतकत्वादिवदर्थान्तरव्यवच्छेदेन[2] द्योतयति" ( ) इति । अवश्यं चैतद्विज्ञेयमन्यथा कृतकत्वादिवदिति साधनविकलो दृष्टान्तः स्यात् । न हि कृतकत्वादेर्भाषणं सम्भवति; तस्य शब्दधर्मत्वात् । ततश्चान्यापोहेन भाषणादिति हेतुरसाधारणः स्यात् ॥ १५१४ ॥

ननु च विवक्षायामपि शब्दस्य नैव प्रामाण्यं युक्तम् । तथा हि—न तावद् विवक्षाविशेषे प्रामाण्यम्; व्यभिचारात् । भ्रान्तस्यान्यविवक्षायामन्यवाक्यदर्शनात् । नापि विवक्षासामान्ये; वैफल्यात् । न हि विवक्षामात्रविज्ञामं कचिद् व्यवहाराङ्गतां प्रतिपद्यते; ततोऽर्थविशेषानिश्चयात् । एतदाशङ्क्य भ्रान्तस्येत्यादिना[3], विवक्षाविशेषे तावत् प्रामाण्यमाह—भ्रान्ताभ्रान्तेत्यादि । अवश्यं हि भ्रान्ताभ्रान्तप्रयुक्तानां वैलक्षण्यमङ्गीकर्त्तव्यम्, अन्यथा न कारणभेदो [G 442] भेदकः स्यात् । तच्च वैलक्षण्यं कुशलाः पुरुषा निश्चिन्वन्त्येव प्रकृतादिभ्यः । प्रकृतम् = प्रकरणम् । आदिशब्देनाव्याकुलता, मुखप्रसन्नतादि गृह्यते ॥१५१५–१५१६॥

वैलक्षण्यमेव गिरां कथम् ? इत्याह – वैलक्षण्येन हेतूनामिति । कारणभेदादिति यावत् । तस्मात् सुविवेचितं कार्यं न कारणं व्यभिचरतीति भवत्येव विवक्षाविशेषे प्रामाण्यम् ।

---

१. तथा विवक्षासामान्ये—गा० । २. ०न्तरसम्बद्धेन व्यव०—पा०, गा० ।
३. भ्रान्तेत्यादिना—जै० ।

अवगच्छन्ति दोषोऽयं तेषां लिङ्गस्य नास्ति तु ॥ १५१७ ॥
सन्दिह्यमानवपुषो धूमस्याप्येकदाऽन्यथा ।
भावान्निश्चयकालेऽपि न स्यात् तेजसि लिङ्गता ॥ १५१८ ॥
तेषामपि विवक्षायाः केवलाया विरुध्यते ।
नानुमैकान्तसद्भावात् प्राणितादिप्रसिद्धये ॥ १५१९ ॥

---

ये पुनस्तासु लिङ्गभूतासु गीर्षु विशेषं नावधारयन्ति, तेषामयं दोषः, न तु लिङ्गस्य । न हि लिङ्गं सत्तामात्रेण गमकमिष्यते, किं तर्हि ? निश्चितम् । तस्मात् प्रतिपत्तुर्दोषोऽयम् । अन्यथा हि क्वचिद् बाष्पादिरूपेण सन्दिह्यमानस्य धूमस्यान्यत्वाभावादगमकत्वान्निश्चितस्यापि वह्नौ साध्ये न लिङ्गता प्राप्नोति ।

अपि च—यदा सर्व एवायं शाब्दो व्यवहारस्तैमिरिकद्वयद्विचन्द्रदर्शनवत् स्वप्रतिभासानुरोधेन भ्रान्त एवेष्यते, तदा कथं विवक्षाविशेषे व्यभिचारोद्भावनादप्रामाण्यप्रसञ्जनं स्यात्; तत्र विवक्षाविशेषे पारमार्थिकस्य प्रामाण्यस्यानभ्युपगमात् । तथा चाह—

"सङ्केतापेक्षया तस्य हृदि कृत्वा प्रकाशनम् ।
अनुमानत्वमुद्दिष्टं न तु तत्त्वव्यपेक्षया ॥"

( ) इति ॥ १५१७–१५१८ ॥

विवक्षासामान्येऽपि साध्ये प्रामाण्यं प्रतिपादयन्नाह—तेषामित्यादि । तेषामपि भ्रान्ताभ्रान्तप्रयुक्तानां सर्वेषां विवक्षासामान्ये नानुमानत्वविरोधः; एकान्तसद्भावात् = अव्यभिचारात् । न च—

"सान्निध्यमात्रतस्तस्य[1] पुंसश्चिन्तामणेरिव ।
निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥" ( )

इत्यनेनाभ्युपगमेन व्यभिचार आशङ्कनीयः; यतस्तत्रापि विवक्षैवाद्या कारणम्[2]; पूर्वप्रणिधानाहितसंस्कारबलेनैव तत्र वचनप्रवृत्तेः । तथा हि—[3]अत्यभ्यस्तग्रन्थस्याध्यायादिकालेऽन्यद् विकल्पयतोऽपि[4] वचनपादविहरणादि-

---

१. सान्निध्यतस्तस्य—पा०, गा० । २. करणम्—गा० ।
३. ०श्वाद्याया०—पा०, ०न्यस्याध्यायादि०—गा० । ४. विकल्पयतेऽपि—पा० ।

विवक्षायां च गम्यायां विस्पष्टैव त्रिरूपता ।
पुंसि धर्मिणि सा साध्या कार्येण वचसा यतः ॥ १५२० ॥
पादपार्थविवक्षावान् पुरुषोऽयं प्रतीयते ।
वृक्षशब्दप्रयोक्तृत्वात् पूर्वावस्थास्वहं यथा ॥ १५२१ ॥
अतो यत्र परैर्बाह्ये त्रैरूप्यादि निराकृतम् ।
शब्दानामिष्यते तत्र नैवास्माभिः प्रमाणता ॥ १५२२ ॥
यत्र त्वेषामभीष्टेयं व्यक्तं तत्र त्रिरूपता ।
विवक्षायां तु साध्यायां त्रैलक्षण्यं प्रकाशितम् ॥ १५२३ ॥
एवं स्थितेऽनुमानत्वं शब्दे धूमादिवद् भवेत् ।
त्रैरूप्यसहितत्वेन तादृग्विषयसत्त्वतः ॥ १५२४ ॥

---

क्रियाप्रवृत्तेः । न हि पूर्वसमीहा न तेषां कारणम्; अन्यथा [G. 443] हि गोपालघटिकादौ धूमोपलम्भाद् धूमादेरपि लिङ्गस्य व्यभिचारित्वं चोदनीयं स्यात् । तस्मात् सर्वत्रैव कार्यलिङ्गदेशकालाद्यपेक्षया न व्यभिचारः सम्भवीत्येकान्तसद्भाव एव । न च वैफल्यम्; प्राणतादिसिद्धये प्रवृत्तेः साफल्यसम्भवात् । आदिशब्देन कारणदोषादयो गृह्यन्ते ॥ १५१९ ॥

भवतु नाम विवक्षां प्रति शब्दस्य प्रामाण्यम्, तथापि कोऽत्र धर्मी किं साध्यं वा सम्बन्धः सिद्धः, येन त्रैरूप्यसद्भावेनानुमानेऽन्तर्भावान्न प्रमाणान्तरत्वं स्यात् ? इत्याह—विवक्षायामिति । पुरुषो धर्मी यत्र वक्ता दृश्यते, सा = विवक्षा साध्या, स्वसन्ताने च सम्बन्धः पूर्वं सिद्धः । यत्र तु वक्ता न दृश्यते तत्र प्रदेशो धर्मी पुरुषविशिष्टः साध्यः । तथा हि—प्रदेशस्यापि शब्दकारणत्वमस्त्येव; पर्वतकुहरादावन्यादृशशब्दश्रवणात् ॥ १५२०-१५२१ ॥

अत इत्यादिना बाह्यापेक्षया शब्दस्यानुमानत्वे साध्ये त्रैरूप्यरहितत्वेनेत्यस्य हेतोर्वैफल्यमाह सिद्धसाध्यतया । विवक्षापेक्षया त्वसिद्धतां यत्रेत्यादिनाः प्राह; तां प्रति शब्दस्य त्रैरूप्यस्य प्रकाशितत्वात् ॥ १५२२-१५२४ ॥

इति शाब्दविचारः

## २. उपमानविचारः

### सामान्यमुपमानस्वरूपम्

कीदृग्गवय इत्येवं पृष्टो [1]नागरकैर्यदा ।
ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ १५२५ ॥

### मीमांसकाभिमतमुपमानलक्षणम्

एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।
अस्यागमाद्बहिर्भावादन्यथैवोपवर्णितम् ॥ १५२६ ॥
गां दृष्ट्वाऽयमरण्यान्यां गवयं वीक्षते यदा ।
भूयोऽवयवसामान्यभाजं वर्तुलकण्डकम् ॥ १५२७ ॥
तदाऽस्य [2]गवये ज्ञानं[2] रूपमात्रावबोधकम् ।
प्रत्यक्षमेव यच्चापि विशेषेण विकल्पकम् ॥ १५२८ ॥
गवा सदृशरूपोऽयं पशुरित्यतदीदृशम् ।
अक्षव्यापारसद्भावे जातेः प्रत्यक्षमिष्यते ॥ १५२९ ॥

---

[G. 444] उपमानमधिकृत्याह—कीदृगित्यादि । 'कीदृशो गवयः' इत्येवं पृष्टस्य यद् वाक्यम्—'यादृशो गौस्तादृशो गवयः' इति, अस्य वाक्यस्योपमानत्वं वृद्धनैयायिकानां प्रसिद्धम् । शाबरे तु भाष्ये शबरस्वामिना 'शाब्द एवास्यान्तर्भावान्न युक्तं पृथक्प्रमाणान्तरत्वमीदृशस्योपमानस्य' इति मत्वाऽन्यादृशमेवोपमानं वर्णितम्—"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य" ( मी० द० शा० भा० १.१.५ ) इत्यमुना ग्रन्थेन ॥ १५२५-१५२६ ॥

एनमेव व्याचिख्यासुराह—गां दृष्ट्वेत्यादि । पूर्वं गां दृष्ट्वा पश्चादरण्यं गतो यदा गवयं पश्यति, किंविशिष्टम् ? भूयोऽवयवसामान्यभाजम्—भूयांस्यवयवसामान्यानि भजत इति कृत्वा, वर्तुलकण्ठकम् = सास्नारहितम्, यदा यत् प्रथमं गवयस्वरूपमात्रग्राहि निर्विकल्पकमालोचनाज्ञानमुत्पद्यते तत्तावत् प्रत्यक्षम् । यच्चापि

---

1. नागरिकैः—गा० । २–२. गवयज्ञानं—पा०, गा० ।

तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते ।
सन्निधेर्गवयस्थत्वाद् भवेदिन्द्रियगोचरम् ॥ १५३० ॥
सामान्यवद्धि सादृश्यं प्रत्येकं च समाप्यते ।
प्रतियोगिन्यदृष्टेऽपि यस्मात् तदुपलभ्यते ॥ १५३१ ॥
सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १५३२ ॥
तस्यामेव [1]त्ववस्थायां यद्विज्ञानं प्रवर्त्तते ।
पशुनैतेन तुल्योऽसौ गोपिण्ड इति सोपमा ॥ १५३३ ॥

'गवा सदृशोऽयं पशुः' इत्येवमाकारं विशेषेण विकल्पयदुत्पद्यते, तदपि प्रत्यक्षमेव: अक्षव्यापारेणोत्पत्तेः ॥ १४२७-१५२९ ॥

स्यादेतत् - स्मरणबलादसदेव सादृश्यं विकल्पयदुत्पद्यते, नाक्षव्यापारेण ? इत्याशङ्क्याह – तत्र यद्यपीत्यादि । यद्यपि स्मृतिपूर्वकं तत्सादृश्यग्राहि ज्ञानम्, तथापि गवयस्थत्वेन सन्निहितत्वात् [G. 445] सादृश्यमिन्द्रियगोचरः । सन्निधिः = सन्निहितत्वम् । गवयस्थत्वादिति सन्निहितत्वे हेतुः । यस्माद् गवयस्थं सादृश्यम्, तस्मादस्य सन्निधिः ॥ १५३० ॥

ननु च द्विष्ठत्वात् सादृश्यस्य कथमेकत्र गवयेऽस्य ग्रहणं युक्तम् ? इत्याह— सामान्यवद्धीत्यादि । सामान्येन तुल्यं वर्त्तत इति सामान्यवत् । यद्यपि सादृश्यं द्विष्ठम्, तथाऽपि सामान्यवत् प्रत्येकं समाप्तमिति कृत्वा प्रतियोगिनि गवादावदृष्टेऽपि सन्निहितत्वादेकत्राप्युपलभ्यत एव ॥ १५३१ ॥

स्यादेतत्—यदि सादृश्यं वस्तु भवेत्, तदोपलभ्येत, यावता तदेवास्य वस्तुत्वं सिद्धम् ? इत्याह— सादृश्यस्येत्यादि । भूयसां गवादिशृङ्गाद्यवयवसामान्यानां गवयादिजात्यन्तरेणैकव्यक्तिसमवायलक्षणः सम्बन्धः सादृश्यम् । सम्बन्धश्च सम्बन्धिभ्यो नात्यन्तं भिन्नः, सम्बन्धादिप्रत्ययाभावप्रसङ्गात् । सजातीयस्य सर्वावयवसामान्यसद्भावात् सादृश्यं नास्तीति ज्ञापनार्थं जात्यन्तरग्रहणम् ॥१५३२॥

साम्प्रतमुपमायाः स्वरूपं दर्शयन्नाह—तस्यामिति । अनेन परिदृश्यमानेन

१. व्यवस्थायाम्—पा०, गा० ।

तस्माद्यत् स्मर्यते तत्स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदाश्रितम् ॥ १५३४ ॥
प्रत्यक्षेणावबुद्धे च सादृश्ये च गवि स्मृते ।
विशिष्टस्यान्यतोऽसिद्धेरुपमायाः प्रमाणता ॥ १५३५ ॥
प्रत्यक्षेऽपि यथा देशे स्मर्यमाणेऽपि पावके ।
विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ १५३६ ॥
न हि प्रत्यक्षता तस्य[1] विज्ञानस्योपपद्यते ।
इन्द्रियार्थाभिसम्बन्धव्यापारविरहात् तदा ॥ १५३७ ॥

---

पशुना सदृशो गौः—इत्येवमाकारं परोक्षगोविषयं यज्ज्ञानमुपजायते, तदुपमानं प्रमाणम् ॥ १५३३ ॥

प्रमेयमस्य दर्शयन्नाह—तस्मादित्यादि । यस्माद् यथोक्तलक्षणयुक्तमुपमानम्, तस्माद्यद् गवादि स्मर्यते गवयादिसादृश्यविशिष्टम्, तदुपमानस्य प्रमेयम् । यद्वा—सादृश्यमात्रं गवादिसमाश्रितम् ॥ १५३४ ॥

[ G. 446 ] ननु च प्रत्यक्षेण सादृश्यमुपलब्धम्, गौश्च स्मृत्या विषयीकृत एव, तत् किमन्यदधिकं प्रमेयमस्ति, यदधिगमादुपमानस्य प्रामाण्यं स्यात् ? इत्याह—प्रत्यक्षेणेति। यद्यपि प्रत्यक्षेण सादृश्यं गृहीतम्, गौश्च स्मृत्या विषयीकृतः, तथापि सादृश्यविशिष्टस्य गोपिण्डस्यान्यतः प्रत्यक्षात्, स्मरणाच्चासिद्धत्वात्, उपमानस्य तदधिगमे प्रामाण्यम् ॥ १५३५ ॥

अत्रैव दृष्टान्तमाह—प्रत्यक्षेऽपीति । यथा प्रदेशादौ धर्मिणि प्रत्यक्षेऽपि स्मृत्या चाग्नौ गृहीतेऽपि वह्निविशिष्टप्रदेशादिविषयत्वान्नानुमानस्याप्रामाण्यम्, अपि तु प्रामाण्यमेव, तद्वदुपमानस्यापीति ॥ १५३६ ॥

अथापि स्याद्—भवतु प्रमाणमुपमानम्, तत् कथं प्रत्यक्षादेः पृथक् प्रमाणम् ? इत्याह—न हीति । न तावत् प्रत्यक्षं युक्तम्; इन्द्रियार्थाभिसम्बन्धेनानुत्पत्तेः ।

---

1. सिद्धं—पा०, गा० ।

त्रैरूप्यानुपपत्तेश्च न च तस्यानुमानता ।
पक्षधर्मादि नैवात्र कथञ्चिदवकल्पते ॥ १५३८ ॥
प्राक्[1] प्रमेयस्य सादृश्यं न[1] धर्मत्वेन गृह्यते ।
गवये गृह्यमाणं च न गवामनुमापकम् ॥ १५३९ ॥
प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता ।
गवयश्चाप्यसम्बन्धान्न गोलिङ्गत्वमृच्छति ॥ १५४० ॥
न चाप्रमाणं तज्ज्ञानमज्ञातार्थप्रकाशनात् ।
गवयादर्शनात् पूर्वं तत्सादृश्यानवग्रहात् ॥ १५४१ ॥

तत्प्रतिविधानम्

प्रमेयवस्त्वभावेन नाभिप्रेताऽस्य मानता ।

---

नाप्यनुमानम्; त्रैरूप्याभावात् । तथा हि—अत्र पक्षधर्मः सादृश्यं वा परिकल्प्यते, परिदृश्यमानो गवयादिर्वा । तच्च सादृश्यं लिङ्गत्वेन परिकल्प्यमानं गोगतं वा कल्प्येत, गवयगतं वा—इति पक्षद्वयम् । तत्र न तावद् गवादिप्रमेयस्यस्य सादृश्यस्य लिङ्गत्वम्; गवयदर्शनात् प्राक्तनस्यागृहीतत्वात् । न चागृहीतस्य लिङ्गत्वं युक्तम्; अतिप्रसङ्गात् । गयवस्थं तर्हि सादृश्यं लिङ्गं भविष्यति, तत्र तस्य गृहीतत्वाद् ? इत्याह—गवये गृह्यमाणं च न गवामनुमापकमिति; व्यधिकरणत्वात्, काकस्य कार्ष्ण्यादिवत् ॥ १५३७–१५३९ ॥

[ G. 447 ] गवयदर्शनादूर्ध्वं तर्हि गवि गृहीतत्वादेतत्स्थं लिङ्गं भविष्यति ? इत्याह—प्रतिज्ञेति । सादृश्यस्य प्रमेयत्वान्न युक्तं तस्यैव लिङ्गत्वम् । गवयस्तर्हि लिङ्गं भविष्यति ? इत्याह—गवय इति । अत्रापि व्यधिकरणत्वान्न गवयस्य लिङ्गत्वम् ॥ १५४० ॥

प्रामाण्यं तर्हि मा भूदुपमानस्य ? इत्याह—न चाप्रमाणमित्यादि । पूर्वं गवयसादृश्यविशिष्टस्य गोरग्रहणात् । अज्ञातस्य सादृश्योपाधेर्गोः प्रकाशनमस्तीति युक्तं प्रामाण्यम् ॥ १५४१ ॥

---

१–१. पा० पुस्तके नास्ति; प्राग्गोगतं हि०—शा० ।

भूयोऽवयवसामान्ययोगः सादृश्यमस्ति चेत् ॥ १५४२ ॥
सामान्यानि निरस्तानि भूयस्ता तेषु सा कुतः ।
तैश्च योगः प्रमाणं चेदस्ति तत्प्रतिपादकम् ॥ १५४३ ॥
सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यताऽपि च ।
अभावान्यप्रमेयत्वादसाधारणवस्तुवत् ॥ १५४४ ॥
अभावपक्षे[1] [1]निक्षिप्तसामान्यार्थप्रवादिनाम् ।
असिद्धिराद्यसाध्ये च प्रतिज्ञार्थैकदेशता ॥ १५४५ ॥
एवं तु युज्यते तत्र गोरूपावयवैः सह ।
गवयावयवाः केचित् तुल्यप्रत्ययहेतवः ॥ १५४६ ॥

---

प्रमेयेत्यादिना प्रतिविधत्ते । प्रमेयाभावात् षट्प्रमाणव्यतिरिक्तप्रमाणवत्, अतो नोपमानं प्रमाणम् । भूयोऽवयवसामान्ययोगात्मकं सादृश्यमस्ति प्रमेयम्, अतो हेतुरसिद्ध इति चेत् ? तन्न; सामान्यपरीक्षायां सामान्यानां निरस्तत्वान्न तेषां भूयस्त्वम्, नापि तैर्योगोऽस्तीति नासिद्धता हेतोः । स्यादेतत्, अस्त्येव सामान्यप्रतिपादकं प्रमाणम्, अतोऽसिद्ध एव हेतुः । तत्रेदं प्रमाणम्—सामान्यं वस्तु, तथा प्रत्यक्षग्राह्यम्—इति प्रतिज्ञाद्वयम् । अभावान्यप्रमेयत्वादिति हेतुः । अभावात् प्रमेयादन्यप्रमेयस्वभावत्वादित्यर्थः । असाधाणवस्तुवदिति दृष्टान्तः । असाधारणवस्तुत्वलक्षणम् ॥ १५४२–१५४४ ॥

अभावेत्यादिना दूषणमाह । [ G. 448 ] सामान्यार्थेत्यत्रार्थशब्दः प्रमेयवचनः । प्रतिज्ञाद्वयेऽपि बौद्धानामस्वभावसामान्यवादिनामभावादन्यत्वं सामान्यस्यासिद्धमिति हेतोरसिद्धिः । प्रतिज्ञार्थैकदेशभावश्चाद्ये साध्ये वस्तुलक्षणे । तथा हि—अभावादन्यद् वस्त्वेव भवति; अभावव्यवच्छेदलक्षणत्वाद् भावस्य, तदेव शब्दान्तरेण हेतुत्वेनोपात्तम् । तदेव च साध्यमिति प्रतिज्ञार्थैकदेशता ॥ १५४५ ॥

किञ्च—स्मृतिस्वभावत्वाद् वा न प्रमाणमुपमानम्, स्मृत्यन्तरवत् । तत्र स्मृतिस्वभावत्वं प्रतिपादयन्नाह—एवमित्यादि । प्रकृत्यैवासत्यपि सादृश्याख्ये

---

१–१. अभावपक्षनि—पा०, मा० ।

तत्रास्य गवये दृष्टे स्मृतिः समुपजायते ।
असकृद् दृष्टपूर्वेषु गोरूपावयवेष्वियम् ॥ १५४७ ॥
अत एव तुरङ्गादौ तत्सादृश्येन गोमतिः[1] ।
वर्त्तते गवये दृष्टे को विशेषोऽन्यथा पुनः ॥ १५४८ ॥
विज्ञातार्थप्रकाशत्वान्न प्रमाणमियं ततः ।
प्रमाणान्तरभावस्तु कुत एव भविष्यति ॥ १५४९ ॥
अस्तु वा वस्तु सादृश्यं तत्तु सामान्यवद् गवि ।
प्रतियोगिन्यदृष्टेऽपि दृष्टमेव पुरःस्थितम् ॥ १५५० ॥
तथापि[2] स्मृतिरूपत्वं न कथञ्चिन्निवर्त्तते ।
सत्तामात्रेण विज्ञानं[3] सादृश्यं च गवात्मनि ॥ १५५१ ॥

---

वस्तुनि केचिद् गवयावयवा गोगतैरवयवैः सह तुल्यप्रत्यवमर्शविकल्पहेतवः । न सादृश्यं नामार्थान्तरम्, अन्यत्र तुल्यप्रत्यवमर्शहेतुभ्योऽवयवेभ्यः; तेभ्योऽर्थान्तरस्य बुद्धावप्रतिभासनात् । तस्माद् गवयदर्शनाद् गोगतावयवेष्वेव भूयोदर्शनबलात् स्मृतिरूपमेव तज्जायते[4] ज्ञानम्, न तु सादृश्याख्यवस्तुग्राहि । अन्यथा हि तुरगादावपि भूयोऽवयवसामान्ययोगोऽस्तीति तत्रापि गवयदर्शनाद् गवीव मतिः किं न प्रवर्त्तेत । न ह्यत्र कश्चिद्विशेषोऽस्ति; उभयत्रापि सादृश्यसद्भावात् । अन्यथेति । यद्यसकृन्न दृष्टाः स्युः । स्मृतित्वे तु नायं दोषः; यदेवासकृद् दृष्टपूर्वं तत्रैव स्मृतिर्भवति । प्रतिनियतशक्तित्वाच्च स्मृतिप्रबोधहेतूनाम् ॥ १५४६–१५४८ ॥

स्यादेतत्—भवतु स्मृतिः, तथापि स्मृतिरेव कस्मादप्रमाणम् ? इत्याह—विज्ञातेत्यादि । इयमिति स्मृतिः ॥ १५४९ ॥

अभ्युपगम्य सादृश्यस्य वस्तुत्वं परमतेनैवोपमानाप्रामाण्यमाह—अस्तु वेत्यादि । [G. 449] भवतु सादृश्यम्, वस्तुगति च सामान्यमिव सर्वात्मना परिसमाप्तम्, तथापि गवयदर्शनात् पूर्वं गवि प्रागवस्थिते[5] प्रत्यक्षेण गृह्यमाणे ततोऽव्यतिरेकात्

---

१. नो मतिः—पा०, गा० । २. तथा च—पा०, गा० ।
३. विज्ञातं—पा०, गा० । ४. जायते—पा०, गा० ।
५. पुरोऽवस्थिते—पा०, गा० ।

गवयेन तु सादृश्यमित्येवं न विनिश्चितम् ।
प्रमिणोत्युपमा[1] त्वेवं[1] वैलक्षण्यं ततः स्मृतेः ॥ १५५२ ॥
यदि नाम गृहीतं नो नाम्ना तेनैव तत् पुरा ।
गृहीतं तु स्वरूपेण यदस्यात्माऽभिधीयते ॥ १५५३ ॥
न नाम रूपं वस्तूनां यत् तस्याग्रहणे सति ।
परिज्ञातात्मतत्त्वानामप्यविज्ञानता[2] भवेत् ॥ १५५४ ॥

प्रमाणानामियत्तानिराकरणम्

एतावता च लेशेन प्रमाणत्वव्यवस्थितौ ।

---

तदपि पुरोऽवस्थितं सादृश्यं गृहीतमेव, गोस्वरूपवत् । अन्यथा व्यतिरेको न सिद्ध्यति । ततश्च गृहीतग्रहणात् स्मृतिरूपत्वान्न प्रमाणम् । अथापि स्यात् — सत्तामात्रेण पूर्वं सादृश्यं [3]गृहीतम्, एवं [4]तद्गवयेनैतत् सादृश्यं गोरित्यनेन रूपेण न गृहीतम्; उपमानं त्वनेनाकारेण प्रमिणोति, ततः स्मृतिरूपत्वमसिद्धमिति ? ॥ १५५०–१५५२ ॥

तत्राह— यदि नामेत्यादिना । यदि नाम गवयेन सादृश्यमित्यनेन नाम्ना विशिष्टं गोद्रव्यं गवयदर्शनात् पूर्वं न गृहीतम्, स्वरूपेण तु गृहीतमेव । यस्तस्य स्वभावः स गृहीत इति यावत् । किं तत्स्वरूपम् ? इत्याह—यदस्यात्माभिधीयत इति । यत्स्वरूपं तस्य गोपिण्डस्यात्मेत्यभिधीयते । तेन = स्वरूपेण स्वभावलक्षणेन तद् गृहीतमिति यावत् ॥ १५५३ ॥

यदि नाम गृहीतम्, ततः किम् ? इत्याह—न नाम रूपमित्यादि । न हि वस्तूनां स्वरूपं नाम भवति, येन तस्य नाम्नः पूर्वमग्रहणे गृहीतस्यापि वस्तुनो न ग्रहणं स्यात् । विशेषतश्च निश्चयात्मकप्रत्यक्षवादिनो न गृहीतमित्येवं न युक्तं वक्तुम् ॥ १५५४ ॥

[ G. 450 ] किञ्च—अनेन तुल्य इति ज्ञानादेतावता लेशेन प्रमाणान्तरकल्पनायामतिप्रसङ्गः स्यात् ।

---

१–१. ०मुपमानं तु—पा०, गा० । २. ०विज्ञातता—पा०, गा० । ३. गृहीतम्—पा०, गा० । ४. एतद्गवये०—पा०, गा० ।

नेयत्ता स्यात् प्रमाणानामन्यथाऽपि प्रमाणतः[1] ॥ १५५५ ॥
तरुपंक्त्यादिसन्दृष्टावेकपादपदर्शनात् ।
द्वितीयशाखिविज्ञानादाद्योऽसाविति निश्चयः ॥ १५५६ ॥
प्रमाणान्तरमासक्तं सादृश्याद्यनपेक्षणात् ।
गृहीतग्रहणान्नो चेत् समानमुपमास्वपि ॥ १५५७ ॥
गवयस्योपलम्भे च तुरंगादौ प्रवर्त्तते ।
तद्वैसादृश्यविज्ञानं यत्तदन्या प्रमा न किम् ॥ १५५८ ॥

---

"प्रत्यक्षमनुमानं च शाब्दं चोपमया सह ।
अर्थापत्तिरभावश्च षडते[2] साध्यसाधकाः[2] ॥"

इति नेयत्ता स्यात् प्रमाणानाम् ॥ १५५५ ॥

तमेवातिप्रसङ्गं दर्शयन्नाह—तरुपंक्त्यादीत्यादि। आदिशब्देन पिपीलिका दिपंक्तिग्रहणम् । तरुपंक्त्यादिदर्शनकाले प्रथमवृक्षग्रहणाद् 'आद्योऽयं वृक्षः' इति निश्चयो नोपजायते। द्वितीयवृक्षोपलब्धौ तु सत्यामाद्ये शाखिनि 'आद्योऽयं शाखी' इति योऽयं जायते निश्चयः, स प्रमाणान्तरं स्यात् । कस्मात् ? सादृश्याद्यनपेक्षणात् सादृश्यं नापेक्षत इति नोपमानमिदम् । अक्षव्यापारानपेक्षणान्न प्रत्यक्षम् । लिङ्गानपेक्षणान्नानुमानम् । शब्दनिरपेक्षत्वान्न शाब्दम् । अन्यथाऽनुपपद्यमानदृष्टश्रुतार्थानपेक्षत्वान्नार्थापत्तिः । प्रमाणप्रमेयनिवृत्त्यनपेक्षणान्नाभावः । तथा—

'अस्मात् पूर्वमिदं पश्चाद्दीर्घं ह्रस्वमिदं महत् ।
इत्येवमादिविज्ञाने [3]प्रमाऽनिष्ठा प्रसज्यते' ॥

इति वक्तव्यम् । स्मृतित्वाद् गृहीतग्रहणान्न प्रमाणान्तरमेतदिति चेत् ? समानमुपमास्वपि गृहीतग्राहित्वम् । उपमास्विति व्यक्तिभेदाद्बहुवचनम् ॥ १५५६-५७ ॥

किञ्च—यथा गवयदर्शनाद् गवि साधर्म्यज्ञानं प्रमाणान्तरं व्यवस्थाप्यते, तथा गवयदर्शनात् तुरङ्गादौ वैसादृश्यस्य विज्ञानमपि कस्मान्न प्रमाणान्तरं व्यव-

---

१. प्रसङ्गतः—जै० पुस्तके पाठः ।
२–२. 'षट् प्रमाणानि जैमिनेः'—इति षड्दर्शनसमुच्चये, न्यायकुमुदचन्द्रे च पाठः ।
३. प्रमाणानिष्ठा—जै० ।

अभावान्तर्गतं नो चेन्नैवं भावावलम्बनात् ।
अन्योऽन्याभावतायां वा समं सादृश्यबुद्धिषु ॥ १५५९ ॥
सादृश्यस्य विवेको हि यथा तत्र प्रमीयते ।
सर्वावयवसामान्यवियोगो[1] गम्यते तथा ॥ १५६० ॥
भूयोऽवयवसामान्ययोगो येनाधिगम्यते ।
सर्वावयवसामान्ययोगे तत्त्वं प्रसज्यते ॥ १५६१ ॥

नैयायिकाभिमतोपमानलक्षणम्

श्रुतातिदेशवाक्यस्य समानार्थोपलम्भने ।
संज्ञासम्बन्धविज्ञानमुपमा कैश्चिदिष्यते ॥ १५६२ ॥

---

स्थाप्येत । अभावप्रमाणान्तर्भावान्न प्रमाणान्तरमिति चेत् ? नैतद्युक्तम्; कस्मात् ? भावावलम्बनात् ; अभावस्याभावविषयत्वात् । स्यादेतत्—वैसादृश्यं हि सादृश्याभावः, तस्मादस्त्येवाभावान्तर्गतिः ? इत्याह—अन्योऽन्येत्यादि । अन्योऽन्याभावतायां सत्यां यद्यभावरूपं [ G 451 ] प्रमेयं व्यवस्थाप्यते तदा, समम् = तुल्यमेतदीदृशं प्रमेयं सादृश्यबुद्धिषु = उपमानत्वेष्टासु ॥ १५५८-१५५९ ॥

कथम् ? इत्याह—सादृश्यस्येत्यादि । यथा तत्र वैधर्म्यज्ञाने सादृश्यविवेकः प्रतीयते, तथा साधर्म्यज्ञानेऽपि सर्वावयवसामान्यवियोगो गम्यत इत्यभावान्तर्भावः स्याद्, वैसादृश्यज्ञानवत् ॥ १५६० ॥

अत्रैवोपपत्तिमाह—भूय इत्यादि । येनेति कारणोपदेशः; येन = यस्मात्, साधर्म्यज्ञाने भूयोऽवयवसामान्ययोगोऽवगम्यते, न तु सर्वावयवसामान्ययोगः, तस्मादत्राप्यन्योऽन्याभावः । अन्यथा यदि सर्वावयवसामान्ययोगः स्यात्, तदा तत्त्वम् = गोत्वम्, गवयस्य प्रसज्येत ॥ १५६१ ॥

कैश्चिदिति नैयायिकैः । त एवमुपमानस्य लक्षणमाहुः—"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" ( न्या० द० १.१.६ ) इति । प्रसिद्धं साधर्म्यम्, प्रसिद्धेन वा साधर्म्यं यस्य स प्रसिद्धसाधर्म्यो गवयः, तस्मात् = तमाश्रित्य, साध्यस्य = संज्ञासंज्ञिसम्बन्धस्य, साधनम् = सिद्धिः, उपमानम् । तथा ह्यागमा-

---

१. ०विवेको—पा०, गा० ।

तत्र दूषणम्

तत्रापि संज्ञासम्बन्धप्रतिपत्तिरनाकुला ।
तस्यातिदेशवाक्यस्य [1]जातैव श्रवणे यदि ॥ १५६३ ॥
तथा परिगृहीतार्थग्रहणान्न प्रमाणता ।
स्मृतेरिवोपमानस्य करणार्थवियोगतः ॥ १५६४ ॥
अथ सा नैव सञ्जाता तथाऽपि प्रतिपद्यते ।
सोऽयं यस्य मया संज्ञा संश्रुतेति कथं तदा ॥ १५६५ ॥
तथा ह्यश्रुततत्संज्ञो गवयस्योपलम्भने ।
तन्नाम श्रुतमस्येति न ज्ञातुं कश्चन प्रभुः ॥ १५६६ ॥

---

हितसंस्कारस्मृत्यपेक्षात् साधर्म्यज्ञानात् समाख्यासम्बन्धप्रतिपत्तिरुपमानमित्ययमेवार्थोऽन्यैरन्यथा निर्दिष्टः । गौरिव गवय इत्यतिदेशवाक्यमागमः, तेनाहितो गः संस्काराख्यो गुणः, ततो याऽतिदेशवाक्यार्थस्मृतिरुपजायतेऽरण्ये गवयदर्शनात्, तामपेक्षते यत् साधर्म्यज्ञानं तत्तथोक्तम् । समाख्या = संज्ञा, शब्द इति यावत् । तेन सहार्थस्य यः सम्बन्धः, तस्य प्रतिपत्तिरुपमानमिति तुल्य एवार्थः ॥१५६२॥

तत्रापीत्यादिना दूषणमाह—[G. 452] तत्रातिदेशवाक्यश्रवणकाले संज्ञासंज्ञिसम्बन्धप्रतिपत्तेः पूर्वमेवोत्पन्नत्वात् पश्चादुत्पद्यमानायां गृहीतग्रहणान्न प्रमाणत्वम्, स्मृतिवत् । स्यादेतद्—गृहीतग्राहित्वम्, भविष्यति प्रामाण्यं चेति कोऽत्र विरोधः ? इत्याह—करणार्थवियोगत इति । करणार्थः = साधकतमत्वम्, अनिष्पादिते कर्मणि प्रवृत्त्या ॥ १५६३–१५६४ ॥

स्यादेतत्—पूर्वं संज्ञासम्बन्धप्रतिपत्तिर्न जातैव, ततो गृहीतग्रहणादित्यसिद्धो हेतुः ? इत्याह—अथ सेति । यदि पूर्वं न सञ्जाता संज्ञासम्बन्धप्रतिपत्तिरभविष्यत्, तदाऽयमसौ गवयो यस्य मया पूर्वं संज्ञा श्रुता—इत्येवमाकारा प्रतिपत्तिर्नोदापिष्यत ॥ १५६५ ॥

अत्रैवोपपत्तिमाह—तथा हीति ॥ १५६६ ॥

---

१. तदैव—पा०, गा० ।

अविद्धकर्णमतम्

उपयुक्तोपमानश्चेत् तुल्यार्थग्रहणे[1] सति।
विशिष्टविषयत्वेन सम्बन्धमवगच्छति ॥ १५६७ ॥
आगमाद्धि स सम्बन्धं वेत्ति सामान्यगोचरम्।
विशिष्टविषयं तं तु विज्ञानात्त्वुपमाश्रयात् ॥ १५६८ ॥

तत्प्रतिविधानम्

नन्वन्यत्र न संज्ञायाः सम्बन्धस्यावबोधने।
तस्या अर्थान्तरे[2] बोधो युज्येतेऽतिप्रसङ्गतः ॥ १५६९ ॥
न हि चित्राङ्गदे कश्चित् तन्नामग्रहणे सति।
कालान्तरेण तं शब्दं वेत्ति चारुकिरीटिनि ॥ १५७० ॥
तस्मात् प्राग् यत्र तेनेदं विकल्पप्रतिबिम्बके।
ज्ञातं नाम बहिर्बुद्ध्या सामान्यमिति संज्ञिते ॥ १५७१ ॥

---

अविद्धकर्णस्त्वाह—"आगमात् सामान्येन प्रतिपद्यते, विशेषप्रतिपत्तिस्तूपमानात्" (       ) इति। अतस्तन्मतमाशङ्कते— उपयुक्तोपमान इति। उपयुक्तमुपमानमतिदेशवाक्यं यस्य स तथोक्तः ॥ १५६७ ॥

अस्यैवार्थं द्वितीयेन श्लोकेनाचष्टे आगमाद्धीति। विशिष्टो विषयो गवयः ॥ १५६८ ॥

नन्वित्यादिना प्रतिविधत्ते। [G. 553] 'न' इत्यस्य 'युज्यते' इत्यनेन सम्बन्धः। न ह्यन्यत्र संज्ञासम्बन्धप्रतिपत्तौ सत्यां तस्याः संज्ञाया अर्थान्तरे प्रतिपत्तिर्युक्ता; अतिप्रसङ्गात् ॥ १५६९ ॥

तमेवातिप्रसङ्गं दर्शयन्नाह—न हीति। अङ्गदः = कटकाख्यमाभरणम्। स[3] चित्रोऽङ्गदो यस्यासौ तथोक्तः। न हि चित्राङ्गदो यः स देवदत्त इत्युक्तः कश्चित् कालान्तरेण[4] तं चित्राङ्गदशब्दं चारुकिरीटिनि यज्ञदत्ते प्रतिपद्यते। किरीटम् = मुकुटम्, चारु च तत् किरीटं यस्यास्ति स तथोक्तः। तस्मान्ना

---

१. ०तुल्यत्व०—पा०, गा०। २. ह्यर्थान्तरे—पा०, गा०।
३. पा०, गा० पुस्तकयोर्नास्ति। ४. कालान्तरे—पा०, गा०।

गवयस्योपलम्भेऽपि तत्रव प्रतिपद्यते ।
दृश्यकल्पाविभागज्ञो बाह्य इत्यभिमन्यते ॥ १५७२ ॥
एवं च प्रतिपत्तव्यं यत्स्वलक्षणगोचराः ।
विकल्पा ध्वनयश्चापि विस्तरेण निराकृताः ॥ १५७३ ॥
तेषां तद्गोचरत्वेऽपि भवत्येवानुमैव वा ।
त्रिरूपलिङ्गजन्यत्वमस्या[1] एवं[1] प्रतीयते ॥ १५७४ ॥
यो गवा सदृशोऽसौ हि गवयश्रुतिगोचरः ।
संकेतग्रहणावस्थो बुद्धिस्थो गवयो यथा ॥ १५७५ ॥
बुद्धिस्थोऽपि न चेत् तस्यामवस्थायां भवेदसौ ।
क्रियते समयः कस्मिन्नयं च सदृशो गवा ॥ १५७६ ॥

---

भूदतिप्रसङ्ग इति यत्रैवार्थे विकल्पसमारोपिते बाह्यार्थव्यवसायिन्या बुद्ध्या गृहीतं नाम = संज्ञा, गवयोपलम्भेऽपि तत्रैव तन्नाम प्रतिपद्यते, न तु बाह्ये स्वलक्षणे गवयाख्ये । तदेव च विकल्पप्रतिविम्बकं सामान्यमिति व्यवह्रियते, तत् परपरिकल्पितम्[2]; तस्य निराकृतत्वात् । कथं तर्हि बाह्यस्वलक्षणाभिमानः ? इत्याह—दृश्येत्यादि ॥ १५७०-१५७२ ॥

अथ स्वलक्षणे शब्दादिप्रवृत्तौ को विरोधः ? इत्याह—एवमित्यादि । यतः शब्दार्थपरीक्षायां विस्तरेण स्वलक्षणगोचरत्वं शब्दानां विकल्पानां च निराकृतम्, तस्माद् विकल्पसमारोपित एव शब्दार्थः ॥ १५७३ ॥

भवतु वा तेषां विकल्पशब्दानां स्वलक्षणगोचरत्वम्, तथाप्यनुमान [G. 454] एवान्तर्भावान्नोपमानं प्रमाणान्तरम् । कथं त्रिरूपलिङ्गजत्वमन्तरेणास्यानुमानेऽन्तर्भाव इत्याशङ्क्य त्रिरूपलिङ्गजन्यत्वं प्रतिपादयन्नाह—त्रिरूपेत्यादि । गोसदृशत्वं हेतुः, गवयश्रुतिगोचरत्वं साध्यधर्मः, सङ्केतग्रहणकाले विकल्पबुद्धिप्रतिभासी बुद्धिस्थो गवयो दृष्टान्तः । दृश्यमानो गवयो धर्मी ॥ १५७४-१५७५॥

स्यादेतत्—गौरिव गवय इत्येतस्मिन् सङ्केतकाले गवयो बुद्धौ न समारूढ एव, ततश्चासिद्धो दृष्टान्तः ? इत्याह—बुद्धिस्थोऽपीत्यादि । न केवलं न चक्षुर्गो-

---

१–१. मस्य चैवं—पा०, गा० ।     २. परिकल्पितम्—पा०, गा० ।

न सम्बन्ध्यतिरिक्तश्च सम्बन्धोऽस्तीति साधितम्।
प्रागेव समये शब्दो गृहीतः श्रोत्रचेतसा ॥ १५७७ ॥
चक्षुषा दृश्यते चासावग्रतोऽस्थितः पशुः।
पृथग्विज्ञातयोरेषा युक्ता न घटना प्रमा ॥ १५७८ ॥
गृहीतप्रतिसन्धानात् सुगन्धिमधुरादिवत्[1]।
तन्नामयोगसंवित्तिः स्मार्त्ततां नातिवर्त्तते ॥ १५७९ ॥

---

चर इत्यपिशब्दार्थः। यदि बुद्धौ गोसारूप्यानुगतं न किञ्चित् प्रतिभासेत, तदाऽयं सदृशो गवेति किमाश्रित्य सङ्केतः क्रियेत, क्रियते च समयः, तस्माद् बुद्धिस्थो गोसारूप्यानुगत आकारः कश्चित् समयकाले [2]प्रतिभासेत—इत्यभ्युपगन्तव्यम् ॥ १५७६ ॥

एवं तावच्छब्दार्थयोः सम्बन्धं प्रमेयमुपमानस्याभ्युपगम्य गृहीतग्रहणादनुमानान्तर्भावाच्चाप्रामाण्यमस्य प्रतिपादितम्। साम्प्रतं सम्बन्धिव्यतिरिक्तः सम्बन्धोऽपरो नास्ति, तौ च सम्बन्धिनौ प्रमाणान्तरेणागृहीतौ, तथा हि—समयकाले श्रोत्रज्ञानेन शब्दो गृहीतः, पश्चाच्च गवयश्चक्षुषा पुरोवर्त्ती गृहीतः, तत् किमपरं प्रमेयमस्ति, येनोपमानस्य प्रामाण्यं स्यादिति। एतत् प्रतिपादयन्नाह—न सम्बन्धीत्यादि।

अनेन [3]गृहीतग्राहित्वादप्रामाण्यमाह—साधितमिति। गुणपदार्थपरीक्षायाम्। स्यादेतत्—यद्यपि पृथक्सम्बन्धिनौ गृहीतौ श्रोत्रादिचेतसा, तयोश्च घटनोपमया क्रियते, तस्माद् घटनया प्रामाण्यमुपमानस्य स्याद्? इत्याह—पृथगित्यादि। सुगन्धिमधुरादिवदिति। सप्तम्यर्थे वतिः। यथा 'यदेतद् वस्त्वनुभूयमानं तन्मधुरं तत्सुगन्धि' [G. 455] इत्यादौ विषये गुण[?]योजनात्मकं ज्ञानं न प्रमाणम्, तथेदमपि न भवितुमर्हतीत्यर्थः। तत् तः स्मार्त्ति नामयोगसंवित्तिः = संज्ञासम्बन्धज्ञानम्, स्मार्त्ततां नातिवर्त्तते यथोक्तनीत्या ॥ १५७७–१५७९ ॥

---

१. मधुरत्ववत्—पा०, गा०।
२. प्रतिभासते—गा०।
३. गृहीतग्रहणाद०—पा०, गा०।

अनन्तोपायजन्याश्च समाख्यायोगसंविदः ।
साधर्म्यमनपेक्ष्यापि जायन्ते नरपादिषु ॥ १५८० ॥
सितातपत्रापिहितब्रध्नपादो नराधिपः ।
तेषां मध्य इति प्रोक्त[1] उपदेशविशेषतः ॥ १५८१ ॥
कालान्तरेण तद्दृष्टौ तन्नामास्येति या मतिः ।
सा तदाऽन्या प्रमा प्राप्ता-साधर्म्याद्यनपेक्षणात् ॥ १५८२ ॥
अन्ये[2] प्रमान्तरास्तित्वं [3]साधयन्त्यनुमाबलात् ।
प्रत्यक्षमनुमाभिन्नप्रमाणान्तरसङ्गतम् ॥ १५८३ ॥

---

स्यादेतत्—न हि संज्ञासम्बन्धः साधर्म्यद्वारेण कचित् क्रियते, किं तर्हि ? साक्षात् संज्ञिनमुपदर्श्य 'अयं गौः' इत्येवं क्रियमाणो दृष्टः, न तु परोक्षविषयः ? इत्याह—अनन्तेत्यादि ।

समाख्यायोगसंविद इति । संज्ञासम्बन्धज्ञानानि । नरपादिष्विति । राजादिषु ॥ १५८० ॥

तदेवानन्तोपायजन्यत्वं प्रदर्शयितुमुदाहरणमाह—सितातपत्रेत्यादि । यथा हि कश्चित् कञ्चिद् ब्रूते—'गच्छ भ्रातरमुना कार्येण, पश्य नराधिपतिं बहुभिर्गजतुरगाधिरूढैः पुरुषैः सह गच्छन्तम्' इति । स प्रत्याह—'कस्तेषां मध्ये नराधिपतिः ?' इति । स कथयति—'सितातपत्रेणापिहिता ब्रध्नपादाः = आदित्यरश्मयो यस्य स तेषां मध्ये नराधिपतिः' इति । तस्य तमुपदेशं गृहीत्वा गतस्य दृष्ट्वा तं यथोक्तविशेषणविशिष्टं राजानम् 'अयमसौ नराधिपतिर्नाम' इति या बुद्धिरुत्पद्यते, साऽपि भवन्मतेन प्रमाणान्तरमापतितम् । कस्मात् ? सादृश्याद्यनपेक्षणात् । अनेन प्रमाणषट्कानन्तर्भावं दर्शयति ॥ १५८१-१५८२ ॥

अविद्धकर्णस्तु—"द्वे एव प्रमाणे, स्वलक्षणसामान्यलक्षणाभ्यां चान्यत् प्रमेयं नास्ति" ( ) इत्येतद्विघटनार्थं प्रमाणयति—"प्रत्यक्षमनुमानव्यतिरिक्तप्रमाणान्तरसद्वितीयम्; प्रमाणत्वात् । अनुमानं वा प्रत्यक्षव्यतिरिक्तप्रमाणान्तरसद्वितीयं प्रमाणत्वात्, प्रत्यक्षवत् । तथा स्वलक्षणं सामान्यलक्षण-

---

१. शबरस्वामिनेति शेषः । २. अन्यः-पा०, गा० । ३. साधयत्य०-पा०, गा० ।

अनुमावत् प्रमाणत्वादनुमाऽप्येवमेव च ।
तेषामप्रतिबन्धोऽयं[1] हेतुर्बाधाप्रकाशनात् ॥ १५८४ ॥
चतुष्ट्वं च प्रमाणानां व्याहन्येतैवमेव ते ।
यस्तत्र[2] परिहारस्ते स एवात्र भविष्यति ॥ १५८५ ॥

## ३. अर्थापत्तिविचारः

### अर्थापत्तिस्वरूपम्

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवन् ।
अदृष्टं कल्पयत्यन्यं साऽर्थापत्तिरुदाहृता ॥ १५८६ ॥

---

व्यतिरिक्तप्रमेयार्थान्तरसद्वितीयम्; प्रमेयत्वात्, सामान्यलक्षणवत् । सामान्यलक्षणं वा स्वलक्षणव्यतिरिक्तप्रमेयान्तरसद्वितीयम्; प्रमेयत्वात्, स्वलक्षणवत्" ( ) इति । एतदेवाह—अन्य इति । [G 456] सङ्गतम् = सम्बद्धम्, सद्वितीयमिति यावत् । उपलक्षणमेतत् प्रमेयान्तरसाधनस्यापि बोद्धव्यम् । साध्यविपक्षे हेतोर्बाधकस्याप्रकाशनान्न साध्यसाधनयोः प्रतिबन्ध उपदर्शितः—इत्यनैकान्तिकाः सर्व एव हेतवः; सन्दिग्धविपक्षव्यावृत्तिकत्वात् । किञ्च—'प्रत्यक्षानुमानोपमानशाब्दानि चत्वारि प्रमाणानि' इति सङ्ख्यानियमो व्याहन्येत; अनेनैव प्रकारेण प्रमाणान्तरसद्भावात् । तथा हि शक्यमिदमभिधातुम्—प्रत्यक्षमनुमानोपमानशाब्दव्यतिरिक्तप्रमाणान्तरसद्वितीयम्; प्रमाणत्वात्, अनुमानवदिति । यच्चापि प्रमेयत्रैविध्यमिष्टम्—सामान्यम्, विशेषः, सामान्यविशेषवानिति, तदपि व्याहन्येत; तेनैव प्रकारेण प्रमेयान्तरसाधनसम्भवात् । योऽत्र भवतः परिहारः सोऽस्माकमपि भविष्यतीत्यलं बहुना ॥ १५८३–१५८५ ॥

इत्युपमानविचारः

---

अर्थापत्तिमधिकृत्याह—प्रमाणषट्केत्यादि । यत्र देशकालादौ प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यभावलक्षणैः षड्भिः प्रमाणैः परिच्छिन्नोऽर्थोऽन्यथा नोपपद्यते, यद्येवम्भूतोऽर्थो न भवेत् परोक्ष[3] इत्येवं या परोक्षार्थविषया कल्पना

---

१. नैवम०–पा०, गा० । २. यत्तत्र–पा०, गा० । ३. पा०, गा० पुस्तकयोर्नास्ति

### तदुदाहरणादिप्रदर्शनम्

तत्र प्रत्यक्षतो ज्ञाताद् दाहाद् दहनशक्तिता ।
वह्नेरनुमितात् सूर्ये यानात् तच्छक्तियोगिता ॥ १५८७ ॥
शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः ।
अपूर्वास्ताश्च गम्यन्ते सम्बन्धग्रहणादृते ॥ १५८८ ॥
न चासां पूर्वसम्बन्धो न वाऽन्यो गृह्यतेऽधुना ।
कार्यैः सह यतः स्यातां पक्षधर्मान्वयाविह ॥ १५८९ ॥

---

साऽर्थापत्तिः प्रमाणम् । उदाहृतेति । शबरस्वामिना । यथोक्तम्—"दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यदृष्टकल्पना । तद्यथा—जीवति देवदत्ते गृहादर्शनेन बहिर्भावकल्पना" ( मी० द० शा० भा० १.१.५ ) इति । दृष्टः = शाब्दव्यतिरिक्तप्रमाणपञ्चकाधिगतः, श्रुतः = शाब्दप्रमाणावगतः ॥ १५८६ ॥

तत्र षट्प्रमाणपूर्विकाया अर्थापत्तेर्यथाक्रममुदाहरणान्याह—तत्रेत्यादि । [G. 457] तत्र प्रत्यक्षपूर्विकाऽर्थापत्तिर्यथा—प्रत्यक्षेण दाहमनुभूय वह्नेर्दाहशक्तिकल्पना । अनुमानपूर्विका यथा—देशान्तराप्त्याऽनुमिताद् गमनात् सूर्यस्य गमनशक्तियोगकल्पना । शक्तयश्च सर्वदा सर्वपदार्थानां कार्यार्थापत्तिसाधना इति । इयमप्यर्थापत्तिः कदाचित् प्रत्यक्षपूर्विकैव, यदा प्रत्यक्षेण कार्यमुपलभ्य कारणस्य शक्तिरवगम्यते । यदा त्वनुमानादिना कार्यमवगम्य कारणशक्तिरवगम्यते, तदाऽनुमानादिपूर्विका भवति कार्यार्थापत्तिः । कार्यस्यान्यथाऽनुपपत्तिः साधनम् = प्रमाणं यासां तास्तथोक्ताः । न च कारणशक्तिः पूर्वमेव गृहीता—इति शक्यं वक्तुम्; यस्मादपूर्वास्ताश्च शक्तयो गम्यन्ते सर्वदैव । तेनाधिगतार्थाधिगन्तृत्वं नास्तीति भवत्येव प्रामाण्यम् । तत्रैतत् स्यात्—कार्येण लिङ्गेनानुमेयाः शक्तयः, नार्थापत्तिप्रमाणगम्याः ? इत्याह—सम्बन्धग्रहणादृत इति । यस्मात् सम्बन्धग्रहणमन्तरेण गम्यन्ते तस्मान्नानुमेयाः ॥ १५८७-१५८८ ॥

तमेव सम्बन्धग्रहणाभावं प्रतिपादयन्नाह—न चेति । न चासां शक्तीनामनुमानकालात् पूर्वं कार्यैः सह सम्बन्धो गृहीतः, यथा वह्निधूमयोर्महानसादौ; तासामतीन्द्रियत्वात् । अनेनान्वयाभाव उक्तः । "नाप्यधुनाऽनुमानकाले गृह्यते

श्रोत्रादिशक्तिपक्षे वा यावान् हेतुः प्रयुज्यते।
सर्वोऽसावाश्रयासिद्धो धर्म्यसिद्धेः प्रसज्यते ॥ १५९० ॥
पीनो दिवा न भुंक्ते चेत्येवमादिवचःश्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ १५९१ ॥
न रात्र्यादिपदार्थश्च दिवावाक्ये च गम्यते।
न दिवादिपदार्थानां संसर्गो रात्रिभोजने ॥ १५९२ ॥
न भेदो येन तद्वाक्यं तस्य स्यात् प्रतिपादकम्।

---

सम्बन्धः, अतीन्द्रियत्वादेव। अनेन पक्षधर्माभावः उक्तः। न हि कारणाधार-शक्तीनां कार्यं धर्मः; अयुक्तेः ॥ १५८९ ॥

किञ्च—यदा श्रोत्रादिगताः शक्तयः पक्षीक्रियन्ते, तदा श्रोत्रादिशक्तिपक्षे यावान् हेतुः प्रयुज्यते शक्तिसाधनाय सर्वोऽसौ हेतुराश्रयासिद्धः स्यात्; आश्रयभूतानां शक्तीनामसिद्धत्वात्। तस्मात् कार्यार्थापत्तिसाधनाः सर्वाः शक्तयो नानुमेयाः ॥ १५९० ॥

[ G. 458 ] तत्र शाब्दप्रमाणपूर्विकार्थापत्तिर्यथा—'पीनो देवदत्तोऽकृत-रसायनो दिवा न भुङ्क्ते' इत्येवमादिवचनश्रवणाद् 'अर्वाग्रात्रौ भुङ्क्ते' इत्येवमा-द्यर्थकल्पना ॥ १५९१ ॥

स्यान्मतम्—'पीनो[1] दिवा न भुंक्ते' इत्यस्यैव वाक्यस्यायमर्थः प्रतीयते—रात्रौ भुङ्क्ते इति? अत आह—न रात्र्यादिपदार्थश्चेति। द्विविधो हि वाक्यार्थो भवन्[2] भवेत्—यदुत संसर्गः, भेदश्च। तत्र संसर्गः परस्परं पदार्थानामभेदः क्षीरोदकवत्। भेदश्च व्यवच्छेद्यव्यवच्छेदकभावेनावस्थानम्। यद्वा—नियत-साध्यसाधनसम्बन्धः संसर्गः। भेदः = विजातीयव्यावृत्तिः। सोऽयं द्विप्रकारोऽपि वाक्यार्थो न सम्भवति। तथा हि—दिवादीनां पदानां येऽर्था दिवादयः, तेषां न संसर्गरूपो रात्रिभोजनार्थः; अत्यन्तविलक्षणत्वात्। नापि भेदरूपः, दिवादिपदा-नामरात्र्यादिव्यवच्छेदेनाप्रवृत्तेः।

---

१. पीनो देवदत्तो—पा०, गा०। २. पा०, गा० पुस्तकयोर्नास्ति।

अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ॥ १५९३ ॥
तस्माद् वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ।
तेनानागामिकत्वेऽपि यत् तद्वाक्यं प्रतीयते ॥ १५९४ ॥
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद् भवेत् ।
न त्वनुच्चरिते वाक्ये प्रत्यक्षं तावदिष्यते ॥ १५९५ ॥
नानुमानं न हीदं हि दृष्टान्तेन सह क्वचित् ।
यदि त्वनुपलब्धेऽपि सम्बन्धे लिङ्गतेष्यते ॥ १५९६ ॥
तदुच्चारणमात्रेण सर्ववाक्यगतिर्भवेत् ।
सम्बन्धरहितत्वेन नान्यतस्तद् विशिष्यते ॥ १५९७ ॥

---

अथ मतम्—'रात्रौ भुङ्क्ते' इत्ययमपरो द्वितीयोऽर्थो दिवादिवाक्यस्यैव ? इत्याह—अन्यार्थेति । दिवादिभोजनप्रतिषेध एवोपक्षीणत्वान्न शक्नोत्यपरं तदैव रात्र्यादिभोजनप्रतिपादनं कर्तुमिति न द्वितीयार्थकल्पना । तस्माद् वाक्यान्तरस्यायमर्थः—रात्रौ भुङ्क्त इति । बुद्धिस्थेनेति । अशाब्दत्वं दर्शयति—अनागमित्वेऽपीति । अशाब्दत्वेऽपि । यथोक्तनीत्या शाब्दत्वाभावस्य प्रतिपादितत्वात् । यत्तत् 'रात्रौ भुङ्क्ते' इत्येतद् वाक्यं प्रतीयते, तस्य वाक्यस्य ग्राहकं प्रमाणं वक्तव्यम् । [ G 459 ] यत् प्रमाणं प्रत्यक्षादीनामन्यतमद् भवेत् । न च भवति, तस्मात् प्रमाणान्तरमेवेदमिति भावः ।

तदेव प्रत्यक्षादीनामन्यतमत्वमस्य निराकुर्वन्नाह—न त्वित्यादि । तत्रानुच्चारितस्य रात्रिभोजनवाच्यस्य न युक्तम्; प्रत्यक्षत्वमश्रूयमाणत्वात् । नाप्यनुमानत्वम्; सम्बन्धाभावात् । तथा हि—'नेदं रात्रिभोजनवाक्यं तेन दिवावाक्येन सह क्वचिद् दृष्टम्, येन सम्बन्धो भवेत् । नाप्यन्यल्लिङ्गमस्ति ।

अथापि स्यात्—अनुपलब्धेऽपि सम्बन्धे लिङ्गत्वमस्य भविष्यति ? इत्याह—यदीति । यदि ह्यसिद्धसम्बन्धस्य लिङ्गत्वं भवेत्, तदा दिवावाक्योच्चारणादशेषवाक्यप्रतिपत्तिर्भवेत्, न रात्रिभोजनवाक्यस्यैव । कस्मात् ? यतः सम्बन्धरहितत्वे सत्यन्यतो वाक्याद् रात्रिभोजनवाक्यं न विशिष्यते; सम्बन्धाभावात्, सर्वमेव वाक्यमविशिष्टमिति यावत् ॥ १५९२–१५९७ ॥

गवयोपमिता या गौस्तज्ज्ञानग्राह्यशक्तता ।
उपमाबलसम्भूतसामर्थ्येन प्रतीयते ॥ १५९८ ॥
अभिधा नान्यथा सिद्ध्येदिति वाचकशक्तताम् ।
अर्थापत्त्याऽवगम्यैव तदनन्यगतेः पुनः ॥ १५९९ ॥
अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ।
अनित्यो हि न संकेतव्यवहारानुवृत्तिमान् ॥ १६०० ॥
प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।
गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह वर्णिता ॥ १६०१ ॥

---

उपमानपूर्विकामाह—गवयेत्यादि । गवयेनोपमितस्य गोपिण्डस्य येयमुपमानज्ञानेन ग्राह्यशक्तता सा उपमानबलेन यत्सम्भूतं सामर्थ्यमर्थापत्तिस्तेन मीयते ॥ १५९८ ॥

अर्थापत्तिपूर्विकामाह—अभिधेत्यादि । अभिधानम् = अभिधा, अर्थप्रतिपादनमिति यावत् । सा शब्दस्य अन्यथा = वाचकशक्त्या विना, न सिद्ध्येदित्येवं बोधकशक्तताम्, अवगम्य = बुद्ध्वा, तदनन्यगतेः = तस्यावाचकशक्तेरन्या[1] गतिर्नास्ति शब्दनित्यत्वमन्तरेणेति, पुनरर्थापत्त्यन्तरेणैव शब्दस्य नित्यत्वनिश्चयः । कथं पुनर्नित्यत्वमन्तरेणाभिधा न सिद्ध्यति ? इत्याह—अनित्यो हीत्यादि । तथा हि—सङ्केतकाले दृष्टस्य यदि व्यवहारकालेऽनुवृत्तिर्न भवेत्, तदा संकेतकरणमनर्थकमेव स्यात्; व्यवहारार्थत्वात् तस्य। यश्चानुवर्त्तते व्यवहारकाले शब्दः, तेन सह पूर्वं सम्बन्धस्यागृहीतत्वात्। अथ वा—तदनन्यगतेरिति । [G. 460] तस्य = व्यवहारकालभाविनः शब्दस्य, संकेतकालदृष्टाच्छाब्दादनन्यगतेरव्यतिरेकनिश्चयात्। कथमव्यतिरेकनिश्चयः ? इत्याह—अनित्यो हीत्यादि ॥१५९९-१६००॥

अभावपूर्विकामर्थापत्तिमाह—प्रमाणेत्यादि । प्रत्यक्षादेः प्रमाणस्याभावेन = निवृत्त्या निर्णीतः = निश्चितो यश्चैत्राभावः; तेन विशेषिताद् गेहात्, 'इह गेहे चैत्रो नास्ति' इत्यतः, चैत्रस्य जीवने सति, या बहिर्भावसिद्धिः = 'बहिश्चैत्रो विद्यते' इत्येवंनिश्चयरूपा, इह = भाष्ये, वर्णिता = शबरस्वामिना, तदन्यासा-

---

१. तस्याबोधकशक्तेः—पा०, गा०।

तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् ।
पक्षधर्माद्यनङ्गत्वाद् भिन्नैषाऽप्यनुमानतः ॥ १६०२ ॥
बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।
प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ १६०३ ॥
जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते ।
तत्संवित्तिर्बहिर्भावं न चाबुद्ध्वोपजायते ॥ १६०४ ॥
गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न साधकः ॥ १६०५ ॥

अर्थापत्तौ दूषणम्

तत्र शक्तातिरेकेण न शक्तिर्नाम काचन ।

---

मर्थापत्तीनामुपलक्षणार्थमुदाहृतेति यावत् । यथा—जीवति देवदत्ते गृहेऽदर्शनेन बहिर्भावस्यादृष्टकल्पनेति[1] । इदमभावपूर्विकाया अर्थापत्तेरुदाहरणम् !

प्रायेणास्यास्तार्किकैरनुमानत्वमिष्टमिति तन्निराकरणमाह-- पक्षेत्यादि । यतः पक्षधर्मादयोऽस्या नाङ्गं न कारणम्; अतो भिन्नैवैषाऽनुमानात्, प्रत्यक्षवत् । तथा हि—बहिर्देशेन विशिष्टोऽर्थश्चैत्रादिः, चैत्रादिना वा विशिष्टो बहिर्देशः पक्षो[2] भवन् भवेत्[2] । तस्मिन् द्विविधेऽपि प्रमेये सति, गृहे चैत्रादेरर्थस्याभावो यः, स[3] कथं व्यधिकरणः सन् पक्षधर्मो[4] भवेत् । नैव भवेदित्यभिप्रायः ।

अपि च गृहाभावः पक्षधर्मत्वेन कल्प्यमानः कदाचिज्जीवतो देवदत्तस्य यो गृहाभावः स कल्प्येत, सामान्येन वेति पक्षद्वयम् । तत्र प्रथमे पक्षे दोषमाह—जीवत इत्यादि । तत्संवित्तिरिति । तस्य = जीवतो देवदत्तस्य संवित्तिः = निश्चयः, सा देवदत्तस्य बहिर्भावमबुद्ध्वा न जायते । अनेन हेतोरसिद्धताम्, सिद्धौ वा सिद्धसाध्यतामाह । द्वितीयेऽपि पक्षे हेतोरनैकान्तिकत्वम्; मृतेष्वपि देवदत्तादिषु तेषां [G. 461] गृहाभावस्य दृष्टत्वादिति दर्शयन्नाह—गेहाभावस्त्विति । विद्यमानत्वेति । जीवत्ता ॥ १६०१-१६०५ ॥

एवं षट्प्रकाराऽर्थापत्तिः । तत्र चतसृभिः शक्तिः प्रमेया, एकया शब्द-

---

१. [ ]०स्यादृष्टस्य कल्पनेति—पा०, गा० । २–२. पा०, गा० पुस्तकयोर्नास्ति ।
३. पा०, गा० पुस्तकयोर्नास्ति । ४. हेतुरित्यर्थः ।

याऽर्थापत्त्याऽवगम्येत शक्तश्चाध्यक्ष एव हि ॥ १६०६ ॥
दाहादीनां तु यो हेतुः पावकादिः समीक्ष्यते ।
असंशयाविपर्यासं शक्तिः काऽन्या भवेत् ततः ॥ १६०७ ॥
व्यतिरिक्ते तु कार्येषु तस्या एवोपयोगतः ।
भावोऽकारण एव स्यादुपयोगे न भेदिनी ॥ १६०८ ॥
अर्थक्रियासमर्थं हि स्वरूपं शक्तिलक्षणम् ।
एवमात्मा च भावोऽयं प्रत्यक्षाद् व्यवसीयते ॥ १६०९ ॥

---

नित्यता, अपरया बहिर्व्यवस्थितं द्रव्यम् । तत्रेत्यादिना दूषणमाह । अत्र लक्षणं तावदयुक्तम् । तथा हि— तेनादृष्टेन विना दृष्टश्रुतादिकोऽर्थो नोपपद्यत इत्यदृष्टकल्पना । तत्रेदं निरूप्यते—किं तेनादृष्टेन सह क्वचिद् दृष्टश्रुतस्यार्थस्य सम्बन्धो दृष्टः ? अथ न ? यदि तु[1] दृष्टः, अनुमानत्वप्रसङ्गः; सम्बन्धदर्शनोपायत्वात् । अथ न संसिद्धः, एवं तर्हि वह्नेर्दाहकत्वाददाहकत्वमपि कल्पनीयम्; अदृष्टसम्बन्धत्वेनाविशेषात् ।

अथ मतम्—अदाहकत्वेन सह वह्नेरदृष्टत्वान्नादाहकत्वं कल्प्यत इति ? एवं तर्हि दाहकत्वमपि न कल्पनीयम्; तेनापि सह क्वचिददृष्टत्वात् । तस्मात् सम्बन्धे सिद्धे सति सम्बन्धिनमविनाभाविनं दृष्ट्वा द्वितीयस्य सम्बन्धिनः कल्पना युक्ता । एवं च कल्प्यमाने सम्बन्धदर्शनोपायत्वादनुमान एवान्तर्भावः स्यात् । उदाहरणान्यप्ययुक्तानि ।

तत्र तावत् प्रत्यक्षादिप्रसिद्धस्यार्थस्य चतसृभिरर्थापत्तिभिः शक्तिः प्रतीयत इत्यत्र साधारणं दूषणमाह—तत्र शक्तातिरेकेणेत्यादि । यतः शक्तिरन्या न वस्तुनः सकाशात्, स च शक्तः पदार्थः प्रत्यक्ष एवेति गृहीतग्रहणादेव न प्रमाणम् । अध्यक्षग्रहणमुपलक्षणम् ॥ १६०६ ॥

दाहादीनामित्यादिना प्रत्यक्षपूर्विकाया अर्थापत्तेरुदाहरणस्य विशेषेण दूषणमाह—असंशयाविपर्यासमिति । क्रियाविशेषणमेतत् । अथ व्यतिरिक्ता शक्तिरभ्युपगम्यते ? तदा कार्येषु शक्तेरेवोपयोगाद् भावस्याकारकत्वं प्राप्नोति. ततश्चावस्तुत्व-

---

1. न—जै० ।

अन्यलक्षणसंसिद्धौ प्रमाणं न च किञ्चन ।
ज्ञातेनापि न तेनार्थो रूपात् तत्कार्यसिद्धितः ॥ १६१० ॥
कार्यार्थापत्तिगम्यं चेदपरं शक्तिलक्षणम् ।
न कार्यस्यान्यथाभावाद् भवत्येतद्धि भावतः ॥ १६११ ॥
जलादिव्यतिरिक्तो हि सामर्थ्येन प्रयोजनम् ।
दाहादौ तत् किमन्येन सामर्थ्येन प्रयोजनम् ॥ १६१२ ॥

---

[G. 462] प्रसङ्गः; अर्थक्रियाकारित्वलक्षणत्वाद् वस्तुत्वस्य । अथ मा भूदवस्तुत्व-प्रसङ्ग इत्युपयोगोऽङ्गीक्रियते ? तदा तस्मिन्नुपयोगेऽङ्गीक्रियमाणे न तर्हि सा शक्ति-र्भेदिनी = भिन्ना । कस्मात् ? येनार्थक्रियासमर्थं यद्रूपम् = स्वभावः, सैव शक्तिः, नान्यदपरं शक्तिलक्षणम् । यस्तु भावस्य शक्तिरिति व्यतिरेकिवद् व्यपदेशः, स भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां भाव एव तथोच्यते ॥ १६०७-१६०९ ॥

स्यादेतत्—नार्थक्रियाकारित्वं शक्तेर्लक्षणम्, किं तर्हि ? अन्यदेवेत्याह—अन्येत्यादि । अन्यस्य शक्तिलक्षणस्य संसिद्धौ न किञ्चित् प्रमाणमस्ति यत्प्रमा-णमभावात् सर्वसामर्थ्यविरहलक्षणादेनां शक्तिं विशेषयेत् । न च तेन तथाभूतेनार्थ-क्रियार्थिनां ज्ञातेन किञ्चित् प्रयोजनमस्ति । रूपात् = उपयोगिनो भावस्य स्वभा-वादेव, अर्थक्रियासिद्धेः । यथोक्तम्—

"अर्थक्रियासमर्थस्य विचारैः किं तदर्थिनाम्[1] ।
शण्ढस्य रूपे[2] वैरूप्ये[2] कामिन्याः किं परीक्षया" ॥
( प्र० वा० ३. २१०–२११ ) इति ॥ १६१० ॥

स्यादेतत्—अस्त्येवान्यच्छक्तेर्लक्षणम्—यदुत नित्यं कार्यान्यथानुपपत्त्या यद् गम्यं रूपं सा शक्तिरिति, कार्यानुमेयत्वं शक्तेर्लक्षणम् ? नैतद्युक्तं शक्तिलक्षणम् । कस्मात् ? कार्यस्यान्यथाभावात् । अन्यथापि = व्यतिरिक्तशक्ति-मन्तरेण, कार्यस्योपपत्तेः । कथम् ? इत्याह—भवत्येतद्धि भावत इति । एतत्कार्यं यस्मात् भावात् = पदार्थात्, भवति = उत्पद्यते, तस्मादन्यथाऽपि कार्यस्यास्तित्व-सम्भव इति किं व्यतिरिक्तया शक्त्या कल्पितया ! ॥ १६११ ॥

---

१. तदर्थनाम्—पा०, गा० । २–२. रूपवैरूप्ये—पा०, गा० ।

नैकान्तेन विभिन्ना चेच्छक्तिः साऽप्युभयात्मिका।
न विरोधाद्भवेत् सा च प्रत्यक्षाऽनन्यतापि यत् ॥ १६१३ ॥
प्रत्यक्षत्वे स्थिते चास्यामनुमेयत्ववारणम् ।
क्षतये नैव येनाऽस्मिन् विषये नानुमेष्यते ॥ १६१४ ॥
ये तु श्रोत्रादयो भावाः प्रत्यक्षस्य न गोचराः ।
तेषां सत्तैव लिंगेन गम्यते शक्तिलक्षणा ॥ १६१५ ॥
कारणान्तरसापेक्षं तद्धि शब्दादिवेदनम् ।
भावेऽप्यन्यस्य सद्धेतोरभावादंकुरादिवत् ॥ १६१६ ॥

---

एनमेवार्थं[1] स्पष्टीकुर्वन्नाह—जलादीत्यादि ॥ १६१२ ॥

स्यादेतत्—भवत्येष दोषो यद्यस्माभिरेकान्तेन पदार्थाच्छक्तिर्भिन्नाऽभ्युपगम्येत, [ G. 463 ] किं तर्हि ? भिन्नाभिन्नत्वेनोभयात्मिकेत्येतच्च न युक्तम्; कस्मात् ? इत्याह—विरोधात् । यदि व्यतिरिक्ता, कथमव्यतिरिक्ता तदैव ! अथाव्यतिरिक्ता, कथं व्यतिरिक्तेति व्याहतमेतद्यदन्योन्यपरिहारस्थितलक्षणयोर्धर्मयोरेकस्मिन् धर्मिणि युगपदुपलयनम् । इदमेव खल्वन्यत्वं यत् तन्न भवत्यात्मान्तरवदित्यावेदितमेवैतत । भवतु नामोभयात्मत्वं शक्तेः, तथाऽपि सा शक्तिरुभयात्मिका प्रत्यक्षैव, यस्मादनन्यताऽपि शक्तेः पदार्थाद् दृष्टा, नैकान्तेनान्यत्वमेव, येनाप्रत्यक्षता भवेत् । ततश्च[2] नित्यं कार्यगम्यत्वं शक्तेरित्येतद् व्याहन्येत ॥ १६१३ ॥

अपि च [3]यदुक्तम्—"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः" ( तत्त्व० १५८८ ) इत्यादि यदेतदनुमेयत्ववारणं शक्तेः कृतम्, तन्न क्षतयेऽस्माकं सम्बध्यते[4] । कस्मात् ? येन = यस्मात् अस्मिन् प्रत्यक्षविषये नानुमानमिष्यतेऽस्माभिः, परोक्षार्थप्रतिपत्तिरूपत्वादनुमानस्य । अनेन सिद्धसाध्यतामाह ॥१६१४॥

यदुक्तम्—"श्रोत्रादिशक्तिपक्षे च" ( तत्त्व० १५९० ) इति, अत्राह—ये त्वित्यादि ॥ १६१५ ॥

ननु च 'सत्ता तु साध्यत एव' इति पूर्वं प्रतिपादितम्, तत् कथं 'सत्ता गम्यते'

---

1. एतदेवा०—पा०, गा० । 2. तत्तस्य—जै० ।
3. पा०, गा० पुस्तकयोर्नास्ति । 4. पा० गा० पुस्तकयोर्नास्ति ।

उपादानासमाने च देशे जातिर्निरन्तरम् ।
रवेर्देशान्तरप्राप्त्या[1] ज्वालादेरिव गम्यते ॥ १६१७ ॥
स्थिरात्मनो विशेषत्वान्नान्यथेयं प्रसज्यते ।
तस्य देशान्तरप्राप्तिः शक्तिस्त्वन्या निराकृता ॥ १६१८ ॥
पीनो दिवा न भुंक्ते चेत्यस्मिन्नर्थे न निश्चयः ।
द्वेषमोहादिभिर्योगादन्यथाऽपि वदेत् पुमान् ॥ १६१९ ॥

---

इत्युच्यते ? इत्याह–कारणान्तरेत्यादि[2] । न ह्याहत्य सत्ता साध्यते, किं तर्हि ? कारणान्तरसापेक्षत्वं श्रोत्रादिज्ञानस्य धर्मिणः साध्यते, अन्यस्य मनस्कारादेस्तद्धेतोः श्रोत्रादिज्ञानहेतोर्भावेऽप्यभावाच्छ्रोत्रादिज्ञानस्य । प्रयोगः–यद्यस्मिन् सत्यपि कदाचिद् भवति, तत्कारणान्तरसापेक्षम्, यथा क्षित्यादौ सत्यपि कदाचिद् भवन्नङ्कुरः[3] । सत्यपि मनस्कारादौ कदाचिद्भवति श्रोत्रज्ञानमिति स्वभावहेतुः । तस्मिन् कारणान्तरसापेक्षत्वे साधिते यत्कारणान्तरं तत् श्रोत्रादि प्रसिद्धमित्यनेन प्रकारेण सत्ता गम्यत इत्युच्यते, न त्वाहत्येत्यदोषः ॥ १६१६ ॥

यदुक्तम्––"अनुमितात् सूर्ये यानात्" (तत्त्व० १५८७) इति, अत्राह–उपादानेत्यादि । [ G 464 ] अनेनानुमानान्तर्भावमाह । तथा हि—यस्य यस्य देशान्तरप्राप्तिरुपलभ्यते, तस्य स्वोपादानकारणदेशपरिहारेण [4]जातिः, यथा ज्वालादेर्देशान्तरं प्राप्नुवतः, देशान्तरप्राप्तिश्च रवेरिति स्वभावहेतुः । न चायमनैकान्तिकः, यतः स्थिरात्मन एकरूपस्य भावस्य नेयं देशान्तरप्राप्तिर्युक्ता; पूर्वदेशप्रतिनियतस्वभावापरित्यागात् । त्यागे वाऽपूर्वोत्पत्तिरेवेति । इदमेव बाधकं प्रमाणम् । स्यादेतत्–शक्तौ साध्यायामियमर्थापत्तिरुदाहृता, नोत्पत्तौ, तत् कथमस्या अर्थापत्तेरनुमानान्तर्भाव उच्यते ? इत्याह––शक्तिस्त्वन्या निराकृतेति ॥ १६१७–१६१८ ॥

'पीनो दिवा' ( तत्त्व० १५९१ ) इत्यादौ श्रुतार्थापत्त्युदाहरणे प्राह––पीन इत्यादि । अनेन शाब्दप्रमाणपूर्वकत्वस्यासिद्धतामाह ॥ १६१९ ॥

---

१. ०व्याप्त्या—पा०, गा० । २. कारणान्तरामित्यादि —जै० ।
३. अङ्कुरः—पा०, गा० । ४. उत्पत्तिरित्यर्थः ।

अर्थगत्यनपेक्षेण यदि वाक्यान्तरं पुनः।
सार्थमाक्षिप्यते तेन स्यादाक्षेपो वचोऽन्तरे ॥ १६२० ॥
अर्थोपगमरूपेण तत्रार्थगतिरिष्यते।
प्रमाणान्तरतो यद्वा ? भवत्वर्थगतिस्ततः ॥ १६२१ ॥
क्षपाभोजनसम्बन्धी पुमानिष्टः प्रतीयते।
दिवाभोजनवैकल्यपीनत्वेन तदन्यवत् ॥ १६२२ ॥
भोजने सति पीनत्वमन्वयव्यतिरेकतः।

---

स्यादेतत्—न हि वाक्येनार्थगतिमपेक्ष्य वाक्यान्तराक्षेपः क्रियते, किं तर्हि ? केवलेनैव। तच्च प्रत्यक्षतः सिद्धमेव ? इत्याह—अर्थगत्यनपेक्षेणेति। अर्थगति-र्नापेक्ष्यत इत्यर्थगत्यनपेक्षं वाक्यम्, तेन केवलेन वाक्यमात्रेण यदि सार्थकं वाक्यान्तरस्यान्तरमाक्षिप्यते, तदा स्यादाक्षेपो वचोऽन्तरे—रात्रिभोजनवाक्यादन्य-स्यापि वाक्यान्तरस्याक्षेपः प्राप्नोति; सम्बन्धरहितत्वेनाविशेषात्। अथ वस्तुप्र-तिबन्धादर्थमाक्षिपतीति ? इत्यर्थगत्यपेक्षणे तद्दोषः ॥ १६२० ॥

अर्थेत्यादिना पराभिप्रायमाशङ्कते। अथ मा भूदतिप्रसङ्ग इति [1]न्याय्यामर्थ-गतिमपेक्ष्य परोपगमनरूपेणार्थगतिरिष्यते, [ G. 465 ] परस्य वक्तुराप्तत्वेनाभ्यु-पगतत्वात्। यद्वा—प्रमाणान्तरतः प्रत्यक्षादेर्ज्ञानम्—'पीनो देवदत्तो दिवा न भुङ्क्ते' इति। अत्र प्रतिविधत्ते—भवत्वित्यादि। भवतु अर्थस्य = रात्रिभोजनस्य गतिः, ततः = दिवाभोजनवैकल्येन विशेषितात् पीनत्वात्। न तु वाक्यान्तरस्य बुद्धिस्थस्य गमकत्वम्। एवं सत्यनुमान एवान्तर्भावान्न प्रमाणान्तरत्वं स्यादित्यभि-प्रायः ॥ १६२१ ॥

तमेवान्तर्भावं दर्शयन्नाह—क्षपेत्यादि। इष्टः = विवक्षितः पुरुषविशेषो रात्रिभोजनविशिष्टः पक्षः[2]। दिवाभोजनवैकल्ये[3] सति पीनत्वादिति हेतुः। तदन्यपुरुषवदिति दृष्टान्तः। कार्यहेतुश्चायम् ॥ १६२२ ॥

कथमत्र कार्यकारणभावः सिद्धः ? इत्याह—भोजने इत्यादि। अग्निधूमयो-

---

१. न्यायादर्थ०—पा०, गा०। २. पा० गा० पुस्तकयोर्नास्ति।
३. भोजनवैकल्ये—पा० गा०।

निश्चितं तेन सम्बद्धाद् वस्तुनो वस्तुतो गतिः ॥ १६२३ ॥

सर्वसम्बन्धशून्यं हि कथं वाक्यं प्रतीयते ।

एकस्माद् वाक्यतः सर्वं प्रतीयेतान्यथा पुनः ॥ १६२४ ॥

तथा ह्यसति सम्बन्धे सति चानवधारिते ।

गम्यमानमिदं वाक्यं प्रसज्येताप्रमाणकम् ॥ १६२५ ॥

सम्बद्धस्य प्रामाण्यम्

सम्बद्धस्य[1] प्रमाणत्वं स्थितं नो चेन्नृपाज्ञया ।

प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतेर्विना[2] ? ॥ १६२६ ॥

---

रिवान्वयव्यतिरेकाभ्यां पीनत्वभोजनयोः कार्यकारणभावो निश्चितः; यतस्तस्माद् वस्तुनः पीनत्वात् कार्यत्वेन सम्बन्धाद् वस्तुतो भोजनस्य गतिर्युक्ता । न तु वाक्यादप्रतिबद्धाद् वाक्यान्तरस्य प्रतीतिर्युक्ता; अतिप्रसङ्गात् ॥ १६२३ ॥

तमेवातिप्रसङ्गं दर्शयितुमाह—सर्वसम्बन्धेत्यादि । सर्वेण सम्बन्धेन = तादात्म्यतदुत्पत्तिलक्षणेन शून्यम् = रहितं वाक्यं कथं प्रतीयेत ? नैव । अन्यथा यदि सर्वसम्बन्धशून्यमपि प्रतीयेत, तदा यतः कुतश्चिदेकस्माद् वस्तुनो घटादेः सर्वं घटादि प्रतीयेत । न चैवम् । तस्मात् प्रतिबन्धात् प्रतिपत्तिरभ्युपगन्तव्या ॥ १६२४ ॥

तथा हीत्यतिप्रसङ्गमेव समर्थयते । सति सम्बन्ध इत्यभ्युपगमः । एकदा तावन्नास्त्येव वाक्यस्य वाक्यान्तरेण [ G. 466 ] सम्बन्धः, सन्नप्यनवधारितः सम्बन्धोऽसत्प्रख्य एव । ततश्चानवधारिते सम्बन्धे प्रतीयमानमप्रमाणकं स्यात्—निर्निबन्धनप्रतीतिकम्[3] । निर्निबन्धना चेत् प्रतीतिः, सर्वं सर्वस्मात् प्रतीयेत—इत्यतिप्रसङ्गोऽनिवार्य एव ॥ १६२५ ॥

सम्बद्धस्येत्यादिना परवचनावकाशमाशङ्कते । तत्र परो ब्रूते—सम्बद्धस्य प्रामाण्यमिति यदि ? परं नृपाज्ञैवेयम्, न त्वत्र काचिद् युक्तिः । तथा हि—सम्बद्धस्य प्रमाणत्वमिति यदि नृपाज्ञा न भवेत्, कथं तर्हि प्रत्यक्षस्य प्रामाण्यं सङ्गतिं विना = सम्बन्धमन्तरेणेति वक्तव्यम् ॥ १६२६ ॥

---

१. सम्बन्धस्य—जै० । २. सङ्गतिं विना—पा०, गा० । ३. ०प्रतीतिकं स्यात्—गा० ।

नन्वसम्बन्धगम्यत्वे[1] किमन्यस्यापि नो गतिः ।
न हि सम्बन्धशून्यत्वे विशेषः कश्चनेक्ष्यते ॥ १६२७ ॥
सम्बन्धादेव मानत्वमध्यक्षेऽपि व्यवस्थितम् ।
संवादो हि प्रमाणत्वं स चार्थादात्मलाभतः ॥ १६२८ ॥
अतद्धेतोरहेतोश्च तत्संवादो न युज्यते ।
नियमेन समस्तानां संवादो वाऽन्यथा ॥ १६२९ ॥
द्वितीयवाक्यनिर्भासा विवक्षा वाऽनुमीयते ।
एतेनान्वयवाक्याच्च व्यतिरेकगतिर्मता ॥ १६३० ॥

---

अत्रोत्तरमाह—नन्विति । नन्वसम्बद्धं यदि गम्येत तदाऽतिप्रसङ्गः स्याद्, अविशेषात्—इत्यत्र भवता न किञ्चिदुत्तरं दत्तम् । यच्चोक्तम्—कथं प्रत्यक्षस्य विना सम्बन्धेन प्रामाण्यमिति, तदप्यसङ्गतमेव । तथा हि—सम्बन्धं विना न केनचित् प्रत्यक्षप्रामाण्यमभ्युपगतम् ? किं तर्हि ? सम्बन्धादेव मानत्वमध्यक्षेऽपि = प्रत्यक्षेऽपि व्यवस्थितम् । अत्रोपपत्तिमाह—संवादो हीत्यादि । अर्थप्रापणशक्तिः संवादः = प्रामाण्यम् । स च संवादो नियमेन प्रत्यक्षस्य कथं युक्तः, यदि ततोऽर्थात् तस्यात्मलाभो न भवेत् ! ॥ १६२७–१६२८ ॥

अन्यथा को दोषः ? इत्याह—अतद्धेतोरिति । सोऽर्थो हेतुर्यस्य स तथा, न तद्धेतुरतद्धेतुः । अन्यहेतुक इति यावत् । तस्मादतद्धेतोः प्रत्यक्षादहेतोर्वा सर्वहेतुवैकल्येन तत्संवादः = अर्थसंवादः, न नियमेन स्यात् । किं तर्हि ? समस्तानाम् = सर्वेषामर्थानाम्, संवादः स्यादित्यत्रापि समानः प्रसङ्गः ॥ १६२९ ॥

[ G.467 ] अथ वा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्येतदन्वयवाक्यं कार्यलिङ्गमात्मीयं कारणं विवक्षां विशिष्टामनुमापयन् हेतुधर्मानुमानेन धूमेन्धनविकारवत्[2] सामर्थ्याद् 'रात्रौ भुङ्क्ते' इत्येतद्व्यतिरेकवाक्यमपि गमयति, न तु साक्षादिति प्रतिपादयन्नाह—द्वितीयेत्यादि । एतेनेति । हेतुधर्मानुमानेन, न तु साक्षात् । यस्मादन्वयवाक्यात् तादृशी विवक्षा गम्यते, यस्यां व्यतिरेकवाक्यमपि निर्भासते । अन्यथा यदि रात्रिभोजनं विवक्षायां नारूढं स्यात्, भोजनप्रतिषेध-

---

१. नन्वसम्बद्ध०—पा०, गा० । २. धूमे वनन्धन०—पा०, धूमेनेन्धन०—पा० ।

उपमायाः प्रमाणत्वे विस्तरेण निराकृते ।
अर्थापत्तेस्तदुत्थाया वारितैव प्रमाणता ॥ १६३१ ॥
उपमानप्रमाणस्य गौस्त्वालम्बनमिष्यते ।
स्वसत्तयैव चालम्ब्यं स्वज्ञानजनकं मतम् ॥ १६३२ ॥
तद् किमत्रान्यया शक्त्या यद्गत्यर्थमपेक्ष्यते ।
अर्थापत्तेः प्रमाणत्वमुपमानसमाश्रयम् ॥ १६३३ ॥
अनन्यत्ववियोगेऽपि शब्दानां न विरुध्यते ।
अर्थप्रत्यायनं यद्वत् पाणिकम्पादिकर्मणाम्[1] ॥ १६३४ ॥

क्रियां प्रति हेतोरव्यञ्जकत्वम्

तुल्यप्रत्यवमर्शस्य हेतुत्वात् कम्पनं यथा ।
प्रत्यायकत्वं शब्दानां तथैव न विरुध्यते ॥ १६३५ ॥

---

नात्रं केवलं प्रतिपादयितुमिष्टं तदा 'देवदत्तो न भुङ्क्ते' इत्येवोक्तं स्यात्, न तु दिवा, पीन इति । व्यतिरेकगतिरिति । व्यतिरेकवाक्यगतिः ॥ १६३० ।

"गवयोपमिता या गौः" ( तत्त्व० १५९८ ) इत्यत्राह—उपमाया इति ॥ १६३१ ॥

भवतु चोपमायाः प्रामाण्यम्, तथाप्युपमानपूर्विकाया अर्थापत्तेर्गृहीतग्रहणान्न युक्तं पृथक्प्रामाण्यम्; व्यतिरिक्तस्य शक्तिलक्षणस्य प्रमेयस्याभावादिति प्रतिपादयन्नाह—उपमानेत्यादि । यद्गत्यर्थमिति । शक्तिप्रतीत्यर्थम् । शेषं सुबोधम् ॥ १६३२-१६३३ ॥

'अभिधानान्यथा' ( तत्त्व० १५९९ ) इत्यादावर्थापत्तिपूर्विकाया अर्थापत्तेरुदाहरणस्यानैकान्तिकत्वमाह—अनन्यत्वेत्यादि । यथा ह्यनित्यानामपि पाणिकम्पाक्षिनिकोचादीनामर्थप्रत्यायनं न विरुद्धम्, तथा [ G. 468 ] शब्दानामनन्यत्ववियोगेऽपि न विरुध्यत एव—इत्यनैकान्तिकमेवैतदुदाहरणम् । तत्रान्यत्वमनित्यत्वम्, नान्यत्वमनन्यत्वम् = नित्यत्वमिति यावत् ॥ १६३४ ॥

ननु चोक्तम्—"अनित्यो हि न सङ्केतव्यवहारानुवृत्तिभाक्" ( तत्त्व० १६००) इति, अत्राह—तुल्येत्यादि । यद्यपि स्वलक्षणानां क्षणिकत्वादन्वयो नास्ति.

---

१. ०दिकारणम्—पा०, गा० ।

प्रत्यक्षद्रव्यवर्त्तिन्यो दृश्यन्ते ननु याः क्रियाः ।
तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया ॥ १६३६ ॥
व्यञ्जकाभावतश्चासां सन्ततानुपलम्भता ।
यदेवोत्पादकं वः स्यात् तदेव व्यञ्जकं मतम् ? ॥ १६३७ ॥
नैवमप्रतिबद्धे हि सामर्थ्ये सततं[1] भवेत् ।
तज्ज्ञानं तद्वियोगे तु नैव स्यात् तत् कदाचन ॥ १६३८ ॥

---

तथापि कानिचित् स्वलक्षणानि प्रकृत्या पारम्पर्येणाभेदाकारस्य भ्रान्तस्य प्रत्यवमर्शज्ञानस्य कारणानि भवन्ति, सन्त्येकत्वेन गृह्यमाणानि प्रत्यायकानि भवन्ति; सङ्केतवशात् । यथाकम्पनम् । प्रत्यायकमिति शेषः ॥ १६३५ ॥

'यथा कम्पनम्'—इत्यस्य दृष्टान्तस्य परः साध्यविकलतामुद्भावयन्नाह—प्रत्यक्षेत्यादि । यथा वर्णानां प्रत्यभिज्ञया नित्यत्वमिष्टमस्माभिः, तथा पाण्यादिकर्मणामपीत्यनित्यत्वेन साध्येन विकलो दृष्टान्त इत्यव्यभिचार एव ॥ १६३६ ॥

यद्येवम्, नित्यत्वे सति पाण्यादिकर्मणां किमिति नित्यमुपलब्धिर्न जायते ? इत्यत्राह—व्यञ्जकेत्यादि । आसामिति क्रियाणाम् । सन्ततानुपलम्भता । यथा भवतामुत्पादकाभावान्नित्योपलब्धिर्न भवति, तथाऽस्माकं व्यञ्जकाभावादिति समानः परिहार इति परस्याभिप्रायः ॥ १६३७ ॥

नैवमित्यादिना प्रतिविधत्ते । [G. 469] अत्र द्वयी कल्पना—यास्ताः क्रिया अभिव्यङ्ग्या [2]इष्टास्ताः प्रकृत्या ज्ञानोत्पादनसमर्था वा स्युः, न वा । तत्र सामर्थ्ये सति, सततम् = नित्यम्, तद्भाविज्ञानं प्राप्नोति; तासां समर्थस्य स्वभावस्य नित्यत्वेन केनचिदप्रतिबद्धत्वात् । अनाधेयातिशयस्य विशेषमनाधाय प्रतिबद्धुमशक्यत्वात् । अथासामर्थ्यम्, तदा तद्वियोगे = सामर्थ्यवियोगे, नैव तद्भावि ज्ञानं स्यादिति किं व्यञ्जकस्य[3] सामर्थ्यम् । तस्मात् तासां क्रियाणां नित्यत्वेनेष्टानां न कथञ्चित् सङ्गच्छन्ते व्यञ्जकत्वेन कल्पिता हेतवः । अनित्यानां त्वपूर्वस्वभावोत्पत्तिर्व्यञ्जकादिति न्याय्यास्तान् प्रति व्यञ्जकाः । यच्चोक्तम्—"तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया" ( तत्त्व० १६३६ ) इति, अत्राह—

---

१. सन्ततं—पा०, गा० । २. इष्टास्ताः—गा० । ३. व्यञ्जनस्य—जै० ।

अतश्च[1] व्यञ्जकास्तासां सङ्गच्छन्ते न हेतवः ।
प्रत्यभिज्ञा तु नित्यत्वे पूर्वमेव निराकृता ॥ १६३९ ॥
गेहाभावात्तु चैत्रस्य बहिर्भावो न युज्यते ।
मरणाशङ्कया यस्मादन्यथाऽप्युपपद्यते ॥ १६४० ॥
जीवतश्चेद् गृहाभावो बहिर्भावप्रसिद्धये ।
अर्थापत्ताविहोच्येत नैव[2] तत्राप्यनिश्चयात् ॥ १६४१ ॥
वेश्मन्यपश्यतश्चैव न ह्यर्वाग्दर्शिनः प्रमा ।
तस्य जीवनसम्बन्धि[3] कथञ्चिदपि वर्त्तते ॥ १६४२ ॥

अन्यथाशङ्कय तत्खण्डनम्

अथ शब्दादिना तस्य जीवत्तानिश्चये सति ।
सद्भन्यभावेऽभावाच्च निश्चितेऽस्याः प्रमाणता ? ॥ १६४३ ॥

---

प्रत्यभिज्ञेति । नित्यत्वे साध्ये हेतुत्वेन प्रत्यभिज्ञोपन्यस्ता, सा पूर्वं स्थिरभावपरीक्षायां निराकृता ॥ १६३८–१६३९ ॥

यदुक्तम्—"प्रमाणाभावनिर्णीतचैत्राभावविशेषितात्" ( तत्त्व० १६०१ ) इत्यत्राह—गेहेत्यादि । अन्यथाऽपीति । बहिर्भावमन्तरेणोपपद्यते गेहे चैत्राभावः । अनेनानैकान्तिकत्वमाह । अथ जीवतो देवदत्तस्य यो गृहाभावः स इहार्थापत्त्युदाहरणे हेतुत्वेनोच्यते, नाभावमात्रम् ? नैवं युक्तम्; कस्मात् ? तत्रापि देवदत्तजीवने संशयात् सन्दिग्धासिद्धता हेतोः स्यात् । अनिश्चये कारणमाह—वेश्मनीति । तस्य चैत्रस्य जीवने निश्चायकप्रमाणाभावादर्वाग्दर्शिनः संशय एव ॥ १६४०–१६४२ ॥

अथापि स्यात्—यदि नामार्वाग्दर्शिनः प्रत्यक्षप्रमाणं चैत्रस्य जीवननिश्चये[4] नास्ति, अनुमानादि तु विद्यत एव ? इत्याह—अथेत्यादि । शब्दादिनेति । तदुच्चारितशब्दः श्रूयते, प्रत्ययितो वा तस्मिन् काले कुड्याद्यन्तरितस्तमपश्यन्[5] कथयति—जीवति चैत्र इति । अभावाच्च = प्रमाणात् प्रत्यक्षादिनि-

---

१. ततश्च—पा०, गा० । २. अर्थापत्त्यावहो होतन्नैव—पा०, गा० । ३. जीवनसम्बन्धे—पा०, गा० । ४. जीवनविषये—पा०, गा० । ५. तपस्यन्—पा०, गा० ।

तदापि गेहायुक्तत्वं [1]दृश्याऽदृष्टेर्विनिश्चितम् ।
अतस्तत्र बहिर्भावो लिङ्गादेवासीयते ॥ १६४४ ॥
सद्मना यो ह्यसंसृष्टो नियतं बहिरस्त्यसौ ।
गेहाङ्गणस्थितो दृष्टः पुमान् द्वारि स्थितैरिव ॥ १६४५ ॥
विपक्षोऽपि भवत्यत्र सदनान्तर्गतो नरः ।
अर्थापत्तिरियं तस्मादनुमानान्न भिद्यते ॥ १६४६ ॥

## ४. अभावविचारः

### मीमांसकमतानुवादः

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १६४७ ॥
( श्लो० वा०, अभा० १ )

---

वृत्तिरूपात् [G. 470 ] सद्मनि = गृहे, चैत्राभावनिश्चये सति, सिद्धो जीवनविशिष्टश्चैत्राभाव इति भवेदेवास्या अभावोत्थाया अर्थापत्तेः प्रमाणता ॥१६४३॥

तदाऽपीत्यादिना प्रतिविधत्ते । अनेनानुमानान्तर्भावमाह । तथा हि—चैत्रोऽत्र धर्मी, तस्य बहिर्भावः साध्यः, जीवने सति गृहासङ्गो हेतुः कार्यः । गृहाङ्गणस्थितः पुमान् साधर्म्यदृष्टान्तः । गृहान्तर्गतस्तु वैधर्म्यदृष्टान्तः । सदनम् = गृहम् । व्याप्तिर्दृष्टान्ताभ्यामेव निश्चिता । न चासिद्धो हेतुः; यतो गेहायुक्तत्वं तावद् दृश्यानुपलब्ध्या निश्चितम्, जीवनं तु पराभ्युपगमात् सिद्धम् । परमार्थतस्तु सन्दिग्धो हेतुः । न हि जीवत्तांनिश्चायकं किञ्चित् प्रमाणमस्ति । ननु च शब्दादिरस्तीत्युक्तम् ? एवं तर्हि यत एव शब्दादेः प्रमाणाज्जीवनं निश्चितम्, तत एव बहिर्भावः सिद्ध इति किमर्थापत्त्या कर्त्तव्यम् ! तस्मात् = पराभ्युपगमात्, सिद्धं हेतुमभ्युपगम्यानुमानेऽन्तर्भावः प्रतिपादितोऽर्थापत्तेः[2] ॥ १६४४-१६४६ ॥

इत्यर्थापत्तिपरीक्षा

अभावमधिकृत्याह—प्रमाणेत्यादि । तत्र मीमांसकानां सदसल्लक्षणयोर्भावाभावयोर्वस्तुत्वम्, सर्वस्य च पदार्थस्य च पदार्थस्य सदसद्रूपेण द्व्यात्म-

---

१. दृष्ट्या०—पा० गा० । २. प्रतिपादित अर्था०—पा०, गा० ।

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते ।
साऽऽत्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ १६४८ ॥
( श्लो॰ वा॰, अभा॰ ११ )
प्रमाभावाच्च वस्तूनामभावः सम्प्रतीयते ।
चतुर्धा च विभिन्नोऽसौ प्रागभावादिभेदतः ॥ १६४९ ॥

---

कत्वमित्यभ्युपगमः । तत्र सदसद्रूपेणोभयात्मके वस्तुनि व्यवस्थिते, यस्मिन् वस्तुरूपे = वस्त्वंशे, असद्रूपाख्ये, प्रमाणपञ्चकमर्थापत्तिपर्यन्तं न जायते । किमर्थम् ? वस्तुसत्ताऽवबोधार्थम् = वस्तुनः सत्तांशावबोधार्थम् । तत्र = अभावांशे [ G. 471 ] प्रमेये, अभावस्य प्रमाणता । अनेन विषयोऽस्य केवलो निर्दिष्टः, न तु स्वरूपम् ॥ १६४७ ॥

स्वरूपमस्य तर्हि कीदृशम् ? इत्याह—प्रत्यक्षादेरित्यादि । प्रत्यक्षादेरर्थापत्तिपर्यन्तस्तस्यानुत्पत्तिः प्रमाणाभाव इष्यते । 'प्रमाणाभावः' इति षष्ठीतत्पुरुषः, कर्मधारयो वा । क्वचित् पाठः—प्रमाणेऽभाव इति । तत्र निर्धारणे सप्तमी, ज्ञातावेकवचनम् । प्रमाणानां मध्येऽभावः प्रमाणमित्यर्थः । यथोक्तं शबरस्वामिना—"अभावोऽपि[1] नास्तीत्यर्थस्यासन्निकृष्टस्य" ( मी॰ द॰ शा॰ भा॰ १. १. ५ ) इति । अथ केयमनुत्पत्तिः ? इत्याह—साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनीति । सा = प्रत्यक्षादेरनुत्पत्तिः, निषेध्याभिमतघटादिपदार्थज्ञानरूपेणापरिणतं साम्यावस्थमात्मद्रव्यमुच्यते । घटादिविविक्तभूतलज्ञानं वा ॥ १६४८ ॥

ननु चाभाव इति वस्तुविरह उच्यते, तत् कथं वस्तुत्वमस्य, न हि वस्तुविरहो वस्तु[2] भवति ? इत्याशङ्क्य वस्तुत्वमभावस्य प्रतिपादयन्नाह—प्रमाभावादिति । यदि प्रमाणाभावो वस्तु न भवेत्, ततश्च सर्वसामर्थ्यशून्यत्वादस्येति ततो नाभावप्रतीतिः स्यात्, प्रागभावादिभेदेन चतुर्धा च भेदोऽभावस्य न स्यात्, न चैवम्, तस्मादभावप्रतीत्यन्यथानुपपत्त्या चतुर्धा भेदेन लोकस्य व्यवहारान्यथानुपपत्त्या चाभावस्य वस्तुत्वम् । एतच्चार्थापत्त्याख्यं प्रमाणद्वयमित्येके । अन्ये तु

---

१. अभावेऽपि—जै॰ । २. पा॰, गा॰ पुस्तकयोर्नास्ति ।

क्षीरे दध्यादि यन्नास्ति प्रागभावः स कथ्यते[1]।

( श्लो० वा०, अभा० २ )

नास्तितः पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥ १६५० ॥

गवि योऽश्वाद्यभावश्च सोऽन्योऽन्याभाव उच्यते।

( श्लो० वा०, अभा० ३ )

पररूपं न तस्यास्ति [2]नास्ति तेनात्मना[2] ततः ॥ १६५१ ॥

शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः।

शशशृङ्गादिरूपेण सोऽत्यन्ताभाव इष्यते ॥ १६५२ ॥

( श्लो० वा० अभा० ४ )

---

"चतुर्धा च विभिन्नोऽसौ" इत्येतदनुमानमिति वर्णयन्ति। एवं च प्रमाणयन्ति—'अभावो वस्तु, मिद्यमानत्वात्, घटादिवत्' इति ॥ १६४९ ॥

कथं पुनरस्य चतुर्धा भेद इति प्रतिपादयन्नाह—क्षीरे दधीत्यादि। [G. 472] १. क्षीरमृदादौ कारणे दधिघटादिलक्षणं कार्यं नास्तीत्येवं यत् प्रतीयते लोके स प्रागभाव उच्यते। यदि तु प्रागभावो न भवेत्, क्षीरादौ दध्यादिकार्यं भवेदेव। २. एवं दध्नि क्षीराख्यस्य यन्नास्तित्वम्, अयं प्रध्वंसाभावः। अन्यथा दध्नि क्षीरं भवेदेव। ३. गवादावश्वादेरभावोऽन्योन्याभाव[3] उच्यते। यस्मात् तस्य गवादेः पररूपमश्वादिस्वभावो नास्ति, तस्मात् तयोरन्योऽन्याभाव उच्यते; अन्यथा गवादौ भवेदेवाश्वादि यद्यन्योन्याभावो न भवेत्। ४. शशशिरसोऽवयवा निम्ना वृद्धिकाठिन्याभ्यां रहिता विषाणादिरूपेणात्यन्तमसन्तोऽत्यन्ताभाव उच्यते। यद्यपि चात्र वस्तुवृत्तेरन्योऽन्याभावः, तथापि लोकप्रसिद्ध्योक्तमत्यन्ताभाव इति। प्रायेण हि लोके सामानाधिकरण्येनैवेतरेतराभावव्यवहारः, यथा—गौरयं नाश्व इति, न तु शशोऽयम्[4], न विषाणमित्येवम्। यदि त्वत्यन्ताभावो न भवेत्, शशे शृङ्गं भवेदेव। तथा चाह कुमारिलः—

"क्षीरे दधि भवेदेव दध्नि क्षीरं घटे पटः।

शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥

---

१. कल्प्यते—पा०, गा०। २–२. नास्तिताऽस्यात्मना—पा०, गा०।
३. गवादौ वस्त्वादे०—पा०, गा०। ४. शशीयं—पा०, गा०।

न च स्याद् व्यवहारोऽयं करणादिविभागशः ।
प्रागभावादिभेदेन नाभावो विद्यते यदि ॥ १६५३ ॥
( श्लो० वा०, अभा० ७ )

न चावस्तुन ऐते स्युर्भेदास्तेनास्य वस्तुता ।
कार्यादीनामभावः को[1] योऽभावः [1]कारणादिना ॥ १६५४ ॥
( श्लो० वा०, अभा० ८ )

यद्वाऽनुवृत्तिव्यावृत्तिबुद्धयोर्ग्राह्यो यतस्त्वयम्[2] ।

अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि सस्पर्शकास्ते च न चेदस्य प्रमाणता ॥"
( श्लो० वा०, अभा० ५–६ ) इति ।

तत्र—चैतन्यम् = आत्मा, मूर्त्तिः = काठिन्यम् । रूपेण तौ सहेति—तौ = गन्धरसौ, रूपसहितौ वायौ स्याताम् । सस्पर्शकास्त इति । ते = रूपरसगन्धाः सह स्पर्शेन व्योम्नि = आकाशे स्युः । किञ्च—न च स्यात् कारणादिविभागेन लोकव्यवहारो यद्यभावस्य प्रागभावादिभेदेन भेदो न स्यात्, यथा— यो दध्यर्थी स क्षीरोपादानं करोति, न तु क्षीरार्थी दध्युपादानम्; तथा गवार्थी नाश्वमुपादत्ते, नाप्यश्वार्थी गाम् । इत्येवमादिकारणादिविभागेन व्यवहारः ॥ १६५०–१६५३ ॥

अथापि स्याद्—यदि नाम चतुर्द्धा भेदोऽस्य जातः, तथापि 'वस्तुत्वेन भवितव्यम्' इत्येतत्[3] कुतः ? इत्याह—न चावस्तुन इत्यादि । [G. 473] न ह्यवस्तुनो भेदो युक्तः; वस्त्वधिष्ठानत्वात्तस्य । तस्मादभावो वस्तु ।

कीदृशं पुनरस्य वस्तुत्वम् ? इत्याह—कार्यादीनामिति । क्षीरादेः कारणस्य यो भावः स एव दध्यादेः कार्यस्याभावः, कार्यस्य दध्यादेर्यो भावः स एव क्षीरादेः कारणस्याभाव इत्येतदभाववस्तुत्वम् ॥ १६५४ ॥

पुनरप्यनुमानेन वस्तुत्वमस्य प्रतिपादयन्नाह—यद्वेत्यादि । अभावो

१–१. स यो भावः—पा०, गा० । २. यतः स्वयम्—पा०, गा० ।
३. एतत्—पा०, गा० ।

तस्माद् गवादिवद् वस्तु प्रमेयत्वाच्च गम्यताम् ॥ १६५५ ॥
मानं कथमभावश्चेत् प्रमेयं चात्र कीदृशम् ।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥ १६५६ ॥
(श्लो० वा०, अभा० ४५)
अभावशब्दवाच्यत्वात् प्रत्यक्षादेश्च भिद्यते ।
प्रमाणानामभावो हि प्रमेयाणामभाववत् ॥ १६५७ ॥
(श्लो० वा०, अभा० ५४)

---

वस्त्विति पक्षः, अनुवृत्तिव्यावृत्तिबुद्धिग्राह्यत्वात्, प्रमेयत्वाच्चेति हेतुद्वयम्, गवादिवदिति दृष्टान्तः ॥ १६५५ ॥

तत्रानुवृत्तिबुद्धिः—चतुर्ष्वपि 'अभावोऽभावः' इत्येकाकारः प्रत्ययः। व्यावृत्तिबुद्धिः—'प्रागभावोऽयं न प्रध्वंसाभावः' इत्यादिभेदाकारः प्रत्ययः। तत्र कुमारिलेन त्रिविधोऽभावो वर्णितः। आत्मनोऽपरिणाम एकः। पदार्थान्तरविशेषज्ञानं द्वितीयः; "सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि" (श्लो० वा०, अभा० ११) इति वचनात्। प्रमाणनिवृत्तिमात्रात्मकस्तृतीयः;

"त्रिलक्षणेन या बुद्धिर्जन्यते साऽनुमेष्यते ।
न चानुत्पत्तिरूपस्य कारणाधीनता क्वचित् ॥" (श्लो० वा०, अभा० ४४):

इति वचनात्। तत्रैतस्मिंस्तृतीयेऽभावे चोद्यमाशङ्क्य परिहरन्नाह—मानं कथमभावश्चेदिति।

अथोच्यते—कथं प्रत्यक्षानुत्पत्तिलक्षणोऽभावः प्रमाणमिति ? अत्रोच्यते—प्रमेयं चात्र कीदृशमिति [1]वक्तव्यम्। किमत्र वक्तव्यम्[1] ? अभावरूपं प्रमेयमिति चेत् ? एवं तर्हि यथाभूतं प्रमेयं तथाभूतमेव प्रमाणमितीष्यताम्। तत् किमुच्यते—मानं कथमभाव इति ! न हि लक्षणं प्रमाणं[2] युक्तम् ॥ १६५६ ॥

भवत्वभावस्य प्रमाण्यम्, प्रत्यक्षादिभ्यस्तु भेदोऽस्य कथम् ? इत्याह — अभावेत्यादि। [ G. 474 ] प्रत्यक्षादीनां प्रमाणानामभावः प्रमाणं प्रत्यक्षादिभ्यो भिन्नम्; अभावशब्दवाच्यत्वात्, प्रमेयाभाववत्। अथ वा—अभावाख्यप्रमेयो

---

१–१. पा०, गा० पुस्तकयोर्नास्ति। २. प्रमाणं न–गा०।

अभावो वा प्रमाणेन स्वानुरूपेण मीयते ।
प्रमेयत्वाद्यथा भावस्तस्माद् भावात्मकात् पृथक् ॥ १६५८ ॥
(श्लो० वा०, अभा० ५५)

मीमांसकमतखण्डनम्

तदत्र नित्यसत्त्वस्य परिणामो निराकृतः ।
तद्विपर्ययसद्भावः कादाचित्को न युज्यते ॥ १६५९ ॥
तत्प्रतिक्षेपमात्रात्मा स चेदत्र विवक्षितः ।
सर्वदा वस्तुनोऽस्तित्वं[1] गम्येतास्यानिवर्त्तनात् ॥ १६६० ॥

धर्मी, तस्य स्वानुरूपप्रमाणप्रमेयत्वं साध्यम्, प्रमेयत्वादिति हेतुः, भावाख्यप्रमेयो दृष्टान्तः। यच्च स्वानुरूपं प्रमाणं तद् भावात्मकात् प्रत्यक्षादेरन्यदिति सिद्धम् ॥ १६५७–१६५८ ॥

तदत्रेत्यादिना प्रतिविधत्ते। अनेन "आत्मनोऽपरिणामो वा"(तत्त्व० १६४८) इति प्रथमस्याभावलक्षणस्यासम्भवितामाह। तथा हि—पर्युदासवृत्त्या परिणामविपरीतोऽपरिणामः कादाचित्कोऽभिप्रेतो लक्षणत्वेन; अन्यथा हि यदि कादाचित्को नाभिप्रेतः; पर्युदासवृत्त्या स्यात्, तदा सर्वदैव वस्तुनोऽस्तित्वप्रतीतिः स्यात्। स चापरिणामो यथोक्तो न सम्भवत्यात्मनः; यस्मान्नित्यसत्त्वस्य परिणामो निराकृतः, तस्मात् कुतस्तस्य विपरीतस्यापरिणामस्य पर्युदासवृत्त्या संश्रयणं भवेत्। यत्र सत्त्वः = आत्मा, नित्यश्चासौ सत्त्वश्चेति नित्यसत्त्वः। यद्वा—नित्यं सत्त्वम् = सत्ता यस्य स तथोक्तः। नित्य इति यावत्। तद्विपर्ययसद्भाव इति। तस्य परिणामस्य विपर्ययः = अपरिणामः, स कादाचित्को न युक्तः, किं तर्हि? सर्वदा भवन्नित्यैकरूपत्वादात्मनः ॥ १६५९ ॥

अथ मतम्—अपरिणामो न परिणामविपरीतवस्त्वात्मकः। किं तर्हि? परिणामप्रतिषेधमात्रात्मकः। तेन नासम्भवि लक्षणं भवतीति? अत्राह—तत्प्रतिक्षेपेत्यादि। तस्य परिणामस्य प्रतिक्षेपः = प्रतिषेधः, स एव तन्मात्रम्,

१. वस्तुतास्तित्वे—पा०, गा०।

अस्तु वाऽपरिणामोऽस्य तथापि व्यभिचारिता ।
स्वापमूर्च्छाद्यवस्थासु तद्भावेऽप्यर्थसम्भवात् ॥ १६६१ ॥
प्रत्ययान्तरसद्भावे तद्विविक्तान्यदर्शनात् ।
घटज्ञानादिरूपेण तस्यासाविष्यते यदि ॥ १६६२ ॥
द्वितीयादस्य कः पक्षाद् विशेषोऽभिहितस्तदा ।
यद्विकल्पेन निर्दिष्टं पक्षद्वयमिदं त्वया ॥ १६६३ ॥
अन्यवस्तुनि विज्ञाने वृत्ते सर्वस्य नास्तिता ।
अदृश्यस्यापि गम्येत द्वितीयाभावसंश्रये ॥ १६६४ ॥
तत्तुल्ययोग्यरूपस्य कारणान्तरसन्निधौ ।
तद्विभक्तान्यविज्ञाने[1] नास्तिता चेत् प्रतीयते ॥ १६६५ ॥

---

तदेवात्मा = स्वभावो यस्यापरिणामस्य स तथोक्तः । अस्येति । प्रतिक्षेपात्मनोऽपरिणामस्य; नित्यैकरूपत्वादात्मनः परिणामाभावात् ॥ १६६० ॥

अस्तु वेत्यभ्युपगम्यापरिणाममतिव्यापितां लक्षणदोषमाह । [G. 475] व्यभिचारितेति अतिव्यापिता । मूर्च्छादीत्यादिशब्देन व्यवधान-पराङ्मुखाद्यवस्था गृह्यन्ते । तद्भावेऽपीति । घटादिज्ञानरूपेणापरिणतात्मद्रव्यसद्भावेऽपि । अर्थालम्बनप्रत्ययव्यतिरिक्तप्रत्ययान्तरसद्भावे सति घटादिविविक्तप्रदेशज्ञानमेवापरिणाम इष्यते; घटादिज्ञानरूपेणापरिणतत्वात् । तस्येति आत्मनः । असाविति अपरिणामः । एवं सति "विज्ञानं वाऽन्यवस्तुनि" इत्येतस्माद् द्वितीयात् पक्षादस्य विशेषो नोक्तः स्यात् । ततश्च पक्षद्वयनिर्देशोऽनर्थकः स्यात् ॥१६६१-१६६३॥

अन्यवस्तुनीत्यादिना द्वितीयेऽभावलक्षणे व्यभिचारितामाह । अदृश्यस्यापीति । देशकालस्वभावविप्रकृष्टस्य । द्वितीयाभाव इति । 'विज्ञानं वाऽन्यवस्तुनि' ( तत्त्व० १६४८ ) इत्येतस्मिन् ॥ १६६४ ॥

अथापि स्यात्—न सर्वस्यादृष्टस्याभावः साध्य इष्टः, किं तर्हि ? तत्तुल्ययोग्यरूपस्येति । तेनोपलभ्येन घटादिविविक्तप्रदेशेन तुल्यं रूपं योग्यता यस्य स

---

१. तद्विविक्ता०—पा०, गा० ।

शक्यदर्शनवस्त्वाभप्रत्यक्षस्यैव नास्तिता ।
एवं सति समाख्येया[1] नान्येषां व्यभिचारिणी ॥ १६६६ ॥
अन्यवस्तुनि विज्ञानं जातं वा ज्ञायते कथम् ।
अप्रत्यक्षा मता बुद्धिर्येनार्थापत्तितो यदि ॥ १६६७ ॥
सापि ज्ञानात्मिकैवेति तस्या अपि कुतो गतिः ।
अर्थापत्त्यन्तरप्रोक्तावनवस्था प्रसज्यते ॥ १६६८ ॥

---

तथोक्तः । उपलब्धिलक्षणप्राप्तस्येति यावत् । तद्विविक्तान्यविज्ञान इति घटादि-विविक्तप्रदेशज्ञाने ॥ १६६५ ॥

शक्येत्यादिना प्रतिविधत्ते । [G. 476] शक्यदर्शनस्य = उपलब्धिल-क्षणप्राप्तस्य वस्तुनः, आभा = आकारो यस्य तत्तथा, शक्यदर्शनवस्त्वाभं च तत् प्रत्यक्षं चेति कर्मधारयः । नान्येषामिति अनुमानादीनाम् । यतस्तेषां परोक्ष एवार्थो विषयः । न च तेषां निवृत्तौ परोक्षस्य देशकालस्वभावविप्रकृष्टस्य निवृत्ति-रस्तीत्यतो व्यभिचारिणी तेषां निवृत्तिः, ततश्च "प्रत्यक्षादेरनुत्पत्तिः" ( तत्त्व० १६४८ ) इत्यत्रादिग्रहणमनर्थकं स्यात् ।

अपि च—तदन्यवस्तुनि विज्ञानं यदि निश्चितं भवेदेवं प्रतियोगिनोऽभावं साधयतीत्येवमवश्यमभ्युपगन्तव्यम्; अन्यथा हि सत्तामात्रेण ततोऽभावसिद्धौ सत्यां सर्वस्य पुंसस्तस्मादेकपुरुषोत्पन्नादपि ज्ञानादभावसिद्धिप्रसङ्गः स्यात् । तत्र येन मीमांसकेनाप्रत्यक्षा बुद्धिरभ्युपगता, तेन तदेव तदन्यवस्तुनि जातं विज्ञानं कथं ज्ञायेत ? नैव । अर्थापत्तितो यदीति । 'ज्ञायते' इति प्रकृतेनं सम्बन्धः । यथोक्तम्—"अज्ञातेऽर्थे बुद्धेरसिद्धेरर्थज्ञानाल्लिङ्गात्तद्बुद्धिरनुमीयते" ( मी० द० शा० भा० १.१.५ ) इति । तत्र[2] लिङ्गवचनमन्यथाऽनुपपत्ति-वाचकम् । अर्थज्ञानादन्यथाऽनुपपन्नादित्यर्थः । अनुमीयते, प्रमीयत इति यावत् । एवं तर्हि साऽप्यर्थापत्तिर्ज्ञानात्मिकेति तस्या अपि कुतो गतिरिति वक्तव्यम्; अन्यस्या अर्थापत्तेरिति चेत् ? एवं सत्यनवस्था स्यात् ।

किञ्च—यदि वस्तुत्वमभावस्याभ्युपगम्यते, तदा यथा प्रमाणाभावो वस्तु

---

१. समाख्येयो—पा०, गा० । २. अत्र—पा०, गा० ।

यदि वस्तु प्रमाभावो मेयाभावस्तथैव च।
प्रत्यक्षेऽन्तर्गतो भावस्तथा सति कथं न ते॥ १६६९॥
कार्यादीनामभावो हि भावो यः कारणादिना[1]।
स चापरविविक्तात्मा प्रत्यक्षेणैव गम्यते॥ १६७०॥
स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।
वस्तुनि ज्ञायते किञ्चिद् रूपं कैश्चित् कदाचन॥ १६७१॥
प्रत्यक्षाद्यवतारश्च भावांशो गृह्यते यदा।
व्यापारस्तदनुत्पत्तेरभावांशे जिघृक्षिते॥ १६७२॥

---

तथा प्रमेयाभावोऽपीति, ततश्चाभावो वस्तुत्वात् प्रत्यक्ष एव किमिति नाभ्युपगम्यते, येन तदधिगतयेऽन्यत्प्रमाणान्तरमभावाख्यं परिकल्प्येत॥१६६६-१६६९॥

कार्यादीनामित्यादिना प्रत्यक्षान्तर्गतत्वमेव समर्थ्यते।

तथा चोक्तम्—"कार्यादीनामभावः को[2] यो भावः कारणादिना" (तत्त्व० १६७०) इति। स च कारणादेर्भावोऽपरविविक्तात्मा = कार्यादिविविक्तस्वभावः, प्रत्यक्ष एवेति किमभावस्यापरं प्रमेयमस्ति येन प्रमाणान्तरं स्यात्। प्रयोगः—यस्य यतो व्यतिरिक्तं प्रमेयं नास्ति तत्ततो न प्रमाणान्तरम्, यथा समं प्रमाणम्। नास्ति च प्रमेयं प्रत्यक्षप्रमेयाद् व्यतिरिक्तमभावस्येति व्यापकानुपलब्धिः॥ १६७०॥

अत्र परो हेत्वसिद्धिमुद्भावयन्नाह—स्वरूपेत्यादि। [G. 477] स्यात् प्रमेयाभावो यद्येकात्मकमेव वस्तु स्यात्; यावता स्वरूपपररूपाभ्यां यथाक्रमं सदसदात्मत्वेनोभयात्मकं वस्तु, तस्मिन्नुभयात्मके वस्तुनि स्थिते, किञ्चिद्रूपम् = स्वभावः, कैश्चित् प्रमाणैर्ज्ञायते, न सर्वं सर्वैः। एतदेव दर्शयति—प्रत्यक्षेत्यादि। भावांशो यदा गृह्यते तदा प्रत्यक्षादीनां पञ्चानां व्यापारः, नाभावस्य। अभावांशे ग्रहीतुमिष्टे, तदनुत्पत्तेर्व्यापारः; तेषाम् प्रत्यक्षादीनामनुत्पत्तेरभावस्येति यावत्॥ १६७१-१६७२॥

---

१. कारणादि नः—जै०। २. पा०, गा० पुस्तकयोर्नास्ति।

स्वरूपमेव वस्तूनां ननु व्यावृत्तमन्यतः[1]।
तेनात्मना सदेतच्च प्रत्यक्षममुनाऽऽत्मना ॥ १६७३ ॥
अर्थक्रियासमर्थं च सदसदन्यदुच्यते[2]।
समावेशो न चैकत्र तयोर्युक्तो विरोधतः ॥ १६७४ ॥
स्वसाध्यायां समर्थं चेदन्यस्यामक्षमं ननु।
तदेतद्धि द्विरूपत्वं नैवैकत्रास्ति वस्तुनि ॥ १६७५ ॥

---

स्यादसिद्धता हेतोर्यद्येकस्योभयात्मकत्वं स्यात्, यावता विरुद्धमेकस्योभयात्मत्वम्—इति प्रतिपादयन्नाह—स्वरूपमेवेत्यादि। न हि पररूपेण वस्तु वस्त्वन्तराद् व्यावृत्तम्, किं तर्हि ? स्वरूपेण। अतश्च स्वरूपमेव = स्वभाव एव वस्तूनां वस्त्वन्तराद् व्यावृत्तमुपलभ्यते; स्वस्वभावावस्थानात्। येन चात्मना व्यावृत्तं तेन तद्वस्तु सदेव, नासत्। एतच्च वस्तु प्रत्यक्षममुनान्यव्यावृत्तेनात्मनेति न द्वितीयरूपोपलब्धिः ॥ १६७३ ॥

एवं तावत् प्रत्यक्षविरुद्धमुभयात्मकत्वप्रतिज्ञानमुद्भावितम्, इदानीमनुमानविरुद्धं प्रतिपादयन्नाह—अर्थक्रियेति। यदर्थक्रियाकारि तत्सत्, यथा सत्त्वेनाभिमतं रूपम्। [3]अर्थक्रियाकारि चासत्त्वेनाभिमतं रूपमिति स्वभावहेतुः। यौ च परस्परविरुद्धौ न तयोरेकस्मिन् वस्तुनि युगपदुपलम्भनम्, यथा छायातपयोः शीतोष्णयोर्वा, परस्परविरुद्धे च सदसद्रूपे—इति [C 478] व्यापकविरुद्धोपलब्धिः।

स्वसाध्यायामित्यादिना परो हेतोरसिद्धमुद्भावयति। तथा हि—तदेवैकं वस्तु स्वसाध्यायामर्थक्रियायां समर्थम्, अन्यसाध्यायां त्वसमर्थम्, ततश्चार्थक्रियाकारित्वलक्षणो हेतुरसिद्धः। न हि परसाध्यामर्थक्रियामपेक्ष्यार्थक्रियाकारित्वं वस्तुनः सिद्धम्। न च सदसद्रूपयोः परस्परविरोधः; अपेक्षाभेदात्। तथा हि—स्वसाध्यामर्थक्रियामपेक्ष्य सदुच्यते, अन्यसाध्यां त्वपेक्ष्यासदिति, यदि तु स्वसाध्यामेवापेक्ष्यासदुच्येत, स्यात परस्परविरोधः। अत्र परिहारमाह—ननु तदेवेति। यदेव स्वसाध्यायां समर्थं वस्तुस्वरूपं तदेव परसाध्यायामसमर्थम्, नान्यत्। न ह्य-

---

१. ०मिष्यते—पा०, गा०। २. सदन्यदसदुच्यते—पा०, गा०।
३. अनर्थक्रिया—गा०।

अन्यदेवासमर्थं तु यच्चान्यस्यामितीष्यते ।
द्वे तदा वस्तुनी प्राप्ते तन्नैकस्य द्विरूपता ॥ १६७६ ॥
अभावस्य च वस्तुत्वे पूर्वमङ्गीकृते सति ।
नीरूपता पुनस्तस्य किमर्थमुपवर्ण्यते ॥ १६७७ ॥
नीरूपस्य हि विज्ञानरूपहानौ प्रमाणता ।
न युज्यते प्रमेयस्य सा हि संवित्तिलक्षणा ॥ १६७८ ॥
तद्धेतुत्वात् प्रमाणं चेच्चक्षुरादिवदुच्यते ।
न नीरूपस्य हेतुत्वसम्भवोऽस्ति कदाचन ॥ १६७९ ॥
ज्ञानरूपविविक्तश्च सोऽभावो गम्यते कथम् ।

---

पेक्षाभेदेन शब्दभेदाद् वस्तु भिद्यते, निरंशत्वात् तस्य। तदिति। तस्मादर्थे तत् । तस्मात् नैकत्र द्विरूपत्वमस्ति । अथान्यदेव रूपमन्यसाध्यायामर्थक्रियायासमर्थम् न तु तदेव ? इत्याह—अन्यदेवेति । एवं तर्हि यदर्थक्रियासमर्थं तदेकं वस्तु, यच्चासमर्थं तद् द्वितीयमिति वस्तुद्वयमेव केवलं भवता प्रतिपादितम्, न त्वेकस्योभयात्मत्वम् ॥ १६७४-१६७६ ॥

प्रमाणनिवृत्तिमात्रात्मके तृतीयेऽभावलक्षणे दूषणमाह—अभावस्येत्यादि । पूर्वमङ्गीकृत इति । "साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि" ( तत्त्व० १६४८ ) इति वचनात् । नीरूपता पुनस्तस्येति । "मानमप्येवमिष्यताम्" ( तत्त्व० १६५६ ) इति वचनाद् विषयाधिगमलक्षणात्वात् प्रमाणस्य न युक्तं नीरूपस्य प्रामाण्यमिति वक्ष्यमाणोऽभिप्रायः ॥ १६७७ ॥

तमेवाभिप्रायं दर्शयन्नाह—नीरूपस्येत्यादि । सेति प्रमाणता । यत् प्रमेयाधिगतिरूपम्, न भवति न तत् प्रमाणम्, यथा घटादि प्रमेयाधिगतिशून्यश्चाभाव इति व्यापकानुपलब्धिः ॥ १६७८ ॥

स्यादेतत्—चक्षुरादयो न प्रमेयाधिगतिरूपाः, अथ च प्रमेयाधिगतिहेतुत्वात् प्रमाणमुच्यन्ते, तद्वदभावोऽपीत्यनैकान्तिको हेतुरित्याह—तद्धेतुत्वादित्यादि । [G. 479 ] न च प्रमाणहेतुत्वादुपचारेण कल्पना युक्ता; यतो नीरूपस्य सर्वसामर्थ्यविरहलक्षणत्वान्न हेतुत्वसम्भवो युक्तः । सम्भवे वा नीरूपताहानिप्रसङ्गात् ।

तद्गोचरप्रमाभावादेवं न[1] त्वनवस्थितिः[1] ॥ १६८० ॥
वस्त्वभावात् प्रमाणस्य प्रमाभावाच्च वस्तुनः ।
नास्तिता यदि गम्येत भवेदन्योऽन्यसंश्रयः ॥ १६८१ ॥
तस्मादेकस्य या दृष्टिः सैवान्यादृष्टिरुच्यते ।
सा च [2]स्वतन्त्रसंसिद्धा[2] स्वरूपेणाजडत्वतः ॥ १६८२ ॥

---

तस्याविशेषात् [3]तद्भाविज्ञानानुपरमप्रसङ्गाच्च । किञ्च—[4]न ह्यसिद्धस्य[4] गमकत्वं युक्तम्; अतिप्रसङ्गादिति पूर्वमुक्तम् । सा च तस्याभावस्य सिद्धिः कथमिति वक्तव्यम्, न तावत् स्वत एव तस्य सिद्धिः; प्रमेयाभावस्यापि स्वत एव सिद्धिप्रसङ्गात् । ततश्चाभावकल्पना व्यर्था स्यात्; प्रमेयाभावसिद्ध्यर्थत्वात् तस्याः, तस्य च प्रमेयाभावस्य प्रमाणाभाववत् स्वत एव सिद्धत्वात् । नापि स्वसंवित्त्या तस्य सिद्धिः; यतो ज्ञानरूपविविक्तोऽसौ कथं स्वसंवित्त्या गम्येत, ज्ञानात्मन एव तयाधिगमात् । अथान्यस्मात् तद्विषयप्रमाणाभावात् तत्सिद्धिः, तस्यापि तद्विषयस्य प्रमाणाभावस्य कथं सिद्धिः ?, तस्याप्यन्यतः सिद्धावनवस्था स्यात् । यथोक्तम्—

"अन्यथार्थस्य नास्तित्वं गम्यतेऽनुपलम्भतः ।
उपलम्भस्य नास्तित्वमन्येनेत्यनवस्थितिः" ॥ (प्र० वा० ४.२७५) इति ।

अथ मा भूदनवस्थितिः, प्रमेयाभावात् तस्य सिद्धिरभ्युपगम्यते । एवं सतीतरेतराश्रयत्वं प्राप्नोति । तथा हि—वस्तुनः प्रमेयस्याभावात् प्रमाणाभावसिद्धिः । ननु[5] तु[5] सिद्धौ च प्रमेयाभावसिद्धिरिति स्फुटतरमेवात्रावतरतीतरेतराश्रयदोषः । तदयं गड्डुप्रवेशेऽक्षताराविनिर्गमः । तस्मादेकोपलब्धिरेवान्यस्यानुपलब्धिरिति नाभावो नाम पृथक्प्रमाणम्; प्रत्यक्षात् । स्यादेतत्—साऽप्येकोपलब्धिः कथं सिद्धा, तत्राप्यभाववत् समानप्रसङ्गः ? इत्याह—सा चेत्यादि । सा चैकस्य दृष्टिः स्वयमेव स्वतन्त्रा सिद्धा, नान्यत इति नानवस्थाप्रसङ्गः । कस्मात् ? स्वरूपेण = प्रकृत्यैव,

---

१–१. न तर्ह्यन०—पा०, गा० । २–२. स्वतन्त्रसंसिद्धिः—पा०, गा० ।
३. तद्भावे विज्ञाना०—पा०, गा० । ४–४. नासिद्धस्य—पा०, गा० ।
५–५. तस्य—पा०, गा० ।

बुद्धेस्तु[1] परतः [1]सिद्धिर्लिंगाद् बुद्धयन्तरादपि ।
अन्यथानुपपत्तेर्वा सर्वथापि न सम्भवः ॥ १६८३ ॥
त्रयपर्यनुयोगस्य प्रत्येकं सति सम्भवे ।
अनवस्थितयो बह्व्यो विसर्पिण्यः स्युरत्र ते ॥ १६८४ ॥
तुल्ययोग्यात्मनस्तस्मादेकस्यैवोपलम्भनात् ।
असन्निश्चययोग्यत्वमन्येषां सम्प्रतीयते ॥ १६८५ ॥

---

अजडरूपत्वात् = प्रकाशस्वभावत्वात् । न च सत्तामात्रेण संवित्तावतिप्रसङ्गः; अन्येषामतद्रूपत्वात् ॥ १६७९-१६८२ ॥

अथ परतो बुद्धिसंसिद्धौ कः प्रद्वेषः ? इत्याह—बुद्धेरित्यादि [G. 480] केचिल्लिङ्गसमधिगम्यां बुद्धिमिच्छन्ति । तच्च लिङ्गमर्थज्ञानं वा क्रियारूपम्, इन्द्रियार्थौ वा, व्यक्तो वा विषय इत्यादिकम् । केचिद् बुद्धयन्तरप्रत्यक्षां बुद्धिमिच्छन्ति, न स्वसंविद्रूपाम्; स्वात्मनि [2]कारित्वविरोधात् । केचिज्ज्ञातार्थान्यथानुपपत्त्या ज्ञातोऽर्थो न सिद्ध्यति यदि बुद्धिर्न भवेत्. तस्य स्वयं जडरूपत्वात् । अतः पक्षत्रयमुक्तम् ।

तस्य लिङ्गादित्रयस्य यः प्रत्येकं पर्यनुयोगः, तस्यापि लिङ्गादेः कुतः सिद्धिरिति तस्य सम्भवे सति बह्व्योऽनवस्थितयः प्रसर्पन्ति । तथा हि—तदपि लिङ्गादित्रयं बुद्धेरसिद्धावसिद्धमिति तस्यापि परतः सिद्धिरन्वेष्टव्या, तत्राप्यपरलिङ्गादिसमाश्रयणे सर्वत्र पर्यनुयोगे चानवस्थाप्रसङ्गः । तस्मादेकस्योपलम्भादन्येषामसत्त्वं प्रतीयते, तद्देशकालस्य निषेधे कर्त्तव्ये तुल्ययोग्यात्मनामेव निषेधः कार्यः; अन्येषां तत्र निषेद्धुमशक्यत्वात् । तादात्म्यनिषेधे तु सर्वस्यैव निषेधः कार्यो दृष्टः; तदन्यत्वेन सर्वस्य व्यवस्थापनात्, "न तदात्मा परात्मा" ( तत्त्व० ११९२ ) इति कृत्वा ।

ननु चाकाशे चन्द्राभावं यदाऽध्यवस्यति तदा नैकस्य तत्रोपलम्भः येनोच्यते—एकोपलम्भादन्याभावसिद्धिरिति. न ह्याकाशं नाम किञ्चित् परमार्थ

---

१-१. बुद्धेरपरतः—पा०, गा० । २. कर्मत्वविरो०—गा० ।

एकस्य कस्य संवित्तावचन्द्रं गम्यते नभः।
सर्वशब्दविवेकश्च क्वचिन्निश्चीयते कथम् ॥ १६८६ ॥
प्रकाशतमसो राशेस्तमेव व्योम मन्यते।
प्रतिपत्ता यतोऽन्यस्य न सत्त्वं न च दर्शनम् ॥ १६८७ ॥

---

तोऽस्ति, यच्चन्द्रविविक्तं दृश्येत। यदपि परैर्वस्तु सत्कल्पितम्, तदप्यतीन्द्रियम्, यश्च क्वचित् प्रदेशे शब्दाभावनिश्चयः, स कस्योपलम्भात्? न तावद् भूभागोपलम्भादिति वक्तव्यम्; तस्य शब्देनातुल्ययोग्यावस्थत्वात्। तथा हि—भूभागश्चाक्षुषः, शब्दस्तु श्रावणः, तुल्ययोग्यावस्थयोश्च परस्परापेक्षमन्यत्वमिष्टम्; एकज्ञानसंसर्गिणः[1] [1]परस्परापेक्षमन्यत्वमिति वचनात्। नापि कालस्योपलम्भादिति वाच्यम्, न हि [2]पदार्थव्यतिरिक्तः कालोऽस्ति यस्योपलम्भः स्यात्। योऽपि परैरिष्टः[3], [3]सोऽप्यतीन्द्रियः ॥ १६८३-१६८६ ॥

प्रकाशेत्यादिना प्रतिविधत्ते। [G. 481] राशेरिति। संविचाविति सम्बन्धः; यस्मात् तमेव प्रकाशतमसो राशिमाकाशमिति प्रतिपत्ता प्रतिपद्यते, नान्यत्। तथा हि—दिवा निशि वेदमिन्द्रनीलसङ्काशमाकाशमिदं जलधरनिकासमिति[4] वा प्रतिपद्यते। न चाकाशस्य परिकल्पितस्य वर्णसंस्थानादिरस्ति। ततोऽन्यस्येति। प्रकाशतमोराशिव्यतिरेकेण परपरिकल्पितस्याकाशस्यासत्त्वात्। सत्त्वे वाऽतीन्द्रियत्वात्। सर्वशब्दविवेकोऽपि श्रोत्रज्ञानस्य कार्यस्यानुपलब्ध्या गम्यते। सा चानुपलब्धिरन्येषां चक्षुरादिज्ञानानां संवेदनात् सिद्धेत्यस्त्येवात्राप्येकोपलम्भोऽन्यविज्ञानसंवेदनलक्षणः। ननु न हि कार्यसत्तया कारणसत्ता व्याप्ता, येन सा कार्यसत्ता निवर्तमाना तामपि निवर्त्तयेत्; यतो नावश्यं कारणानि तद्वन्ति[5] भवन्ति? न ब्रूमः—सर्वा कारणसत्ता कार्यसत्तया व्याप्तेति, किं तर्हि? विशिष्टैवाऽप्रतिबद्धसामर्थ्यलक्षणा, तस्या एवात्र निषेधः क्रियते, न सर्वस्याः। तथा हि—यत्रापि केवलप्रदेशोपलम्भाद् घटाभावसिद्धिः, सापि घटोप-

---

१-१. ०संसर्गिणोऽपरस्परा०—पा०, गा०। २. परार्थ०—पा०, गा०।
३-३. परैरिष्टांशस्सो०—पा०; गा०। ४. ०निकाशमिति—पा०, गा०।
५. वर्द्धति—पा०; अर्थनन्ति—गा०।

सर्वशब्दविवेकोऽपि कार्यादृष्टेः प्रतीयते ।
सा च सिद्धाऽन्ततोऽन्येषां विज्ञानानां स्ववेदनात् ॥ १६८८ ॥
इत्थं च वस्तुरूपत्वे स्थितेऽभावप्रमात्मनः ।
अभावशब्दवाच्यत्वमन्तर्भावेऽप्यबाधितम् ॥ १६८९ ॥
अभावो वा प्रमाणेन स्वानुरूपेण मीयते ।
इत्यत्र सिद्धसाध्यत्वं तादृश्यस्त्यनुरूपा ॥ १६९० ॥

---

लम्भाख्यकार्यानुपलब्धिरेव; यत उपलब्धिलक्षणप्राप्तस्यैव घटस्याभावः साध्यते, न सर्वस्य । कश्चोपलब्धिलक्षणप्राप्तः ? य एवाप्रतिबद्धसामर्थ्यः; यत उपलब्धिलक्षणं स्वभावविशेषो वर्णितः—यः स्वभावः[1] स प्रत्यक्ष एव भवतीति । अन्यथा ह्यत्रापि घटोपलब्ध्या घटसत्ता न व्याप्ता स्यात्, ततश्चाव्यापकस्य निवृत्तौ नाव्याप्तस्य निवृत्तिरिति ततो घटाभावो न सिद्ध्येत् । तस्मात् सर्वैव स्वभावानुपलब्धिरसद्व्यवहारहेतुः परमार्थतः कार्यानुपलब्धिरेव द्रष्टव्या ॥ १६८७–१६८८ ॥

इत्थमित्यादिना 'अभावशब्दवाच्यत्वात्' (तत्त्व० १६५७) इत्यस्य हेतोरनैकान्तिकत्वमाह—इत्थमिति । "एकस्य या दृष्टिः सैवान्या दृष्टिरुच्यते" (तत्त्व० १६८२) इत्यादिना । अन्तर्भावेऽप्यबाधितमिति । अभावस्य प्रत्यक्षान्तर्भावेऽप्यभावशब्दवाच्यत्वमविरुद्धमित्यर्थः । एतेन हेतोर्विपक्षादव्यावृत्तिमाह ॥ १६८९ ॥

[ G. 482 ] तादृश्यस्त्यनुरूपतेति । अन्योपलब्धिलक्षणानुपलब्धिरभावः[2] । यच्चाप्येके चोदयन्ति—ननु वस्त्वभावमात्रालम्बनस्य प्रत्यक्षादौ न क्वचिदन्तर्भावोऽस्ति, वस्तुविरहमात्रालम्बनत्वादस्य, प्रत्यक्षादेश्च वस्तुविषयत्वात्; न चास्याप्रामाण्यम्; अविसंवादित्वात्, न हि भवद्भिर्वस्तूनां निरन्वयं विनाशमिच्छद्भिर्वस्तुविरहो नेष्यत इति ? तदप्यनेन प्रत्युक्तम्; न हि तेन विकल्पेन[3] तद्देशकालादिविशेषणरहितभावमात्रमालम्ब्यते । किं तर्हि ? 'क्वचिद्देशादौ घटादि नास्ति'—इत्यनेन रूपेण सविशेषणमेव । तच्च केवलस्यैव देशादेर्ग्रहणसामर्थ्यादेवं भवतीति न पृथगस्य प्रामाण्यम्; प्रत्यक्षगृहीतस्यैव केवलस्य देशादेस्तथा विकल्पनात् । सत्यपि वा निर्विशेषणस्याभावस्य ग्रहणे न तद्ग्राहिणो

---

१. स—पा०, गा० । २. ०रभाव इति—गा० । ३. विकल्पे—पा० ।

## ५. युक्त्यनुपलब्धिविचारः

### चरकमुनिमतम्

अस्मिन् सति भवत्येव न भवत्यसतीति च ।
तस्मादतो भवत्येव युक्तिरेषाऽभिधीयते ॥ १६९१ ॥
प्रमाणान्तरमेवेयमित्याह चरको मुनिः ।
नानुमानमियं यस्माद् दृष्टान्तोऽत्र न लभ्यते ॥ १६९२ ॥
उपलब्ध्या यया योऽर्थो ज्ञायते तदभावतः ।
नास्तित्वं गम्यते तस्यानुपलब्धिरियं मता ॥ १६९३ ॥
प्रमाणान्तरमेषापि दृष्टान्ताद्यनपेक्षणात् ।
दृष्टान्तेऽपि हि नास्तित्वमनयैव प्रसिद्ध्यति ॥ १६९४ ॥

### तत्प्रतिविधानम्

कार्यकारणताभावप्रतिपत्तिर्न संयता ।

---

ज्ञानस्य प्रामाण्यं युक्तम्; वस्तुविषयत्वात् । अर्थक्रियार्थिनां च प्रमाणचिन्ताया वस्त्वधिष्ठानत्वादिति यत्किञ्चिदेतत् ॥ १६९० ॥

इत्यभावविचारः[1]

युक्त्यनुपलब्धी अधिकृत्याह—अस्मिन् सतीत्यादि । तद्भावभावित्वेन[2] यत्कार्यताप्रतिपत्तिरियं[2] युक्तिः । इयं च सविकल्पकत्वान्न प्रत्यक्षम् । नाप्यनुमानम्; दृष्टान्ताभावात् । तथा हि—[3]दृष्टान्तेऽपि अत एव तद्भावभावित्वात् तत्कार्यताप्रतिपत्तिः, तत्रापि दृष्टान्तोऽन्वेषणीयस्तत्राप्यपरः—इत्यनवस्था स्यात्, तस्मात् प्रमाणान्तरमेवेयमित्याह चरको वैद्यः । तथा या चोपलब्धिनिवृत्त्या नास्तित्वप्रतीतिरियमनुपलब्धिः । अस्या अपि प्रमाणान्तरत्वे युक्तिवदेव न्यायो घोषणीयः[4] ॥ १६९१–१६९४ ॥

कार्येत्यादिना प्रतिविधत्ते । ] G. 483 ] [5]कार्यकारणता [5]चाभावश्चेति कार्यकारणताभावौ, तयोः प्रतिपत्तिरिति विगृह्य समासः । तत्र कार्यकारणताप्रति-

---

१. इत्यभावः—जै० । २–२. यत्कार्यता०—पा०, गा० ।
३. दृष्टान्तो०—पा०, गा० । ४. ०ऽन्वेषणीयः—पा०, गा० ।
५–५. ०कारणभावोऽभावश्च—पा०, गा० ।

तदत्रास्या न भेदोऽस्ति साध्यसाधनयोर्यतः ॥ १६९५ ॥
तद्भावभावितां मुक्त्वा न हेतुफलताऽपरा ।
दृश्यादृष्टिं विहायान्या नास्तिता न प्रतीयते ॥ १६९६ ॥
तद्भावव्यवहारे तु योग्यतायाः प्रसाधने ।
सङ्केतकाले विज्ञातो विद्यतेऽर्थो निदर्शनम् ॥ १६९७ ॥

---

पत्तिर्युक्त्या, अभावप्रतिपत्तिरनुपलब्ध्येति यथाक्रमं सम्बन्धः । अस्यामिति । युक्तावनुपलब्धौ च प्रमाद्वयेऽपि न साध्यसाधनयोर्भेदः ॥ १६९५ ॥

कथम्? इत्याह—तद्भावेत्यादि । युक्तौ तावन्न साध्यसाधनयोर्भेदः, तथा हि—तद्भावभाविता हेतुः, कार्यकारणता साध्या । न चानयोर्भेद उपलभ्यते; पर्यायत्वात्, तरुपादपवत् । अनुपलब्धावपि च न भेदः । तथा हि—यद्युपलम्भनिवृत्तिमात्रं विवक्षितम्, तदा तस्यासिद्धत्वात् पूर्ववदनवस्थादिदोषो वाच्यः । अथान्योपलब्धिरेवानुपलब्धिः, तदा दृश्यानुपलब्धावेवान्तर्भावः। अनया च नाभावः साध्यते; तस्य प्रत्यक्षेणैव सिद्धत्वात् । अत एवाह—दृश्यादृष्टिं विहायेत्यादि ॥ १६९६ ॥

अथ मतम्—नाभ्यां कार्यकारणताऽभावौ साध्येते, किं तर्हि? तद्व्यवहार[1] इति? तत्राह—तद्भावव्यवहार इत्यादि । तयोर्हेतुफलताभावयोर्भावस्तद्भावः, तत्र व्यवहारो यः स तद्भावव्यवहारः । ज्ञानाभिधानप्रवृत्तिलक्षणमनुष्ठानम्, तस्मिन् योग्यता साध्यते मूढं[2] प्रति । यथा[2] प्रयोगश्च—ये यद्व्यापारान्तरनियतोपलम्भस्वभावास्ते तत्कार्यव्यवहारयोग्याः, तद्यथा—सङ्केतकालानुभूताः कुलालादिव्यापारानन्तरोपलम्भस्वभावा घटादयः । तथा च ताल्वादिव्यापारानन्तरनियतोपलम्भस्वभावाः शब्दा इति स्वभावहेतुः । तथानुपलब्धावपि व्यवहारे साध्ये प्रयोगः—येषामुपलब्धिलक्षणप्राप्ताभिमतानां येष्वनुपलब्धिस्ते तदभावव्यवहारयोग्याः, तद्यथा—विषाणाभावव्यवहारयोग्याः शशमस्तकादयः[3] । उपलब्धिलक्षणप्राप्ताभिमतानां [G. 484] पराभिमतसामान्यादिपदार्थानामनुपलब्धिश्च तदाश्रयत्वेनेष्टेषु शाबलेयादिष्विति स्वभावानुपलब्धिः! तद्विविक्तानां शाबलेयादीना-

---

१. व्यवहार—पा०, गा० । २-२. पा०, गा० पुस्तकयोर्नास्ति ।
३. शशशमस्त०—पा०, गा० ।

## ६. सम्भवविचारः

समुदायव्यवस्थाया　हेतवः　समुदायिनः ।
शतादिसम्भवज्ञानं　सहस्रात् कार्यलिङ्गजम् ॥ १६९८ ॥

## ७. ऐतिह्यादिविचारः

ऐतिह्यप्रतिभादीनां　भूयसा　व्यभिचारिता ।
नैवेदृशां　प्रमाणत्वं　घटतेऽतिप्रसङ्गतः ॥ १६९९ ॥

---

मुपलम्भान्नासिद्धिः । नाप्यनैकान्तिकता; हेतोरभिव्यक्तेर्निराकरिष्यमाणत्वात्, एतावन्मात्रनिबन्धनत्वाच्चाभावव्यवहृतेः । नापि विरुद्धता; सपक्षे भावादिति ॥१६९७॥

इति युक्त्यनुपलब्धिविचारः[1]

तत्र सम्भवश्च लक्षणया समुदायः । सम्भवप्रतिपत्तौ समुदायिप्रतिपत्तिः । यथा—सहस्रसद्भावे ज्ञाते शतादिसत्ताप्रतिपत्तिः । इदं च किल दृष्टान्ताभावान्नानुमानम् ।

अत्र दूषणमाह—समुदायेत्यादि । यस्मात् समुदायिभ्योऽन्यस्य समुदायस्याभावात् समुदायव्यवस्थायाः समुदायिन एव कारणम्; तस्मात् सहस्राच्छतादिसम्भवप्रतीतिः कार्यलिङ्गजैव ॥ १६९८ ॥

इति सम्भवविचारः[1]

अन्ये त्वैतिह्यादि च प्रमान्तरमिच्छन्ति, तत्रानिर्दिष्टवक्तृकं प्रवादपारम्पर्यम् = ऐतिह्यम् । यथा—'इह वटे यक्षः प्रतिवसति' इति । अनियतदेशकालमाकस्मिकं सदसत्सूचकं ज्ञानम् = प्रतिभा । यथा—कुमार्या एवं भवति—'अद्य मे भ्राता आगमिष्यति' इति, तच्च किल तथैव भवतीति प्रमाणम् । अत्र दूषणमाह—ऐतिह्येत्यादि । आदिशब्देन प्रत्यभिज्ञादीनां ग्रहणम्; तेषामपि परैः कैश्चित् प्रमाणत्वेन गृहीतत्वात् । अतिप्रसङ्गत इति । स्वप्नान्तिकस्यापि कदाचित् सत्यतादर्शनात् प्रमाणान्तरत्वं स्यात् ॥ १६९९ ॥

इत्यैतिह्यादिविचारः[1]

---

१. पा०, गा० पुस्तकयोर्नास्ति ।

## सर्वेषां प्रमाणान्तराणां संक्षेपेण निराकरणम्

अथ वाऽस्थान एवायमायासः क्रियते यतः।
प्रत्यक्षश्च परोक्षश्च द्विधैवार्थो व्यवस्थितः॥ १७००॥
उभयानुभयात्मा हि नैवार्थो[1] युज्यते परः।
एकस्यैकत्र विज्ञाने व्याहते हि क्रियाक्रिये॥ १७०१॥
साक्षाद्धि ज्ञानजनकः प्रत्यक्षो ह्यर्थ उच्यते।
यथोक्तविपरीतस्तु परोक्षः कृतिभिर्मतः॥ १७०२॥

---

[G. 485] एवं विस्तरेण प्रमाणान्तरं निराकृत्य सङ्क्षेपेण निराकुर्वन्नाह—अथ वेत्यादि। द्विविध एव ह्यर्थः—प्रत्यक्षः, परोक्षश्च॥ १७००–१७०१॥

ननु चापरोऽप्यस्ति प्रत्यक्षः–नैव प्रत्यक्षः, नाप्यप्रत्यक्षः? इत्याह—उभयेत्यादि। न ह्येकस्यान्योऽन्यप्रत्यनीकानेकधर्मसम्पातो युक्तः; एकत्वहानिप्रसङ्गात्। तथा हि—विशिष्टस्याव्यवधानेन यथागृहीतार्थावसायकारणस्य ज्ञानस्य साक्षाल्लिङ्गादिव्यवधानं विना जनकोऽर्थः प्रत्यक्ष उच्यते। एवं च कृत्वा 'क्षणिकः शब्दः' इत्यादि ज्ञानमप्रत्यक्षार्थमिति सिद्धम्। न चैकस्य पदार्थस्यैकत्र क्रियाक्रिये युक्ते, येन विज्ञानजनकत्वाजनकत्वाभ्यां प्रत्यक्षाप्रत्यक्षस्वभावो भवेत्। नाप्यनुभयस्वभावो युक्तः; एकस्वभावनिषेधस्यापरस्वभावविधिनान्तरीयकत्वाद् वस्तुनः। अनेकस्य तु नैकत्र [G. 486] क्रियाक्रियाविरोधः, यथा—रूपरसयोश्चक्षुर्विज्ञाने। तथैकस्यानेकस्मिन्, यथा रूपस्य चक्षुःश्रोत्रविज्ञानयोः, तदर्थमेकस्यैकत्रेति चाह। तस्माद् द्विविध एवार्थः। तत्र शब्दादीनां प्रामाण्यं भवत्प्रत्यक्षे वार्थे भवेत्, परोक्षे वेति पक्षद्वयम्। न तावदाद्येऽर्थे, कस्मात्? प्रत्यक्षेऽन्तर्गतिप्राप्तेः; शाब्दादीनामभिन्नार्थविषयत्वात्। अथ प्रत्यक्षेणाधिगते सत्युत्तरकालं तैः पुनरधिगमः क्रियते, अत आह—वैफल्यं वा। गृहीतग्रहणात् स्मृतिवदप्रामाण्यप्रसङ्गात्। द्वितीयेऽपि पक्षे स परोक्षोऽर्थो विषयो भवन् साक्षाद्वा स्याद्, व्यवधानाद्वा पराश्रयेण, तत्र तावन्न साक्षात्; तस्यापरोक्षत्वप्रसङ्गात् प्रत्यक्षार्थवत्। यस्मादत एवासौ परोक्ष उच्यते; यतः साक्षान्न ज्ञानं जनयति, साक्षात्स चेज्ज्ञानं जनयेत्, कथमसौ परोक्ष इति वचनीय-

---

1. नैवासौ—पा०, गा०।

आद्यार्थविषयं तावन्नेदं शाब्दोपमादिकम् ।
प्रत्यक्षेऽन्तर्गतिप्राप्तेर्वैफल्यं वा स्मृतेरिव ॥ १७०३ ॥
परोक्षविषयत्वेऽपि [1]स तेषां[1] विषयः कथम् ।
यदि साक्षात् परोक्षोऽयं न स्यात् प्रत्यक्षवस्तुवत् ॥ १७०४ ॥
परव्यपाश्रयेणापि प्रतिपत्तौ किमस्य सा ।
सम्बन्धात्[2] परतो[2] नो वा भेदाभासा न वा तथा ॥ १७०६ ॥
असम्बद्धात् तदुद्भूतावव्यस्था प्रसज्यते ।
न च संगच्छते व्याप्तिर्भेदाभासा भवेद् यदि ॥ १७०५ ॥
परोक्षविषया यावत्सम्बद्धार्थसमाश्रया ।
अपरामृष्टतद्भेदा प्रतीतिरनुमा स्फुटा ॥ १७०७ ॥

---

भेतत् । पराश्रयेणापि परोक्षार्थप्रतिपत्तिः सम्बद्धाद्वा स्याद्, असम्बद्धाद्वा, भेदाभासा वा स्याद्, अभेदाभासा वा—इति चत्वारः पक्षाः सम्भवन्ति । भेदाभासेति[3] यथा—धूमसामान्याच्चार्णपार्णादिवह्निविशेषप्रतीतिः । अभेदाभासा यथा—धूमाद् विजातीयपरावृत्तवह्निमात्राध्यवसायिनी । तत्रासम्बन्धात् प्रतिपत्तावव्यवस्था स्यात्, यतः कुतश्चित् सर्वः प्रतीयेत । अथ भेदाभासा, तदा व्याप्तिः साध्येन हेतोर्न सङ्गच्छेत; विशेषेणान्वयायोगात् । ततश्चानैकान्तिकं स्यात् । अथाभेदाभासा, तदाऽनुमान एवान्तर्भाव इति प्रतिपादयन्नाह—परोक्षविषयेत्यादि ।

अपरामृष्टतद्भेदेति । भेदप्रतिभासशून्या विजातीयपरावृत्तार्थमात्राध्यवसायिनी । यथा धूमाद् वह्निमात्रप्रतीतिः । एवम्भूता चेत् ? स्पष्टमेवानुमानम्; सम्बन्धदर्शनोपायत्वात्, धूमाद् वह्निप्रतीतिवत् ॥ १७०२–१७०७ ॥

इति प्रमाणान्तरभावपरीक्षा[4]



---

१–१. सर्वेषां—पा०, गा० ।
२–२. सम्बद्धेतरतो—पा०, गा० ।
३. भेदाभासा—पा०, गा० ।
४. प्रमाणान्तरभावः—जै०; प्रमाणान्तरपरीक्षा—पा०, गा० ।

